

श्लोकः

कोशं शब्दार्थ चिन्तामणि मथ रहितं पूर्णभावेन पूर्णं
कृत्वा श्रीसज्जनेश स्त्रिदिवपथ गत स्तत्प्रचाराय लोके ॥
तत्सूनु स्तातभक्तो नरपति फतह:सिंह भूपैकवीर:
विद्वत्कंठैकशोभा भरण विधिरुचिः प्रेषयत्येक कोशम्. ॥ १ ॥

श्रीम त्फ़तह सिंहस्य नृपतेः परमा ज्ञया ॥
कविराजः श्यामलाख्यः कोशं प्रेषयति ध्रुवम्. ॥२ ॥

By order of H.H. Maha Rana Fateh Singh
Presented to the Library, As. Society, Bengal
Calcutta

Oodeypore
July 2/86

(Sd) K. R. Shyamul Das

Vol II

# NOTICE.

## THE SHABDARTH CHINTAMANI.

### A NEW SANSKRIT LEXICON.



This new and valuable work, in the compilation of which Brahmâvadhûta Shri Sukhânand Natha of Delhi, spent more than thirty years of his life, contains (as its name implies) the meanings of all words in general and colloquial use.

The following is a resumè of the plan on which this most useful work has been arranged:—

1st. The word-forms have been tested by the process suggested in the Grammatical Sutras of Panini.—

2nd. The meanings of the words are derived from their roots, by which means not only correctness, but clearness of conception are secured. The Primary meaning is given first, and others are described according to their logical order.

The utmost care has been taken to express the meanings of the words in the best and simplest language — a feature in the construction of this work, which cannot fail to recommend it above all others for practical use.

3rd. Another point is well worthy of notice in the work, viz; that words which have special reference to Aryah Literature whether the Smritis, Purâns or Vedas, are clearly and briefly explained.

4th. Special attention has been paid to the full definition of Scientific and Technical terms, whether these occur in the Vedas, Vedangas, Shastras, Chemistry, Mechanics or Music.

5th. The descriptions of weapons of warfare, metals, precious stones; and the directions for preparing the different kinds of soil for planting garden — and forest-trees are fully given.

6th. The officinal and non-officinal properties of drugs and the immediate causes of those diseases for which they may be given, have been fully described according to the best Medical Treatises on the subject.

7th. The author has specially adapted his work for Educational purposes in explaining the various Figures of Rhetoric employed in Poetry; also those feelings Poetry is calculated to excite, and by describing the different Metres.

8th. In the arrangement of the words the Alphabetical order is strictly preserved.

From these points it will be clearly seen that this excellent work will be an unerring guide to those who seek information on Political as well as Practical matters.

Fully convinced of the usefulness of such a Lexicon, Adi Gaur, Pt. Ghâsi-Râm (late Gumasta of Govt. Commrt Agra) resolved to undertake the publication of the first 2Vols. as far as the letter [न] but on account of the want of pecuniary assistance, he could not finish the remaining portion of the Dictionary.

About 16 years ago, the first two volumes were published, and are now in the libraries of many of the Chiefs, Nobles and Pandits of India, who deeply regret that the remaining 2vols. are not in their possession.

However, no one seemed willing to undertake this arduous and important task until H. H. the late Mahá Râná Sajjan Singh, G. C. S. I. of Meywâr, who during his life-time was the Patron of Art and Literature, on hearing through Kavi Râja Shyámal Dâs of this unfinished Dictionary, issued orders that the remaining 2vols [3rd & 4th.] should be printed in the Râj Press with all possible rapidity. So minute were H. H. the late Mahâ Rânâ's directions that he expressed the desire that the same kind of paper be used and type of equal clearness and legibility employed as in the first two volumes.

In fulfilment of His Highness' wishes, the work has been completed.

It is therefore requested that those who are desirous of obtaining the Lexicon send their names and full address to the undersigned.

Oodeypore, June 1883

Pundit, Bansi Dhar [illegible]ai, Manager, भा०



च:

च । अ । अन्वाचये ॥ यत्रैकस्य प्राधान्येना ऽपरस्य गौणत्वेनाख्यानं सोऽन्वाचयः । यथा । भोवटो भिक्षामट गाञ्चानयेति । अत्र भिक्षाटनं प्रधानं तत्कुर्वाणो यदि गां पश्यसि तदा तामप्यानय नोचेत् भिक्षामेवाटेति ॥ समुच्चये । परस्पर निरपेक्षस्या नेकस्यै कस्मिन्नन्वये ॥ यथा । ईश्वरं गुरुञ्च भजस्वेति । उभयत्र न समासोऽसामर्थ्यात् ॥ इतरेतरयोगे । अन्योन्यार्थे । मिलितानामन्वये ॥ समाहारे । समूहे ॥ पक्षान्तरे ॥ पादपूरणे ॥ अवधारणे ॥ हेतौ ॥ तुल्ययोगितायाम् ॥ विनियोगे ॥ चनति चिनोति वा । चन शब्दे चिञ् चयने वा । अन्येभ्योपीति डः ॥ डौ चकारावविलम्बस्य चकोभवतः ॥ चण्० यच्चार्थे णित् । समुच्चयादौ त्वनन्वयः ॥

च: । पुं । चण्डेशे ॥ कच्छपे ॥ चन्द्रे ॥ चौरे ॥ चवर्गे ॥ वि । दुर्जने ॥ निर्बीजे ॥

चकासत् । त्रि । प्रकाशमाने ॥ चकास्ति । चकास्टदीप्तौ । लटः शत्रादेशः ॥

चकितम् । न । भयसंभ्रमे ॥ त्रि । शङ्किते ॥ भीते ॥ तस्यलक्षणम् । प्रियाग्रे चकितं भीते रस्थानेपि भयं महदिति ॥

चकिता । स्त्री । अष्टिसंज्ञकषोडशाक्षरावृत्तौ ॥ भात् समतनगै रष्टच्छेदेस्यादिह चकिता ॥ दुर्जयदनुजश्रेणी दुश्चेष्टाशतचकिता यद्भुजपरिघत्राता याता साध्वसविगमम् । दीव्यन्निदिविपन्माला शश्वन्नन्दनविपिने गच्छत शरणं कृष्णं भो भीता भवरिपुतः ॥

चकोरः । पुं । स्वनामाप्रसिद्धे पक्षिविशेषे । कौमुदीजीविनि । चन्द्रिकापायिनि ॥ चटकं शीतलं रुच्यं वृष्यं कापिञ्जलामिषम् । तद्वच्चकोरजं मांसं हृद्यञ्च बलपुष्टिदम् ॥ चकति । चकतृप्तौ । कठिचकिभ्यामोरन् ॥

चकोरकः । पुं । चकोरे ॥ स्वा० कन् ॥

चक्रः । पुं । कोके । चक्रवाके । चकवा इतिप्रसिद्धे पक्षिणि ॥ न । व्रजे । गणे ॥ सैन्ये ॥ रथाङ्गे । चक्का पैया इतिचभाषा ॥ राष्ट्रे ॥ दम्भान्तरे ॥ कुम्भकारोपकरणे । चाक इतिभा-

षा ॥ अस्त्रविशेषे । प्रहरणे ॥ पुट-भेदे । जलावर्त्ते ॥ ग्रामजाले ॥ त-गरपुष्पे ॥ महाभारतप्रसिद्धे व्यूह विशेषे ॥ तैलयन्त्रे ॥ मूलाधार-स्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञा ख्येषु शरीरस्थेषु षट्सु ॥ सर्वतोभ द्रादौ । देवार्चाधारयन्त्रे ॥ मन्त्रदी क्षोपयोगिष्वकडमादिषु ॥ श्रीच क्रे ॥ कौलिकानां हितार्थाय श्री सदाशिवोक्तेषु महाचक्रादिपञ्चसु ॥ यथा । श्रीश्वरउवाच । चक्रं पञ्च विधंप्रोक्तं श्रीतन्त्रेऽस्मिन्यामले । विधि नापूजिते चक्रे सौख्यमोक्षफलं लभे त् ॥ महाचक्रंचक्रराजं दिव्यचक्रंत-थापरम् । वीरचक्रं चतुर्थञ्च पशुच क्रञ्च पञ्चममिति ॥ पञ्चचक्रे सका मानामधिकारः । यथा । राजचक्रं रा ज्यदं स्यात् महाचक्रन्तु मोक्षदम् । देवत्वदं देवचक्रं वीरचक्रन्तु सिद्धि दम् ॥ पशुचक्रन्तु दारिद्र्यदुःखशो-कामयप्रदम् । कापथ्येदक्षिणाहीने सर्वचक्रन्तु निष्फलमिति ॥ सकामा श्चैव निष्कामाद्विविधा भुविमानवाः । क्षुद्राशयाः कामिनोये तेषामत्रा धिकारिता ॥ * ॥ ब्रह्मज्ञानायतु मो क्षं.शैरर्थादक्रमुत्तमम् ॥ ब्रह्मज्ञान युतानान्तुतत्त्वचक्रेऽधिकारिता ॥ य थोक्तं श्रीमहानिर्वाणे । नानाधिका रः सर्वेषां ब्रह्मज्ञान साधकान् वि ना । परब्रह्मोपासकाये ब्रह्मज्ञा ब्र ह्मतत्पराः । शुद्धान्तःकरणाः शान्ताः सर्वप्राणिहितेरताः ॥ निर्विकारा नि र्विकल्पा दयाशीला दृढव्रताः । स-त्यसङ्कल्पका ब्राह्मा स्तयेवात्राधि-कारिणः ॥ ब्रह्मभावेन तत्त्वज्ञे ये प श्यन्ति चराचरम् । तेषां तत्त्वविदां पुंसांतत्त्वचक्रे ऽधिकारिता ॥ सर्वं-ब्रह्ममयं भावश्चक्रे ऽस्मिंस्तत्त्वसंज्ञ-के । येषामुत्पद्यते देवि त एवतत्त्व चक्रिणइति ॥ छन्दोविशेषे । यथा । कुण्डलकलितमगणमिह्नितयं गन्ध कुसुमरसविरचय वलयम् । चक्र-मुरगपतिवरपरिगुणितं षोडशक ल मतिसुललितभणितम् ॥ सुन्द रि नभसि जलदचयरुचिरे देहिन यनयुग मतिघनचिकुरे । मान मि हहि जहि जलधरसमये किमिव भ वति हृदय मिह मदयेदिति ॥ क्रिय तेऽनेन । घञर्थेकः । के कुलादीना मितिद्वित्वम् ॥ अर्द्धर्चादिः ॥

चक्रकः । त्रि । तर्कविशेषे ॥ अन्यो न्याश्रयमेवावर्त्तितं चक्रकं भवति । स्वापेक्षापेक्ष्यपेक्षित्वनिबन्धनेऽनि ष्टप्रसङ्गे । चतुष्कचाद्यावपि स्वस्म

स्वापेक्षापेक्ष्यपेक्षित्वसत्त्वाद्याधिक्यम् ॥ अस्यात्माश्रयवत् चैविध्यम् ॥ अपिचास्यलक्षणं यथा। स्वापेक्षणीयापेक्षितसापेक्षितत्त्वनिवन्धनप्रसङ्गत्वमिति । अपेक्षाच ग्रभावेत्पत्तौ स्थितौच ग्राह्या । तत्राद्या यथा । एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यंस्यात् तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात् । द्वितीया यथा । घटोयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घट जन्यजन्यभिन्नः स्यात् । तृतीया यथा । घटोयं यद्येतद्घटवृत्तिवृत्तिः स्यात् तथात्वेनोपलभ्येतेति । इतितर्कशास्त्रम् ॥

चक्रकारकम् । न । व्याघ्रनखाख्यगन्धवस्तुनि । करजे ॥ चक्रस्यकारकम् ॥

चक्रकुल्या । स्त्री । पृश्निपर्ण्याम् ॥

चक्रगजः । पुं । चक्रमर्द्दे ॥

चक्रगण्डुः । पुं । वर्त्तुलाकारोपधाने । गन्तुरे । गालसिर्हाना गोलसिर्हाना इति भाषा ॥

चक्रगदाधरः । पुं । परमात्मनि वासुदेवे ॥ मनस्तत्त्वात्मकं चक्रं वुद्धितत्त्वात्मिकां गदाम् । धारयन् लोकरक्षार्थं गुप्तश्चक्रगदाधरः ॥ चक्रगदे धरति । धृञ्० । पचाद्यच् ॥ चक्रगदयोर्धरोवा ॥

चक्रगुच्छः । पुं । अशोकपादपे ॥

चक्रजीवकः । पुं । कुलाले । कुम्भकारे ॥ चक्रं जीवनमस्य ॥

चक्रदंष्ट्रः । पुं । शूकरे ॥

चक्रदन्ती । स्त्री । दन्तीवृक्षे ॥

चक्रदन्तीवीजम् । न । जयपाले ॥

चक्रधरः । पुं । अजे । विष्णौ ॥ अहौ । सर्पे ॥ त्रि । चक्रिणि ॥ ग्रामजालिनि ॥ धरति । धृञ्० । अच् । चक्रस्यधरः ॥ चक्रंधारयतिवा । अच् वा हलकार्षिलक् ॥

चक्रधारणम् । न । अक्षे । रथावयवे काष्ठविशेषे ॥

चक्रधारा । स्त्री । प्रधौ ॥ चक्रस्यधारा ॥

चक्रनखः । पुं । व्याघ्रनखाभिधेगन्धद्रव्ये ॥

चक्रनदी । स्त्री । गण्डक्याम् ॥

चक्रनामा । पुं । माक्षिकधातौ ॥

चक्रनायकः । पुं । व्याघ्रनखे ॥

चक्रपद्माटः । पुं । दद्रुघ्न ॥

चक्रपरिव्याधः । पुं । आरग्वधवृक्षे ॥

चक्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥

चक्रपाणिः । पुं । विष्णौ । नारायणे ॥ चक्रं पाणौ यस्यसः । प्रहरणार्थेभ्यःपरे निष्ठासप्तम्याविति सप्तम्याःपरत्वम् ॥

चक्रपादः । पुं । रथे ॥ गजे । हस्तिनि ॥

चक्रपुष्करिणी । स्त्री । मणिकर्णिकायाम् ॥

चक्रफलम् । न । अस्त्रविशेषे । अट्टने ॥

चक्रबन्धः । पुं । चित्रकाव्यविशेषे ॥

चक्रबन्धुः । पुं । } रवौ ॥
चक्रबान्धवः । पुं । }

चक्रभृत् । पुं । विष्णौ ॥

चक्रभेदिनी । स्त्री । रात्रौ ॥

चक्रभ्रमः । पुं । } कुन्दाख्ये शिल्पियन्त्रे । चक्राकारे भ्रमणोत्तेजनयन्त्रे । शाणे ॥
चक्रभ्रमिः । स्त्री । }

चक्रमण्डली । पुं । अजगरसर्पे ॥

चक्रमर्द्दः । पुं । चकवँड इति कसौँदी इतिच भाषाप्रसिद्धे क्षुपविशेषे । दद्रुघ्ने । एडगजे ॥ चक्रमर्दो लघुः स्वादू रूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन् हरेत् ॥ हन्त्युष्णं तत् फलं कुष्ठकण्डुदद्रुविषानिलान् । गुल्मकासकृमिश्वासनाशनं कटुकं स्मृतम् ॥ चक्रं दद्रुं मृद्नाति । मृद क्षोदे । कर्मण्यण् ॥

चक्रमर्द्दकः । पुं । चक्रमर्द्दे ॥ स्वा० कन् ॥

चक्रयानम् । न । असाङ्ग्रामिके रथे । पुष्परथे ॥

चक्रयानकम् । न । चक्रयाने ॥

चक्ररदः । पुं । शूकरे ॥

चक्र[illegible]ः । पुं । विष्णौ ॥ रथे ॥



चक्रलक्षणा । स्त्री । गुडूच्याम् ॥

चक्रलताम्रः । पुं । वट्टरसाम्रवृक्षे ॥

चक्रला । स्त्री । उच्चटायाम् । मुस्ताविशेषे ॥ चक्रं लाति । ला० । आत इति कः ॥

चक्रवर्त्ती । पुं । समुद्रपरिवृतायाः सर्वभूमेरीश्वरे । सार्वभौमे ॥ चक्रे भूमण्डले राजमण्डले वर्त्तितुं चक्रं सैन्यं वर्त्तयितुं सर्वभूमौ चालयितुं वा शीलमस्य । सुपीति णिनिः ॥ अवश्यं वा चक्रं वर्त्तयति । आवश्यके णिनिः ॥ वास्तूके ॥ डगणे मध्यगुरौ । ।ऽ। संज्ञायाम् ॥ त्रि । चक्रवर्त्तिनि ॥

चक्रवर्त्तिनी । स्त्री । जन्याम् । जतूकायाम् ॥ अलक्तके ॥ जटामांस्याम् ॥

चक्रवाकः । पुं । कोकपक्षिणि । चकवा इति भाषा ॥ अस्य मांसं लघु स्निग्धं बलप्रदमुदाहृतम् ॥ चकशब्देन उच्यते । वच परिभाषणे । घञ् । न्यङ्क्वादिः ॥

चक्रवाकी । स्त्री । चक्रवाकस्य स्त्रियाम् । चकवी इति [illegible] जातेरिति ङीष् ॥

चक्रवाटः । पुं । क्रियारोहे ॥ शिखातरौ ॥ पर्यन्ते ॥ मेरोर्मस्तकसमीपे लोकपालाश्रयभूताया महाद्भसहस्रयोजनविस्तीर्णाया नेमौ ॥

चक्रवाडः । पुं । लोकालोकाख्यपर्वते ॥ चक्राकारेण वाडते । वाडृ आप्लाव्ये । अच् ॥ न । चक्रवाले । मण्डले ॥ चक्रं भूमण्डलं वलते । वल वेष्टने । कर्मण्यण् । डलयोरैक्यम् ॥

चक्रवातः । पुं । वात्यायाम् । ववूरा इति भाषा ॥

चक्रवालः । पुं । लोकालोकपर्वते ॥ न । मण्डलाकारेण परिणतसमूहे । मण्डले ॥ चक्राकारेण वलते । वल संवरणे । अच् । अन्येषामपीतिदीर्घः ॥ यद्वा । भावेघञिवालः । चक्रमिववालोऽस्य ॥ चक्रं भूमण्डलं वलते । वल वेष्टने । कर्मण्यण्वा ॥ चक्रवालमस्याऽस्तीतिवा । अर्शआद्यच् ॥

चक्रवृद्धिः । स्त्री । यत्रवृद्धिरूपंधनंदातुमशक्तोऽधमर्णः सवृद्धिकमिदं दास्यामीतिस्वीकरोति तत्रयावृद्धिःसा । सूदका सूद इति भाषा ॥ वृद्धेरपि पुनर्वृद्धि श्चक्रवृद्धि रुदाहृतेति नारदः ॥

चक्रव्यूहः । पुं । युद्धार्थं मण्डलाकारेण सैन्यरचनायाम् ॥

चक्रशल्या । स्त्री । काकतुण्ड्याम् ॥ श्वेतगुञ्जायाम् ॥

चक्रश्रेणी । स्त्री । अजशृङ्ग्याम् ॥

चक्रसंज्ञम् । न । वङ्गे ॥

चक्रसम्बरः । पुं । बुद्धभेदे । वज्रटीके ॥

चक्रा । स्त्री । नागरमुस्तायाम् ॥ कर्कटशृङ्ग्याम् ॥

चक्राङ्गः । पुं । श्वेतगरुति । हंसे ॥ चक्राण्यङ्गान्यस्य ॥ रथे ॥ चक्रमङ्गमस्य ॥

चक्राङ्गा । स्त्री । सुदर्शनायां लतायाम् ॥

चक्राङ्गी । स्त्री । कटुरोहिण्याम् ॥ छिन्नमोचिकायाम् ॥ मञ्जिष्ठायाम् ॥ वृषपर्ण्याम् ॥ कर्कटशृङ्ग्याम् ॥ चक्राकारमङ्गमस्याः । गौरादित्वान् ङीष् ॥ हंस्याम् ॥

चक्राटः । पुं । विषवैद्ये ॥ धूर्त्ते ॥ दीनारे ॥

चक्राधिवासी । पुं । नारङ्गवृक्षे । किर्मीरत्वचि ॥

चक्रावर्त्तः । पुं । घूर्णने ॥

चक्राह्वः । पुं । चक्रमर्द्दे ॥

चक्रिकः । पुं । घटिके । घटिकावादके ॥ चक्रंवाद्यत्वनास्त्यस्य । ठन् ॥

चक्रिका । स्त्री । दुरुद्योगे ॥ घुणावर्त्ते ॥ जानुनि ॥ चक्री इतिभाषा प्रसिद्धे द्रव्यस्वरूपे ॥

चक्री । पुं । जालिकभिदि ॥ कोके ॥ कुलाले ॥ अहौ ॥ सूचके ॥ वैकुण्ठे । नारायणे ॥ चक्रं मनस्तत्त्वात्मकं सुदर्शनाख्य मस्यास्ति इनिः ॥ चक्रवर्त्तिनि ॥ चक्रमर्द्दे ॥ तिनिशे ॥

व्यालनखे ॥ काके ॥ खरे ॥ त्रि । चक्रविशिष्टे ॥ चक्रमस्यास्ति । अतइनिठनाविति इनिः ॥ चक्रयुक्तरथादियानारूढे ॥

चक्री । स्त्री । चक्की इतिसर्वजनप्रसिद्धायां चूर्णपेषण्याम् । जाँता इति भाषा ॥

चक्रीवान् । पुं । गर्द्दभे ॥ चक्रवङ्क्रमणं चक्रम् । तदस्यास्ति । मतुप् । आसन्दीवदितिसाधुः ॥ चक्रीवान्नाम राजापि ॥

चक्रुः । पुं । कर्त्तरि ॥ करोति । डुकृञ्० । कृभ्रेश्चेति चकारात् कुः प्रत्ययेधातोर्द्वित्वञ्च ॥

चक्रेश्वरी । स्त्री । जिनानांविद्यादेवीविशेषे ॥ इतिहेमचन्द्रः ॥

चक्षणम् । न । अवदंशे । मद्यपानरोचकभक्ष्यद्रव्ये । चखना इति भाषा ॥

चक्षाः । पुं । बृहस्पतौ ॥ उपाध्याये ॥

चक्षुःश्रवाः । पुं । सर्पे ॥ चक्षुःश्रवःकर्णोऽस्य । सान्तः ॥

चक्षुर्वर्हनम् । न । मेषशृङ्गीवृक्षे ॥

चक्षुष्यः । पुं । केतके ॥ पुण्डरीकवृक्षे ॥ शोभाञ्जनवृक्षे ॥ रसाञ्जने ॥ न । सौवीराञ्जने ॥ खर्परीतुत्थे ॥ प्रपौण्डरीके । स्थलपद्मे ॥ त्रि । प्रियदर्शने ॥ अभिहिते ॥ चक्षुषादर्शनीये ॥



चक्षुषेहितम् । शरीरावयवाद्यत् ॥

चक्षुष्या । स्त्री । कुलत्थिकायाम् ॥ सुभगायाम् ॥ अजशृङ्ग्याम् ॥ अरण्यकुलत्थिकायाम् ॥ चक्षुषेहिता । यत् । टाप् ॥

चक्षुः । न । लोचने । नयने । नेत्रे । रूपग्रहणलिङ्गेन्द्रिये । रूपप्रकाशके ॥ उद्भूतरूपं नयनस्यगोचरो द्रव्याणि तद्वन्ति पृथक्त्वसङ्ख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम् । गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोरिति कारिकावली ॥ पाणिर्ध्यानं स्पृशञ्चक्षुः श्चक्षुषी नैकपाणिनेतिकर्मलोचनम् ॥ चष्टे पश्यत्यनेन चक्षतेरूपमनुभवत्यनेन वा । चक्षिङ्० । चक्षेःशिच्चेत्युसिः । शिच्वादनार्द्धधातुकत्वात् ख्याञ् न ॥ मेषशृङ्गीवृक्षे ॥

चङ्कुरः । पुं । स्यन्दने । रथे ॥ वृक्षे ॥ न । धोरणे । यानमात्रे ॥ चङ्कति । चकि: सौत्रः । मन्दिवाशिमथिचति चङ्क्यङ्किभ्यउरच् ॥

चङ्क्रमणम् । न । अतिशयभ्रमणे । इतस्ततो भ्रमणे ॥ पुनः पुनर्भ्रमणे ॥ अनतिदेहपीडाकारकचङ्क्रमणस्य गु-

णाः । आयुर्बलमेधाग्नीन्द्रियशुद्धि-
कारित्वम् ॥ सदोपानद्धृतपादस्य
ङ्क्रमणगुणाः । अनारोग्यत्वम् । अ
नायुष्यत्वम् । इन्द्रियहष्टिनाशित्व
न्वे तिराजवल्लभः ॥

चङ्गः । त्रि । शोभने ॥ दक्षे ॥ इति-
मेदिनी ॥

चचेण्डा । स्त्री । फललताविशेषे । वृ
हत् फले ॥

चञ्चः । पुं । पञ्चाङ्गुले ॥ चञ्चति । च
ञ्चुगतौ । पचाद्यच् ॥

चञ्चत् । त्रि । देदीप्यमाने ॥

चञ्चत्पुटः । पुं । तालप्रभेदे ॥ ताले
चञ्चत्पुटेऽयं गुरुद्वन्द्वं लघुप्लुतम् ॥

चञ्चरी । स्त्री । तिन्तिडीवृते ॥ भ्रम
र्याम् ॥

चञ्चरीकः । पुं । भ्रमरे । षट्पदे ॥
चञ्चति । चञ्चु० । पर्फरीकादित्वात्
साधुः ॥ चरति वा । चर० । पर्फरी
कादित्वादीकन् चरेर्नुमच ॥

चञ्चलः । पुं । कामुके ॥ अनिले ॥ त्रि
। अस्थिरे । सदाचलनस्वभावे । लो
ले । तरले ॥ कदाचिच्चञ्चलासती ।
चञ्चति । चञ्चु० । वाहुलकात् अ
लच् ॥

चञ्चला । स्त्री । लक्ष्म्याम् ॥ तडिति
॥ पिप्पल्याम् ॥ वर्णवृत्तविशेषे । य
था । तूर्यतालपञ्चिराजमेरुहारनाय
केन चामरध्वजेन चापि मण्डिता सु
वर्णकेन । वर्णिताऽतिसुन्दरेण पन्न
गेन्द्रपिङ्गलेन चञ्चलाचकोरचारु-
लोचने सुमङ्गलेन ॥ यथा । आलि-
यासि मञ्जुकुञ्जगुञ्जितालिलालिते
न भास्करात्मजाविराजिरम्यतीरका
ननेन । शोभिते स्थले स्थितेन सङ्ग-
ता यदूत्तमेन माधवेन भाविनी
तडिल्लतेव नीरदेनेति ॥ चञ्चनम्
। चञ्चु० । घञ् । चञ्चं लाति ।
ला० कः ॥

चञ्चा । स्त्री । नलनिर्माणे । नलनि
र्मिते । चांच इतिगौडभाषा ॥ तृ
णनिर्मितपुरुषे । वजूका इतिभाषा
॥ चञ्चति । चञ्चु० । अच् । टाप् ॥
चञ्चेव मनुष्यः । लुम्मनुष्ये इति
कनोलुप् ॥

चञ्चुः । पुं । नाडीचशाके ॥ रक्तैर
के । रक्तैरण्डे ॥ एरण्डसामान्ये ॥
सुद्रचञ्चुवृक्षे ॥ स्त्री । पक्षिणामो
ष्ठे । चोञ्च्याम् । चूंच इति भाषा ॥
चञ्चति । चञ्चु० । वाहुलकादुः ॥
चिञ्चुकायाम् । चेंचूनाडीतिख्याते ॥ च
ञ्चुःशीता सरा बल्या स्वाद्वी दोषत्र
यापहा । धातुपुष्टिकरी बल्या मेध्या
पिच्छिलिका स्मृता ॥ [illegible] शाकविशे-

षे। विजलायाम्। चीरपत्रिकायाम्॥
चञ्चुका। स्त्री। चञ्चौ। पक्षिणामोष्ठे॥
चञ्चुपत्रः। पुं। सुशाके। विजलायाम्॥
चञ्चुभृत्। पुं। स्त्री। } खगे। पक्षि
चञ्चुमान्। पुं। स्त्री। } णि॥
चञ्चुरः। पुं। चञ्चुशाके॥
चञ्चुसूचिः। पुं। } सुगृहे। पीततु
चञ्चुसूचिकः। पुं। } ण्डे। बया इतिभा
षा॥ चञ्चौसूचिरस्य। स्वार्थे कः॥
चञ्चूः। स्त्री। चञ्च्वाम्। चोञ्चाम्॥
ऊङुतः॥
चञ्चकः। पुं। चेंचू इतिप्रसिद्धे शाके॥
चटकः। पुं। कलविङ्के। गृहनीडे।
चिडा इतिभाषा॥ चटतिभिनत्ति
गृहीतधान्यादिकं मुखेन। चटभेद
ने। पचाद्यच्। तस्मात् स्वार्थेकः॥
चटकका। स्त्री। चटकायाम्। चटकि
कायाम्॥ उदीचामातःस्थानइति
पत्रेइदादेशाभावः॥
चटका। स्त्री। चटकस्यस्त्रियाम्॥ च
टकस्य चटकाया वा स्त्र्यपत्ये। चि
डिया इतिभाषा॥ चटकस्य चटका
या वा स्त्र्यपत्यम्। चटकायाऐरक्
स्त्रियामपत्येलुग्वक्तव्यः। तत्र टाव
न्तात् तद्धितेलुसे लुक्तद्धितलुकी
तिटापोलुकि पुनरजादिलक्षणष्टा
प्। सच कातिलचणस्यङीषोबाधइति
भावः॥ नचात्रप्रत्ययस्थादितीत्वारः
शङ्क्यः चटकायाऐरगितिनिर्देशादन्ता
दिषुनिपातनाद्वातदप्रवृत्तेः। चिप
कादित्वान्नेत्वमितितुयुक्तम्। पुं
योगलक्षणो जातिलक्षणो वा ङीष्
अजादिपाठाद्बाध्यते॥ श्यामाख्यप
चिणि॥
चटकाशिरः। न। पिप्पलीमूले॥ च
टकायाःशिरइव॥
चटकिका। स्त्री। चटककायाम्॥ उ
दीचामातःस्थानेयकपूर्वायाः इतिप
चेइदादेशः॥
चटु। अ। प्रियेवाक्ये॥
चटुः। पुं। चाटौ। प्रियेवाक्ये॥ व्रतिं
नामासने॥ पिचण्डे। उदरे॥ चट
ति। चट०। मृगय्वादित्वात् कुः॥
चटुलः। त्रि। चञ्चले॥ शोभने॥ च
टति। बाहुलकादुलच्॥ मत्वर्थे
सिध्मादित्वाल्लच्वा॥
चटुला। स्त्री। विद्युति॥ अजा० टाप्॥
चटुलोलः। त्रि। चाटुलोले। सुचञ्च
ले॥ इति हारावली॥
चट्टलम्। न। सिद्धपीठविशेषे॥ यथा
। चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेख
रः। व्यक्तरूपा भगवती भवानी त
त्रदेवता। विशेषतः कलियुगे वसा
मिचन्द्रशेखरे। इति॥

चणकः । पुं । शस्यविशेषे । हरिमन्थे ॥ चणकः शीतलो रूक्षः पित्तरक्तकफापहः । लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः ॥ सचाङ्गारेणसम्भृष्टस्तैलभृष्टश्च तद्गुणः । आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः ॥ शुष्कभृष्टोऽतिरूक्षः स्याद्वातकुष्ठप्रकोपनः । स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरोऽहितः ॥ आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः ॥ * ॥ हरितार्द्रचणकरन्धनन्तु । सुहरितहरिमन्थः क्षोदभिन्नो नखाग्रैः प्रथममुदकसिक्तो वेसवारेण सिद्धः । लवणमरिचसङ्गात् तैलहिङ्गुप्रसिक्तः शिखरयति विभोक्तुर्जाठरं मन्दवह्निम् ॥ छोलाभिधानकफलं परिगृह्य शुद्धं तप्ते घृते सुखलितं क्वथितोषणाभ्याम् । संसाधितं सुरभितं शुचिरामठेन जिह्वातले विशति नित्यमतिप्रकामम् ॥ चणयते । चणदाने । कुन् ॥ मुनिविशेषे ॥

चणकरोटिका । स्त्री । चणकमुद्रायाम् ॥ चाणक्यरोटिका रूक्षा श्लेष्मपित्तास्रनुद्गुरुः । विष्टम्भिनी न चक्षुष्या तद्गुणा तिलशष्कुली ॥

चणकशाकम् । न । स्वनाम्ना प्रसिद्धे शाके ॥ रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत् । अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् ॥ सुकृत्तं चाणकं शाकं मल्लतक्रेण साधितम् । सहिङ्गुलवणेतप्ते भर्जितं रामठान्वितम् ॥ क्षाराम्लभावसहजा स्वणकप्रवालाः सम्मर्दितामरिचसैन्धवशृङ्गबेरैः । सञ्चूर्णिताः कटुकतैलयुतैः सुपक्वैर्भृष्टैः सुहिङ्गुचणकैः परिदत्तवासाः ॥

चणकात्मजः । पुं । वात्स्यायनमुनौ ॥

चणकाम्लम् । न । चणकक्षारे ॥ चणकाम्लकमत्यम्लं दीपनं दन्तहर्षणम् । लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ॥

चणकाम्लवाः । न । क्षेत्रस्थफलवच्चणकपत्रशिशिरवारिणि ॥

चणद्रुमः । पुं । क्षुद्रगोक्षुरे ॥

चणपत्री । पुं । रुदन्तीवृक्षे ॥

चणिका । स्त्री । तृणविशेषे । गोदुग्धायाम् ॥

चण्ड. । पुं । तिन्तिडीवृक्षे ॥ यमकिङ्करे ॥ दैत्यविशेषे ॥ न । तीक्ष्णे ॥ त्रि । अतिकोपने ॥ तीव्रे ॥ तीक्ष्णवति ॥ चण्डते । चडिकोपे । पचाद्यच् ॥ चमति । चमुअदने । चकासि वा । चणदाने । अमन्तात् डः ॥

चण्डता । स्त्री । उग्रतायाम् ॥ भावे तल् ॥

चण्डनायिका । स्त्री । दुर्गायाम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥

चण्डमुण्डी । स्त्री । स्थानविशेषे ॥ यथा । चण्डमुण्डी महास्थाने दण्डिनी परमेश्वरीति ॥

चण्डचन्द्रिका । स्त्री । विद्याविशेषे ॥

चण्डवती । स्त्री । चण्डीविशेषे ॥

चण्डवृष्टिप्रतापः । पुं । दण्डकविशेषे । यथा । यदिह नयुगलं ततः सप्त रेफा सदा चण्डवृष्टिप्रतापो भवेद् दण्डकः । यथा । प्रबलघनघटासदारम्भमेघावली चण्डवृष्टिप्रतापाकुलं गोकुलम् सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया । कमलनयन इत्यरचेतिगर्ज्जत्पसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो गलद्भिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वइति ॥

चण्डा । स्त्री । धनहरीद्रुमे । चोरनामगन्धद्रव्ये ॥ शङ्खपुष्प्याम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥ जिनानां शासनदेवताविशेषे ॥ लिङ्गिनीलतायाम् ॥ कपिकच्छ्वाम् ॥ आखुपर्ण्याम् ॥ श्वेतदूर्वायाम् ॥ यथा वतीमत्याम् ॥ टाप् ॥

चण्डांशुः । पुं । सूर्ये ॥ चण्डा अंशवो यस्य सः ॥

चण्डातः । पुं । करवीरे ॥ चण्डमतति । अत० । कर्मण्यण् ॥

चण्डातकः । पुं । न । अर्द्धोरुके । वरस्त्रीणामर्द्धोरुपर्य्यन्तवस्त्रे ॥ चण्डां कोपनां वरस्त्रियमतति । अत० । क्वुन् ॥

चण्डालः । पुं । शूद्राद्ब्राह्मण्यामुत्पन्ने । प्लवे । मातङ्गे । दिवाकीर्त्तौ । श्वपचे । व्याधधर्मे ॥ चण्डते । चडि० । पतिचण्डिभ्यामालञ् ॥

चण्डालकन्दः । पुं । कन्दविशेषे ॥

चण्डालवल्लकी । स्त्री । चण्डालवीणायाम् । कण्डोलवीणायाम् । किङ्गरीतिभाषा ॥ चण्डालस्य वल्लकी ॥

चण्डालिका । स्त्री । किन्नर्य्याम् ॥ उमायाम् ॥ ओषधीभेदे ॥

चण्डिः । स्त्री । चण्ड्याम् ॥ चण्डति । चडि० । सर्वधातुभ्य इन् ॥

चण्डिका । स्त्री । भवान्याम् । चण्ड्याम् ॥ अस्याः स्थानममरेशे ॥ चण्डे कर्त्तरि ण्वुल् । ह्रस्वम् ॥

चण्डिकेश्वरः । पुं । शिवे ॥

चण्डिमा । पुं । चण्डत्वे ॥ चण्डस्य भावः । पृथ्वा० इमनिच् ॥

चण्डिलः । पुं । रुद्रे ॥ वास्तूकशाके ॥ ना

षिते ॥

चण्डिका । स्त्री । नदीविशेषे ॥

चण्डी । स्त्री । कात्यायन्याम् । दुर्गायाम् ॥ हिंस्रायांमार्याम् ॥ कोपनायां येषिति ॥ मार्कण्डेयपुराणोक्तश्रीदेवीमाहात्म्ये ॥ अतिजगतीसंज्ञकत्रयोदशाक्षरावृत्तिविशेषे । यथा । नयुगलसयुगलगैरिति चण्डी ॥ जयति दितिजरिपुताण्डवलीलाकुपितकवलकरकालियमौलौ । चरणकमलयुगचापलचण्डी पदमख चविजितभोगमणिश्रीः ॥ चण्डति । चण्डिकोपे । पचाद्यच् । बह्वादि ष्यश्चेतिङीष् ॥

चण्डीकान्तः । पुं । सदाशिवे ॥ चण्ड्याः कान्तः ॥

चण्डीकुसुमः । पुं । रक्तकरवीरवृक्षे॥

चण्डीशः । पुं । शिवे ॥

चण्डुः । पुं । उन्दुरौ ॥

चतुःपर्णी । स्त्री । क्षुद्रपाषाणभेदिनि ॥

चतुःपर्णी । स्त्री । चुक्राम्लिकायाम् ॥

चतुःपला । स्त्री । नागबलायाम् ॥

चतुःपुण्ड्रः । पुं । भिण्डावृक्षे ॥

चतुःशालम् । न । सञ्जवने । अन्योन्याभिमुखगेहचतुष्टयगृहे ॥ चतस्रः शालाः समाहृताः । आवन्तोवेतिङी वत्वम् ॥ पक्षे चतुःशाली ॥

चतुःषष्टिः । स्त्री । कलाभेदे । कलानामन्युपधिज्ञायाम् ॥ सङ्ख्याभेदे । चौसठ इतिभाषा ॥ बहुव्रीहि । सङ्ख्येदे ॥ चतुरधिकाषष्टिः ॥

चतुःसमम् । न । मिलितचन्दनागुरुकस्तूरीकुङ्कुमरूपे ॥ औषधविशेषे ॥ यथा । लवङ्गं सैन्धवं पथ्या यमानीचचतुःसमम् । आमशूलविबन्धघ्नं पाचनं भेदिशोधनुत् ॥ अन्यच्च । जातीफलं चिदशपुष्पसमन्वितञ्च-जीरञ्च टङ्कणयुतं चरकेणचोक्तम् । चूर्णानि माक्षिकसितासहितानि लीढ्वा आमातिसार मखिलं गुरुहन्ति शूलमिति ॥

चत्वारः । त्रि । सङ्ख्याविशेषे । चार इति भाषा ॥ सङ्ख्येये ॥ यथा । चत्वारो वेदाः । चतस्रः स्त्रियः । चत्वारि फलानि ॥ चतति चत्यते वा । चतेयाचने । चतेरुरन् ॥

चतुरः । पुं । चक्रगण्डौ ॥ न । हस्तिशालायाम् ॥ त्रि । नेत्रगोचरे ॥ चटुकारे ॥ कार्यकुशले । दक्षे । पटौ । निपुणे ॥ चतति चत्यते वा । चते॰ । मद्रिवाशिमथिचति चङ्क्यङ्किभ्यउरच् ॥

चतुरंसा । स्त्री । वर्णवृत्तप्रभेदे ॥ यथा । विजवरकर्णा विष्टरसंवर्णा भ

वति यदासा किञ्चतुरंसा ॥ यथा
। जयजयविष्णो त्रिभुवनजिष्णो । अ
पनयदुःखं प्रवितरसौख्यमिति ॥ य
था वा । नवरतिशाली यदिवनमा
ली । विविधविलासे सखिकिमुदासे
इति ॥

चतुरक्रमः । पुं । सप्तधारूपकान्तर्गतरू
पकभेदे ॥ द्रुतद्वन्द्वंप्लुतद्वन्द्वं तथा प्रा
न्तेगुरुर्भवेत् । द्वाविंशत्यक्षरैर्युक्तः शृ
ङ्गारे चतुरक्रमइतिदामोदरोक्त ॥

चतुरङ्गम् । न । हस्त्यश्वरथपदातिरू
पे सैन्ये ॥ यथा । चतुरङ्गमपिबलं
सुमहत प्रसहेम हीतिरामायणम्
॥ * ॥ चैारङ्खेल इति सतरञ्जखेल
इतिच प्रसिद्धे क्रीडाविशेषे ॥ यथा
। युधिष्ठिरउवाच । अष्टकोष्ठगताश्च
या क्रीडा तां मे ब्रूहि तपोधन । म
कर्षेणैवमेनायचतूराजीयतो भवे
त् ॥ व्यासउवाच । अष्टौकोष्ठान्स
मालिख्य प्रदक्षिणक्रमेणतु । अरुणं
पूर्वतः कृत्वा दक्षिणे हरितंबलम् ॥
पार्श्वपश्चिमतः पीतमुत्तरेश्यामलं
बलम् । राज्ञोवामेगजं कुर्यात् त
स्मादश्वं ततस्तरिम् ॥ कुर्यात् कै
न्तेयपुरतो युद्धे पत्तिचतुष्टयम् । को
णेनौका द्वितीयेऽश्वस्तृतीयेतु गजो
वसेत् ॥ तुरीयेतुवसेद्राजा वटिकाः



पुरतः स्थिताः । * । पञ्चकेन वटी
राजा चतुष्कोणैव कुञ्जरः ॥ त्रिकोण
तुचलत्यश्वः पार्थनौका द्वयेनतु । *
। कोष्ठमेकं विलङ्घ्याथ सर्वतो या
तिभूपतिः ॥ अग्रएव वटीयाति वलं
हन्त्यग्रकोणगम् । यथेष्टं कुञ्जरोया
ति चतुर्दिक्षु महीपते ॥ तिर्यक्तुर
ङ्गमोयाति लङ्घयित्वात्रिकोष्ठकम् ।
कोणकोष्ठद्वयं लङ्घ्य व्रजेन्नौकायु
धिष्ठिर ॥ * ॥ सिंहासनं चतूराजी
नृपाकृष्टन्तुषट्पदम् । काककाष्ठं वृ
हन्नौका नौकाकृष्टप्रकारकम् ॥ *
॥ घाताघाते वटीनौका वलं हन्ति
युधिष्ठिर । राजा गजो हयश्चापि त्यि
क्त्वा घातं निहन्तिच ॥ अत्यन्तं
स्वबलं रक्षेत् स्वराजाबलमुत्तमम् ।
अल्पस्यारक्षणापार्थहन्तव्यं बलमुत्त-
मम् ॥ नौकायाश्चत्वारिपदानि अश्व
स्याष्टौपदानि इत्याधिक्य मश्वस्य ॥
मतङ्गजस्य गर्वेस्वराजा क्रीडतिनिर्भ
रम् । तस्मात्सर्ववलं दत्वा रक्षेत्
कौन्तेयकुञ्जरम् ॥ सिंहासनं चतूरा
जी यदवस्थानतो भवेत् । सर्वसैन्यै
र्गजैर्वापि रक्षितव्यो महीपतिः ॥
* ॥ अन्यद्राजपदं राजा यदाक्रान्तो
युधिष्ठिर । तदासिंहासनं तस्य भण्य
ते नृपसत्तम ॥ राजाच नृपतिं हत्वा

चतुर

कुर्यात् सिंहासनंयदा। द्विगुणंबाहयेत् पणमन्यथैकगुणं भवेत् ॥ द्विगुणपणंदातव्यस्तेन प्रापयेत् ॥ मित्रसिंहासनं पार्श्वे यदारोहति भूपतिः। तदासिंहासनं नाम सर्वंजयति तद्धनम् ॥ यदासिंहासनं कर्त्तुंराजाष्टपदाश्रितः। तदाघातेपि हन्तव्यो बलेनापि सुरक्षितः ॥ * ॥ विक्रमानेनृपेणव स्वकीयेन नृपचयम्। प्राप्नोतिच तदातस्य चतुराजीयदाभवेत् ॥ नृपेणैव नृपंहत्वा चतुराजीयदाभवेत्। द्विगुणंबाहयेत् पणमन्यथैकगुणं भवेत् ॥ स्वपदस्थं यदा राजा राजानंहन्ति पार्थिव। चतुरङ्गे तदाभूपबाहयेच्च चतुर्गुणम् ॥ यदा सिंहासने काले चतुराजी समुत्थिता। चतुराजीभवत्येव नतुसिंहासनं नृप ॥ अर्थेदंवीजम्। उभययाजयेपिपरसिंहासनाधिकारात् बरराजवधेशौर्याधिक्यनिष्कण्टकत्वदर्शनात् कौशलमधिकं कल्प्यते ॥ * ॥ राजद्वयं यदा हस्ते आत्मनोराज्ञिसंस्थिते। परेणसंहृतश्चैको बलेनाप्यपहार्यते ॥ राजद्वयं यदाहस्ते न स्यादन्यकरेपरः। तदा राजाहि राजानं घातेपि तं हनिष्यति ॥ नृपाकृष्टे यदा राजा गमिष्यतियुधिष्ठिर। घाताघातेपिहन्तव्योराजातत्र नरषभः ॥ * ॥ कोणं राजपदंत्यक्त्वा वटिकान्तंयदाव्रजेत्। वटीनयेत् पदंनामतदाकोष्ठवलंचषट् ॥ यदितत्रभवेत् पार्श्वेचतुराजीचषट्पदम्। तदापिच चतुराजीभवत्येवनसंशयः ॥ यदातेः षट्पदेपिद्वे राजावा हस्तिना तथा। षट्पदं न भवेत् तस्य अवश्यं शृणुपार्थिव॥ सप्तमेकोष्ठकेयांस्याद्वटिकादश्वकेनवै। तदान्योन्यच्चहन्तव्यंसुखाय दुर्बलंबलम् ॥ त्रिवटीकस्य कौन्तेय पुरुषस्य कदाचन। षट्पदं नभवत्येव इतिगोतमभाषितम् ॥ * ॥ नौकैकावटिका यस्यविद्यतेखेलनेयदि। गाढावटीतिविख्याता पदंतस्यनदृश्यति ॥ गाढा घाग्यापदं राजपदंकोणपदञ्चतत्। * । हस्तेरङ्गेबलंनास्ति काककाष्ठंतदाभवेत् ॥ वदन्तिराक्षसाः सर्वेतस्य न क्वोजयाजयौ। * । प्रार्थिते पञ्चमेराशि स्ततश्चाष्टपदे॥ अशोचंस्यात्तदाराजन् चलित्वाचालितं पदम्। द्विराहत्यागतौ तस्मादन्यात् परबलंजयी॥ पार्श्वेसिंहासमे काले काककाष्ठं यदाभवेत्। सिंहासनं भवत्येव काककाष्ठं न भवत्येव। * ॥ उपविष्टस्थात् स्थानं त-

कोपरि चतुष्टये । नौकाचतुष्टयं यत्र क्रियते सा नौकया ॥ नौकाचतुष्टयं तत्र वृषनौकेति भण्यते । * । नकुर्यादेकदा राजन् गजस्याभिमुखं गजम् ॥ यदि कुर्वीत धर्मज्ञ पापयुक्तो भविष्यति । स्थानाभावे यदा पार्थ हस्तिनं हस्तिसम्मुखम् ॥ करिष्यति-तदा राजन्निति गौतमभाषितम् । प्राप्ते गजवधे राजन् हन्तव्यो वामतो गजः ॥ इति तिथ्यादितत्त्वे चतुरङ्गक्रीडनम् ॥

चतुरङ्गा । स्त्री । घोटिकावृक्षे ॥

चतुरङ्गिणी । स्त्री । सेनायाम् ॥ रथगजहयपदातयः चत्वारि अङ्गानि यस्याम् सा ॥

चतुरङ्गुलः । पुं । वनवहेडा इति प्रसिद्धे आरग्वधवृक्षे ॥ चतस्रोऽङ्गुलयः प्रमाणमस्य पर्वणस्तद्योगात् इत्योपि ॥

चतुरब्दा । स्त्री । चतुर्हायण्यां गवि ॥ चत्वारोऽब्दा वयःप्रमाणमस्याः । आर्षीविष्टक् । अध्यर्द्धैतिणक् ॥

चतुरम्लम् । न । कोलदाडिमवृक्षाम्लाऽम्लवेतसे ॥ अम्लवेतसवृक्षाम्लबृहज्जम्बीरनिम्बुकैः । चतुरम्लमिदंप्रोक्तंग्रन्थेभावप्रकाशके ॥

चतुरस्रः । त्रि । चतुष्कोणे ॥ समानाश्चतुर्णाऽश्मयाने । समानाश्चतुर्वेनिध



नेचतुरस्रसंज्ञे ॥ चतस्रोऽस्रयोऽस्य । सुप्रातसुश्वेत्यच्प्रत्ययान्तो निपातितः ॥

चतुरात्मा । पुं । परमात्मनि परमेश्वरे ॥ सर्गादिषु पृथग्विभूतयश्चतस्रः-आत्मानःसन्त्यस्य । यथा । ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतःसृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालः सर्वभूतानिचद्विज । स्थितेर्निमित्तभूतस्य विष्णोरेताविभूतयः ॥ रुद्रः का-लोऽन्तकाद्याश्च समस्ताश्चैवजन्तवः । चतुर्द्धाप्रलये ह्येता जनार्दनविभूत-यः ॥ इति विष्णुपुराणम् ॥ यद्वा । रागद्वेषादिरहितत्वात् चतुरं मनः आत्मा यस्य सः । मनोबुद्ध्यहङ्कारचित्तचतुष्टयात्मकत्वाद्वा ॥

चतुराननः । पुं । ब्रह्मणि । अजयोनौ ॥ यथा । तस्यां सचाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः । परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशंमुखानीति । श्रीभागवतम् । चत्वारि आननान्यस्य ॥

चतुरूषणम् । न । कणामूलसहिते त्र्यूषणे ॥ त्र्यूषणंसकणामूलंकथितं चतुरूषणम् । व्योषस्यैवगुणाः प्रोक्ताअधिकाश्चतुरूषणे ॥

चतुर्ग्गतिः । पुं । नारायणे ॥ चतुर्धा

माश्रमाणां वर्णानाञ्च यथोक्तकारिणां गतिराश्रयः ॥ कच्छपे ॥

चतुर्ज्जातकम् । न । त्वगेलापत्रकनागकेसरेषु ॥ एतच्चरोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् । लघुपित्ताऽग्निकृद्वर्ण्यं कफवातविषापहम् ॥

चतुर्थः । त्रि । तुरीये ॥ चतुर्णां पूरणः । तस्यपूरणेडट् तस्यथुगागमः ॥

चतुर्थकः । पुं । चतुर्थेऽह्नि चतुर्थक इति ख्यातख्याते विषमज्वरविशेषे ॥ चतुर्थेऽह्निभवः । कालप्रयोजनाद्रोग इति कन् । दिनद्वयन्त्वतिक्रम्य यःस्यात्सहि चतुर्थकइत्युक्तः । चतुर्थकश्चतुर्थेऽह्नीत्यचागमादिमंगृहीत्वाव्याख्येयम् ॥

चतुर्थांशः । त्रि । चतुर्भागैकभागे । तुरीये । पादे ॥

चतुर्थिका । स्त्री । पलपरिमाणे ॥

चतुर्थी । स्त्री । चन्द्रस्यचतुर्थकलाक्रियारूपायां तिथौ ॥ तत्रजातस्यफलं यथा । स्वपुत्रमित्रप्रमदाप्रमोदी दृष्टाभिलाषी कृपया समेतः । विवादशीलो विजयी विवादे भवेच्चतुर्थ्यामभयः कठोर इति ॥ ङेभ्याम्भ्यस् इति चिके ॥ टित्वान्ङीप् ॥

चतुर्द्दन्तः । पुं । ऐरावते । इन्द्रस्यगजे ॥ चत्वारोदन्ताः यस्य ॥

चतुर्द्दशः । त्रि । चतुर्द्दशानांपूरणे ॥ तस्यपूरणेडट् ॥

चतुर्द्दश । त्रि । सङ्ख्याविशेषे १४ ॥ सङ्ख्येये ॥ चत्वारश्च दशच ॥ चतुरधिकादशवा ॥

चतुर्द्दशभुवनम् । न । पञ्चीकृतेभ्यो भूतेभ्योजातानि भूर्भुवःस्वर्म्महोजनस्तपःसत्यमित्येतन्नामकानि उपर्युपरिविद्यमानानि सप्त । अतलवितलसुतलरसातलतलातलमहातलपातालनामकानि अधोऽधोविद्यमानान्यपि च सप्त । मिलित्वाचतुर्द्दशभुवनानि भवन्ति ॥ चतुर्द्दशानां भुवनानांसमाहारः ॥

चतुर्द्दशलोकम् । न । चतुर्द्दशभुवने ॥

चतुर्द्दशी । स्त्री । चन्द्रस्य चतुर्द्दशकलाक्रियारूपायांतिथौ ॥ तत्रोत्पन्नस्य फलम् । यथा । विरुद्धशीलः पुरुषः सरोष श्चौरः कठोरः परवञ्चकश्च । परान्नभोक्ता परदारचित्त श्चतुर्द्दशीचेज्जननस्य कालेइति ॥ टित्वान् ङीप् ॥

चतुर्द्दोलः । पुं । न । चण्डोलइति चन्दोलइतिचख्याते द्विपदवाह्ये यानविशेषे ॥ यथा । राजोपद् द्विपदं यानं विशेषाख्यमनंविदुः । चतुर्भिर्वाह्यतेयत्तुचतुर्दोलंतदुच्यते इति-

॥ अथभोजः । चतुर्भिर्वाहकै र्दं
ण्डै: षड्भिःकुम्भैः सुसंस्थितैः । स्त
म्भैरष्टाभिरुदितं चतुर्द्दोलमनुत्तम
म् ॥ * ॥ तद्भेदा अयकल्याणवीर
सिंहा यथाक्रमम् । चतुर्विधानां भू
पानां चतुर्द्दोलाः प्रकाशिताः ॥ चि
हस्तसम्मितायामो द्विहस्तपरिणाह
वान् । हस्तद्वयोन्नतः प्रोक्तश्चतुर्द्दो
लोजयाख्यया ॥ १ ॥ चतुर्हस्ताय
तो यस्तु सार्द्धद्विहस्तदन्यथा । चतु
र्द्दोलःसमाख्यातःकल्याणः स्तावदुन्न
तः ॥ २ ॥ पञ्चहस्तायतो यस्तु त्रिह
स्तपरिणाहवान् । तावद्देवोन्नतोवी
र श्चतुर्द्दोलउदाहृतः ॥ ३ ॥ आया
मपरिणाहाभ्यांचतुर्हस्तमितोहियः
। चतुर्द्दोलोह्ययंसिंहस्तदर्द्धेनोन्नतः
शुभः ॥ ४ ॥ * ॥ सत्रेोयद्विविधः प्रो
क्तः सच्छदिश्चापिनिश्छदिः । आ
द्यःसमरवर्षासु परःकेलिघनात्यये
॥ * ॥ सर्वेषामेवकाष्ठानां दण्डः
स्याद्वज्रधारणः । चन्दनेनैवघटना
सर्वेषामुपयुज्यते ॥ लोमजंसर्ववस्त्रे
षु कनकं सर्वधातुषु । कुम्भश्च पद्म
कोषश्चगिरिश्चेति यथाक्रमम् ॥ चै
देशानांमहीन्द्राणां चतुर्द्दोलेषु वि-
न्यसेत् ॥ दर्प्पणंचार्द्धचन्द्रश्च हंसः
केकी शुको गजः । अश्वः सिंहश्चत



स्याग्रेआदिश्यादिदिग्गेोत्तरान् ॥ म
णिनियमस्तुदण्डवत् ॥ * ॥ रक्तः
शुक्लश्च पीतश्च कृष्णश्चित्र स्तथाह
णः । नीलः कपिल इत्युक्ताः पता-
कानान्तुसङ्ग्रहः ॥ चतुर्द्दोलः सपता
कः शुभयानमितिस्मृतः ॥ * ॥ मु-
क्तास्तवकैर्दशभि र्युक्तः स्याद्राजके-
शानाम् । चामरदण्डैर्दशभिर्दिग्वि
यिनांचतुर्द्दोलः ॥ चाषपक्षस्य पुच्छ
श्चेत् सर्वोपरि परिन्यसेत् । याचासि
द्धिरयंनाम्ना चतुर्द्दोलो महीभुजाम्
॥ सम्भच्छादरहितो निश्छदिरुक्त
श्चतुर्द्दोलः । मानं पूर्ववत् ॥ * ॥
स पुन द्विविधः प्रोक्तः सध्वजश्चाथ
निर्ध्वजः । ध्वजान्षडत्र न्यस्यन्ति
षड्वर्गविजयैषिणः ॥ तेषां मानन्तु-
चत्वारः स्वामिहस्तैः कसम्मिताः ।
कोणेषु पश्चा दग्रेच हस्तद्वयमितौ
ध्वजौ ॥ सुवर्णं रजतं युग्मं त्रिविधा
नांमहीभुजाम् । मणिचामरकुम्भा
नांखङ्गादीनां विनिश्चयः ॥ चतुर्द्दो
लध्वजोरात्ना विज्ञेयो नवदण्डवत्
। निर्ध्वजेच चतुर्द्दोले मानमन्यत-
मंशृणु ॥ आयामपरिणाहाभ्यां च-
तुर्हस्तमितोहि यः । विजयोनाम
विख्यात श्चतुर्द्दोलो महीभुजाम् ॥
विजयो मङ्गलो भद्रो विसंह्यै कैक

हस्तः । त्रिविधानां महीन्द्राणां या
नत्रयमुदाहृतम् ॥ * ॥ अष्टाभिर्हस्त
तेयस्तु अष्टदोलमुशन्ति च । सोपा
नहितयच्चाश्वविश्रेयं शिल्पिनिर्मितम्
॥ * ॥ भोजस्तु । अष्टाभिर्वाहकैर्दं
ण्डैः षड्भिस्तु दशभिर्घटैः । स्तम्भै
स्तु दशभिर्यच्च मष्टदोलं महीभुजा
म् ॥ तद्भेदा जयकल्याणवीरसिंहा-
यथा क्रमम् । चतुर्विधानां भूपाना
मष्टदोलाः प्रकीर्त्तिताः ॥ षड्भिर्ह
स्तैर्मितायामः परिणाहश्चतुर्भुजः ।
चतुर्हस्तोन्नतो राज्ञामष्टदोलः जयं
विदुः ॥ आयामपरिणाहाभ्यां पञ्चह
स्तमितोच्छ्रयः । कल्याणाख्योष्टदो-
लोयं चतुर्हस्तमितोन्नतिः ॥ सप्तह
स्तायतः कार्य्यप्रवरे पञ्चहस्तकः । प
ञ्चहस्तोन्नतो वीरस्याष्टदोलो मही
भुजाम् ॥ आयामपरिणाहाभ्यामष्ट
हस्तमितोच्छ्रयः । सिंहनामाष्टदो-
लोयं विज्ञेयः षड्भुजोन्नतः ॥ * ॥
सर्वोयद्द्विविधः प्रोक्तः सच्छदिश्चापि
निश्छदिः । काष्ठवस्त्रघटादीनां म
णीनांचामरस्यच ॥ चतुर्दोलवदुन्ने
योनियमोन्योपिसूरिभिः । पूर्ववन्नि
श्छदेर्मानं ध्वजमानमिहोच्यते ॥
दशध्वजास्तेषु चाष्टौ स्वामिहस्तव
योन्नताः । पञ्च दशध्वजौराज्ञस्तु
र्हस्तमितौमतौ ॥ मणिचामरपञ्चा
णां निर्णयोनिष्पताकवत् । निर्ध्वज
श्चाष्टदोलोयः शिविकेतिसगद्यते ॥
मणिकुम्भमुखादीनां नियमोनवद्
घडवत् । इत्यष्टदोलकथनम् ॥ *
॥ एवं द्वादशषोडशविंशतिदोलादि-
काः कार्य्याः ॥ मानं सार्द्धद्विगुणितं
सार्द्धत्रिगुणितं युक्तमेतेषाम् । विं
शतिदोलात् परतो भोजमतेसम्म
वेशानम् ॥ यानं वह्ननुयोज्यं वह्नुगु
णमेतज्जगाद वै व्यासः ॥ * ॥ भवि
ष्योत्तरेपि । यदुक्तं द्वैपदं यानं ते
नमानेनयोनृपः । स्वयानं कुरुते-
दिव्यं सचिरं सुखमश्नुते ॥ स्वयोमयु
क्तयानस्थो भोममाप्नोतिमानवः ।
परयौगिकयानस्थः क्लेशमाप्नोतिपु
ष्कलम् ॥ योदम्भादथवाऽज्ञानाद्या
नं प्रकुरुते ऽन्यथा । तस्यैतानिविन
श्यन्ति आयुर्विद्यायशोधनम् ॥ प्रधा
नं यानमाश्रित्य नियमोयं समाश्रि
तः । नाप्रधानेनिर्णयोस्ति तत्रिमन्तु
मनोज्ञता ॥ इतियुक्तिकल्पतरुः ॥

चतुर्धा । अ । चतुष्प्रकारे ॥ यथा । च
तुर्धाविभजति । संख्याया विधार्थधा
॥ एकंराशिं चतुर्धाकुरु । अत्राधि
करणविचालेचेतिधा ॥

चतुर्भद्रम् । न । सकलेषु धर्मार्थकाम

मोक्षेषु ॥ चत्वारिभद्राणिश्रेष्ठान्यत्र वृन्दे ॥ यद्वा । चत्वारि भद्राणि । दिक्सङ्ख्ये संज्ञायामितिसमासः॥

चतुर्भुजः । पुं । विष्णौ । माधवे ॥ त्रि । भुजचतुष्टयविशिष्टे ॥ चत्वारोभुजायस्यसः ॥ यद्वा । भुङ्क्ते भुनक्ति इति भुजः । चतुर्णां धर्मार्थकाममोक्षाणां भुजः ॥

चतुर्मुखः । पुं । ब्रह्मणि । परमेष्ठिनि ॥ औषधविषये रसविशेषे ॥ यथा । रसगन्धकलौहाभ्रं समं स्यात्ताङ्घ्रि हेमच । सर्वं खल्लतले क्षिप्ता कन्यारसविमर्द्दितम् ॥ एरण्डपत्रैः रावेष्ट्य धान्यराशौ दिनत्रयम् । संस्थाप्य ततउद्धृत्य सर्वरोगेषुयोजयेत् ॥ एतद्रसायनवरं त्रिफलामधुसंयुतम् । तद्यथाग्निबलं खादेद्दर्लीपलितनाशनम् ॥ क्षयमेकादशविधं कासं पञ्चविधं तथा । कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥ शूलं श्वासञ्च हिक्काञ्च मन्दाग्निं चाम्लपित्तकम् । प्रलान सर्वा नाभ्रवातं विसर्पं विद्रधिं तथा ॥ अपस्मारग्रहोन्मादान् सर्वार्शांसित्वगामयान् । क्रमेणसेवितं हन्ति दृष्टमिन्द्राशनिर्यथा ॥ पौष्टिकं वल्यमायुष्यं पुत्रप्रसवकारणम् । चतुर्मुखेणोदेवे



नकृष्णाचयेणसूचितम् ॥ इतिप्रयोगामृतम् ॥ चत्वारिमुखानि अस्य ॥

चतुर्मूर्त्तिः । पुं । विष्णौ ॥ चतस्रोमूर्त्तयो विराट्सूत्राव्याकृततुरीयात्मानोऽस्य ॥ सिता पीता रक्ता कृष्णा चेति चतस्रो मूर्त्तयोऽस्य वा ॥

चतुर्युगम् । न । चतुर्षु सत्यत्रेताद्वापरकलिसंज्ञकेषु ॥ चतुर्णां युगानां समाहारः । पात्रादित्वात् स्त्रीत्वंन॥

चतुर्वक्त्रः । पुं । ब्रह्मणि । वेधसि ॥

चतुर्वर्गः । पुं । धर्मार्थकाममोक्षेषु मिलितेषु ॥ चतुर्णां वर्गः समूहः ॥

चतुर्विद्यः । पुं । चातुर्वैद्ये । चतुर्वेदवेत्तरि ॥

चतुर्विधशरीरम् । न । जरायुजाण्डजस्वेदजोद्भिज्जाख्येषु ॥ चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः । सुकृता ज्ञानवोभूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥

चतुर्वीजम् । न । मेथिकादिचतुष्टये ॥ मेथिका चन्द्रसूरञ्च कालाजाजी यवानिका । एतच्चतुष्टयंयुक्तं चतुर्वीजमितिस्मृतम् ॥ तच्चूर्णं भक्षितं नित्यं निहन्तिपवनामयान् । अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथा मितिभावप्रकाशः ॥

चतुर्व्यूहः । पुं । विष्णौ । नारायणे ॥

सृष्ट्यादिकार्यार्थं चत्वारोव्यूहा विभागा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञा मूर्त्तयो यस्य सः। यथा। व्यूह्यात्मानं चतुर्द्धावै वासुदेवादिमूर्त्तिभिः। सृष्ट्यादीन्प्रकरोत्येषविश्रुतात्मा जनार्द्दन इति व्यासवचनम्॥ तथाच मार्कण्डेयपुराणे मूलकारणं वासुदेवाख्यं व्यूहमुक्तोक्तम्। द्वितीया पृथिवीमूर्द्ध्नि शेषाख्या धारयत्यधः। तामसीसा समाख्याता तिर्यक्त्वं समुपाश्रिता॥ तृतीया कर्म्म कुरुते प्रजापालनतत्परा। सत्त्वोद्रिक्तातुसाज्ञेयाधर्मसंस्थानकारिणी॥ चतुर्थीजलमध्यस्था शेते पन्नगतल्पगा। रजस्तस्यागुणःसर्गंसाकरोतिसदैवहीत्यादि॥ शरीरपुरुषश्छन्दःपुरुषोवेदपुरुषमहापुरुषइति बह्वृचोपनिषदुक्ताश्चत्वारः पुरुषाव्यूहा अस्येति वा॥ न। साङ्ख्येमोक्षशास्त्रे॥ तत्रहि हेयं हानं हेयहेतुर्हानोपायश्चेति चत्वारोव्यूहाःप्रतिपाद्या भवन्ति। तत्र त्रिविधं दुःखं हेयम्। तदत्यन्तनिवृत्तिर्हानम्। प्रकृतिपुरुषसंयोगद्वाराचाविवेकोहेयहेतुः। विवेकख्यातिस्तुहानोपायइति॥ ॥ चिकित्साशास्त्रे॥ तत्रच रोगआरोग्यं रोगनिदानंभैषज्यमिति चत्वारोव्यूहास्त्वेनोक्ताः॥

चतुर्हायणी। स्त्री। चतुर्वर्षवयोगवि॥ चत्वारो हायना यस्याः। दामहायनेतिङीप्। त्रिचतुर्भ्योहायनस्येति णत्वम्॥ त्रि। अन्यच॥

चतुष्कम्। न। चतुस्तम्भमण्डपे। चौखम्भाइतिभाषा॥ अश्वस्यगतिविशेषे॥

चतुष्की। स्त्री। मशकहर्य्याम्। मसहरी इति भाषा॥ पुष्करिणी विशेषे॥

चतुष्टयम्। त्रि। चतुरवयवसमुदाये॥ यथा चतुष्टयीशब्दानां प्रवृत्तिरिति। शब्दानामर्थेया प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात् प्रकारचतुष्टयवतीत्यर्थः। प्रकारभेदश्चयथा। जातिशब्दोगुणशब्दः क्रियाशब्दोयदृच्छाशब्दश्चेति॥ चत्वारोऽवयवा यस्य। सङ्ख्यायाअवयवेतयप्। रेफस्यविसर्गेसत्वेचकृते ह्रस्वात्तादाविति मूर्द्धन्यः॥ केन्द्रे॥

चतुष्पत्री। स्त्री। सुनिषण्णके। चौपत्तो शाक इति भाषा॥ चाङ्गेरीसदृशः पत्रैश्चतुर्दलइतिस्मृतः। शाकोजला ऽन्वितेदेशे चतुष्पत्रीतिचोच्यते॥ क्षुद्रपाषाणभेदिनि॥

चतुष्पथः। पुं। ब्राह्मणे॥ न। चतुर्मार्गसङ्गमे। शृङ्गाटके॥ चतुर्णां पथां

समाहारः । तद्धितार्थेतिसमासः । कक्पूरितिसमासान्तः । इदुदुपधस्येतिषत्वम् । पथःसंख्येतिक्लीवत्वम् । चत्वारः पन्थानोयत्रवा ॥

चतुष्पदः । पुं । गवादिपशौ ॥ करणविशेषे ॥ तत्रजातस्यफलं यथा । चतुष्पदभवोमर्त्यः सदाचारविवर्जितः । स्वल्पवित्तः चीणदेह श्चतुष्पादधनान्वितइति ॥ राशिविशेषे । मेषवृषसिंहेष । धनुषोन्त्यार्द्धे । मकरस्यपूर्वार्द्धे ॥ स्त्रीणांकरणभेदेचेतिहेमः ॥ चत्वारि पदानि पादा अस्य ॥

चतुष्पदी । स्त्री । पद्ये । चौपदीइतिचौपई इतिच भाषा ॥ चत्वारः पादाः अस्याः । सङ्ख्यासुपूर्वस्येतिपादस्यान्त्यलोपे पादोन्यतरस्यामितिङीपि-भत्वात् पादःपदिति पदादेशः ॥

चतुष्पर्णी । स्त्री । क्षुद्राम्लिकायाम् ॥

चतुष्फला । स्त्री । नागबलायाम् ॥

चतुष्पाठी । स्त्री । चौपाड इति भाषा प्रसिद्धे छात्राणामध्ययनस्थले ॥ चतुर्णांवेदानांपाठोयस्याम् ॥

चतुष्पाणिः । पुं । शतधामनि । विष्णौ ॥ चत्वारः पाणयोयस्य ॥ त्रि । चतुर्हस्तान्विते ॥

चतुष्पात्-द् । पुं । गवादिपशौ ॥ चत्वारः पादाअस्य । संख्यासुपूर्वस्येतिपादस्यान्त्यलोपः ॥

चतुष्पुण्ड्रः । पुं । भिण्डाहक्षे ॥

चतुस्समम् । न । चतुःसमे ॥

चतुस्त्रिंशत् । स्त्री । चतुरधिकायां त्रिंशति । चौंतीस इति भाषा ॥

चतुस्त्रिंशज्जातकज्ञः । पुं । बुद्धविशेषे ॥

चतूराजी । स्त्री । चतुरङ्गक्रीडामार्गे तत्क्रीडाविशेषे ॥

चत्वरम् । न । स्थण्डिले । यागार्थसंस्कृतभूमौ ॥ अङ्गने ॥ नानाजनावस्थानदेशे । चौंतरा इति भाषा ॥ पथा श्लेषे । चतसृणां रथ्यानां सम्बन्धे ॥ गृहाद्बहिरङ्गने ॥ चत्यते । चते० । छित्वरछत्वरेतिष्वरच् ॥ चतन्त्यस्मिन्वा ॥

चत्वारिंशत् । स्त्री । चालीसइतिप्रसिद्धे सङ्ख्याविशेषे ॥ सङ्ख्येये ॥ चत्वारोदशतःपरिमाणमस्य । पङ्क्तिविंशतित्रिंशच्चत्वारिंशदितिनिपातनात्प्रकृतेश्चत्वारिन्भावः शत्प्रत्ययः॥

चत्वालः । पुं । होमकुण्डे ॥ दर्भे ॥ चतति । चते० । स्याचतिमञ्जेरितिवालन् ॥

चन । अ । असकलार्थे ॥ चनति । चनशब्दे । पचाद्यच् ॥ अप्यर्थे ॥

चनस् । न । भक्ते ॥ चाय्यते । चायृपूजानिशामनयोः । चायतेरन्नेह्रस्वश्चेत्यसुन् प्रत्ययस्य नुट्च ॥

चन्दः । पुं । विधौ ॥ शशी चन्द्रो हिमद्युतिरितिशब्दार्णवः । चन्दति । चदि आह्लादे । पचाद्यच् ॥

चन्दकः । पुं । चांदा इति गौडेषु प्रसिद्धे मत्स्यविशेषे ॥

चन्दनः । पुं । न । मलयजे । गन्धसारे ॥ चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु । श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत् ॥ श्रेष्ठस्यास्य लक्षणं यथा । स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम् । ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते इति ॥ चन्दनानि च सर्वाणि सदृशानि रसादिभिः । गन्धेन तु विशेषोऽस्ति पूर्वं श्रेष्ठतमं गुणैः ॥ रक्तचन्दने ॥ यथा । कषायपानयोर्योज्यं चन्दनं रक्तचन्दनमिति ॥ अपिच । कषायलेपयोर्ग्राह्यं चन्दनं रक्तचन्दनमिति ॥ पुं । वानरप्रभेदे ॥ न । ओषधीभेदे । भद्रकाल्याम् ॥ चन्दयति । चदि आह्लादने । णयन्तः । ल्युट् । बहुलमन्यत्रापीति युच्वा ॥

चन्दनगोपी । स्त्री । शारिवाविशेषे ॥

चन्दनधेनुः । स्त्री । पतिपुत्रवन्मृतनार्युद्देश्यकोत्सृष्टाया श्चन्दनाङ्कितसवत्साया गोर्दाने ॥ यथा । जीवद्भर्तृ तु या नारी पुत्रिणी म्रियते यदि । सवत्सा मण्डिता धेनुमाचार्याय प्रदापयेत् ॥ पतिपुत्रवती नारी म्रियते या शस्तयोः । दर्शनं चोत्सृजेत् पुत्रः पिता यावच्च जीवतीति ॥

चन्दनपुष्पम् । न । लवङ्गे ॥

चन्दनशारिवा । स्त्री । शारिवाविशेषे ॥

चन्दनसारः । पुं । वज्रक्षारे ॥

चन्दना । स्त्री । शारिवाविशेषे ॥

चन्दनाचलः । पुं । मलयपर्वते ॥

चन्दनादिः । पुं । पित्तोपशमनाय चन्दनादिसमवासनद्रव्येषु ॥ यथा । चन्दनञ्च तथोशीरं कर्पूरो गन्धवाकुची । एलाकर्पूरगोहूलाः समस्तेच स्नानादय इति ॥

चन्दनाद्रिः । पुं । मलयपर्वते ॥

चन्दनी । स्त्री । नदीविशेषे ॥

चन्दनीया । स्त्री । गोरोचनायाम् ॥

चन्दिरः । पुं । हस्तिनि ॥ चन्द्रे ॥ चन्दति । चदि० । इषिमदिमुदीत्यादिना किरच् ॥

चन्द्रः । पुं । चाँद इति प्रसिद्धे हिमांशौ । चन्द्रमसि । सुधांशौ ॥ कर्पूरे ॥ काम्पिल्ले ॥ स्वर्णे ॥ वारिणि ॥ काम्ये । सुन्दरे ॥ मेचके । बर्हचन्द्रके ॥ रक्तरजते । शोणमुक्ताफले ॥ चि । आह्लादजनकद्रव्ये ॥ न । स्वर्णे ॥ चुक्रं ॥ वर्षावृक्षविशेषे ॥ यथा । चि

अवरगणयुग मथधाय परिकलयक-र मथनगणयुगलमिह गन्ययुगमपि वितर । फणिन्द्रपतिभणितमिति-चन्द्रमिदमितिशृणुत सकलकविकुलहृदयमोदकरमवतनुत ॥ यथा ।अनुपहतकुसुमरसतुल्यमिदमधरदल ममृतमयवचन मिदमाखिवि फलयसिचल । यदपि यदुरमणपद-मीशमुमिह्नदिलुठति तदपितवरति वलितमेस्थवनतटमटतीति ॥ ष-सप्राचस्य दशम॥ ऽ॥प्रभेदे ॥ चन्दयति आह्लादयति सकलं जगत् । चदि० । स्फायितञ्चीतिरक् ॥पुं। दीपविशेषे ॥ हीरके ॥ मृगशिरो नक्षत्रे ॥

चन्द्रकः । पुं । मेचके । वर्हचन्द्रके । मयूरपिच्छस्थचन्द्राकृतौ ॥ चन्द्रइव प्रतिकृतिः । इवे प्रतिकृताविति कन् ॥ नखे ॥ चाँदामाछ् इतिगौडेषु प्रसिद्धे मत्स्ये ॥ न । सितमरिचे । शिग्रुवीजे ॥

चन्द्रकला । स्त्री । चन्द्रस्यषोडशे भागे ॥ इगडवाद्ये ॥ वाचामत्स्ये ॥

चन्द्रकान्तः । पुं । श्वेतमणौ । चन्द्रोपले ॥ कैरवे ॥ न । कैरवे ॥ श्रीखण्डचन्दने ॥ चन्द्रः कान्तो वस्यसः ॥

चन्द्रकान्ता । स्त्री । निशायाम् ॥ ज्योत्स्नायाम् ॥ चन्द्रयोषायाम् ॥ चन्द्रः कान्तो यस्याः ॥

चन्द्रकान्ति । न । रजते । रूप्ये ॥

चन्द्रकालानलम् । न । मौक्तिकानां चक्रविशेषे ॥

चन्द्रकावान् । पुं । } मयूरे ॥ मतुप् ॥
चन्द्रकी । पुं । } इन् ॥

चन्द्रकुण्डः । पुं । कामरूपस्थेसरोविशेषे ॥

चन्द्रकूटः । पुं । कामरूपस्थे पर्वतविशेषे ॥

चन्द्रचयः । पुं । अमायाम् ॥

चन्द्रगुप्तः । पुं । श्रीभागवत प्रसिद्धे नृपे ॥

चन्द्रगृहम् । न । कर्कराशौ ॥

चन्द्रगोलस्थाः । पुं । भूम्नि । दिव्यपितृषु । स्वधाभुक्षु ॥ चन्द्रगोलेतिष्ठन्ति । सुपिस्थ इतिकः ॥

चन्द्रगोलिका । स्त्री । ज्योत्स्नायाम् ॥

चन्द्रचञ्चलः । पुं । खलेशमत्स्ये ॥

चन्द्रचञ्चला । स्त्री । चन्द्रकमत्स्ये ॥

चन्द्रचारः । पुं । चन्द्रविषयकज्ञाने ॥ तत्रादौ ये रवेरुपरि चन्द्रमसमिच्छन्ति तान् प्रत्याह । नित्यमधस्थस्येन्दोर्भाभि र्भानोः सितंभवत्यर्द्धम् । स्वच्छाययान्यदसितं कुम्भस्येवात पस्थस्य ॥ अस्यप्रत्यक्षवाधां मन्यमानआह । सलिलमयेशशिनि रवेर्दी

चन्द्रचा

धितयोमुच्छ्रितातमेनैशम् । स्व पयन्ति दर्पणोदरविहिताश्व मन्दिरस्यान्तः ॥ शशिनः पश्चिमदिग्भागात् सितवृद्धिः किमित्युपलभ्यते इत्याह । त्यजतोर्कतलंशशिनः पश्चादवलम्बते यथाशोक्लम् । दिनकरवशात्तथेन्दोः प्रकाशतेधः प्रभृत्युदयः ॥ प्रतिदिनं कथंचन्द्रगोशुक्लवृद्धिर्भवति तदर्थमाह । प्रतिदिवसमेवमर्कात् स्थानविशेषेण शैक्ल्यपरिवृद्धिः । भवति शशिनोऽपराह्णेपश्चाद्भागे घटस्येव ॥ चन्द्रस्य नक्षत्रगमनेन शुभाशुभमाह । ऐन्द्रस्य शीतकिरणो मूलाषाढाद्वयस्य चायातः । याम्येनबीजजलचरकाननहा वह्निभयदश्च ॥ दक्षिणपार्श्वेनगतः शशी विशाखानुराधयोः पापः । मध्येनतु प्रशस्तः पितृदेवविशाखयोश्चापि ॥ चन्द्रस्यनक्षत्रयोगमाह । षडनागतानिपैाष्णात् द्वादशरैाद्राच्चमध्ययोगीनि । ज्येष्ठाद्यानि नवर्क्षाणयुडुपतिनातीत्ययुज्यन्ते ॥ चन्द्रमसः संस्थानानि दश भवन्ति । यथा । नै।र्लाङ्गलं दुष्टलाङ्गलं समो दण्डः कार्मुकं युगं पार्श्वशय्याऽऽवर्जितं कुण्डाख्यमिति । अथैषां संस्थानानां लक्षणं फलञ्च क्रमेणाह । उन्नमीषच्छृङ्गं तन्नैाख्यानेविशाल-ता चोक्ता । नाविकपीडातस्मिन् भवति शिवंसर्वलोकस्य ॥ १ ॥ अर्द्धोन्नतेचलाङ्गलमितिपीडातदुपजीविनां तस्मिन् । प्रीतिश्च निर्निमित्तं मनुजपतीनां सुभिक्षञ्च ॥२॥ दक्षिणविषाणमर्द्धोन्नतंयदादुष्टलाङ्गलाख्यंतत् । पाण्ड्यनरेश्वरनिधनकृदुद्योगकरंवलानाञ्च ॥ ३ ॥ समशशिनि सुभिक्षक्षेमवृष्टयः प्रथमदिवससदृशाःस्युः । ४ । दण्डवदुदितेपीडा गवांन्वपश्चोग्रदण्डोच ॥ ५ ॥ कार्मुकरूपे युद्धानियत्रतज्ज्यातताजयस्तेषाम् । ६ । स्थानंयुगमितियाम्योत्तरायतंभूमिकम्पाय ॥ १२ ॥ ७ ॥ युगमेवयाम्यकोट्यांकिञ्चित्तुङ्गं स पार्श्वशायीति । विनिहन्तिसार्थवाहान् वृष्टेश्चविनिग्रहंकुर्यात् ॥ ८ ॥ अभ्युच्छ्रायादेकंयदिशशिनोऽवाक्शृङ्गमवेच्छृङ्गम् । आवर्जितमित्यसुभिक्षकारितद्गोधनस्यापि ॥ ९ ॥ अव्युच्छिन्नारेखासमन्ततोमण्डलेचकुण्डाख्यम् । अस्मिनमाण्डलिकानां स्थानत्यागोनरपतीनाम् ॥ १५ ॥ १० ॥ सामान्यलक्षणमाह । प्रोक्तस्थानाभावा दुदगुच्चः क्षेमवृद्धिवृष्टिकरः । दक्षिणतुङ्गश्चन्द्रो दुर्भिक्ष

भयायनिर्दिष्टः ॥ शृङ्गेणैकेनेन्दुं विलीनमथवाप्यवाङ्मुखंशृङ्गम् । सम्पूर्णंचाभिनवंदृष्ट्वैको जीविताद्भ्रश्येत् ॥ १७ ॥ चन्द्रमसोरूपाणिसफलान्याह । संस्थानविधिःकथितो रूपाण्यस्माद्भवन्तिचन्द्रमसः । स्वल्पो दुर्भिक्षकरो महान् सुभिक्षावहः प्रोक्तः ॥ मध्यतनु र्वज्राख्यः क्षुद्भयदःसम्भ्रमायराज्ञाञ्च । चन्द्रोमृदङ्गरूपः क्षेमसुभिक्षावहोभवति ॥ ज्ञेयोविशालमूर्त्ति र्नरपतिलक्ष्मीविवृद्धयेचन्द्रः । स्थूलःसुभिक्षकारीप्रियधान्यकरस्तुतनुमूर्त्तिः ॥ २० ॥ अथ चन्द्रस्यकुजादिभिस्ताराग्रहैः शृङ्गभेदफलमाह । प्रत्यन्तान्कुनृपांश्चहन्त्युडुपतिःशृङ्गेकुजेनाहते शस्त्रक्षुद्भयकृद्यमेन शशिजेनावृष्टिदुर्भिक्षकृत् । श्रेष्ठान्हन्तिनृपान्महेन्द्रगुरुणा शुक्रेणचाल्पान्नृपान् शुक्लेयाप्यमिदंफलंग्रहकृतंकृष्णेयथोक्तागमम् ॥ शुक्रभिन्नबिम्बस्यचन्द्रमसः फलमाह । भिन्नःसितेन मगधान् यवनान्पुलिन्दान् नेपालभृङ्गिमरुकच्छसुराष्ट्रमद्रान् । पाञ्चालकैकयकुलूतकपौरुषादान् हन्यादुशीनरजनानपिसप्तमासान् ॥ जीवभिन्नस्याह । गान्धारसौवीरकसिन्धुकीरा



न् धान्यानि शैलान्द्रविडाधिपांश्च । द्विजांश्च मासान्दश शीतरश्मिः सन्तापयेद्वाक्पतिनाविभिन्नः ॥ सौम्यभिन्नस्याह । उद्युक्तान्सहवाहनैर्नरपतींस्त्रैगर्त्तकान्मालवान् कौलिन्दान् गणपुङ्गवानथशिवीनायोध्यकान्पार्थिवान् । हन्यात् कौरवमत्स्यशुक्त्यधिपतीन् राजन्यमुख्यानपि प्रालेयांशुरसृग्गृहेतनुगतेषण्मासमर्थादया ॥ शनिभिन्नस्याह । यौधेयान् सचिवान् सकौरवान् प्रागीशा नथ चार्जुनायनान् । हन्यादर्कजभिन्नमण्डलः शीतांशु र्दशमाससपीडया ॥ बुधभिन्नस्याह । मगधान्मथुरांश्चपीडयेत् वेणायाश्चतटं शशाङ्कजः । अपरत्रकृतंयुगंवदेद्यदिभित्त्वाशशिनंविनिर्गतः ॥ केतुनाभिन्नस्याह । क्षेमारोग्यसुभिक्षविनाशी शीतांशुः शिखिनायदिभिन्नः । कुर्यादायुधजीविविनाशं चौराणामधिकेनचपीडाम् ॥ २७ ॥ ग्रहणकालेउल्काहतस्य चन्द्रस्यफलमाह । उल्कयायदाशशी ग्रस्तएवहन्यते । हन्यतेतदान्नृपो यस्यजन्मनिस्थितः ॥ चन्द्रमसोवर्णलक्षणमाह । भस्मनिभःपरुषो ऽरुणमूर्त्तिःशीतकरः किरणैःपरिहीनः । श्यावतनुःस्फुटि

तःस्फुरणोवानुद्भवमरामयचौरभयाय ॥ प्रालेयकुन्दकुमुदस्फटिकावदातो यत्नादिवाद्रिसुतया परिमृज्य चन्द्रः । उच्चैः कृतो निशि भविष्यति मे शिवाय योऽदृश्यते सभवितो जगतः शिवाय ॥ अथपक्षवृद्धौ हानौ वा साम्ये च शुभाशुभमाह । शुक्लेपक्षेसम्यक्चेत्प्रवृद्धिं व्रजति च यातिवृद्धिं प्रजाश्च । हीनेहानिस्तुल्यता तुल्यतायां कृष्णेसर्वंतत्फलंव्यत्ययेन ॥ यदिकुमुदमृणालहारगौरस्तिथिनियमात्क्षयमेतिवर्द्धते वा । अविकृतगतिमण्डलांशुयोगी भवतिनृपाणांविजयाय शीतरश्मिः ॥ ३२ ॥ इतिवाराह्यां चतुर्थोध्यायः ॥ ४ ॥

चन्द्रदाराः । पुं । भू० । अश्विन्यादिनक्षत्रेषु ॥ चन्द्रस्यदाराः ॥

चन्द्रनामा । पुं । कर्पूरे ॥ चन्द्रस्यनामान्येव नामान्यस्य ॥

चन्द्रपुष्पा । स्त्री । श्वेतकण्टकार्याम् ॥

चन्द्रप्रभः । पुं । वृक्षविशेषे ॥

चन्द्रप्रभा । स्त्री । ज्योत्स्नायाम् ॥ चन्द्रस्य प्रभा ॥ वाकुच्याम् ॥ औषधविशेषे ॥ अथास्यसुखबोधः । कृमिरिपुदहनव्योषत्रिफलामरदारुचव्यभूनिम्बम् । मागधिमूलं मुस्तं सशटिवचामाक्षिकञ्चैव ॥ लवणक्षारनिशायुगकुस्तुम्बुरुगजकरणानिविषाः ॥ कर्षांशकान्येव समानिकुर्यात् पलाष्टकञ्चाश्मजतो विदध्यात् । निष्कचतुष्कस्यपुरस्यधीमान् पलद्वयं लौहरजसस्तथैव ॥ सिताचतुष्कं पलमप्यनंश्यानिकुम्भकुम्भत्रिसुगन्धियुक्तम् । चन्द्रप्रभेयं गुटिकाप्रयोज्याचाशां सिनिर्वाणयतेषडेव ॥ भगन्दरं पाण्डुरकामलाञ्चनियंष्टवङ्क्षेः कुरुते च दीप्तिम् । हन्त्यामयान् पित्तकफानिलोत्थान् नाडीगतेमर्मगते व्रणेच ॥ प्रमृष्यकृच्छ्रे विद्रधिराजयक्ष्मणोर्मेहे भगाख्ये प्रबलेचयोज्या । शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहे प्युदरामयेच ॥ भक्तस्यपूर्वं सततंप्रयोज्या तक्रानुपानं त्वथमस्तुपानम् । आजोरसोमाङ्गलजोरसोवा पयोऽथवा शीतजलानुपानम् ॥ वलेनमामस्तुरगोजवेन दृष्टासुपर्णःश्रवणोवराहः ॥ वलीपलितनिर्मुक्तोवृद्धोपि तरुणायते ॥ न पानभोज्येपरिहार्यमस्ति न शीतवातातपमैथुनेषु । शम्भुं समभ्यर्च्य कृतप्रसादेनासावटी चन्द्रमसःप्रसादादिति ॥ कर्चूरके । कचूर इति भाषा ॥

चन्द्रभस्म । न । कर्पूरे ॥

चन्द्रभागः । पुं । पर्वतविशेषे ॥ विभक्त

श्चन्द्रमा यस्मात् तस्मिन् पर्वतसत्तमे। अतो देशाश्चन्द्रभागं नाम्नाचक्रुः पुरा गिरिमिति कालिकापुराणम् ॥

चन्द्रभागा। स्त्री। कश्मीरदेशप्रसिद्धे नदीविशेषे ॥ चन्द्रभागयोः पर्वतयोरियम्। तत्प्रभवत्वात्। तस्येदमित्यण्। टिड्ढेति ङीप्प्राप्तः चन्द्रभागाद्वा नद्यामिति वह्वादिगणात् ङीन्न भवति। संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥

चन्द्रभागी। स्त्री। चन्द्रभागायाम् ॥ वह्वादिभ्यश्चेति ङीष् ॥

चन्द्रभूति। न। रूप्ये ॥

चन्द्रमणिः। पुं। चन्द्रकान्तमणौ ॥

चन्द्रमण्डलम्। न। चन्द्रबिम्बे ॥ चन्द्रपरिवेशे ॥

चन्द्रमल्ली। स्त्री। अष्टापदाम् ॥

चन्द्रमाः। पुं। विधौ। चन्द्रे ॥ चन्द्रं कर्पूरं सादृश्येन माति तुलयति। माङ्माने। चन्द्रे मो डिच्चेत्यसिः ॥ चन्द्रमाह्लादं मिमीते निर्मिमीते इति वा ॥ यद्वा। चन्द्रं रजतममृतञ्च तद्दिव मीयते। चन्द्र इति वा मीयते इति दासीभारादिव्युत्पादने हरदत्तः ॥

चन्द्रमौलिः। पुं। रेरिहाणे। शिवे ॥

चन्द्ररेणुः। पुं। काव्यचौरे ॥

चन्द्रर्क्षम्। न। मृगशिरायाम् ॥

चन्द्रला। स्त्री। कर्णाटदेशप्रसिद्धायामम्बायाम् ॥ तत्स्थाने ॥

चन्द्रलेखा। स्त्री। वाकुच्याम् ॥ शशिकलायाम् ॥ अतिशर्करीसंज्ञकेपञ्चदशाक्षरावृत्तिविशेषे ॥ यथा। म्रौ म्रो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा ॥ यथा। विच्छेदे ते मुरारे पाण्डुप्रकाशा कृशाङ्गी म्लानच्छायं दुकूलं नम्राननेते विभर्ती सा। राधा मोदस्यगर्भे लीना यथा चन्द्रलेखा किञ्चान्तां त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगमिति ॥

चन्द्रलोहकम्। न। रूप्ये ॥

चन्द्रवंशः। पुं। चन्द्रसन्ताने ॥

चन्द्रवर्त्म। न। जगतीसंज्ञकेद्वादशाक्षरावृत्तिविशेषे ॥ यथा। चन्द्रवर्त्म निगदन्ति रनभसैः ॥ यथा। चन्द्रवर्त्मपिहितं घनतिमिरैः राजवर्त्मरहितं जनगमनैः। इष्टवर्त्मतदलं कुरु सरसे कुञ्जवर्त्मनि हरिस्तव कुतुकीति ॥

चन्द्रवल्लरी। स्त्री। सोमवल्ल्याम् ॥

चन्द्रवल्ली। स्त्री। प्रसारण्याम् ॥ माधवीलतायाम् ॥

चन्द्रवशा। स्त्री। भारतवर्षस्य नदीविशेषे ॥

चन्द्रवाला । स्त्री । स्थूलैलायाम् । वहुलायाम् ॥ चन्द्रस्य कर्पूरस्य वालेव कर्पूरगन्धित्वात् ॥

चन्द्रविहङ्गमः । पुं । वकपक्षिणि ॥

चन्द्रव्रतम् । न । चान्द्रायणे ॥

चन्द्रशाला । स्त्री । } ज्योत्स्नायाम्

चन्द्रशालिका । स्त्री । } ॥ गृहोपरिगृहे । शिरोगृहे ॥

चन्द्रशुक्लः । पुं । जम्बुद्वीपोपद्वीपविशेषे ॥

चन्द्रसूरम् । न । चंद्रसुर हालीं इति ख्यातौषधौ । चर्मकन्याम् । पशुमेहनकारिकायाम् । चन्द्रहूरे ॥

चन्द्रशेखरः । पुं । ईश्वरे । शिवे ॥ गिरिविशेषे । यथा । विशेषतः कलियुगे वसामि चन्द्रशेखरे । इतिशिववाक्यम् ॥ चन्द्रशेखरोऽस्य ॥ पौष्यराजः पुत्रे करवीरपुरनृपे ॥ षोडशभुवकान्तर्गते नवमभुवके ॥ चतुःषष्ठिभैरवविशेषे ॥

चन्द्रसंज्ञः । पुं । कर्पूरे ॥ चन्द्रस्य संज्ञा यस्य ॥

चन्द्रसम्भवः । पुं । वुधे ॥ चन्द्रात् सम्भवो यस्य ॥

चन्द्रसम्भवा । स्त्री । सूक्ष्मैलायाम् ॥ चन्द्रात् सम्भवो यस्याः ॥

चन्द्रहूरम् । न । चन्द्रशूरे । चंद्रसुर इति भाषा ॥ चन्द्रहूरं हितं हिक्कावातश्लेष्मातिसारिणाम् । असृग्वातगदद्वेषि वलपुष्टिविवर्द्धनम् ॥

चन्द्रहासः । पुं । असिमात्रे ॥ दशग्रीवकरवाले ॥ चन्द्रस्य हासः प्रभाऽस्य ॥ चन्द्रं हसतिवा द्युतिमत्त्वात् । हसे हसने । कर्मण्यण् ॥ न । रौप्ये ॥

चन्द्रहासा । स्त्री । गुडूच्याम् ॥ लघिकाप्रभेदे ॥

चन्द्रा । स्त्री । एलायाम् ॥ विताने ॥

चन्द्रातपः । पुं । विताने । उल्लोचे । चंदोआ इतिभाषा ॥ ज्योत्स्नायाम् ॥

चन्द्रापीडः । पुं । शिवे ॥ चन्द्रः आपीडः शिरोभूषणमस्य ॥

चन्द्रावली । स्त्री । गोपीविशेषे ॥ यथा । राधाचन्द्रावलीमुख्याः प्रोक्तानित्यप्रियाव्रजे । कृष्णवन्नित्यसौन्दर्यवैदग्ध्यादिगुणाश्रयाः इत्युज्ज्वलनीलमणिः ॥

चन्द्रिका । स्त्री । कौमुद्याम् । ज्योत्स्नायाम् ॥ चन्द्रोऽस्त्यस्याः । ठन् ॥ ॥ चन्द्रं कायतीतितुन इत्वाभावमसङ्गात् ॥ चन्द्रमाचष्टे चन्द्रयति । तत्करोतीतिण्यन्तान्ण्वुल् वा ॥ स्थूलैलायाम् ॥ चन्द्रकमत्स्ये ॥ कर्णस्फोटायाम् ॥ मल्लिकायाम् ॥ श्वेतकण्टकार्याम् ॥ मेथिकायाम् ॥ सूक्ष्मै-

ज्ञायाम् ॥ चन्द्रपूरे ॥ अतिजगतीसंज्ञकेचबोदशाक्षरावृत्तिविशेषे ॥ यथा । ममततगुरुभिश्चन्द्रिकाश्वर्त्तुभिः । यथा । शरदमलवचश्चन्द्रिकाश्चालिते दिनकरतनयातीरदेशे हरिः । विहरति रभसाद्बल्लवीभिः समं त्रिदिवयुवतिभिः कोपिदेवो यथा ॥ हरिश्चन्द्रपुरवासिन्यामम्बायाम् ॥

चन्द्रिकाम्बुजम् । न । सितोत्पले ॥

चन्द्रिकाद्रावः । पुं । चन्द्रकान्तमणौ ॥

चन्द्रिकापायी । पुं । चकोरपक्षिणि ॥

चन्द्री । स्त्री । वाकुच्याम् ॥

चन्द्रेष्टा । स्त्री । उत्पलिन्याम् ॥

चन्द्रोदयः । पुं । शशिप्रकाशे ॥ उल्लोचे ॥ मकरध्वजाख्यरससिन्दूरे ॥ अथास्य । पलं मृदुस्वर्णदलं रसेन्द्रं पलाष्टकं षोडशगन्धकस्य । शोणैः सुकार्पासभवैः प्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः ॥ तत्काचकुम्भे निहितं सुगाढे मृत्कर्पटैस्तद्दिवसत्रयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रजः पल्लवरागरम्यम् ॥ निगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव । जातीफलं शोषणमिन्द्रपुष्पं कस्तूरिकाया इह शाणएकः ॥ * ॥ चन्द्रोदयोऽयं कथितस्तु माषो भुक्तो हि वल्लीदलमध्यवर्त्ती । मदोन्मदानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यकाण्डे ॥ घृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समण्डकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र ॥ ॥ वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्तगदखण्डनः प्रचुररोगपञ्चाननः । गृहेषु रसराडयं भवति यस्य चन्द्रोदयः स पञ्चशरदर्पितो मृगदृशां भवेद्वल्लभः ॥ इति सारकौमुदी सुखबोधश्चेति हाधाकान्तः ॥ चन्द्रस्य चन्द्र इव वा उदयो यस्य ॥

चन्द्रोदया । स्त्री । नेत्ररोगस्यौषधविशेषे ॥ यथा । हरीतकी वचा कुष्ठं पिप्पली मरिचानि च । विभीतकस्य मज्जा च शङ्खनाभि मनःशिला ॥ सर्वमेतत्समं कृत्वा छागीक्षीरेण पेषयेत् । * । नाशयेत् तिमिरं कण्डुं पटलान्यर्बुदानि च ॥ अधिकानि च मांसानि यश्च रात्रौ न पश्यति । अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ॥ वर्त्तिश्चन्द्रोदया नाम्ना तथा दृष्टिप्रसादनी ॥ इति चक्रपाणिदत्तः ॥

चन्द्रोपलः । पुं । चन्द्रकान्तमणौ ॥

चपलः । पुं । पारदे ॥ मीने ॥ चोर

के ॥ प्रस्तरविशेषे ॥ क्वणे ॥ राजमाषे ॥ चपनम् । चपसान्त्वने । चपन्तः एरच् । चपं लाति । ला० । कः ॥ न । शीघ्रे ॥ क्रियाविशेषणत्वादद्रव्ये वर्त्तमानं क्लीबम् ॥ त्रि । तरले ॥ चले । क्षणिके ॥ विकले ॥ दुर्विनीते ॥ चपति । चप० । वृषा० कलः ॥ चोपति । चुपमन्दायां गतौ । चुपेरश्चोपधाया इति कलमत्ययः ॥ दोषमनिश्चित्यवधबन्धनादेः कर्त्तरि । चिकुरे ॥

चपला । स्त्री । कमलायाम् । श्रियि ॥ विद्युति ॥ पुंश्चल्याम् ॥ पिप्पल्याम् ॥ विजयायाम् ॥ मदिरायाम् ॥ जिह्वायाम् ॥ आर्याप्रभेदे ॥ यथा । दलयो द्वितीयतुर्यौगणौ जकारौ तु चपलासा । यथा । चपलानचेत् कदाचि त्संसारार्णवे भक्तिभावना कृष्णे । धर्मार्थकाममोक्षा स्तदाकरस्था न सन्देहः ॥ चपलाट्टाप् ॥

चपेटः । पुं । विस्तृताङ्गुलिपाणौ । प्रतले । टाप् चपेटा इतिच भाषा ॥ चपति । चप० । अच् । एटति । इट गतौ । अच् । चपश्चासौ इटश्च ॥

चपेटा । स्त्री । चपेटे । प्रहस्ते ॥ खण्डिकोपाध्यायः शिष्याय चपेटां ददातीतिभाष्यम् ॥ टाप् ॥

चपेटिका । स्त्री । चपेटायाम् ॥ चपेटैव । स्वा० कः । प्रत्ययस्था दितीत्वम् ॥

चपेटी । स्त्री । भाद्रशुक्लषष्ठ्याम् ॥ भाद्रे चपेटीविख्यातेतिस्कन्दपुराणम् ॥

चमत्कारः । पुं । विस्मये । चित्तविस्तारहूपे । डमरौ ॥ लोकातीतावलोकनेन किमेतदितिज्ञानधाराजननेन चित्तस्य दीर्घमायत्त्वं चित्तविस्तार इत्यर्थः । दृष्टहेतुभ्यो ऽसम्भविवस्तुज्ञानेन हेत्वन्तरानुसन्धाने मनोव्यापार एवचित्तविस्तार इत्यपरे ॥ अपामार्गे ॥ चमत् करणम् । कृञ० । घञ् ॥

चमरः । पुं । मृगविशेषे । व्यजन्याम् ॥ यस्यश्वेतवालैर्दैत्यराजादिव्यजनं क्रियते सचमरचिपाकृतिर्भवति ॥ दैत्यविशेषे ॥ न । चामरे ॥ चमति चम्यते वा अनेन वा । चमुअदने । अर्त्तिकमिभ्रमिचमीत्यरश्चित् ॥

चमरपुच्छः । पुं । कोकडे ॥ न । चामरे ॥

चमरिकः । पुं । कोविदारवृक्षे । रक्तकाञ्चनारे ॥ चमरमस्यास्ति । ठन् ॥

चमरी । स्त्री । मञ्जर्याम् ॥ मृगीभेदे । दीर्घबालायाम् । गिरिप्रियायाम् ॥

चमसः । पुं । न । दारुमयचपात्रवि-

शेषे ॥ सोमपानपात्रे ॥ पुं । पर्पटे ॥ पिष्टविशेषे ॥ लड्डुके ॥ चमन्त्यस्मिन् । चम्यते भक्ष्यते सोमोऽस्मिन्वा । चमु० । अत्यविचमीत्यसच् ॥

चमसी । स्त्री । मुद्गमसूरादिपिष्टे ॥ चूर्णं यच्छुक्लमाषाणां चमसी साऽभिधीयते ॥ चम्यते । चमु० । असच् । गौरादित्वात् ङीष् ॥

चमीकरः । पुं । शातस्वराख्य आकरविशेषे ॥

चमूः । स्त्री । सेनामात्रे ॥ सेनाविशेषे । तच्चमूः ७२९ । रथाः ७२९ । अश्वाः २१८७ । पदातयः ३६४५ । समस्तसङ्ख्यया ७२९० नवत्यधिकशतद्वयाधिकसप्तसहस्रमभवति ॥ चमति शत्रून् परैश्चम्यतेवा । चमु अदने । कृषिचमितनिधनिसर्जिखर्जिभ्यऊरित्यूः ॥

चमूचरः । पुं । सैनिके ॥ चरेष्टः ॥

चमूजघनम् । न । सेनापश्चाद्भागे ॥

चमूरुः । पुं । मृगविशेषे ॥ चमति । चमु० । खर्जादित्वादूरः । पृ० अत उत्वम् ॥ यद्वा । चमजरूयस्य ॥

चम्पः । न । कोविदारवृक्षे ॥

चम्पकः । पुं । चम्पा इति प्रसिद्धे वृक्षे । हेमपुष्पके । दीपपुष्पे ॥ चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः ।



विषकृमिहरः कृच्छ्रकफवातास्रपित्तजित् ॥ चम्पयति चम्प्यते वा । चपिगत्याम् । क्वुन् ॥ पनसकोषगांशके ॥ न । चांपाकला इति गौडभाषाप्रसिद्धे कदलीफले ॥ चम्पकं वातपित्तघ्नं गुरुवीर्यकरं तथा । अतिशीतं रसे पाके मधुरं कथितं बुधैरित्यस्यगुणाः ॥ चम्पकस्यपुष्पे ॥ सुहृत्प्राप्तिसिद्धौ ॥ सायथा । न्यायेन स्वयंपरीक्षितमप्यर्थं तावन्नश्रद्दधते यावद्गुरुशिष्यसब्रह्मचारिभिःसह न संवाद्यते अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः सासिद्धिश्चतुर्थी चम्पकमुच्यते इति साङ्ख्यविदः ॥

चम्पककलिका । स्त्री । चम्पककोरके । गन्धमेदिन्याम् ॥

चम्पकमाला । स्त्री । चम्पकपुष्पैर्निर्मितायां मालायाम् ॥ चम्पकली इति प्रसिद्धे स्त्रीणां कण्ठाभरणे ॥ दशवर्णकेषु पङ्क्तिच्छन्दोविभेदे ॥ यथा । पादविराजन्नूपुरयुग्मा कुण्डलशोभासङ्गिसुवर्णा । सङ्गवतीहारद्युपूर्णा चम्पकमालाभातिसुवर्णा ॥ यथा । आश्लिकुम्भस्थालमधन्या क्षमभवद्गुर्व्यारविकन्या । सम्मकुमारी निर्गतमङ्क्तः सम्प्रतिभावी कोपि-

कलङ्कः इति ॥

चम्पकचतुर्दशी । स्त्री । ज्येष्ठशुक्लचतुर्दश्याम् ॥

चम्पकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

चम्पकारण्यम् । न । तीर्थविशेषे ॥

चम्पकुन्दः । पुं । चांपकुडा इति गौडे सुप्रसिद्धे मत्स्यविशेषे ॥

चम्पकोषः । पुं । पनसे ॥

चम्पा । स्त्री । कर्णराजस्य भार्यायाम् ॥ तस्यैव पुर्याम् । अधुना भागलपुर इति वस्य प्रसिद्धिरितिराधाकान्तः ॥ तीर्थविशेषे ॥

चम्पाधिपः । पुं । कर्णभूपे ॥

चम्पापुरी । स्त्री । चम्पायां नगर्याम् ॥

चम्पारण्यम् । न । विदेहदेशसमीपस्थे विपिने ॥

चम्पालुः । पुं । पनसे ॥

चम्पावती । स्त्री । कर्णपुर्याम् ॥

चम्पूः । स्त्री । काव्यविशेषे ॥ तल्लक्षणं यथा । गद्यपद्यमयीवाणी चम्पूरित्यभिधीयते । इत्यलङ्कारज्ञाः ॥

चम्पेशः । पुं । कर्णाख्यनृपे ॥

चम्पोपलक्षितः । पुं । अङ्गदेशे ॥ तद्देशस्थे पुम्भूम्नि ॥

चम्मेली । स्त्री । स्वनाम्ना प्रसिद्धे पुष्पविशेषे । सुमनायाम् ॥

चयः । पुं । समूहे ॥ वप्रे । प्राकारमूलबन्धने ॥ यदुपरि प्राकारो निरूप्यते प्राकाराधारवेदिकेतियावत् । तथा चार्थशास्त्रम् । खातमुद्धृतमृद्दावप्रं कारयेत् तस्योपरि प्राकारमिति । प गार इति गौडभाषा ॥ समाहृतौ ॥ परिखोद्धृतमृत्कूपे ॥ चीयते । चि अ चयने । कर्मण्येरच् ॥ प्राकारे ॥ पीठे ॥ इति हेमचन्द्रः ॥

चयनम् । न । चिनना इति ख्याते रचनाविशेषे । इष्टकादीनामूर्द्ध्वाधोदेशनिवेशने ॥ चिञो ल्युट् ॥

चरः । पुं । अचरभूतप्रभेदे ॥ भौमे ॥ जङ्गमे । चसे ॥ चले ॥ चारे । गोपनेन राष्ट्रादेः शुभाशुभादिज्ञानार्थं राज्ञा नियुक्ते पुरुषे । परतत्त्वज्ञानार्थं भ्रमणकर्त्तरि । यथार्हवर्णे । प्रणिधौ ॥ चरति । चरगतौ । पचाद्यच् ॥ कपर्दके ॥ मेषकर्कटतुलामकरराशिषु ॥ न । नक्षत्रविशेषे । मातादितिहरिभौर्मा चन्द्राख्यस्य चरं चलम् ॥

चरकः । पुं । चारे ॥ पर्पटे ॥ चक्रकरे । भिक्षौ ॥ मुनिग्रन्थविशेषयोः । वैद्यशास्त्रप्रवर्त्तकमुनौ ॥ तत्कृतेतन्नामके ग्रन्थे ॥ चरति । चर० । शिल्पिसंज्ञयोरपूर्वस्यापीति वुन् ॥

चरटः । पुं । खञ्जनपक्षिणि ॥

चरण: । पुं । न । बह्वृचादौ । वेदै कदेशे ॥ शाखाध्येतरि ॥ मूले ॥ गोत्रे ॥ पदे । पादे ॥ न । भ्रमण ॥ भक्षणे ॥ शीले । आचारे ॥ चरन्त्यनेन । चर० । करणेतिल्युट् ॥

चरणगत: । त्रि । प्रणते ॥

चरणग्रन्थि: । पुं । गुल्फे ॥

चरणयोधी । पुं । कुक्कुटे ॥

चरणव्यूह: । पुं । वेदव्यासकृते चतुर्वेदविवरणग्रन्थे ॥

चरणामिषम् । न । चरणमांसे॥ चरणानामामिषम् । मुण्डस्य विधिना पाच्यं चरणस्तुप्रलेहितम् । चरणं वा तद्वद्धल्यं हृष्यं पित्तकरं गुरु ॥

चरणायुध: । पुं । कुक्कुटे ॥ चरणमायुधमस्य ॥

चरम: । त्रि । अन्ते । अवसाने । प्रान्ते ॥ पश्चिमे ॥ चरति । चर० । चरेश्चेत्यमच् । प्रथमचरमेतिसर्वनामस्वात् पक्षे जस शी । चरमे चरमा: ॥

चरमक्ष्माभृत् । पुं । अस्ताचले ॥ चरमश्चासौ क्ष्माभृच्च ॥

चरमतीर्थकृत् । पुं । वर्द्धमानाख्यार्हद्भेदे ॥

चरमाचल: । पुं । अस्ताचले ॥ चरमश्चासावचलश्च ॥

चरमाद्रि: । पुं । अस्ताचले ॥

चराचरम् । न । विष्टपे । जगति ॥ त्रि । इङ्गे ॥ जङ्गमाजङ्गमे ॥ इष्टे ॥ पुं । कपर्दके ॥ चरति । चर० । चरिचलीतिद्विस्त्वादि ॥

चरि: । पुं । पशौ ॥ चरति । चर० । खनिकष्यज्यसीत्यादिना इप्रत्यय: ॥

चरितम् । न । अनुष्ठिते ॥ चरित्रे ॥ सञ्चारे ॥ व्रतकर्मणि ॥

चरितार्थ: । त्रि । प्राप्तप्रयोजने ॥

चरित्रम् । न । स्वभावे ॥ चेष्टिते ॥ चर्यतेऽनेन । चर० । अर्त्तिलूधूसूखनसहचरइत्र: ॥

चरिष्णु: । त्रि । जङ्गमे ॥ चरणशील: । चरगतौ । अलङ्कृञितीष्णुच् ॥

चरु: । पुं । हव्यान्ने । हव्यपाके ॥ टीकाणादितिख्याते भाण्डे ॥ चर्यते भक्ष्यते देवै: । चरन्ति भक्षयन्ति देवा इममिति वा । चरगतौ भक्षणे च । भृमृशीतृचरीत्यु: ॥ अनवस्राविताऽन्तरूष्मपाक ओदनश्चरुरितियाज्ञिका: ॥ मीमांसकैरपि त्रिवृच्चरुर्वैधिकरणे ओदनपरत्वमेव चरुशब्दस्याभ्युपगतम् ॥ उमयादित्यौयदितिसूत्रेकैयटस्तु स्थालीवाची चरुशब्द: तात्स्थ्या दोदने भाक्तइत्याह । विश्वप्रकाशेतु चरुर्भाण्डेचहव्यान्ने इत्यनेकार्थेताक्ता ॥

चच्चराः । पुं । चित्रापूपे ॥

चर्च्चरी । स्त्री । गीतभेदे ॥ चन्द्रकुकेशे ॥ चर्च्चरीगीतभेदे च केशभित् करशब्दयोरिति रुद्रः ॥ हर्षक्रीडायामिति सुभूतिः । कापटिकानां सादरवचने तौर्य्यत्रिके चेत्यन्ये । वसन्तसमयक्रीडायामित्येके ॥ चर्भ्याम् । साटोपवाक्ये ॥ वर्णवृत्तविशेषे ॥ यथा । हारयुक्तसुवर्णकङ्कणपाणिशङ्खविराजिता पादनूपुरसङ्गता सुपयोधरद्वयभूषिता । शोभिता वलयेन पिङ्गलपन्नगाधिपवर्णिता चर्च्चरी तरुणीव चेतसि चाकसीति सुसङ्गता ॥ यथा । कोकिलाकलकूजितं न शृणोसि सम्प्रति सादरम् मन्यसे तिमिरापहारि सुधाकरं न सुधाकरम् । दूरमुज्झसि भूषणं विकचासि चन्दनमारुते कस्य पुण्यफलेन सुन्दरि मन्दिरं न सुखायते इति ॥ चर्च्यते । चर्चपरिभाषणभर्त्सनयोः । बाहुलकात् अरन् । गौ० ङीष् ॥

चर्च्चरीकः । पुं । महाकाले ॥ केशविन्यासे ॥ शाके ॥ चर्च्यते चर्च अध्ययने । पर्फ० इकन् प्रत्ययान्तो निपातितः ॥

चर्च्चा । स्त्री । चिन्तायाम् ॥ विचारणायाम् ॥ स्थासके । चार्च्चिक्ये । चन्दनादिना देहविलेपने । चर्चना इति भाषा ॥ चर्च्चिकायाम् । दुर्गायाम् ॥ चर्चयनम् । चर्च अध्ययने । चुरादिणयन्ताद्भावे चिन्तिपूजिकथिकुम्बिचर्च्चश्चेत्यङ् । चर्चनं वा ॥

चर्च्चिका । स्त्री । दुर्गायाम् ॥ चर्च्चायाम् ॥ चर्च्चैव । स्वा० कः ॥

चर्च्चितः । त्रि । दिग्धे । लिप्ते । चन्दनादिनाकृतलेपने । चर्चा चर्चंसि या इति च भाषा ॥ चर्चा सञ्जाताऽस्य । तारकादित्वादितच् ॥

चर्प्पटः । पुं । चपेटे ॥ पर्पटे ॥ स्फारविपुले । चिपिटे । चिपटा इति भाषा ॥

चर्प्पटा । स्त्री । भाद्रशुक्लषष्ठ्याम् । चपेट्याम् ॥

चर्प्पटी । स्त्री । पिष्टकविशेषे । पोल्याम् ॥

चर्भटः । पुं । इर्वारौ ॥

चर्भटी । स्त्री । चर्च्चर्याम् । हर्षक्रीडावाचि । सा … वाक्ये ॥

चर्म्मकषा । स्त्री … द्रव्यविशेषे । सप्तलायाम् । भूरिफेनायाम् ॥ मांसरोहिण्याम् ॥ चर्म्मणः कषा ॥

चर्म्मकारः । पुं । चमार इति भाषाप्रसिद्धे कारावरे । पादूकृति । चण्डाल्यां तीवराज्जाते । इति पराशरपद्धतिः ॥ चर्म्म करोति । कृञ्० ।

कर्मक्षयम् ॥

चर्म्मकारी । स्त्री । चर्मकषायामोषधौ॥

चर्म्मकीलम् । न । अर्शः प्रभेदे ॥ व्याने।गृहीत्वाश्लेष्माणं करोत्यर्शस्त्वचोवहिः । कीलोपमंस्थिरखरं चर्म कीलन्तु तद्विदुः ॥

चर्म्मकृत् । पुं । चर्मकारे ॥

चर्म्मचटका । स्त्री । अजिनपत्रायाम् । जतुकायाम् । चाम्चिरैया इति-भाषा ॥

चर्म्मचटी । स्त्री । गृहमाचिकायाम् । चर्मचटकायाम् ॥

चर्म्मचित्रकम् । न । श्वेतकुष्ठे ॥

चर्म्मजम् । न । रुधिरे ॥ रोमणि ॥

चर्म्मण्वती । स्त्री । चम्बल इतिभाषा प्रसिद्धे नदीविशेषे॥ चर्मास्त्यस्याम् । मतुप् । आसन्दीवदिति चर्मणो नलोपाभावोवत्वञ्च निपात्यते ॥

चर्म्मतरङ्गः । पुं । वलौ । जरयाश्लथच र्मणि ॥

चर्म्मदण्डः । पुं । कशायाम् । कोरडा इति भाषा ॥

चर्म्मदूषिका । स्त्री । कोठरोगे ॥

चर्म्मद्रुमः । पुं । भूर्जवृक्षे ॥

चर्म्म । न । चामइतिप्रसिद्धे त्वगिन्द्रिये । असृग्धरायाम् । कृत्तौ । अजिने । रोमभूमौ ॥ ढालफरी इतिचप्र-सिद्धे फलके ॥ अस्यलक्षणं यथा । शरीरावरकं शस्त्रं चर्मइत्यभिधीयते । तत् पुनर्द्विविधं काष्ठचर्म सम्भवभेदतः ॥ शरीरावरकत्वञ्च लघुता दृढता तथा । दुर्भेद्यतेतिकथितश्चर्मणां गुणसङ्ग्रहः ॥ स्वल्पता गुरुता चैवमृदुता सुखभेद्यता । विरुद्धवर्णताचेति चर्मणां दोषसङ्ग्रहः ॥ सितोरक्तस्तथापीतः कृष्णइत्यभिशब्दितः । ब्रह्मादिजातिभेदेन चर्मणां वर्णनिर्णयः ॥ चित्रवर्णस्तु सर्वेषां सर्वदैवोपपद्यते इतिभोजः ॥ चरति चर्यते वाऽनेनवा॥ चर० । मनिन् ॥

चर्म्मनासिका । स्त्री । ताडन्याम् ॥

चर्म्मपत्रा । स्त्री । चर्मचटकायाम् ॥

चर्म्मपादुका । स्त्री । उपानहि ॥

चर्म्मपुटः । पुं । } इतिसंज्ञके चर्म
चर्म्मपुटकः । पुं । } पात्रविशेषे ॥

चर्म्मप्रभेदिका । स्त्री । आरायाम् । चर्मवेधास्त्रप्रभेदे ॥ चर्मणः प्रभेदिका ॥

चर्म्मप्रसेविका । स्त्री । भस्त्रायाम् । अग्नि सन्दीपनार्थं चर्मनिर्मिते यन्त्रे । भाती इतिभाषा ॥ चर्मणा प्रसीव्यते । षिवुतन्तुसन्ताने । कृ० वुन् ॥ संज्ञायामितित्वुल् वा ॥

चर्म्ममुण्डा । स्त्री । दुर्गायाम् ॥

चर्म्ममुण्डिका। स्त्री। कात्यायन्याम्। चण्डिकायाम्॥

चर्म्मयष्टिः। स्त्री। चर्म्मताडन्याम्। कशायाम्॥ चर्मणो यष्टिः॥

चर्म्मरङ्गा। स्त्री। आवर्त्तकीलतायाम्। विभाण्ड्याम्॥

चर्म्मकः। पुं। चर्मकारे॥ इतित्रिकाण्डशेषः॥

चर्म्मसम्भवा। स्त्री। एलायाम्॥

चर्म्मसारः। पुं। } रसे॥ इतिरा
चर्म्माम्भः। न। } जनिघण्टुः॥

चर्म्मारः। पुं। चर्मकारे॥ चर्मक्रियाम् ऋच्छति। ऋच्छेः कर्मण्यण्॥ त्रिकुलप्रभेदे॥ चर्मारःशुक्रवर्णः स्यात्॥

चर्म्मी। पुं। फलकपाणौ। ढलैत इति भाषा॥ भूर्जद्रुमे॥ भृङ्गरीटे॥ कदल्याम्॥ चर्मास्यास्ति। व्रीहिनिः॥

चर्य्या। स्त्री। ईर्य्यायाम्। नियमात्यागे। ध्यानमौनादिकस्य भिक्षुव्रतस्यानुष्ठाने। ईर्य्यापथस्थितौ॥ ईर्यतेगुरोः शास्त्रोपासनया ज्ञायते इति ईर्य्या। ईर्य्यायाःपन्थाः। ऋक्पूरित्यः। ईर्य्यापथे ध्यानाद्युपाये परिव्राजकादीनांस्थितिः तस्यामित्यर्थः॥ आचरणे॥ चरणम्। चर॰। गदमदचरयमश्चानुपसर्गेइतियत्॥ यदा। परिचर्य्यापरिसर्य्येत्यत्र परीत्यस्या विवक्षणात् चर्य्येतिसाधुः॥

चर्व्वणम्। न। दन्तैश्चूर्णने। चवावना इतिभाषा॥ चर्वअदने। ल्युट्॥

चर्व्वा। पुं। तलप्रहारे॥

चर्व्वितः। त्रि। भक्षिते। कृतचर्वणे॥ चर्व्यतेस्म। चर्व॰। क्तः॥

चर्व्वितपात्रकम्। न। चर्वितताम्बूलादित्यागपात्रे। कटकोल्ले। पतद्ग्रहे॥

चर्व्यम्। त्रि। चर्वणीये॥

चर्षणिः। पुं। जने॥ कर्षति। कृष॰। कृषेरादेश्चचः इत्यनिः॥

चर्षणी। स्त्री। पुंश्चल्याम्॥ कर्षतिमनः। कृषविलेखने। कृषेरित्यनिः। कृदिकारादितिङीष्॥

चलः। पुं। कम्पे॥ न। चञ्चले। लोले। तरले॥ अल्पकालस्थायिनि। शरीरे जगति च॥ प्रतिक्षणमन्यथाभावात्॥ नक्षत्रविशेषे। स्वात्यादित्र्येष्वृते स्त्रीषि चन्द्रश्चापि चरं चलम्॥ त्रि। कम्पयुक्ते। चञ्चले॥ चलति चलगतौ। पचाद्यच्॥

चलचञ्चुः। पुं। } चकोरपक्षि-
चलञ्चञ्चुः। पुं। } णि॥

चलत्पूर्णिमा। स्त्री। चन्द्रकमत्स्ये॥

चलदङ्गः। पुं। } चेङ्गामाछ इ-
चलदङ्गकः। पुं। } तगौड भाषा
प्रसिद्धे मत्स्ये॥

चलदलः। पुं। अश्वत्थवृक्षे ॥ चलानि दलान्यस्य ॥

चलनः। पुं। पादे ॥ हरिणे ॥ न। भ्रमणे ॥ कम्पे ॥ स्थिरत्वप्रच्युतौ ॥ देशान्तरप्राप्तिहेतुभूते क्रियाविशेषे ॥ चलनशीलम्। चल०। चलनशब्दे त्रियुच् ॥ त्रि। कम्पे। कम्पयुक्ते ॥

चलनकम्। न। चण्डातके ॥

चलनी। स्त्री। वारीभेदे। गजबन्धन्याम् ॥ वस्त्रघर्घर्याम्। वस्त्रवेशिन्याम् ॥

चलपत्रः। पुं। पिप्पलवृक्षे ॥ चलानि पत्राण्यस्य ॥

चलसङ्क्रमः। पुं। ईश्वरेच्छालोकादृष्टवशात्तत्तद्राश्यादिभागस्य सूर्यतेजसम्पर्के ॥

चला। स्त्री। लक्ष्म्याम् ॥ चञ्चलाख्या द्यवला त्वं वै सर्वथैव नसंशयः ॥ शिल्हके ॥ टाप् ॥

चलाचलः। त्रि। चञ्चले ॥ चलति। चल०। चरिचलीति द्वित्वादिः ॥ पुं। काके ॥

चलातङ्कः। पुं। वातरोगे ॥

चलाभासः। पुं। मायामयस्य रज्जुसर्पादेर्गमने ॥ चलमिवाभासते इति तथा ॥

चलितः। त्रि। कम्पिते ॥ उल्लसिते। तरङ्गिते ॥ प्रचलिते ॥ गते ॥ चलति स्म। चलकम्पने। क्तः ॥

चलुः। पुं। गण्डूषे ॥ इति हेमचन्द्रः ॥

चलुकः। पुं। प्रसृतौ ॥ भाण्डभेदे ॥

चवर्गः। पुं। चादिपञ्चवर्णेषु ॥

चवर्गीयः। पुं। चवर्गभवेवर्णे ॥ वर्गान्ताच्चेति छः ॥

चवलः। पुं। राजमाषे। चौंला इति भाषा ॥

चविः। स्त्री। चविकायाम् ॥

चविकम्। न। चव्ये ॥ चर्व्यते। चर्व०। कुन्। पृषोदरादिः ॥

चविका। स्त्री। चइ इतिगौडभाषाप्रसिद्धे वृक्षे। चव्ये ॥ चविकाट्टाप् ॥

चव्यम्। न। चविकायाम् ॥ कणामूलभवं चव्यं विशेषाद्गजपिप्पलम् ॥ चर्व्यते। चर्व। यत्। पृ० ॥

चव्यकम्। न। चव्ये ॥

चव्यजा। स्त्री।<br>चव्यफलम्। न। } गजपिप्पल्याम् ॥

चव्या। स्त्री। वचायाम् ॥ कार्पास्याम् ॥

चषकः। पुं न। सुरापानपात्रे। गल्वर्के। सरके ॥ अथ चषकोद्देशः। यत्पानपात्रं भूपानां तच्चैवं चषकं बुधैः। कानकं राजतंचैव स्फाटिकं काचमेव च ॥ वृत्तं त्वष्टदिक्कोणं चतुर्णांपृथिवीभुजाम्। इत्यन्य

सम्मतं तेषां निर्णयःपाठसम्मतः ॥ स्वमुद्रितसम्मितं रत्नैश्चतुर्वर्णैः समन्वितम् । मार्त्तिकं वाऽथफालं वा सर्वेषामुपयुज्यते । काष्ठजं धातुजं शैलं आम्रलादिमहीभुजाम् । यद्यत्तीयपानादिपात्रं पृथ्वीभुजां भवेत् ॥ एवंतत्रापिनियमइतिभोजस्य निश्चयः ॥ * ॥ मधुनि । मद्ये ॥ मद्यभेदे ॥ मद्यभाजने ॥ चष्यतेऽनेन । चषभक्षणे । क्वुन् ॥

चषतिः । पुं । भक्षणे ॥ वधे ॥

चषालः । पुं । यूपकटके ॥ यज्ञसमाप्ति सूचकं पशुबन्धनार्थं यज्ञभूमौ यत्काष्ठमारोप्यते सयूपः तच्छिरसि वलयाकृति र्वमसकाकृति र्वायःकाष्ठविकारः सचषालः । यूपमूलेविहितस्तोत्रबन्धयश्च ॥ चषति चष्यते वा । चष० । सानसिवर्णसिपर्णसीतिच्चषे राल्बः ॥

चाकचक्यम् । न । } उज्ज्वलतायाम् ॥ नहिलौकिकद्रसामग्री प्रातिभासिकरजतोत्पादिका किन्तु विलक्षणैव । तथाहि । काचादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयोगाद्दिदमाकाराचाकचक्याकाराच काचिदन्तःकरणवृत्तिरुदेतीतिवेदान्तपरिभाषा ॥

चाकचिक्यम् । न ।



चाकचिक्या । स्त्री । श्वेतगुञ्जायाम् ॥

चाक्रायणः । पुं । उपस्त्याख्यर्षौ ॥ चक्रस्यगोत्रापत्यम् । अ० फञ् ॥

चाक्रिकः । पुं । बहुभिर्मिलित्वास्तुतिकारे । घाण्टिके ॥ चक्रेण समूहेन चरति । चरतीति ठक् ॥ शाकटिके ॥ तैलकारे ॥

चाक्षुषः । पुं । षष्ठमनौ ॥ न । रूपे ॥ चक्षुषागृह्यते । अण् ॥ चक्षुरेववा । स्वार्थिक प्रज्ञाद्यण् ॥ प्रत्यक्षविशेषे ॥ तत्तु चक्षुरिन्द्रियजन्यज्ञानम् । द्रव्यचाक्षुषंप्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः । द्रव्यसमवेतसमवेतचाक्षुषंप्रति चक्षुःसंयुक्तसमवेतसमवायः । तथाच भा० प० । द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः । द्रव्येषु समवेतानां तथातत्समवायतः ॥ तत्रापिसमवेतानां शब्दस्यसमवायतः । तद्वृत्तीनांसमवेतसमवायेनतुग्रहः इति ॥ त्रि । चक्षुर्ग्राह्ये ॥

चाङ्गम् । न । दन्तपटुत्वे ॥

चाङ्गेरी । स्त्री । अम्ललोणिकायाम् ॥ चाङ्गेरीदीपनीरुच्या लघूष्णाकफवातनुत् । पित्तलाम्लाग्रहण्यर्शः कुष्ठातीसारनाशिनी ॥ चाङ्गम् ईरयति

। ईरप्रेरणे। कर्मण्यण् ॥

चाञ्चल्यम्। न। चञ्चलतायाम् ॥

चाटः। पुं। चौरे॥ आर्यमर्यादां शास्त्रमर्यादांवा भिन्दाने ॥ प्रतारके ॥ आदौविश्वासमुत्पाद्य पश्चात्परधनापहर्त्तरि। प्रच्छन्नापहारिणि तस्करे॥ योद्धरि कलहप्रिये ॥ चटनम्चाटनंवा। चटभेदने। भावे घञ् ॥

चाटकैरः। पुं। चटकापत्ये॥ चटकायाः चटकस्यंवा पुमपत्यम्। चटकायाएरक्। चटकस्यति वाच्यम् ॥

चाटुः। पुं। न। प्रियवाक्ये। प्रियप्राये। चटौ॥ चकरच वहुचाटून्प्रौढयोषिद्वरस्येति। क्लीवमपि। चाटुचाऽकृतकसंभ्रम मासां कार्मणत्त्वमगमद्रसणेषितिच माघः॥ चटति। चटभेदने। दृसनिजनीतिञुण्॥ मिथ्याप्रियवाक्ये॥

चाटुपटुः। पुं। भण्डे। भाँड इतिभाषा॥

चाटुलोलः। चि। चटुलोले। सुचञ्चले॥

चाटुवटुः। पुं। भण्डे। विदूषके। क्रीडनीयकपात्रे॥

चाटूक्तिः। स्त्री। सेवायाम् ॥ प्रियवार्त्तायाम्॥

चाणकीनम्। न। चणकोत्पत्तियोग्य

क्षेत्रे॥ चणकानाम् भवनं क्षेत्रम्। धान्यानांभवने क्षेत्रे खञ् ॥

चाणक्यः। पुं। मुनिविशेषे। द्रोमिले॥ चणकस्य गोत्रापत्यम्। गर्गादित्वात् यञ् ॥ न। तन्निर्मिते राजनीतिशास्त्रे॥

चाणक्यमूलकम्। न। मूलकप्रभेदे। वालेये। विष्णुगुप्तके॥

चाणूरः। पुं। कंसासुरस्य प्रधानमल्ले॥

चाणूरसूदनः। पुं। श्रीकृष्णे॥ चाणूरं सूदितवान्। सूदयतेर्नन्द्यादित्वाल्ल्युः॥

चाण्डालः। पुं। चण्डाले। श्वपचे। अन्त्यजे॥ चण्डालएव। कुलालवरुडनिषादचण्डालमित्रामित्रेभ्य छन्दस्युपसङ्ख्यानमिति स्वार्थेऽञ् ॥ प्रज्ञादित्वादण् लोकेपीति केचित् ॥

चाण्डालकिः। पुं। चण्डालापत्ये॥

चण्डालवल्लकी। स्त्री। कण्डोलवीणायाम्॥ चाण्डालस्यवीणा॥

चाण्डालिका। स्त्री। कण्डोलवीणायाम्॥ चण्डालिकाशब्दार्थे॥ चण्डालस्येयम्। तस्येदमित्यण्। टिड्ढेतिङीप्। स्वार्थेकन्॥ चण्डालेनकृता वा। कुलालादिभ्योवुञ् ॥

चाण्डाली। स्त्री। चण्डालयोषायाम्॥ लिङ्गिन्याम्॥

चातकः। पुं। स्तोकके। सारङ्गे। पपी

ष्टा इतिभाषा ॥ यथा । सर्व्वसद्याप तित मम्बु न चातकानामिति ॥ चा तति । चते० । ग्वुल् ॥

चातकानन्दनः । पुं । वर्षाकाले ॥

चातकः । पुं । शरवीजे ॥ चातक्को म धुरो रूक्षो रक्तपित्तकफापहः । शी तो लघु रसग्यश्च कषायो वातको पनः ॥

चातुरः । पुं । चक्रगण्डे ॥ त्रि । नेत्र गोचरे ॥ चाटुकारे ॥ नियन्तरि ॥ चतुर एव । स्वार्थेऽण् ॥ न । शकटे ॥ चतुर्भिरुह्यते । शेषः ख्यण् ॥

चातुरकः । त्रि । चातुरार्थे ॥

चातुराश्रम्यम् । न । ब्रह्मचारिगृहस्थ वानप्रस्थसंन्यासिषु ॥ चत्वार आश्र मा एव । चतु० स्वार्थेष्यञ् ॥ चतुर्णा माश्रमाणां धर्म ॥

चातुरी । स्त्री । दाक्ष्ये । चतुरतायाम् ॥ बालोकवयसाधनीतनुभृतांसा चा तुरी चतुरी ॥ चतुरस्येयम् । तस्येद मित्यण् । ङीप् ॥

चातुर्ज्जातकम् । न । चतुर्जातके ॥ स्वार्थे अण् ॥

चातुर्द्दशिकः । त्रि । भूताध्ययनकर्त्तरि ॥ चतुर्दश्यामधीते । अध्यायिन्यदे शकालादितिठक् ॥

चातुर्भद्रम् । न । नागरातिविषामुस्ता गुडूचीतिचतुष्टये ॥

चातुर्मासी । स्त्री । पूर्णिमाविशेषे ॥ चतुर्षु मासेषु भवा । संज्ञायामित्य ण् । ङीप् ॥

चातुर्मास्यम् । न । यागविशेषे ॥ चा तुर्मास्ययागस्य चत्वारि पर्वाणि । वै श्वदेवो वरुणप्रघासः शाकमेधः शु- नासीरीयश्चेति । चतुर्षु मासेषु भ वन्ति चातुर्मास्यानियज्ञानि । चतु र्मासाण्ण्योयज्ञइति ण्यः ॥ आषाढ शुक्लद्वादश्यादिचतुर्मासकर्त्तव्ये व्रते ॥यथा । आषाढेशुक्लद्वादश्यां पौर्ण मास्यामथापिवा । चातुर्मास्यव्रतारम्भं कुर्यात् कर्कटसङ्क्रमे ॥ अभावेतु तुलार्केपिमन्त्रेण नियमं व्रती । का र्त्तिके शुक्लद्वादश्यां विधिवत् तत् स मापयेत् ॥ चतुर्ष्वपि हि तच्चीर्णं चा तुर्मास्यं व्रतं नरः । कार्त्तिक्यां शुक्ल पक्षेतु द्वादश्यां तत् समापयेदिति वाराहः ॥

चातुर्म्मास्यद्वितीया । स्त्री । आषाढफा ल्गुनोर्जेषु या द्वितीया विधुक्षये । चा तुर्मास्यद्वितीया स्ताः प्रवदन्ति म हर्षयः ॥

चातुर्व्वर्ण्यम् । न । यज्ञसाधनेषु ब्राह्मण क्षत्रियविट्शूद्रेषु ॥ चत्वारो वर्णा एव । चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यान

मितिष्यत् ॥ देवेषु चत्वारो वर्णा यथा । आदित्याःक्षत्रियास्तेषां विशस्तमरुतस्तथा । अश्विनौ चस्मृतौ शूद्रौ तपस्युग्रेसमास्थितौ ॥ स्मृतास्त्वाङ्गिरसोदेवा ब्राह्मणा इतिनिश्चय इति ॥

चातुर्वैद्यः । पुं । चतुर्वेदे ॥ चतुरोवेदानधीते चतुर्वेदः । सएव । चतुर्वेदस्योभयपदवृद्धिश्चेतिब्राह्मणादिगणे पाठत् ष्यञ् ॥

चात्वालः । पुं । याज्ञिकानां गर्त्तविशेषे ॥ चत्वालएव । स्वार्थेऽण् ॥

चानूरः । पुं । कंसमल्ले । चाणूरे ॥

चानूरसूदनः । पुं । श्रीकृष्णे ॥ चानूरंसूदितवान् सूदयतिवा । सूदक्षरणे । ल्युः ॥

चान्द्रः । पुं । चन्द्रकान्तमणौ ॥ शुक्लादमान्ते मासे ॥ कृष्णादिपूर्णिमान्ते च मासे ॥ न । चान्द्रायणे ॥ चन्द्रस्यायम् । अण् ॥

चान्द्रकम् । न । शुण्ठ्याम् ॥ इति राजनिर्घण्टः ॥

चान्द्रभागा । स्त्री । } चन्द्रभागायाम् ॥
चान्द्रभागी । स्त्री । }

चान्द्रमसः । पुं । इन्दुजे ॥ भारतवर्षीये पदीपविशेषे ॥ न । मृगशिरोनक्षत्रे ॥ त्रि । चन्द्रमसःसम्बन्धिनि ॥ च



न्द्रमसोऽपत्यम् इदंवा । अण् ॥

चान्द्रमसायनः । पुं । बुधे । सौम्ये ॥

चान्द्रमासः । पुं । चन्द्रसम्बन्धिमासे ॥ सतु गौणमुख्यभेदेन द्विविधः । तत्राद्यः कृष्णप्रतिपदादिपौर्णमास्यन्तः । द्वितीयः शुक्लप्रतिपदादिदर्शान्तः । चान्द्रोपिशुक्लपक्षादिः कृष्णादिर्वेतिच द्विधेत्युक्तेः ॥ तत्र मुख्यचान्द्रे कर्म्माणि । आब्दिकश्राद्धादिसपिण्डीकरणान्तश्राद्धानि चान्द्रायणप्राजापत्यादिव्रतानि स्नानकर्म्म निष्यसानं गृहपुष्करिण्यादिप्रतिष्ठासाधारणतिथिविहितकर्माणिचेति॥ गौणचान्द्रेकर्माणि । अष्टकादिपार्वणश्राद्धं वारुणीस्नानं जन्मतिथिकृत्यं जन्माष्टम्यामुपवासो दुर्गोत्सवादितिथिनियतपूजाचेति ॥ चान्द्रस्यासौमासस्च ॥

चान्द्रव्रतम् । न । नृपतेर्व्रतविशेषे ॥ यथा ॥ परिपूर्णं यथाचन्द्रं दृष्ट्वा हृष्यन्ति मानवाः । तथा प्रकृतयो यस्मिन् सचान्द्रव्रतिकोनृपइतिमनुः॥

चान्द्राख्यम् । न । आर्द्रके ॥

चान्द्रायणम् । न । व्रतविशेषे । इन्दुव्रते ॥ तच्चतुर्विधं भवति । पिपीलिकामध्याख्ययवमध्याख्यतिचान्द्रायणशिशुचान्द्रायणभेदात् । तथाहि ।

एकैकंह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्। उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणंस्मृतम्॥ त्रिषवणं स्नानं कुर्वाणः पौर्णमास्यां पञ्चदशग्रासानश्नीयात् ततः कृष्णप्रतिपत्क्रमेण एकैकं ग्रासंह्रासयेत्। तथाच चतुर्दश्यामेकोग्रासःसम्पद्यते। ततोऽमायामुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैकं वृद्धिंनयेत् एवं पौर्णमास्यां पञ्चदशग्रासाःसम्पद्यन्ते। एतत्पिपीलिकामध्याख्यं चान्द्रायणम्॥१॥ एतमेवविधिंकृत्स्न माचरेद्यवमध्यमे। शुक्लपक्षादिनियतश्चरंश्चान्द्रायणव्रतम्॥ एवमेवपिण्डह्रासवृद्धित्रिषवणस्नानात्मकंविधानं यवमध्याख्ये चान्द्रायणे शुक्लपक्षमादितःकृत्वा संयतेन्द्रियश्चान्द्रायणमनुतिष्ठन् आचरेत्। ततश्च शुक्लप्रतिपदमारभ्य एकैकंपिण्डंवर्द्धयेत्। यथापौर्णमास्यांपञ्चदशग्रासाःसम्पद्यन्ते। ततःकृष्णप्रतिपदमारभ्य एकैकंपिण्डंह्रासयेत्। यथा अमावास्यामुपवासोभवति॥२॥ अष्टावष्टौसमश्नीयात् पिण्डान्मध्यंदिनेस्थिते। नियतात्मा हविष्याशी यतिचान्द्रायणंचरन्॥३॥ चतुरः प्रातरश्नीयात्पिण्डान्विप्रःसमाहितः। चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतमितिमनुः॥४॥

चान्द्रायणिकः। पुं। तपस्विविशेषे॥ चान्द्रायणं वर्त्तयति। पारायणतुरायणचान्द्रायणं वर्त्तयतीतिठञ्॥

चाम्री। स्त्री। श्वेतकण्टकार्याम्॥ ज्योतस्नायाम्॥

चापः। पुं। धनुषि। शरासने॥ धनूराशौ॥ पञ्चकलस्य॥ऽतृतीयप्रभेदे॥ चापस्य वंशभेदस्य विकारः। अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण्॥

चापपटः। पुं। पियालवृक्षे॥

चापलम्। न। अनवस्थितौ॥ तत्रवचनं यथा। मात्सर्यद्वेषरागादेश्चापल्यन्त्वनवस्थितिरिति॥ अविमीतत्वे। प्रयोजनं विनापि वाक्पारुष्यादिव्यापारयितृत्वे। अविमृश्यकरणरूपे चपलकर्मणि॥ सञ्चारिभावे॥ आत्मप्रकाशिनीचेष्टारागादेश्चापलंमतमितिलक्षणात्॥ चपलस्यकर्मभावो वा। यु० अण्॥

चापल्यम्। न। चपलतायाम्॥ चाञ्चल्ये। चापले॥ चपलस्यकर्मभावो वा। गुणवचनत्वात् प्राप्तस्य ष्यञो युवादिपाठप्राप्तेनाणा बाधप्रसङ्गेपि ब्रा० ष्यञ्॥

चामरः। पुं। न। चमरीपुच्छनिर्मिते बालव्यजने। प्रकीर्णके। चौर

चौरी इतिच भाषा ॥ अस्यजये। अमात्यदर्शनार्थमाह । देवैं स्वर्गे किल वालहेतोः सृष्टा हिमक्ष्मा धरकन्दरेषु । आपीतवर्णास्वभवन्ति तासां कृष्णास्वथाङ्कूक्षभवाःसिताश्च ॥ चमरीणां गुणसम्पदमाह । केशा मृदुत्वं बहुवालताच वैषद्यमत्या-ल्पनिबन्धनत्वम् । शौक्ल्यञ्च तासां गुणसम्पदुक्ता विद्धा ऽल्पलुप्तानि न शोभनानि ॥ चामरदण्डलक्षणमा ह । अध्यर्द्धहस्तप्रमितोऽस्यदण्डोह-स्तोऽथवारत्निसमोऽपरन्यः। काष्ठाच्छुभात् काञ्चनरूप्यगुप्ताद्रत्नैश्चसर्वे-श्चविहितायराज्ञाम् ॥ सर्वकर्मसदृश्य स्तु० । सघ्वातपत्राङ्गमवेत्त्वापवि तानकुलध्वजचामराणाम् । आपी तनन्त्रीमधुकृष्णवर्णा सर्वकर्मसुवर्णि तास्तदण्डः ॥ दण्डादेःसमपर्वणःफ लमाह । मातृभूधनकुलक्षयावहा रोगमृत्युजननास्थपर्वभिः । द्व्यादि भिर्द्विकविवर्द्धितैः क्रमाद्द्वादशान्तवि रतैःसमैःफलम् ॥ तेषामेवत्र्यादि षु विषमेषुद्विकविवर्द्धितेषुफलम् । यात्राप्रसिद्धि र्द्विषतांविनाशो ला-भाः प्रभूता वसुधागमश्च । वृद्धि पशू नां मभिवाञ्छितासि स्त्र्यादिष्वयु ग्मेषुतदीश्वराणाम् ॥ इति वारा

ह्यां ७० ध्यायः ॥ विशेषोयुक्तिकल्प तरोर्ज्ञेयः ॥ दण्डे ॥ अतिशयर्वरीसं स्वकपच्छदधाचरायावृक्षःप्रभेदे । य था । शारदतप्पयोधरं मृगेन्द्रस्तुसु न्दरं चामरध्वजद्वयेन मण्डितं वि चामरम् । हस्तराजमेतदेवनगाराज भाषितं मण्डितावलीविनोदकारि चारुभाषितम् ॥ यथा । रासलास्य गोपकामिनीजनेन खेलता पुष्पपु ञ्जमञ्जुकुञ्जमध्यगेनदेःखना । नान नृत्यलास्यगोपवालिकाविलासिना मध्यवेत्रनायतां सुखायमन्दहासिने ति॥ गुर्व ऽ लघ्ऽ ॥

चामरपुष्पः । पुं । न । पूगे ॥ काशे ॥ आम्रे ॥ केतके ॥

चामरा । स्त्री । चामरे ॥ दण्डे ॥ च अा० टाप् ॥

चामरी । पुं । घोटके । किल्किनि ॥ इति त्रिकाण्डशेषः ॥

चामीकरम् । न । स्वर्णं । कनके ॥ च मीकरे आकर विशेषे भवम् । तत्र भवः इत्यण् ॥ यद्वा । चमनम् चम० । इण आदिभ्यः इतीञ् । कनाचमे रिति आके। ऽविर्चित्तम्नाद्वृद्धिः । चामीकरोति । कृणोहेरिक्तिटः ॥

चामुण्डा । स्त्री । मातृकाभेदे । चर्म मुण्डायाम् । भैरवाम् । दुर्गायाम्

। मैाख्योम् ॥ मोक्षकारणीभूतनिर्विकल्पकवृत्तिविशेषे ॥ चमूरिवाविद्यादिसमूहरूपां चाति खण्डयोरैक्यात्माति आदत्ते स्वात्मसाक्षात्कारेण नाशयति इतिव्युत्पत्तेः । पृषोदरादित्वात् सर्वसुस्थमित्याहुः॥ मया तवाद्योपहृतौ चण्डमुण्डौ महापशू इत्यत्रपशुपदद्विवचनयोः स्वारस्येन तत्कमूलभेदेनाज्ञानद्वयकथनेन यस्मात्त्वचण्डमुण्डग्रहणीत्वात्वमुपागता । चामुण्डेति ततोलोके ख्यातादेवी भविष्यसीत्यत्रापितूलमूलाविद्ययोरादानमेव ग्रहणीत्वेति पदेनाभूच निर्वचनकथनादखण्डब्रह्मविद्यैवचामुण्डापदस्यार्थोवर्णित इतिरहस्यादृशेत्तरहस्यम् ॥ यद्वा । चमति । चमुअदने । वा० उण् । चामुरदनीयः पदार्थः । सच ब्रह्मातिरिक्तः सर्वोपि । अत्ताचराचरग्रहणादित्यधिकरणे तथानिर्णयात् । तंडापयति उट्डापयति नविषयीकुरुते ब्रह्ममात्रविषयिणीतियावत् ॥ अथवा चकारएकाक्षरनिघण्टुरीत्या चन्द्रवाचकः आल्हादप्रकाशगुणयोगादिह्यानपरः आनन्दपरोवा सचब्रह्मोनवक्ति तदाहमन्ताममुण्डयतीति चामुण्डा । मुण्डनं नाशाधारापेक्षयान्यूनसत्ताकवस्तुनिरासः । शिरश्चर्मापेक्षयान्यूनसत्ताकत्वं यतामेवकेशानांवपने प्रयोगात् ॥ अथवा चाणां बह्वीनां मुखानां वा मुण्डमिवशीर्षमिवस्थिता सर्वोत्तमा चरमवृत्तिरूपा ब्रह्मविद्येतियावदिति गौडपादटीकानुवादीभास्करराय:॥

चाम्पिला । स्त्री । नद्याम् । निर्झरिण्याम् ॥

चाम्पेयः । पुं । चम्पके ॥ स्वर्णे ॥ किञ्जल्के ॥ नागकेसरे ॥ चम्पाया अपत्यम् । स्त्रीभ्योढक् ॥

चाम्पेयकम् । न । किञ्जल्के ॥

चायनीयः । त्रि । पूजनीये ॥

चारः । पुं । पियालवृक्षे । चिरौंजी इतिप्रसिद्धे ॥ चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत पित्तदाहज्वरतृषापहम् ॥ पियालमज्जा मधुरो वृष्यः पित्तानिलापहः । हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः ॥ गतौ ॥ बन्धे ॥ अवसर्पे । चरे । प्रणिधौ ॥ चारान् विचारयेत् तीर्थेष्वात्मनश्चपरस्यच । पाषण्डादीनविज्ञातानन्योन्यमितरेपिच ॥ * ॥ अमात्य ममान्यासमुपधाभिश्चत्वमभ्युपकल्पयेत्‌चार गुणा इतिनीति वाक्यमृतम् ॥ * ॥

तल्लक्षणं यथा । विवस्वानिव तेजोभिर्नभस्वानिव वेगतः । राजा चरेज्जगत्सर्वं प्राप्नुयाल्लोकसम्मतैः ॥ तर्केङ्गितज्ञः स्मृतिमान् स्वीयभावाप्रकाशकः । क्लेशायाससहो दक्षः सर्वभयवर्ज्जितः ॥ सुभक्तो राजसु तथा कार्याणां प्रतिपत्तिमान् । नृपोनिहन्याच्चारेणपरराष्ट्रं विचक्षणः ॥ कालज्ञामन्त्रकुशलान् सांवत्सरचिकित्सकान् । तथान्यानपि युञ्जीत समर्थान् शुद्धचेतसः ॥ अक्रुद्धांश्चतथा ऽलुब्धान् दृष्टार्थानल्पभाषिणः । पाषण्डिमस्तापसादीन् परराष्ट्रे नियोजयेत् ॥ स्वदेशपरदेशज्ञान् सुशीलान् सुविचक्षणान् । वार्त्तादीन् बहूंश्चैव चाराणां विनियोजयेत् ॥ नैकस्य वचने राजा चारस्य प्रत्ययं व्रजेत् । द्वयोः सम्बन्धमाज्ञाय तद्युक्तं कार्यमाचरेत् ॥ तस्माद्राजा प्रयुञ्जीत चारान् बहुमुखान् बहून् । मरीरी वामनाः कुब्जास्तद्विधायेषु कारवः ॥ भिक्षुक्यश्चारणादासोमालाकार्यः कलाविदः । अन्तः पुरगतां वार्त्तां निर्हरेयुरचिन्तताम् ॥ प्रकाश्चा ऽप्रकाशश्चारस्तु द्विविधोमतः । अप्रकाशोऽयमुद्दिष्टः प्रकाशोदूतसंज्ञकः ॥ इति युक्तिकल्पतरुः ॥ कारागारे ॥ म । कृत्रिमविषे ॥ चरणम् । चरगतौ । घञ् ॥ चरति वा । पचाद्यच् । चर एव । प्रज्ञाद्यण् ॥

चारकः । पुं । अश्वादेः पालके ॥ सञ्चारके ॥ बन्धे ॥ पियालद्रुमे ॥ चारे ॥ स्वार्थे कः ॥

चारचक्षुः । पुं । राजनि ॥ चाराश्चक्षुरिवास्य । गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति वै द्विजाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरेजनाः ॥ स्वपरमण्डलकार्याकार्यविलोकने चाराश्चक्षूंषि क्षितिपालानामिति नीतिवाक्यामृतम् ॥

चारचुञ्चुः । त्रि । गतिविशेषे वित्ते ॥ चुञ्चुप् ॥

चारटिका । स्त्री । नलीनामगन्धद्रव्ये ॥

चारटी । स्त्री । पद्मचारिण्यामोषधौ ॥ भूम्यामलक्याम् ॥ चारयति । चरेर्ण्यन्तात् शकादिभ्योऽटन् । ङीप् ॥

चारणः । पुं । कीर्त्तिसञ्चारकनटे । कुशीलवे ॥ चारयति कीर्त्तिम् । चर० । णिजन्तः । नं० ल्युः ॥ देवानां स्तुतिपाठके ॥

चारपथः । पुं । राजपथे ॥

चारभटः । पुं । वीरे ॥

चारवायुः । पुं । निदाघजे वायौ ॥

चारिणी । स्त्री । करुणीवृक्षे ॥

चारित्रम् । न । स्वभावे । चरित्रे ॥ कुलक्रमागताचारे ॥ चरित्रमेव । स्वार्थेऽण् ॥ चरन्तितेन । चर० । चरेर्वृत्त इति णित्रन् वा । स्वरभेदः ॥

चारित्रा । स्त्री । तिन्तिडीवृक्षे

चारी । स्त्री । नृत्याङ्गविशेषे ॥ विचरणान्तसङ्गीतदामोदरे ॥

चारुः । पुं । वृहस्पतौ ॥ त्रि । शोभने । रम्ये । मनोज्ञे ॥ चरति चित्ते । चर० । दृसनिजनिचरिचटिभ्यो ञुण् ॥ न । कुङ्कुमे ॥

चारुकः । पुं । शरबीजे ॥

चारुकेशरा । स्त्री । तरुणीपुष्पे ॥ नागरमुस्तायाम् ॥

चारुगर्भः । पुं ।
चारुगुप्तः । पुं । } श्रीकृष्णपुत्र ॥

चारुदेष्णः । पुं । रुक्मिण्यांश्रीकृष्णतनये ॥

चारुधारा । स्त्री । इन्द्राण्याम् ॥ स्यादिन्द्राणी शतावरी चारुधारेति रभसः ॥

चारुनालकम् । न । रक्तपद्मे ॥

चारुपर्णी । स्त्री । प्रसारण्याम् । गन्धभादालिया इति गौडभाषा ॥

चारुफला । स्त्री । द्राक्षायाम् ॥ चारुःशिफलान्यस्याः ॥

चारुमती । स्त्री । रुक्मिण्यां श्रीकृष्णकन्यायाम् ॥

चारुलोचनः । पुं । हरिणे ॥ त्रि । सुलोचने ॥

चारुवर्द्धना । स्त्री । नार्य्याम् ॥

चारुबाहुः । पुं ।
चारुविन्दः । पुं । } श्रीकृष्णात्मजे॥

चारुव्रता । स्त्री । मासोपवासिन्याम् ॥

चारुशिला । स्त्री । मणौ ॥

चार्म्मिकः । त्रि । चर्मभिन्ने ॥ उक्थादित्वाट् ठक् ॥

चार्चिक्यम् । न । चन्दनादिना देहविलेपने । अर्चायाम् । स्थासके ॥ चर्चेअध्ययने । धात्वर्थनिर्देशे ण्वुल् । चर्चिकैव । स्वार्थेष्यञ ॥

चार्म्मः । पुं । चर्माटतरथे ॥ चर्मणापरिवृतः । परिवृतोरथइत्यण् ॥

चार्म्मणम् । न । चर्मसमूहे ॥ चर्मणांसमूहः । भिक्षादिभ्योऽण् ॥

चार्वाकः । पुं । बौद्धैकदेशिनि । आकाशभिन्नभूतचतुष्टयवादिनि तार्किकविशेषे । नास्तिके । वार्हस्पत्ये । लौकायतिके ॥ तस्यायंमतम् । शरीरमेवात्मा । प्रज्वलितगृहात् स्वपुत्रं परित्यज्यापि स्वस्यनिर्गमदर्शनात् । स्थूलोहंकृशोहमित्यनुभवाच्च ॥ प्रत्यक्षमेकंचार्वाकाःप्रमाणं मन्यन्ते ॥ अपिच । सर्वमालोक्यातमेवशा

त्वम् । यत्प्रत्यक्षमेवप्रमाणम् । पृथिव्यापस्तेजोवायवस्तत्त्वानि चत्वार्येव । अर्थकामौच पुरुषार्थौ । भूतान्येव चेतयन्ते नास्ति परलोकः । मृत्युरेवापवर्ग इति ॥ दुर्योधनसखे राक्षसविशेषे ॥

चार्वी । स्त्री शोभनायाम् ॥ बुद्धौ ॥ ज्योत्स्नायाम् ॥ धनदभार्यायाम् ॥ दीप्तौ ॥

चाल: । पुं । छप्परइति ख्यात इति च ख्याते पटले । चिटे । छदिषि ॥ चलति । जगतौ । ज्वलितिकसन्तेभ्यो णः । वृद्धिः ॥

चालक: । पुं । गभीरवेदिनि । अङ्कुशदुर्धरे हस्तिनि ॥ इतित्रिकाण्डशेषः ॥

चालनम् । न । चालन्याम् । बहुच्छिद्रसमोपेतं चालनंतितउःस्मृतमितिकात्यः ॥ चाल्यतेऽनेनवा । चल० । णिच् । ल्युट् ॥ धूनने ॥

चालनी । स्त्री । तितऊ । बहुच्छिद्रायाम् । चलनी इतिभाषा ॥ चाल्यतेऽनयावा । चलेर्णिजन्ताल्ल्युट् । ङीप् ॥

चाष: । पुं । स्वर्णचूडे । किकीदिवौ । नीलाङ्गे । पुण्यदर्शने ॥ अशोकस्थितिशोकस्य नन्दनः पुष्टिवर्द्धनः । हे अनुष्को भविष्यीयः स्वस्तिक स्माप

राजितः ॥ अष्टौ चाषस्यनामानि चाषंदृष्ट्वातु यःपठेत् । अर्थसिद्धिर्भवेत्तस्य सिद्धमन्नं वराङ्गनेतिपठन्ति । नीलकण्ठइत्यस्यप्रसिद्धिर्लोके ॥ चाषयति । चषहिंसायाम् । स्वार्थण्यन्तात् अच् । चषभक्षणे । हेतुमण्यन्ताद्वाऽच् ॥

चास: । पुं । इक्षुप्रभेदे ॥ पक्षिविशेषे । चाषे ॥

चिक: । पुं । गन्धमूषिके ॥

चिकर्त्तिषु: । त्रि । कर्त्तुमिच्छौ ॥ कृतीछेदने । सन्नन्तादुप्रत्ययः ॥

चिकित्सक: । पुं । वैद्ये । चिकित्साजीविनि ॥ आयुर्वेदकृताभ्यासः सर्वेषांप्रियदर्शनः । आर्यशीलगुणोपेत एषवैद्योविधीयते ॥ चिकित्सति । कितेर्व्याधिप्रतीकारेइतिसन्नन्तात् ण्वुल् ॥

चिकित्सा । स्त्री । रोगवारणे । रुक्प्रतिक्रियायाम् । क्रियायाम् ॥ आसुर्यादिभेदात्सा त्रिधा । यथा । आसुरी मानुषी दैवी चिकित्सा त्रिविधामता । शस्त्रप्रधानादैवीस्याच्छेदभेदात्मिकासुरी ॥ मानुषी षड्रसाद्येयाजपहोमादिसंस्कृता । कलौचाल्पबलेलोके मानुषीलघुपूजिता ॥ तस्याश्चचत्वारि यथा । काशिः

क्रियाभि र्यया शरीरे धातवः समाः । सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम् ॥ या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च । सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥ अस्याः फलम् । क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्यशः । कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ अस्या अङ्गानि यथा । रोगी दूतो भिषग् दीर्घमायुर्द्रव्यञ्च सेवकः । सदौषधं चिकित्सायामित्यङ्गानि बुधा जगुरिति ॥ गुप्तिज्किद्भ्य इति कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च सन् । चिकित्सनम् । अप्रत्ययात् ॥

चिकित्सितः । त्रि । प्रतिकृतामये । कृतप्रतीकारे ॥ न । चिकित्सायाम् ॥ भेषजे ॥ चिकित्सा सञ्जाताऽस्य । तारकादित्वादितच् ॥

चिकित्स्यः । त्रि । रोगान्मोचयितव्ये ॥ चिकित्सितुं योग्य । रोगे ॥ यथा । आतमाच श्चिकित्स्यः स्यान्नोपेक्ष्योऽल्पतयागदः । वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥ रोगमादौ परीक्षेत तदनन्तरमौषधम् । ततः कर्म भिषक् पश्चाद् ज्ञानपूर्वं समाचरेदिति ॥

चिक्किनः । त्रि । चिपिटे । चिक्के ॥ नासिकाया नतम् । इनच्पिटचौ चिक चिचेति ने रिनच् प्रकृतेश्चिकादेशश्च । तद्योगान्नासिका चिक्किना । पुरुषश्चिक्किनः ॥

चिक्किलः । पुं । पङ्के । चीकल इति भाषा ॥

चिकीर्षा । स्त्री । कर्त्तुमिच्छायाम् ॥ कृञ्० । अप्रत्ययादित्यः । टाप् ॥

चिकीर्षितम् । न । अभिप्राये ॥ कर्त्तुमीप्सिते ॥

चिकीर्षुः । त्रि । कर्त्तुमिच्छौ । करणेच्छाविशिष्टे ॥ कर्त्तुमिच्छति चिकीर्षति । सन्नन्तात् । सनाशंसभिक्ष उः ॥

चिकुरः । पुं । कुन्तले । बाले ॥ वृक्षभेदे ॥ पक्षिविशेषे ॥ शैले । पर्वते ॥ गृहबभ्रौ ॥ सरीसृपे ॥ त्रि । तरले । चञ्चले ॥ चपले । दोषमनिश्चित्य वधबन्धनादेः कर्त्तरि ॥ अस्ये ॥ यथा । तां वीक्ष्य लीलाचिकुरामनङ्गः स्वचापसौन्दर्यमदं मुमोचेति ॥ चिरं चञ्चलं शब्दं कुरति । कुर शब्दे । इगुपधेति कः ॥

चिकुरपक्षः । पुं । }
चिकुरपाशः । पुं । } केशसमूहे ॥
चिकुरहस्तः । पुं । }

चिकूरः । पुं । चिकुरे ॥ इति शब्दभेद

प्रकाशः ॥

चिक्कः । पुं । छुच्छुन्दर्याम् ॥ त्रि । नतनासिके । चिकिने ॥ नासिकायानतम् । कप्रत्ययेनेश्चिका देशश्च ॥

चिक्कणः । पुं । पूगवृक्षे ॥ न । पूगफले ॥ त्रि । मसृणे । स्निग्धे । चिकणा इति भाषा ॥ चिक्कनम् । चिक्कगतौ । संज्ञिप् । चिक्कं कणति कणशब्दे । मूलकः ॥ यद्वा । चिक्कनम् । घञ् । चिक्कस्य कणम् । कणशब्दे । अच् । शकन्ध्वादिः ॥ यद्वा । चेतति । चितीसंज्ञाने । चितेः कणःकश्च । बाहुलकाद्गुणः ॥

चिक्कणा । स्त्री । उत्तमायाङ्गवि । नैचिक्याम् ॥ पूगफले ॥

चिक्कणी । स्त्री । पूगफले ॥

चिक्कसः । पुं । यवचूर्णे ॥ इति हेमः ॥

चिक्का । स्त्री । पूगफले ॥ इतिराजनिर्घण्टः ॥

चिक्रंसा । स्त्री । क्रमितुमिच्छायाम् । जिहासायाम् ॥ क्रमेः सन्नन्तात् प्रत्ययादित्यकारप्रत्यये टाप् । स्नुक्रमोरनात्मनेपदनिमित्त इतीडागमो न भवति । अचक्रमेर्वृत्त्यादिव्यतिरिक्तार्थे ऽप्यऽनुपसर्गादितिवैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्यैवैवचिकस्य सम्भवात् ॥

चिङ्गटः । पुं । गलदा चिङ्गडा इति मोचा चिङ्गडी इतिच गौड भाषा प्रसिद्धे मत्स्ये । महाशल्के ॥

चिङ्गटी । स्त्री । घुषाचिङ्गडी इति गौड प्रसिद्धे मत्स्ये ॥

चिङ्गडः । पुं । चिङ्गटेमत्स्ये ॥

चिचिण्डः । पुं । चिचिण्डे । सुदीर्घफले ॥

चिचीषा । स्त्री । चेतुमिच्छयाम् ॥ चिनोतेः सन्नन्तात् प्रत्ययादितिस्त्रियामकार प्रत्ययः । विभाषाचेरिति विकल्पात् कुत्वाभावः ॥

चिच्छक्तिः । स्त्री । चैतन्ये ॥ यथोक्तांस कुलेपशारीरके । चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यत इति । अथोक्तं श्रीदेवीभागवते ५ स्कन्धे १९ ऽध्याये । चिच्छक्तिरस्ति परमात्मनि तेन सोऽपि व्यक्तो जगत्सुविदितोभवकृत्यकर्त्ता । कोन्यस्त्वयाविरहितः प्रभवत्ययमुष्मिन् कर्त्तुं विहर्त्तुमपि सञ्चलितुं स्वशक्तोति ॥ २८ ॥ हेमातः सा चिच्छक्तिः परमात्मन्यस्ति तेन हेतुना सोऽपि परमात्माव्यक्तो नामरूपात्मको भवति तथा जगत्सुविदितः प्रसिद्धः तथाभवकृत्यकर्त्ता मपञ्चसृष्टिस्थितिसंहृतिकर्त्ता भवति । कः पुरुषोऽस्मात् परमात्म

नोऽस्यास्वदिरस्थितः स्वशक्तयैवाम्भि म प्रपञ्चं कर्तुं विहर्तुं तथा संहर्तुं प्रभवति नकोऽपीत्यर्थः । यद्यस्ति त त्रिंतयापि त्वं शक्तिरूपा भवस्येव । ए तादृशीं संसकलकारणा मस्मीयेति भावः । तदुक्तं श्रीरामगीतसंहिता याम् । शक्त्या विना शिवेसूक्ष्मे नाम धाम न विद्यते इति ॥

चिञ्चा । स्त्री । अम्लिकाऽगमे ॥ चिमि च्यव्यक्तं शब्दं चिनोति ॥ चिञ्० । अन्येभ्योपीतिडः ॥ फले ॥ चिञ्चा-याः फलम् । हरीतक्यादिभ्यात्रफ लप्रत्ययस्य लुप् ॥

चिञ्चाम्लम् । न । } अम्लशाके ॥
चिञ्चासारः । पुं । }

चिञ्चिका । स्त्री । अम्लिकायाम् । अम् ली इति इमली इतिचभाषा ॥

चिञ्चिडः । पुं । सुदीर्घफले । चचेंडा इति भाषा ॥ चिञ्चडो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः । शोषणेतिचि तः किञ्चिद्गुणैर्न्यूनः पटोलतः ॥

चिञ्चुकी । स्त्री । चञ्च्वाम् । दीर्घप त्रायाम् । चेंचू नाडीशाके ॥

चिञ्चोटकः । पुं । अङ्कोल्ये । चेंचको इतिचेंचुडा इतिचगौडप्रसिद्धे तृणे ॥

चित् । अ । असाकल्ये । असकलार्थे ॥ यथा । किञ्चित् ॥ चेतति । चितीसं ज्ञाने । क्विप् ॥

चित् । स्त्री । प्रज्ञायाम् । बुद्धौ ॥ अज्ञडे । निर्विशेषस्फुरणमात्रे चेतने । स्वत एव प्रकाशमाने ब्रह्मणि ॥ निर्विक ल्पकं सर्वावभासकं ज्ञानं प्रत्यगात्म स्वरूपं चिदितिव्याख्यातारः ॥ चिदि त्यस्मीतिचिन्मात्रमिदंचिन्मयमेवच । चित्त्वं चिदहमेतेच लोकाश्चिदि तिभावयेत्युपदेशः ॥ चितीº । सं॰ क्विप् ॥

चितः । त्रि । छन्ने ॥ चीयतेस्म । चि ञ्º । क्तः ॥

चिता । स्त्री । चित्यायाम् । मृतादि दाहषु । प्रेतदाहार्थेऽग्न्याधाने ॥ शवदाहार्थं रचनायुक्तकाष्ठेषु ॥ सं हतौ ॥ चीयतेस्म । चिञ्चयने । क्तः । टाप् ॥

चितावृडकम् । न । चितायाम् ॥

चितिः । स्त्री । चितायाम् ॥ संमूहे । वृन्दे ॥ निर्विषयकसंविदि ॥ सौधा दिप्विष्टकासङ्ख्याज्ञानार्थाङ्कविशे-षे ॥ अग्निस्थानविशेषे ॥ चीयते । चिञ्º । स्त्रियां मधिकरणेवा क्तिन् ॥

चितिका । स्त्री । कटिशृङ्खलायाम् ॥

चित्तम् । न । चेतसि । अनुसन्धाना-त्मिकायामन्तः करणवृत्तौ ॥ चित्त स्य बुद्ध्यामन्तर्भावः विषयपरिच्छित्ति

रूपत्वाविशेषात् । बुद्धेश्च पूर्वाविषयः चित्तस्य पूर्वानुभूत इति विषयभेदात् चित्तस्य क्वचित् पृथङ्निर्देशोऽप्यस्ति ॥ चैतन्ये ॥ यथा । एवं मनायते चित्तमिति ॥ विज्ञानस्कन्धे ॥ चित्तौ० । भावे क्तः । श्वीदित इतीण्निषेधः ॥ चितायाम् ॥ चिताकाष्ठमठी चैत्यं चिताचूडकमिष्यते । चित्तञ्चेति त्रिकाण्डशेषात् ॥

चित्तकालः । पुं । चित्तपरिच्छेद्ये ॥ मान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो यस्य तयोः ॥

चित्तजन्मा । पुं । कामदेवे ॥

चित्तदोषः । पुं । शून्यतायाम् ॥

चित्तनदी । स्त्री । उभयतोवाहिन्याम् ॥ इयं ह्युभयतोवहति कल्याणाय वहति पापाय च । तत्र या कैवल्यप्राग्भारा विवेकनिम्ना सा कल्याणवहा । याऽस्त्वविवेकनिम्ना संसारप्राग्भारा सा पापवहा ॥

चित्तप्रसन्नता । स्त्री । हर्षे ॥

चित्तबन्धनम् । न । चित्तबन्धकारणे । मूलाज्ञाने ॥ चित्तस्य बन्धनम् ॥

चित्तमज्जनम् । न । रूपक्रियानुसन्धानराहित्ये ॥

चित्तमोदकः । पुं । लड्डुकविशेषे ॥

चित्तलः । पुं । मृगविशेषे ॥ असितत-लोद्भवतैलविपक्वं लवणयुतं नवाङ्कुरसाढ्यम् । त्रिकटुकयुक्तनिशार्द्रकमिश्रं बहुगुणचित्तलमांसमनर्घ्यम् ॥ रसे पाके च मधुरं रक्तपित्तविनाशनम् ॥

चित्तविक्षेपः । पुं । योगप्रतिपक्षेषु व्याधिस्त्यानादिषु ॥ चित्तं विक्षिपन्ति योगादपनयन्तीति चित्तविक्षेपाः योगप्रतिपक्षाः । ते च नव योगस्य चोक्ताः । यथा । व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तराया इति ३० । तत्र संशयभ्रान्तिदर्शने तावद्वृत्तिरूपतया वृत्तिनिरोधरूपस्य समाधेः साक्षात्प्रतिपक्षौ । व्याध्यादयस्तु सप्त वृत्तिसहचरिततया तत्प्रतिपक्षा भवन्ति ॥

चित्तवित् । पुं । विज्ञानात्मवादिनि बौद्धविशेषे ॥ चित्तमेव बाह्याकारशून्यं विज्ञानं तदेवात्मेति विज्ञानवादिनो भ्रान्तिरेव । सुषुप्ते व्यभिचारात् वेद्यस्य च घटादिवद् इतिरिक्तवेद्यत्वात् ॥

चित्तविप्लवः । पुं । उन्मादे ॥

चित्तविभ्रमः । पुं । उन्मादे ॥ चित्तस्य विभ्रमोऽनवस्थानम् ॥

चित्तसमुन्नति: । स्त्री । माने ॥ चित्तस्य सम्यगुन्नति: ॥

चित्तहारी । त्रि । मनोरमे ॥

चित्ताभोग: । पुं । एकस्मिन्विषये मनसो भूयोभूय: प्रवृत्तौ । एकस्मिन्विषये चित्तस्थैर्ये । मनस्कारे ॥ आभोजनम् आभोग: । भुजेर्भावे घञ् । चित्तस्य आभोगस्तदेकप्रवणता आभोगपरत्वमितियावत् ॥

चित्ति: । स्त्री । प्रज्ञायाम् ॥

चित्तैकाग्र्यम् । न । अन्यार्थनिवृत्तौ ॥

चित्तोक्ति: । स्त्री । दैवप्रश्ने ॥

चित्तोद्यम् । न । सप्तमगृहे ॥

चित्तोन्नति: । स्त्री । गर्वे ॥

चित्प्रतिबिम्ब: । पुं । जीवे ॥ चित: प्रतिबिम्ब: ॥

चित्य: । पुं । अग्नौ ॥ चीयते ऽसाविष्टर्थं चित्याग्निचित्ये चेति चिनोते: कर्मणि यत्प्रत्ययस्तु गागमश्च निपात्यते ॥ न । चितायाम् । मृतकचैत्ये ॥ जिनौकसि ॥

चित्या । स्त्री । मृतचितौ । चितायाम् ॥ टाप् ॥

चित्र: । पुं । यमविशेषे ॥ यथा । वृकोदराय चित्रायेति ॥ कर्बुरवर्णे ॥ अशोकवृक्षे ॥ चित्रकवृक्षे ॥ एरण्डवृक्षे ॥ न । तिलके ॥ आलेख्ये । मूरतइति भाषा ॥ अद्भुते ॥ कर्बुरे । नानावर्णे ॥ आकाशे ॥ न । अलङ्कारविशेषे ॥ यथा । तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता । सन्निवेशविशेषेण यत्र न्यस्ता वर्णा: खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रंकाव्यम् ॥ कष्टंकाव्यमेतत् ॥ * ॥ अष्टिसंज्ञकषोडशाक्षरायांवृत्तौ ॥ यथा । चित्रसंज्ञमीरितं समानिकापदद्वयन्तु । यथा । विद्रुमाभ्रयाधरोष्ठशोभिवेणुवाद्यहृष्टवल्लवीजनाङ्गसङ्गजातमुग्धकण्ठकाङ्‌क्ष । त्वां सदैव वासुदेव पुण्यलभ्य पादसेवनं पुष्पचित्रकेश त्वांस्मरामि गोपवेशइति ॥ चित्तंचायते दु:खविस्मारकत्वात् । चैङ् पालने । आतोऽनुपसर्गेक: ॥ चित्रयति वा चित्रचित्री करणे । ण्यन्तात् पचाद्यच् ॥ चिनोति चीयते वा । अमिचमीतिक्त: ॥ त्रि । कर्बुराद्भुतयुक्ते ॥

चित्रक: । पुं । पाठिनि । वह्निसंज्ञके ओषधौ । चीता इति भाषा ॥ चित्रक: कटुक: पाके वह्निकृत् पाचनो लघु: । रूक्षोष्णो ग्रहणी कुष्ठशोथार्श: कृमिकासनुत् ॥ वातश्लेष्महरो ग्राही वातार्श: श्लेष्मपित्तहृत् ॥ विचित्रं चैत्रकं शाकं कासमर्दविमर्दितम् । तप्ततैले सवाष्पीके पाचितं

तकसम्भृतम् ॥ चीता इतिभाषा प्रसिद्धे व्याघ्रविशेषे । शूरे । मृगान्तके ॥ एरण्डवृक्षे ॥ न । तिलके ॥ चित्रयति । चित्र० । कुनुशिल्पिसंज्ञयोः ॥ यद्वा । चित्तंवृद्धिं चायते । चै क्र० । कान्नात् स्वार्थेकन् ॥ चित्रं करोतिवा । अन्येभ्यो ऽपीतिडः ॥

चित्रकण्ठः । पुं । कपोते ॥ ॥

चित्रकम्बलः । पुं । गलीचा इति दुली चा इतिचभाषा प्रसिद्धे कम्बलविशेषे ॥

चित्रकारः । पुं । शूद्रागर्भे विश्वकर्मैार सजाते चितेरा इतिख्याते वर्णसङ्करजातिविशेषे । चित्रकारे । रङ्गाजीवे ॥ इतिब्रह्मवैवर्त्त पुराणम् ॥ चित्रंकरोति । डुकृञ् । दिवाविभा-निशेतिटः ॥

चित्रकर्मा । पुं । तिनिशद्रुमे ॥ त्रि । विचित्राद्भुतकर्मणि ॥

चित्रकायः । पुं । व्याघ्रे । वाघ इतिभाषाप्रसिद्धे ॥ चीता इति भाषाप्रसिद्धे चित्रव्याघ्रे ॥ चित्रः कायोऽस्य ॥

चित्रकारः । पुं । चित्रकरे ॥ स्थपतेरपि गान्धिक्यां चित्रकारोव्यजायतेति प०प० ॥ चित्रं करोति । डुकृञ्० कर्मण्यण् ॥

चित्रकूटः । पुं । स्वनाम्ना प्रसिद्धे पर्वतविशेषे ॥

चित्रकृत् । पुं । तिनिशद्रुमे ॥ चित्रकारे ॥ चित्रंकरोति । क्विप् ॥

चित्रकोलः । पुं । वाम्हनीतिख्यातेजन्तौ । ज्येष्ठ्याम् । अञ्जने । कृकलासे ॥

चित्रगन्धम् । न । हरिताले ॥

चित्रगुप्तः । पुं । चतुर्दशयमान्तर्गतयमे ॥ यथा । वृकोदरायचित्रायचित्रगुप्तायवैनमः इति ॥ ब्रह्मपाद्मे यमस्यलेखके ॥ अस्योत्पत्त्यादिराचारनिर्णयतन्त्रादवधार्या ॥

चित्रजल्पः । पुं । वाक्यविशेषे ॥ यथा । प्रेष्ठस्यसुहृदालोके गूढरोषाभिजृम्भितः । भूरिभावमयोजल्पोयस्तीव्रोत्कण्ठितान्तिमः ॥ चित्रजल्पोदशाङ्गोऽयंप्रजल्पंपरिजल्पितम् । विजल्पोज्जल्पसंजल्पाअवजल्पोऽभिजल्पितम् ॥ आजल्पः प्रतिजल्पश्चसुजल्पश्चेति कीर्त्तित मित्युज्ज्वलनीलमणिः ॥

चित्रतण्डुला । स्त्री । विडङ्गे ॥ चित्रास्तण्डुलाअस्याः ॥

चित्रत्वक् । पुं । भूर्जवृक्षे ॥

चित्रदण्डकः । पुं । ओलवृक्षे ॥

चित्रदर्शनम् । न । आरके ॥ आरकं चित्रदर्शनम् ॥

चित्रदेवी । स्त्री । महेन्द्रवारुण्याम् ॥

चित्रनेत्रा । स्त्री । सारिकाविहगे ॥

चित्रपक्षः । पुं । तित्तिरिपक्षिणि ॥ भित्तिरोषाद्दूतिख्याते पाण्डुसंज्ञकेखगे ॥ चित्रपक्षःकफहरो वातघ्नो ग्रहणीप्रणुत् ॥

चित्रपटः । पुं । छींट इति प्रसिद्धे वस्त्रे ॥

चित्रपत्रिका । स्त्री । द्रोणपुष्प्याम् ॥ कपित्थपर्ण्याम् ॥

चित्रपत्री । स्त्री । जलपिप्पल्याम् ॥

चित्रपदा । स्त्री । गोधापदीलतायाम् ॥ अनुष्टुप्संज्ञकाष्टाक्षरवृत्तिविशेषे ॥ यथा । चित्रपदा यदि भौगौ । यथा । यामुनसैकतदेशे गोपवधूजनकेलौ । कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥ सवैया मगतायामपि दृश्यते । यथा । सतयदा भगणाः परतो गुरुरन्ततो लघुको जितदेश चित्रपदेति तदा युधि विक्रमतो धृतवैरिधराधिपकेश । सा कथिता धिक्रमङ्गलपिङ्गलनामवरे वद्भ्याभिनिवेश गौडकुलोज्ज्वलधारवधारय चेतसि हैयग्रवन्नरेशेति ॥

चित्रपर्णिका । स्त्री । चित्रपर्णीप्रभेदे । त्रिपर्ण्याम् । दीर्घपत्रायाम् ॥

चित्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥ चि-पंपर्णमशः । पाकवर्केतिकोष ॥ ऋ र्व्वस्फोटालतायाम् ॥ जलपिप्पल्याम् ॥ द्रोणपुष्प्याम् ॥ मञ्जिष्ठायाम् ॥

चित्रपादा । स्त्री । सारिकापक्षिणि ॥

चित्रपिच्छकः । पुं । मयूरे ॥

चित्रपुङ्खः । पुं । शरे ॥

चित्रपुष्पी । स्त्री । अम्बष्ठायाम् ॥

चित्रपृष्ठः । पुं । कलविङ्के । चटके ॥

चित्रफलः । पुं । चितल इति गौडप्रसिद्धे मत्स्ये ॥

चित्रफला । स्त्री । चिर्भिटायाम् ॥ मृगेर्वारौ ॥ लिङ्गिन्याम् ॥ वार्त्ताक्याम् ॥ कण्टकार्याम् ॥ फलुइमाच इतिगौड प्रसिद्धे मत्स्ये । राजग्रीवे । फलंक्याम् ॥ बृहदिन्द्रवारुण्याम् ॥

चित्रभानुः । पुं । अग्नौ । वैश्वानरे ॥ सूर्ये ॥ चित्रकवृक्षे ॥ भैरवे ॥ चित्रा भानवोऽस्य । क्षुभ्नादित्वात् पूर्वपदादिति न णत्वम् ॥ षोडशेवत्सरे ॥ अस्यफलम् । चणकामुद्गमाषाश्च अन्यच्च विविधं प्रिये । बहुधं जायते सर्वं चित्रभानौ वरानने ॥

चित्रभेषजा । स्त्री । काकोदुम्बरिकायाम् ॥

चित्रमृगः । पुं । पृषताख्यमृगे ॥

चित्रमेखलः । पुं । मयूरे ॥

चित्रयोधी । पुं । अर्जुनवृक्षे ॥

चित्ररथः । पुं । सूर्ये ॥ गन्धर्वविशेषे ॥

विद्याधरे ॥

चित्रलः । पुं । कर्बुरवर्णे । किर्मीरे ॥ चि । तद्युक्ते ॥

चित्रलता । स्त्री । मञ्जिष्ठायाम् ॥

चित्रला । स्त्री । गोरक्षीवृक्षे ॥

चित्रलेखा । स्त्री । अप्सरोविशेषे । वाणासुरसुताया ऊषायाःसख्याम् । कुम्भाण्डतनयायाम् ॥ धृतिसंज्ञका ष्टदशाक्षरावृत्तिविशेषे ॥ यथा । मन्दाक्रान्ता नपरलघुयुता कीर्त्तिता चित्रलेखा ॥ यथा । शङ्के ऽमुष्मिन् जगति मृगदृशां सारमुद्धृत्य यदासीदाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि । नैतादृक्चेत् कथमुदधिसुता मन्तरेणाच्युतस्य प्रीतं तस्यां नयमयुगम भूश्चित्रलेखाद्भुतायामिति ॥

चित्रलोचना । स्त्री । सारिकायाम् ॥

चित्रवदालः । पुं । पाठीनमत्स्ये ॥

चित्रवल्लिक । पुं । वदालमत्स्ये ॥

चित्रवल्ली । स्त्री । मृगेर्वारौ ॥ महेन्द्रवारुण्याम् ॥

चित्रवीर्य्यः । पुं । रक्तैरण्डे ॥

चित्रशिखण्डिजः । पुं । बृहस्पतौ ॥ चित्रशिखण्डी अङ्गिराः ततोजातः । जनौ । पञ्चम्यामितिडः ॥

चित्रशिखण्डी । पुं । सप्तर्षिषु ॥ यथा । मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेया श्चित्रशिखण्डिनः ॥ चित्रशिखण्डश्चूडाविशेषोऽस्त्येषामितिव्युत्पत्त्याप्रत्येकं सप्तापि मरीच्यादय श्चित्रशिखण्डिनः ॥



चित्रशिखण्डिप्रसूतः । पुं । बृहस्पतौ ॥

चित्रसर्प्पः । पुं । मालुधाने ॥

चित्रसेनः । पुं । ब्रह्मपादजमसीशाख्यकायस्थस्य चित्रगुप्तादित्रितयान्तर्गत मूर्त्तिविशेषे ॥ अयञ्चमर्त्यलोकस्य विवेचकः । यथा । चित्रसेने महाधियां वगलेतिगुरोर्मयम् । अम्बा सन्तोष्य पुत्रादीन् याचित्वा प्राप्य मर्त्यतः ॥ राज्यंचकार सद्युक्तश्चि त्राङ्गदअधोगयः ॥ इत्याचारनिर्णय तन्त्रम् ॥

चित्रा । स्त्री । आखुपर्ण्याम् ॥ गोडुम्बायाम् ॥ सुभद्रायाम् ॥ दन्तिकायाम् ॥ मायायाम् ॥ सर्पविशेषे ॥ नदीविशेषे ॥ अप्सरोविशेषे ॥ मृगेर्वारौ ॥ मण्डूकपर्ण्याम् ॥ मूषिकपर्ण्याम् ॥ मञ्जिष्ठायाम् ॥ वैदिककर्मविशेषे ॥ चतुर्दशे नक्षत्रे ॥ अत्र जातस्यफलम् । यथा । प्रतापसन्तापितशत्रुपक्षो दक्षोनये चापिविचित्रवासाः । प्रसूतिकाले यदि यस्य चित्रा बुद्धिर्विचित्रा खलुतस्यास्ते ॥

अतिशक्करीसंज्ञकपञ्चदशाक्षराद्भ-त्तिप्रभेदे ॥ यथा । चित्रानामकम् न्दश्चिच्चेत् चयोमायकारौ । यथा । गोपाली लीलालोला यद्वत् कलिन्दात्मजान्ते खेलन्मुक्ताहारागण्यस्त्र गुल्लसन् मूर्द्धि चित्रा । कंसारातेर्मूर्त्तिस्तद्वन्मेहृदिक्रीडतीयं कोन्यः स्वर्गो मोक्षो वास्माद्धियते तन्नजानेइति ॥ चित्रं रूपमस्त्यस्याः ॥ चित्रायां जातायाम् ॥ चित्रारेवतीरोहिणी-भ्यः स्त्रियां नक्षत्राणो लुक् ॥ नाडीविशेषे ॥ सुषुम्णामूलदेशे शिवा नाड्यस्ति । तस्यामध्येतु चित्राख्या-नाडी सूक्ष्मातुवर्त्तत इतितन्त्रवचनात् ॥

चित्राक्षी । स्त्री । सारिकायाम् ॥

चित्राङ्गुपः । पुं । द्रोणपुष्प्याम् ॥

चित्राङ्गः । पुं । चित्रके ॥ रक्तचित्रके ॥ सर्पे ॥ न । हिङ्गुले ॥ हरिताले ॥

चित्राङ्गदः । पुं । शान्तनुराजपुत्रे । चन्द्रवंशीयन्त्रपविशेषे । विचित्रवीर्य्य भ्रातरि ॥ गन्धर्वविशेषे ॥ ब्रह्मपाद्ममसीशाख्यकायस्थस्य चित्रगुप्तादिवितयान्तर्गतमूर्त्तिविशेषे ॥ अयञ्चाधोलोकस्थविवेचकः । अस्याधोगमनकारण माथारनिर्णयतन्त्रे द्रष्टव्यम् ॥ चित्रापयङ्गदामियस्य ॥

चित्राङ्गदसूः । स्त्री । व्यासदेवस्यजनन्याम् । सत्यवत्याम् ॥

चित्राङ्गी । स्त्री । मञ्जिष्ठायाम् ॥ कर्णजलौकायाम् ॥

चित्राटीरः । पुं । चन्द्रे । विधौ ॥ घण्टाकर्णवलिच्छागास्रविन्दुभिरङ्कितभाले ॥ येनभालमङ्कितंतत्र ॥ घण्टाकर्णोपहारायहतच्छागास्रविन्दुषु । इतिमेदिनी ॥

चित्रापूपः । पुं । चितारूपिटा इतिगौड भाषा प्रसिद्धे पिष्टके । चक्रब्रणे ॥

चित्रायसम् । न । तीक्ष्णलोहे ॥

चित्रिणी । स्त्री । पद्मिन्यादिचतुर्विध स्त्रीषुमध्ये स्त्रीविशेषे ॥ सेयंमीनगन्धा । अस्यालक्षणम् । भवति रतिरसज्ञा नातिदीर्घा नखर्वा तिलकुसुमसुनासा स्निग्धदेहोत्पलाक्षी । कठिनघनकुचाढ्या सुन्दरी सासुशीला सकल गुणविचित्रा चित्रिणी चित्रवक्रेति ॥

चित्रेशः । पुं । चन्द्रमसि ॥

चित्रोक्तिः । स्त्री । आकाशवाण्याम् ॥ आश्चर्यकथने ॥

चित्रौदनम् । न । विचित्रान्ने ॥

चिदम्बरम् । न । छायास्थस्थाने ॥

चिदाकाशः । पुं । न । शुद्धात्मनि ॥ मायामेघो जगन्नीरं वर्षत्वेष य

था तथा । चिदाकाशस्य नोहामि नैवाशाभ इतिस्थिति: ॥ चित्ताकाशं चिदाकाश माकाशञ्चतृतीयकम् । द्वाभ्यां शून्यतरं विद्धिचिदाकाशं महामुने ॥

चिदात्मक: । त्रि । निर्विशेषस्फुरणमात्रस्वरूपे चिदद्वैते ॥ वाध्यते जाग्रत्तिस्वप्न: सुप्ते जाग्रञ्च वाध्यते । चिदद्वैतन्तु न क्वापि वाध्यते वास्तवत्वत: ॥ चितो न वाधकं द्वैतं चित्प्रसादेन भासनात् । अवाध्यत्वाद्वास्तवत्वं चिदद्वैतस्य कुत्सितम् ॥

चिदाभास: । पुं । बुद्धावात्मप्रतिबिम्बे । जीवे ॥ योश्चिचराचरात्मकेषु शरीरजातेषु नित्यसन्निहित: । चिद्रदाभासतेस: ॥

चिद्रसपूर्ण: । त्रि । स्फुरत्सुखपूरिते ॥

चिद्रूप: । त्रि । ज्ञानमये ॥ हृदयालौ ॥

चिन्तनम् । न । कर्त्तव्याकर्त्तव्यचिन्तायाम् ॥ विचारे ॥ चितिस्मृत्याम् । ल्युट् । अन् ॥ स्मरणे ॥

चिन्तयन् । त्रि । ध्यायति ॥

चिन्ता । स्त्री । आध्याने । चिन्तने । स्मृत्याम् ॥ आत्मीययोगक्षेमापायालोचनात्मिकायांबुद्धौ ॥ दर्शनसम्भोगयो: प्रकारभावनायाम् ॥ चितासचिन्तयोर्मध्ये चिन्तानामगरीयसि । चिता दहति निर्जीवं सजीवे दह्यतेऽनया ॥ चिन्तनम् । चिति० । चितिपूजी स्यङ् ॥ चिन्त्यतेऽनया वा ॥ कुत आगत्य घटते विघव्य क्व प्रयाति च । इति चिन्ता न कर्त्तव्या धनस्य च घनस्य च ॥

चिन्तामणि: । पुं । वाञ्छितप्रदे मणिविशेषे ॥ तस्मिन् यद्यच्चिन्त्यते तत्तच्चिन्तोपाधिकमेवावभासते न स्वरूपतस्तथा ॥ स्पर्शमणौ ॥ यथाचिन्तामणिं स्पृष्ट्वा लोहं काञ्चनतां भजेत् ॥ ब्रह्मणि ॥ आयुरारोग्यमर्थञ्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायतां नित्यंसर्वकामप्रदोहरि: ॥ मन्त्रविशेषे ॥ याचायोगान्तरे ॥ सहजस्थानगोभैामो भाग्यस्थश्चवृहस्पति: । त्रिन्तामणि समाख्योयं यातु:सङ्कल्पपूरक: ॥ बुद्धविशेषे ॥

चिन्तावेश्म । न । मन्त्रणागृहे । दार्षटे ॥

चिन्तित: । त्रि । कृतचिन्तने । मनसा विचारिते ॥ यथा । यच्चिन्तितं तदिहदूरतरं प्रयाति यच्चेतसानगणितं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्त्ती सोऽहंव्रजामि विपिने जटिलस्तपस्वीति ॥

चिन्तिया । स्त्री । चिन्तायाम् ॥

चिन्तोक्तिः । स्त्री । चिन्तावचने ॥

चिन्त्यः । त्रि । निरूपणीये । चिन्तितुं शक्य । विचारणीये ॥

चिन्त्यमानः । त्रि । विचार्यमाणे ॥

चिप्रः । पुं । चीणाइतिख्याते ऽश्वविशेषे ॥ इतिशब्दचन्द्रिका ॥

चिन्मयः । त्रि । चैतन्यरूपे ॥ चिन्मयस्याद्वितीयस्यनिष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणोरूपकल्पना । रूपस्थानां देवतानां स्त्रीपुंसादिककल्पना ॥

चिपिटः । पुं । चिउरा इति प्रसिद्धे-खाद्यभेदे । पृथुके । धान्यचमसे ॥ शालयः सतुषा आर्द्रा भृष्टा अस्फुटिता स्ततः । कुट्टिताश्चिपिटाःप्रोक्तास्तेस्मृताःपृथुकाअपि ॥ शालयोयावनालाद्याश्चिपिटाः पुष्टिवर्द्धनाः इतिच ॥ अस्यभक्षणविधिनिषेधौ यथा । द्विःस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके । नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥ अभक्ष्यं तद्यतीनाञ्च विधवाब्रह्मचारिणामिति ब्रह्मवैवर्त्तपुराणम् ॥ आर्द्रसस्याम्थौषे ॥ चिपिट्टितविस्तृते ॥ चिपटे ॥ नासिकायानते ॥ इनच्पिटच् चिकचिचेति पिटच् प्रत्ययः प्रकृतेश्चिरादेशः ॥

चिपिटकः । पुं । चिपिटे । पृथुके ॥

चिपिटमिव । संज्ञायाम् इवेतिवाकन् ॥

चिपिटा । स्त्री । गुण्डासिनीतृणे ॥

चिप्पः । पुं । क्षुद्ररोगविशेषे ॥ यथा । नखमांस मधिष्ठाय वातःपित्तञ्च देहिनाम् । कुर्वाते दाहपाकौचतं व्याधिं चिप्प मादिशेदिति ॥

चिमिः । पुं । शुकखगे ॥ पट्टवृक्षे ॥

चिमिकः । पुं । शुकपक्षिणि ॥

चिमिचिमः । पुं । अर्शसोव्यथाविशेषे ॥ कण्डूविशेषे । स्पर्शप्रियतायाम् ॥

चिरम् । न । अव्यादि (।ऽ)चिरकाले ॥ दीर्घकाले ॥ त्रि । तद्वति ॥

चिरकारी । त्रि । चिरक्रिये ॥

चिरकालः । पुं । दीर्घकाले । दीर्घरात्रे ॥

चिरक्रियः । त्रि । दीर्घसूत्रे । अतिविलम्बेन क्रियासम्पादके ॥ चिराक्रिया यस्य ॥

चिरजीवकः । पुं । जीवकद्रुमे ॥

चिरजीवी । पुं । काके ॥ विष्णौ ॥ जीवकवृक्षे ॥ शाल्मलितरौ ॥ अश्वत्थामादिषु ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ त्रि । बहुकालजीविनि ॥

चिरञ्जीवी । पुं । विष्णौ ॥ काके ॥ जी

वक्ष इ० ॥ बाल्मलिद० ॥ त्रि । चिरजीविनि ॥

चिरबृठः । पुं । यौवने ॥

चिरण्टी । स्त्री । प्राप्तयौवनायांपितृगेहस्थायाम् । सुवासिन्याम् ॥ चिरेण अटति पितृगेहाद्भर्तृगेहम् । अट गतौ । अच् । पृषोदरादिः । वयसाचरमइतिङीप् ॥ तरुण्याम् । द्वितीयवयःस्थायाम् ॥

चिरतिक्तः । पुं । चिरायता इतिप्रसिद्धे भूनिम्बे । किरातत्तिक्ते ॥

चिरत्नः । त्रि । पुरातने । चिरन्तने ॥ चिरेभवः । चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ॥

चिरन्तनः । त्रि । पुरातने ॥ चिरेभवः । सायञ्चिरमितिट्युट्युलौ । निपातनान्मान्तत्वम् ॥

चिरपाकी । पुं । कपित्थे ॥

चिरपुष्पः । पुं । वकुलाऽ नमे ॥

चिरप्रसूता । स्त्री । बष्कयिण्याम् ॥ चिरंप्रसूता । सुप्सुपेतिसमासः ॥

चिरम् । अ । बहुकालार्थे । चिराय ॥

चिरमेही । पुं । गर्दभे ॥

चिरञ्जयः । पुं । चिल्ले ॥

चिररात्रम् । न । दीर्घकाले ॥

चिररात्राय । अ । दीर्घकाले ॥ चिरा रात्रयः । अत्रप्रत्यन्ययोरयागविभागादयः । चिररात्रामत्र ते । अय० । कर्मत्वात् ॥

चिरलोकपितरः । पुं भूम्नि । अग्निष्वात्तादिषु ॥ अग्निष्वात्तादयोलोकेपितरश्चिरवासिनः ॥

चिरविल्वः । पुं । करञ्जवृक्षे ॥ चिरं विलति । विलभेदने । बाहुलकात् वः ॥

चिरसूता । स्त्री । बष्कयिण्याम् ॥

चिरसूतिका । स्त्री । बष्कयिण्याम् ॥

चिरस्य । अ । दीर्घकाले ॥ चिरमस्यति । असु० । ण्यत् । संज्ञापूर्वकत्वात् वृद्ध्यभावः । अ० ॥

चिरा । स्त्री । बहुकालसाध्यायाम् ॥

चिराटिका । स्त्री । श्वेतपुनर्नवायाम् ॥ पाताडी इतिगौडभाषाप्रसिद्धघटिकायाम् ॥

चिरात् । अ । दीर्घकाले ॥

चिरात् । पुं । गरुडे ॥

चिरातिक्तः । पुं । चिरतिक्ते ॥

चिराय । अ । दीर्घकाले ॥ चिरमयते । अय० । कर्मत्वात् ॥

चिरायुः । पुं । विबुधे । देवतायाम् ॥ त्रि । चिरजीविनि ॥ चिरमायुर्यस्य ॥ भवति यदि मनुष्यो गुर्वधीनश्चिरायुरित्यागमः ॥ चिरायुः । पुं । काकादि (।ऽ) त्रिकाले ॥

चिरिः। पुं। तोता इतिप्रसिद्धे शुक पक्षिणि॥
चिरेण। अ। चिरमित्यर्थे॥
चिर्भटी। स्त्री। कर्कव्याम्॥
चिर्भिटः। पुं। न। कर्कटी सम्भे। पेहसेंध इतिसेंधकचरी इतिचभाषा प्रसिद्धायां सुचिकायाम्॥ चिर्भिटंम धुरं रूक्षं गुरुपित्तकफापहम्। अनुष्णं ग्राहि विष्टम्भि पक्वं तूष्णञ्चपित्तलम्॥
चिर्भिटा। स्त्री। चिभड इति भाषा प्रसिद्धे चिर्भिटे॥
चिलमिलिका। स्त्री। कण्ठीभेदे॥ ख द्योते॥ विद्युति॥
चिलमीलिका। स्त्री। चिलमिलिकार्थे॥
चिलिचिमः। पुं। वाखियामछक इति गौडभाषाप्रसिद्धे मत्स्ये। नलमीने॥ चिलविलासने। इगुपधात् कि दिति इः। वीप्सायां द्वित्वम्। चि लिचिलिं विलासं मिमीते। माङ्मा ने। आतइतिकः। पृषोदरादिः॥ चिलिंविलासं चिनोतिवा। चिञ्०। वाहुलकान् मक्॥ चेङ्गो इतिगौ डप्रसिद्धे मत्स्ये॥
चिलिचिलिः। पुं। विलासे॥
चिलिचीमः। पुं। } वाखियामछक
चिलिचीमिः। पुं। } इतिगौडप्रसि द्धे चिलिचिमे॥
चिलिमिलिका। स्त्री। चिलमिलिकार्थे॥
चिलिमीनकः। पुं। चिलिचिमेमत्स्ये॥
चिलिमीलिका। स्त्री। चिलमिलिकार्थे॥
चिलीचिमः। पुं। } नलमीने। चि
चिलीचिमिः। पुं। } लिचिमे॥
चिलीमः। पुं। }
चिल्लः। पुं। आतायिनि। सभान्नौ। चील इति भाषा॥ चिल्लति। चिल्ल शैथिल्ये भावकरणेच। अच्॥ क्लि न्ननेत्रे॥ क्लिन्ननेत्रवति॥ क्लिं न्नचक्षुषा अस्य। क्लिन्नस्य चिल्पि ल् लश्चास्य चक्षुषीति चिलादेशो लश्च प्रत्ययः। चक्षुर्गतःक्लेदरोगः चिल्लशब्दवाच्यः। तद्योगात्तद्युक्तो गात् पुरुषोपीतिव्याख्यातारः॥
चिल्लकः। पुं। लोभ्रे॥
चिल्लभक्ष्या। स्त्री। चट्टविलासिन्याम्॥
चिल्लाभः। पुं। प्रसह्यचौरे। गांठकटा लुटेरा पिंडाराजूवाचोर इत्यादि भाषा॥
चिल्लिः। पुं। भ्रूमध्ये॥
चिल्ली। स्त्री। क्षुद्रवास्तुकशाके। गौ डवास्तुके। वथुआ इति प्रसिद्धे शा के॥ लोध्रे॥ झिल्ल्याम्॥ चिल्लति। चिल्ल शैथिल्ये। अच्। गौ०ङीष्॥

चिचिल्लिका । स्त्री । क्षुद्रक्षुपविशेषे । रक्तादलायाम् ॥

चिबु: । पुं । चिबुके । ओष्ठाधोभागे । ठोडि इति भाषा ॥ चीवति । चीव्य ते वा । चीट्आदानसंवरणयोः । मृगय्वादित्वात् कुः ॥ चिनोतिशो भांवा । प्राग्वत् ॥

चिबुकम् । न । चिबौ ॥ स्वार्थेकन् ॥ पुं । मुचुकुन्दवृक्षे ॥

चिह्नम् । न । लाञ्छने । लक्षणे ॥ पताकायाम् ॥ चह्यतेऽनेन । चहप रिकल्कने । चा०नक् उपधाया इत्व ञ्च ॥ लघ्वादि (।ऽ) त्रिकलो ॥

चिह्नकारी । त्रि । घोरदर्शने ॥ चिन्हा तिनि ॥

चिह्नधारिणी स्त्री । श्यामालतायाम् ॥

चिह्नित: । त्रि । अङ्कित । चिह्नवि- शिष्टे ॥

चिल्ह: । पुं । } गंधारी इति पर्वत-
चिल्हक: । पुं । } प्रसिद्धे वृक्षे ॥ चिल्ह कोवातनिर्हारी श्लेष्मशोधातवृष्टि- कृत् । आग्नेयो विषवस्त्रस्यफलं म- त्स्यनिषूदनम् ॥

चीडा । स्त्री । चीडागन्ध इति गौड प्रसिद्धगन्धद्रव्ये । दारुगन्धायाम् ॥

चात्कार: । पुं । भयध्वनौ ॥

चीन: । पुं । देशविशेषे ॥ यथा । का शीरन्तु समारभ्य कामरूपात्तुपश्चि मे । भोटान्तदेशोदेवेशि मानसेशा- द्दचिणे ॥ मानसेशाद्दक्षपूर्वेचीन देश: प्रकीर्त्तित इतितन्त्रशास्त्रम् ॥ तद्देशजे मनुष्ये । चीनदेशोद्भवे पूर्वं चत्रिये पश्चाद्विहितक्रियालो पादिनाशूद्रत्वमापन्ने दस्युपदवाच्ये ॥ आगमोक्ते सम्प्रदायविशेषे ॥ अं शुकविशेषे । मखमल इत्याधुनिक भाषाप्रसिद्धे बहुविधाङ्गतवस्त्रे ॥ चीणा इतिप्रसिद्धे व्रीहि विशेषे ॥ चीनक:कङ्गु भेदोस्मि सद्मेय: कङ्गु वद्गुणै: ॥ तन्तौ ॥ मृगविशेषे ॥ न । पताकायाम् ॥ सीसके ॥ चिनोति । चिञ्०। बाहुलकान्नक् दीर्घश्च ॥

चीनक: । पुं । चीणा इति प्रसिद्धधा न्ये । काककङ्गौ ॥ कङ्गुन्याम् ॥ ची नकर्पूरे ॥

चीनकर्पूर: । पुं । चीनाकपूर इतिभा षाप्रसिद्धे कर्पूरविशेषे । कृत्रिमे । मेघसारे । धवले ॥

चीनजम् । न । तीक्ष्णलोहे ॥

चीनपिष्टम् । न । सिन्दूरे ॥ चीनस्य पिष्टम् ॥ सीसके ॥

चीनवङ्गम् । न । सीसके ॥

चीनाक: । पुं । चीनियाकपूर इति प्र सिद्धे कर्पूरविशेषे ॥ चीनाकसंज्ञ:

चिन्तोक्तिः । स्त्री । चिन्तावचने ॥

चिन्त्यः । त्रि । निरूपणीये । चिन्तितु शक्य । विचारणीये ॥

चिन्त्यमानः । त्रि । विचार्यमाणे ॥

चिन्नः । पुं । चीणा इति ख्याते ऽन्नविशेषे ॥ इति शब्दचन्द्रिका ॥

चिन्मयः । त्रि । चैतन्यरूपे ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना । रूपस्थानां देवतानां स्त्री पुंसादिककल्पना ॥

चिपिटः । पुं । चिउरा इति प्रसिद्धे- खाद्यभेदे । पृथुके । धान्यचमसे ॥ शालयः सतुषा आर्द्रा भृष्टा अस्फुटिता स्ततः । कुट्टिता श्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि ॥ शालयोयावनालाख्याश्चिपिटाः पुष्टिवर्द्धनाः इतिच ॥ अस्य भक्षणविधिनिषेधौ यथा । द्विः स्विन्नमन्नं पृथुकं शुष्कं देशविशेषके । नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥ अभक्ष्यं तव्रतीनाञ्च विधवाब्रह्मचारिणामिति ब्रह्मवैवर्त्तपुराणम् ॥ आर्द्रसस्याम्बोषे ॥ त्रि । पिट्टितविस्तृते ॥ पिच्चटे ॥ नासिकायानते ॥ इनच् पिटच् चिकचिचेति पिटच् प्रत्ययः प्रकृतेश्चिरादेशः ॥

चिपिटकः । पुं । चिपिटे । पृथुके ॥ चिपिटमिव । संज्ञायाम् इवेतिवा कन् ॥

चिपिटा । स्त्री । गुण्डासिनीतृणे ॥

चिप्पः । पुं । क्षुद्ररोगविशेषे ॥ यथा । नखमांस मधिष्ठाय वातःपित्तञ्च देहिनाम् । कुर्वाते दाहपाकौ चतं व्याधिं चिप्प मादिशेदिति ॥

चिमिः । पुं । शुकखगे ॥ पट्टवृक्षे ॥

चिमिकः । पुं । शुकपक्षिणि ॥

चिमिचिमः । पुं । अर्शसोव्यथाविशेषे ॥ कण्डूविशेषे । स्पर्शप्रियतायाम् ॥

चिरम् । न[illegible]अव्यादि (।ऽ)चिकले ॥ दीर्घकाले ॥ त्रि । तद्वति ॥

चिरकारी । त्रि । चिरक्रिये ॥

चिरकालः । पुं । दीर्घकाले । दीर्घरवे ॥

चिरक्रियः । त्रि । दीर्घसूत्रे । अतिविलम्बेन क्रियासम्पादके ॥ चिराक्रिया यस्य ॥

चिरजीवकः । पुं । जीवकद्रुमे ॥

चिरजीवी । पुं । काके ॥ विष्णौ ॥ जीवकवृक्षे ॥ शाल्मलितरौ ॥ अश्वत्थामादिषु ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ त्रि । बहुकालजीविनि ॥

चिरञ्जीवी । पुं । विष्णौ ॥ काके ॥ जी

वय इ० ॥ श्रात्मनिद० ॥ त्रि । चि रजीविनि ॥

चिरवृः । पुं । यौवने ॥

चिरण्टी । स्त्री । प्राप्तयौवनायांपितृगे हस्थायाम् । सुवासिन्याम् ॥ चिरे ण अटति पितृगेहाद्भर्त्तृगेहम् । अट गतौ । अच् । पृषोदरादिः । वयस चरमइतिङीप् ॥ तरुण्याम् । द्वि तीयवयःस्थायाम् ॥

चिरतिक्तः । पुं । चिरायता इतिप्रसि द्धे भूनिम्बे । किराततिक्ते ॥

चिरत्नः । त्रि । पुरातने । चिरन्तने ॥ चिरेभवः । चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ॥

चिरन्तनः । त्रि । पुरातने ॥ चिरेभवः । सायञ्चिरमितिट्युट्युलौ । निपात नान्मान्तत्वम् ॥

चिरपाकी । पुं । कपित्थे ॥

चिरपुष्पः । पुं । वकुलाऽऽद्रुमे ॥

चिरप्रसूता । स्त्री । वष्कयिण्याम् ॥ चि रंप्रसूता । सुप्सुपेतिसमासः ॥

चिरम् । अ । बहुकालार्थे । चिराय ॥

चिरमेही । पुं । गर्दभे ॥

चिरवृषः । पुं । पिल्ले ॥

चिररात्रम् । न । दीर्घकाले ॥

चिरराचाय । अ । दीर्घकाले ॥ चिरा रात्रय: । अचूप्रत्ययान्तेस्वचारजिति योगविभागादच् । चिररात्रामय ते । अय० । कर्मण्यण् ॥

चिरलोकपितरः । पुं भूम्नि । अग्निष्वात्ता दिषु ॥ अग्निष्वात्तादयोलोकेपितर श्चिरवासिनः ॥

चिरविल्वः । पुं । करञ्जवृक्षे ॥ चिरं विलति । विलभेदने । वाहुलका द्वः ॥

चिरसूता । स्त्री । वष्कयिण्याम् ॥

चिरसूतिका । स्त्री । वष्कयिण्याम् ॥

चिरस्य । अ । दीर्घकाले ॥ चिरमस्य ति । असु० । ण्यत् । संज्ञापूर्वकत्वा द्वृद्ध्यभावः । अ० ॥

चिरा । स्त्री । बहुकालसाध्यायाम् ॥

चिराटिका । स्त्री । श्वेतपुनर्नवायाम् ॥ पाताडी इतिगौडभाषाप्रसिद्धवटि कायाम् ॥

चिरात् । अ । दीर्घकाले ॥

चिरात् । पुं । गरुडे ॥

चिरातिक्तः । पुं । चिरतिक्ते ॥

चिराय । अ । दीर्घकाले ॥ चिरमय ते । अय० । कर्मण्यण् ॥

चिरायुः । पुं । विबुधे । देवतायाम् ॥ त्रि । चिरजीविनि ॥ चिरमायुर्यस्य ॥ भवति यदि मनुष्यो गुर्वधीनश्चि रायुरित्यागमः ॥

चिरायुः । पुं । काकादि ( ।ऽ ) चिरजीवे ॥

चिरिः । पुं । तोता इतिप्रसिद्धे शुकपक्षिणि ॥

चिरेण । अ । चिरमित्यर्थे ॥

चिर्भटी । स्त्री । कर्कट्याम् ॥

चिर्भिटः । पुं । न । कर्कटी स्रुभेदे । वेलसेंध इतिसेंधककरी इतिच भाषा प्रसिद्धायां सुचिनायाम् ॥ चिर्भिटं मधुरं रूक्षं गुरुपित्तकफापहम् । अनुष्णं ग्राहि विष्टम्भि पक्वं तूष्णञ्च पित्तलम् ॥

चिर्भिटा । स्त्री । चिभड इति भाषा प्रसिद्धे चिर्भिटे ॥

चिलमिलिका । स्त्री । कण्ठीभेदे ॥ खद्योते ॥ विद्युति ॥

चिलमीलिका । स्त्री । चिलमिलिकायाम् ॥

चिलिचिमः । पुं । बालियागस्तक इति गौडभाषाप्रसिद्धे मत्स्ये । नलमीने ॥ चिल वसने । इगुपधात् किदिति कः । वीप्सायां द्वित्वम् । चिलिचिलिं विलासं मिमीते । माङ् माने । आतइतिकः । पृषोदरादिः ॥ चिलिं विलासं चिनोतीति वा । चिञ्० । बाहुलकात् मक् ॥ चेङ्गो इतिगौडप्रसिद्धे मत्स्ये ॥

चिलिचिलिः । पुं । विलासे ॥

चिलिचीमः । पुं । } बालियागस्तक इतिगौडप्रसिद्धे चिलिचिमे ॥
चिलिचीमिः । पुं । }



चिलिमिलिका । स्त्री । चिलमिलिकार्थे ॥

चिलिमीनकः । पुं । चिलिचिमे मत्स्ये ॥

चिलिमीलिका । स्त्री । चिलमिलिकार्थे ॥

चिल्लीचिमः । पुं । } नलमीने । चिलिचिमे ॥
चिल्लीचिमिः । पुं । }
चिल्लीमः । पुं । }

चिल्लः । पुं । आतायिनि । खभ्रान्तौ । चील इति भाषा ॥ चिल्लति । चिल्ल शैथिल्ये भावकरणेच । अच् ॥ क्लिन्ननेत्रे ॥ मे० । क्लिन्ननेत्रवति ॥ क्लिन्ने चक्षुषी अस्य । क्लिन्नस्य चिल्पिल् लश्चास्य चक्षुषीति चिलादेशो लश्च प्रत्ययः । चक्षुर्गतःक्लेदरोगः चिल्लशब्दवाच्यः । तद्योगाच्चक्षुस्तद्योगात् पुरुषोऽपीतिव्याख्यातारः ॥

चिल्लकः । पुं । लोध्रे ॥

चिल्लभक्ष्या । स्त्री । कुट्टविलासिन्याम् ॥

चिल्लाभः । पुं । प्रसह्यचौरे । गांठकाटा लुटेरा पिंडार जूवाचोर इत्यादि भाषा ॥

चिल्लिः । पुं । भ्रूमध्ये ॥

चिल्ली । स्त्री । क्षुद्रवास्तुकशाके । गौडवास्तुके । बथुआ इति प्रसिद्धे शाके ॥ लोध्रे ॥ झिल्ल्याम् ॥ चिल्लति । चिल्ल शैथिल्ये । अच् । गौ० ङीष् ॥

चिचिल्लिका । स्त्री । क्षुद्रक्षुपविशेषे । रक्तादलायाम् ॥

चिवुः । पुं । चिबुके । ओष्ठाधोभागे । ठोडि इति भाषा ॥ चीवति । चीव्यते वा । चीव आदानसंवरणयोः । मृगय्वादित्वात् कुः ॥ चिनोति शोभां वा । प्राग्वत् ॥

चिवुकम् । न । चिवौ ॥ स्वार्थे कन् ॥ पुं । मुचुकुन्दवृक्षे ॥

चिह्नम् । न । लाञ्छने । लक्षणे ॥ पताकायाम् ॥ चह्यतेऽनेन । चह परिकल्कने । बा० नक् उपधाया इत्वञ्च ॥ लघ्वादि (।ऽ) त्रिकले ॥

चिह्नकारी । त्रि । घोरदर्शने ॥ हिंसाकारिणि ॥

चिह्नधारिणी स्त्री । श्यामालतायाम् ॥

चिह्नितः । त्रि । अङ्किते । चिह्नविशिष्टे ॥

चिल्हः । पुं । } गंधारी इति पर्वतचिल्हकः । पुं । } प्रसिद्धे वृक्षे ॥ चिल्हको वातनिर्हारी श्लेष्मघो धातुपुष्टिकृत् । आग्नेयो विषवद्यस्य फलं मत्स्यनिषूदनम् ॥

चीडा । स्त्री । चीडागन्ध इति गौड प्रसिद्धे गन्धद्रव्ये । दारुगन्धायाम् ॥

चीत्कारः । पुं । भयध्वनौ ॥

चीनः । पुं । देशविशेषे ॥ यथा । कांश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे । भोटान्तदेशो देवेशि मानसेशादक्षिणे ॥ मानसेशाद्दक्षपूर्वे चीनदेशः प्रकीर्त्तित इति तन्त्रशास्त्रम् ॥ तद्देशजे मनुष्ये । चीनदेशोद्भवे पूर्वं क्षत्रिये पश्चाद्विहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये ॥ आगमोक्ते सम्प्रदायविशेषे ॥ अंशुकविशेषे । मखमल इत्याधुनिक भाषाप्रसिद्धे बहुविधाद्भुतवस्त्रे ॥ चीणा इतिप्रसिद्धे व्रीहिविशेषे ॥ चीनकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद्गुणैः ॥ तन्तौ ॥ मृगविशेषे ॥ न । पताकायाम् ॥ सीसके ॥ चिनोति । चिञ् ० । बाहुलकान्नक् दीर्घश्च ॥

चीनकः । पुं । चीणा इति प्रसिद्धधान्ये । काकभङ्गौ ॥ कङ्गुन्याम् ॥ चीनकर्पूरे ॥

चीनकर्पूरः । पुं । चीनाकपूर इति भाषाप्रसिद्धे कर्पूरविशेषे । कृत्रिमे । मेघसारे । धवले ॥

चीनजम् । न । तीक्ष्णलौहे ॥

चीनपिष्टम् । न । सिन्दूरे ॥ चीनस्य पिष्टम् ॥ सीसके ॥

चीनवङ्गम् । न । सीसके ॥

चीनाकः । पुं । चीनियाकपूर इति प्रसिद्धे कर्पूरविशेषे ॥ चीनाकसंज्ञः

कर्पूरः कफचयकरः स्मृतः । कुष्ठक-
ण्डूविषघ्नः समातिक्तरसस्सः ॥
चीनाकर्कटी । स्त्री । चित्रकूटदेशप्र-
सिद्धायां कर्कट्याम् । राजकर्कट्याम् ॥
चीरम् । न । गोस्तने ॥ वस्त्रविशेषे ॥
रेखाभेदे ॥ लेखनभेदे ॥ चूडायाम्
॥ सीसके ॥ जीर्णवस्त्रखण्डे ॥ ची
राणि किं पथि न सन्ति दिशन्ति
भिक्षा मिति भागवतम् ॥ हयच्च
चि ॥ चिनोति । चिञ्० । शुसिचि
मीनां दीर्घश्चेतिक्रन् ॥
चीरकः । पुं । विक्रियालेखे । विकार
लेखने ॥
चीरपत्रिका । स्त्री । चञ्चुशाके ॥
चीरपर्णः । पुं । शालवृक्षे ॥
चीरभृत् । पुं । तापसे ॥
चीरिः । स्त्री । नेत्रांशुके ॥ इतिशब्द
रत्नावली ॥
चीरिका । स्त्री । झिल्ल्याम् । कच्छा
याम् ॥
चीरितच्छदा । स्त्री । पालङ्क्यशाके ॥
चीरी । स्त्री । झिल्ल्याम् ॥ कच्छाटि
कायाम् ॥ नेत्रांशुके ॥ गौ०ङीष् ॥
चीरुकम् । न । चेंजर इति गौड प्र-
सिद्धे फले ॥
चीरुका । स्त्री । झिल्ल्याम् ॥ चीति
रौति । रुशब्दे । बाहुलकात् कक् ॥
चीर्णः । चि । शीलिते ॥ सञ्चिते ॥
चीर्णपर्णः । पुं । निम्बागमे ॥ खर्जूरी
भूरुहे ॥
चीलिका । स्त्री । झिल्ल्याम् । चीर्याम्
। चीलिकायाम् । चील्याम् ॥
चीवरम् । न । भिक्षोर्वस्त्रे ॥ चिनोति
। चिञ् चयने । छित्वरछत्वरधीव
रेत्यादिनाप्वरच् धातोर्दीर्घश्च ॥
चीवरी । पुं । बुद्धभिक्षुके ॥ मस्करी
यतिः ॥
चुक्कारः । पुं । सिंहनादे ॥
चुक्रः । पुं । अम्ले ॥ अम्लवेतसे ॥ न ।
चूकइति प्रसिद्धे अम्लद्रव्यविशेषे ।
तिन्तडीके । वृक्षाम्ले ॥ चूका इति
प्रसिद्धे पत्रशाके । अम्लवास्तुके । इ
क्षाम्ले ॥ चुक्र मत्यम्ल मुष्णञ्च दी
पनंपाचनं परम् । शूलगुल्मविबन्धा
मवातश्लेष्महरम् परम् ॥ वमितृष्णा
स्यवैरस्यहृत् पीडावह्निमान्द्यहृत् ॥
काञ्जिकप्रभेदे । रसाम्ले । सन्धाने
धे ॥ सन्धानविशेषे ॥ यथा । यन्म
स्त्वादिशुचौ भाण्डे सगुडक्षौद्रका
ञ्जिकम् । धान्यराशौ त्रिरात्रस्थंशु
क्तंचुक्रंतदुच्यते ॥ द्विगुणं गुडमध्वा
रनालमस्तुक्रमादिहेति परिभाषा
॥ चकते ऽनेन चक्यतेवा । चक
तृप्तौ प्रतिघातेच । चक्रिरम्योरच्चो

पधाया इतिरक् ॥

चुक्रकम् । न । चूका इतिप्रसिद्धेशाके ॥

चुक्रफलम् । न । वृक्षाम्ले ॥

चुक्रवास्तूकम् । न । चुक्रे । चूका इति भाषा ॥

चुक्रशाकम् । न । शाकविशेषे ॥ चुक्रशाकमतिकोमलंशिलापेषितं कटुकतैलसंयुतम् । सैन्धवैलमरिचान्वितं पुनर्भोक्तुरेव रसनारसंमयेत् ॥ चुक्रंचुक्रतरं स्वादु वातघ्नं पित्तकृत् सरम् । रुच्यं लघुतरं पाकेसदम्लाकं सुरोचकम् ॥

चुक्रा । स्त्री । चाङ्गर्याम् । अम्लोणी इति भाषा ॥

चुक्राम्लम् । न । वृक्षाम्ले ॥

चुक्राम्ला । स्त्री । चाङ्गेर्याम् ॥ चिञ्चायाम् ॥ काञ्जिकप्रभेदे ॥

चुक्रिका । स्त्री । चाङ्गेर्याम् ॥ तिन्तिड्याम् ॥ चकयति । चकव्यथने । चकिरम्योरुच्चोपधाया इति रक् । चुक्रमिव । इवेप्रतिकृता विति कन् ॥ कुचाङ्गेर्याम् ॥

चुक्री । स्त्री । चाङ्गेर्याम् ॥ चुक्रिकायाम् । चूका इति भाषा ॥ चुक्रीत्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् । रुच्या लघुतरापाकेऽम्लाके नातिरोचनी ॥ गौरादित्वान्ङीष् ॥

चुचुकः । पुं । न । चूचुके । कुचानने ॥

चुचूः । पुं । सुनिषण्णकशाके ॥

चुञ्चुः । पुं । ब्राह्मणेन वैदेहयोषायामुत्पादिते सङ्करजातौ ॥ मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥ छुच्छुन्दर्याम् ॥

चुञ्चुरी । स्त्री । तिन्तिडीबीजैर्घूते ॥

चुञ्चुली । स्त्री । चुञ्चुरीक्रीडायाम् । तिन्तिडीकास्थिभिर्द्यूतक्रीडायाम् ॥

चुटा । स्त्री । } कूपे ॥ कूपसमीपाऽ
चुटी । स्त्री । } ल्पजलाशये ॥

चुतः । पुं । } गुदद्वारे ॥
चुतिः । स्त्री । }

चुन्दी । स्त्री । कुट्टन्याम् ॥

चुप्पः । त्रि । मन्दगमनकर्त्तरि ॥ चोपति । चुपमन्दायांगतौ । चुपः किश्चेतिदशपादीस्थपाठात् पः ॥

चुबम् । न । मुखे ॥ चुम्बति । चुबिवक्त्रसंयोगे । ऋजेन्द्रेतिरन् ॥

चुम्बकः । पुं । स्वतः प्रसिद्धे अयस्कान्ते । लोहकर्षके । कान्तपाषाणे ॥ चुम्बको लेखनः शीतो मेदोविषगरापहः ॥ घटस्थोर्द्ध्वविलम्बने ॥ त्रि । बहुग्रन्थैकदेशज्ञे ॥ कामुके । चुम्बनपरे ॥ धूर्त्ते ॥

चुम्बनम् । न । चूंबना इतिप्रसिद्धे मुखसंयोगे ॥ तस्य स्थानानि यथा ।

मुखे स्तने ललाटे च कण्ठे च नेत्रयो रपि । गण्डे च कर्णयोश्चैव कचोः अमभूर्द्ध सु ॥ चुम्बनस्थान मित्युक्तं विशेयं कामुकैरि-हैतिकामशास्त्रम्॥
चुरा। स्त्री। चौर्य्ये॥
चुरी। स्त्री। उपकूपे। कूपसमीपस्था ल्पजलाधारे। खेल इति भाषा॥
चुलिकाला। स्त्री। मात्रावृत्तप्रभेदे॥ दोहादलशेषे यदा पञ्चकलो विमलो हि विराजति। फणिपतिन्नृपतिः किल तदा चुलिकालामिह तामनुगायति॥ यथा। स्मितपटुकपटविलोकितैरपहृतमानसपङ्कजलोचन। दृष्टिपथेभविता सिममगोपवधूजनशोकविमोचनेति॥
चुलुकः। पुं। घनपङ्के॥ प्रसृतौ॥ भाण्डप्रभेदे॥ न। माषमज्जनजले॥
चुलुकी। पुं। शिशुमाराकृतिमत्स्ये॥
चुलुम्पः। पुं। वालखालने॥
चुलुम्पा। स्त्री। छाग्याम्॥
चुलुम्पी। स्त्री। शिशुमाराकृतिमत्स्ये॥
चुल्लः। पुं। क्लिन्ननेत्रे॥ चि। तदुक्तम्॥ क्लिन्ने चक्षुषी अस्य। चुल्चेति क्लिन्नस्य चुलादेशो लञ्च प्रत्ययः। चवर्गतः कोहरोमञ्चुल्लशब्दवाच्यः। तद्योगाच्चक्षु र्लयोगात् पुरुषोपीति आख्यातारः॥
चुल्लकी। स्त्री। शिशुमारे॥ कुण्डीभेदे॥ कुलान्तरे॥
चुल्लिः। स्त्री। चूल्हा इति प्रसिद्ध पाकार्थमग्निस्थाने। अग्नन्ते। उद्धाने॥ चितायाम्॥ चुल्यते ऽत्र। चुल्ल भावकरणे। इन्॥ चुद्यते ऽग्निर्वा। चुद्प्रेरणे। बाहुलकाल् क्लिः॥
चुल्ली। स्त्री। चितायाम्॥ उद्धाने। चूल्हा इति भाषा। कृदिकारादिति ङीष्॥
चुस्तः। पुं। ...। वृक्षे। मांसपिण्डकविशेषे॥ स्वालीभृष्टमांसे॥ पनसादिफलस्यासारभागे॥
चूचुकम्। न। कुचाग्र। कुचानने। स्तनवृन्ते॥ चूष्यते। चूषपाने। बाहुलकादुकः। पृषोदरादित्वात् षस्य चः। चूचुइत्यव्यक्तं कायति पीयमानम्। अन्येभ्योपीतिडः॥
चूडकः। पुं। कूपे॥ इति त्रिकाण्डशेषः॥
चूडा। स्त्री। वलभ्याम्॥ शिखायाम्। जुटिकायाम्॥ बाहुभूषणे॥ अग्रे॥ भूषणमात्रे। शिरःशिखाभूषणेषु-चूडेतियादवः॥ मयूरशिखायाम्॥ कूपे॥ दशसंस्कारान्तर्गतसंस्कारविशेषे॥ सर्वादि (15) षिकाले॥ चू

च्यते । चुडसमुच्छ्राये । भिदादित्वा
दङ्दीर्घश्च ॥ यद्वा । चुद्यते । चुद०
। भिदादित्वादङ् डत्वंदीर्घत्वञ्च
निपातनात् ॥
चूडाकर्म्म । पुं । दशसंस्कारान्तर्गतसं
स्कारविशेषे । चौले । चूडाकरणे ॥
चूडामणिः । पुं । शिरोरत्ने ॥ काकचि
ञ्चाफले ॥ चूडायामणिः ॥ उपरा
गविशेषे ॥ यथा । सूर्य्यवारेरवेर्ग्रासः
सोमवारेविधोर्ग्रहः । चूडामणिरि
तिख्यातस्तत्रानन्तफलंलभेदिति ॥
चूडाम्लम् । न । वृक्षाम्ले ॥
चूडालम् । न । मस्तके ॥ त्रि । चूडा
युक्ते ॥ चूडाऽस्त्यस्य । प्राणिस्थादा
तोलजन्यतरस्याम् ॥
चूडाला । स्त्री । उच्चटायाम् ॥ श्वेतगु
ञ्जायाम् ॥ नागरमुस्तायाम् ॥ लज
न्ताट्टाप् ॥
चूडावान् । त्रि । चूडायुक्ते ॥ पक्षेम
तुप् ॥
चूतः । पुं । आम्रवृक्षे । रसाले ॥ चो
ष्यतेस्म । चूषपाने । क्तः । पृषोद
रादिः ॥ च्योततिरसमितिवा । च्यु
तिर्क्षरणे । अच् ॥ गुदद्वारे ॥
चूतकः । पुं । आम्रे ॥ कूपके ॥
चूर्णः । पुं न । सम्पेषणेनजातेरजसि ।
चूरण·चूर्ण चून चूर इत्यादिभाषा



प्रसिद्धे । क्षोदे ॥ तल्लक्षणादि यथा
। अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्र
गालितम् । ततस्याच्चूर्णं रजः क्षोदस्त
न्मात्राकर्षसम्मिता ॥ चूर्णेगुडःसमो
देयः शर्कराद्विगुणामता । चूर्णेषु
भर्जितं हिङ्गुदेयं नोत्क्लेदकृद्भवेत्
॥ लिहेच्चूर्णंद्रवैःसर्वैर्घृताद्यैर्द्विगुणो
न्मितैः । पिबेच्चतुर्गुणैरेव चूर्णमा
लोडितंद्रवैः ॥ चूर्णावलेहगुटिका
कल्कानामनुपानकम् । पित्तवात
कफातङ्के त्रिद्व्येकपलं माहरेदिति
भावमिश्रः ॥ चूर्णौषधस्यपूर्णवीर्य्यं
पक्षत्रयपर्य्यन्तंतिष्ठति ॥ धूलौ ॥ चूना
इति प्रसिद्धे क्षार विशेषे ॥ चूर्ण्यते
। चूर्णपेषणे । चु० । एरच् ॥
चूर्णकः । पुं । सक्तुषु ॥ स्वार्थेके चूर्ण
शब्दार्थे ॥ न । गद्यप्रभेदे ॥ यथा ।
अपादःपदसन्तानोगद्यं तत्तुत्रिधाम
तम् । चूर्णकोत्कलिकाप्रायवृत्तगन्धि
प्रभेदतः ॥ अकठोराक्षरं स्वल्पसमा
सं चूर्णकं विदुः । तत्तुवैदर्भरीति
स्थं गद्यं हृद्यतरं भवेत् ॥ भवत्युत्क
लिकाप्रायं समासाढ्यं दृढाक्षरम् ।
वृत्तैकदेशसम्बन्धाद्वृत्तगन्धिपुनःस्मृ-
तम् ॥ तत्रचूर्णकं यथा । सहि त्रया
णामेवजगतांगतिः परम पुरुषः पु
रुषोत्तमो दृप्तदानवभरेण भङ्गुरा

र्णी धरणीमवलोक्य करुणार्द्रहृदय स्सन्भारमवतारयितुं रामकृष्ण स्वरूपेणांशतो यदुवंशे अवततारे ति ॥ पुं । आमलकविशेषे ॥

चूर्णकारः । पुं । चूनरी इति गौडभा षाप्रसिद्धे नटकन्यायांपुण्ड्रकाज्जा- ते वर्णसङ्करजातिविशेषे ॥

चूर्णकुन्तलः । पुं । शिरस्थे क्षुद्रकुन्तले । अलके ॥ चूर्णस्यकर्चूरादिक्षोदस्य कुन्तलः ॥

चूर्णखण्डः । पुं । न । कर्करे । कङ्कड़ तिकांकर इतिभाषा ॥

चूर्णदासी । स्त्री । पिष्टकारिण्याम् । पिसनहारी इतिभाषा ॥

चूर्णपारदः । पुं । हिङ्गुले ॥

चूर्णशाकाङ्कः । पुं । गौरसुवर्णशाके ॥

चूर्णा । स्त्री । वासयोगे । पटवासादि क्षोदे । निवासयुक्तिषु । सुगन्धिचू र्णः ॥ चूर्ण्यते । चूर्ण० ॥ घञ् ॥

चूर्णिः । स्त्री । पातञ्जले महाभाष्ये ॥ कपर्दके ॥ शतसङ्ख्यककपर्दकेषु ॥ चूर्णस्यकरणम् । तत्करोतीतिणय न्तादच्घः ॥ यद्वा । चरणंचोरणंवा । घ णिघृश्निपार्ष्णिचूर्णिभूर्णि इतिसाधुः ॥

चूर्णिका । स्त्री । सक्तुषु ॥

चूर्णितः । त्रि । संशलिते ॥ कृत चूर्णं ॥

चूर्णी । स्त्री । महाभाष्ये ॥ कपर्दीक शते ॥ कृदिकारादिति पक्षेङीष् ॥

चूर्णीकृत् । पुं । महाभाष्यकारे । पत ञ्जलौ ॥

चूर्णीकृतः । पुं । गन्धविशेषे ॥ यथा । गन्धचूर्णं गन्धपत्रं चूर्णं सुमनसां त था । प्रशस्तगन्धयुक्तानां पत्रचूर्णा नियानिच ॥ तानि गन्धाह्वयानिस्युः सगन्धः प्रथमःस्मृत इति ॥ त्रि । कृ तचूर्णं ॥

चूलः । पुं । कपाटाधो भागान्तरे ॥

चूलकः । पुं । केशे ॥

चूला । स्त्री । गेहोपरिगृहे । चन्द्रशा लायाम् ॥ चूडायाम् ॥

चूलिकम् । न । घृतभृष्टसमितायाम् ॥

चूलिका । स्त्री । हस्तिकर्णमूले ॥ च- लति ऽनया । चूलसमुच्छ्राये । सं ज्ञायामितिण्वुल् ॥ नाटकाङ्गे ॥

चूषा । स्त्री । कक्ष्यायाम् । गजमध्यब न्धनरज्ज्वाम् ॥ चूष्यते पीयते पृष्ठ मांसेनाहृष्यतां नीयते । चूषपाने । कर्मणिघञर्थे कः ॥

चेकितानः । पुं । नृपविशेषे ॥

चेटः । पुं । दासे ॥ चेटति । चिटपर प्रेष्ये । अच् ॥

चेटकः । पुं । दासे । भृत्ये ॥ चेष्यते । चिट० । कृञादिभ्योवुन् ॥ उपपति नायकविशेषे । सन्धानचतुरे ॥

चेटिः । स्त्री । दास्याम् ॥ चेटति । चि
ट० । इन् ॥
चेटिका । स्त्री । दास्याम् ॥ स्वार्थेकः ॥
करण्याम् ॥
चेटी । स्त्री । दास्याम् ॥ चेटति । चि
ट० । सर्वधातुभ्यइन् । कृदिकारादि
तिपक्षे ङीष् ॥ करण्याम् ॥
चेडिका । स्त्री । } चेटिकायाम् । दा
चेडी । स्त्री । } स्याम् ॥
चेत् । अ । यद्यर्थे । पक्षान्तरे ॥ अस
न्देहे ऽपिसन्देहवचने ॥ यथा । सम्य
ग्घेहुतवाक्यमेव पितरोदेवाश्चचे-
द्योगिनी प्रीताचेत् परदेवताचय-
दिचे वेदाः प्रमाणंद्दिचेत् । शाक्ती
यं यदिदर्शनं भवति चेदाम्राप्यमो
घासिचेत्स्वातन्त्या अपिकौलिका
श्चयदिचेत् स्याम्मेजयः सर्वदेति॥
चेतति । चिती संज्ञाने । विच् ॥
चेतकः । त्रि । चेतनकर्त्तरि ॥ चेतय
ति । चिती० । ण्वुल् ॥
चेतकी । स्त्री । हरीतक्याम् ॥ चिरे
खा चेतकीज्ञेयेतितस्यालक्षणम् ॥
चेतकी द्विविधाप्रोक्ता श्वेता कृष्णा
च वर्णतः । षडङ्गुलायता शुक्ला कृ-
ष्णात्वेकाङ्गुलास्मृता॥ काचिद्दास्वा
दनाचेण काचिद्गन्धेनभेदयेत् । का
चित्स्पर्शेन दृष्ट्या ऽन्या चतुर्द्धाभे
दयेच्छिवा ॥ चेतकीपादपच्छाया
मुपसर्पन्ति ये नराः । भिद्यन्ते तत्
क्षणादेव पशुपक्षिमृगादयः ॥ चेत
कीतु धृता हस्ते यावत्तिष्ठति देहि
नः । तावद्भिद्येतवेगैस्तु प्रभावान्ना
त्रसंशयः ॥ नृपादिसुकुमाराणां कृ
शानां भेषजद्विषाम् । चेतकी पर
मा शस्ता हिता सुखविरेचिनी ॥
गौरादित्वान् ङीष् ॥
चेतनः । त्रि । प्राणिनि ॥ पुं । मनुष्ये
॥ आत्मनि । प्राणादिप्रवर्त्तके ॥ र
थादो नियतचेष्टा चेतनेनाऽनधि
ष्ठिते । नदृष्टा चेतनस्तेन प्राणादी
नांप्रवर्त्तकः ॥ चेतति । चिती० ।
नं० ल्युः ॥
चेतनकी । स्त्री । हरीतक्याम् ॥
चेतना । स्त्री । संविदि । धियि । बु
द्धौ ॥ स्वरूपज्ञानव्यञ्जिकायां प्रमा
णासाधारणकारणिकायां चिच्छ-
क्तौ ज्ञानाख्यायाम् भगवतोविभूतौ
॥ चेतयते ऽनया । चितसञ्चेतने ।
चु० । ण्यासश्रन्थोयुच् । टाप् ॥ जी
वनाख्याम् ॥ चेतनाना मधिष्ठानं म
नोदेहश्चसेन्द्रियः । केशलोमनखा
ग्रान्त मलंद्रवगुणैर्विना ॥
चेतनास्थानम् । न । सर्वशरीरे ॥ हृ
दये ॥

चेतसीया । स्त्री । ऋद्धिनामौषधौ ॥

चेतः । न । चित्ते ॥ चितीं० । असुन् ॥ पुं । चैतन्य ॥ साक्षीचेता इतिश्रुतेः ॥

चेतोंशुः । पुं । जीवे ॥ चेतसश्चैतन्यस्य अंशुरिव ॥

चेतोमुखः । पुं । चैतन्यदीप्ताज्ञानदृप्तिप्रधाने प्राज्ञे ॥ स्वप्नादिप्रतिबोधं चेतः प्रतिद्वारीभूतत्वात् । स्वप्नोजागरितंचेति प्रतिबोधशब्दितं चेतस्तत् प्रतिद्वारभूतत्वं द्वारभावेन स्थितत्वम् नहिस्वप्नस्य जागरितस्य वा सुषुप्तद्वारमन्तरेण सम्भवोस्ति तयोस्तत्कार्यत्वात् अतःसुषुप्ताभिमानी प्राज्ञः स्थानद्वयकारणत्वात् चेतोमुखव्यपदेशभागित्यर्थः ॥

चेदिः । पुं । देशविशेषे । चैपुरे । डाहले ॥ पुंभूम्नि । तद्देशस्थे । चेदयः ॥

चेदिपतिः । पुं । उपरिचरवसौ ॥ चेदिराजे ॥ चेदीनां देशविशेषाणांपतिः ॥

चेदिराट् । पुं । शिशुपाले ॥ चेदिषुराट् यस्य । सं० क्विप् ॥ यद्वा । चेदीनांराट् । अन्ये०क्विप् । इतिकेचित । वस्तुतस्तुसत्सूद्विषेति क्विप् ॥

चेदिराजः । पुं । शिशुपाले ॥ चेदीनां देशविशेषाणांराजा । टच् ॥ उपरिचरवसौ ॥

चेवी । स्त्री । रागिणीविशेषे ॥ इतिहलायुधः ॥

चेयम् । त्रि । चेतव्यमात्रे ॥ चेतुंयोग्यम् । चिञ्० । अर्हकृत्यतृचश्चेति योग्यतायां यत् ॥

चेलम् । न । वस्त्रे ॥ त्रि । अधमे ॥ चिलति चिल्यते वा । चिलवसने । चेलति चेल्यते वा । चेलृगतौ । अच् । घञ्वा ॥

चेलकम् । न । चेलशब्दार्थे ॥ स्वार्थेकः ॥

चेलानः । पुं । चेलना इति गौडप्रसिद्धे फललताविशेषे । अल्पप्रमाणके ॥

चेलालः । पुं । फललताविशेषे । चिचफले । लतापनसे । सुखाशे ॥

चेलिका । स्त्री । चेवली इति प्रसिद्धे पट्टवस्त्रे ॥ यथा । सेयं कृष्णस्य वनिता पीतशाटीपरिच्छदा । रक्तचेलिकयाच्छन्ना शातकुम्भघनस्तनी । इति पाद्मेपातालखण्डम् ॥

चेली । स्त्री । अधमायाम् ॥ गौरादित्वान् ङीष ॥ चेलडितिपचादौटित्वान्ङीपुवा ॥

चेलीमः । पुं । वाशियाख्यमीने ॥

चेलुकः । पुं । बुद्धभिक्षुशिष्ये । श्रमणेरे ॥

चेष्टक: । पुं । रतिबन्धविशेषे ॥ यथा । पादमेकं हृदिन्यस्य इतरेणैवचेष्टयेत् । कान्त: क्रोडे स्थितांनारींबन्धोयंचेष्टकोमत: ॥ त्रि । चेष्टाकर्त्तरि ॥

चेष्टा । स्त्री । कायपरिस्पन्दनादिरूपायां क्रियायाम् । प्राणधर्मे ॥

चेष्टानाश: । पुं । प्रलये ॥

चेष्टितम् । न । गतौ ॥ चेष्टायाम् ॥ चरित्रे ॥ त्रि । चेष्टान्विते ॥

चैकितान: । पुं । चिकितानस्यर्षेरपत्ये ॥

चैकितानेय: । पुं । ब्रह्मदत्ताख्येऋषिविशेषे ॥ चिकितानस्यापत्यं चैकितान: तदपत्यं युवाचैकितानेय: ॥

चैकितायन: । पुं । दल्भ्यगोत्रापत्यत्वात् दाल्भ्ये ऋषिविशेषे ॥ चिकितायनस्यापत्यम् । अण् ॥

चैतन्यम् । न । चेतनायाम् ॥ ब्रह्मणि । सर्वभूतभौतिकप्रपञ्चाधिष्ठानप्रकाशे ॥ चैतन्यं परमाणूनां प्रधानस्यापिनेष्यते । ज्ञानक्रियेजगत्कर्त्र्यौदृष्टेते चेतनाश्रये ॥ नेष्यतेवैशेषिकै:सांख्यैश्चेतिशेष: ॥ प्रकृतौ ॥ भावेस्वार्थेवाष्यञ् ॥

चैत्त: । पुं । विज्ञानस्कन्धातिरिक्तस्कन्धाभावे ॥

चैत्य: । पुं । उद्देश्यपादपे । ग्रामादिप्रसिद्धिहेतौ महावृक्षे । देवतरौ । देवावासे ॥ जिनबिम्बे ॥ जिनसभातरौ ॥ बुद्धे । न । आयतने ॥ चिताचिह्ने ॥ बुद्धवेद्यां ॥ जिनसभायाम् ॥ यज्ञस्थाने ॥ जनानां विश्रामस्थाने ॥ देवस्थाने ॥ चित्यामिचित्यंचेतिसाधु: । चित्यायाइदम् । तस्येदमित्यण् ॥

चैत्यगृहम् । न । चतुष्पथमण्डपे ॥

चैत्यद्रु: । पुं । अश्वत्थाऽगमे ॥ प्रख्यातवृक्षे ॥

चैत्यद्रुम: । पुं । अश्वत्थवृक्षे ॥ प्रसिद्धद्रुमे ॥ ग्रामादिसमीपे ख्यातवृक्षे ॥

चैत्यमुख: । पुं । कमण्डलौ ॥

चैत्यवृक्ष: । पुं । चैत्यद्रुमे ॥

चैत्योपराग: । पुं । कर्त्तृत्वादिसर्वप्रपञ्चसम्बन्धे ॥ चैत्येनउपराग: ॥

चैत्र: । पुं । मासविशेषे । चैत्रिके । मधौ ॥ अत्रजातस्यफलम् । गतकर्मशाली विनयी सुवेशो भोगी सुखी स्यान्मधुरान्नभोजी । सतसङ्गयुक्ता द्विजदेवभक्तो भवेन्मनुष्योमधुमासजन्मा ॥ चैत्रीपौर्णमास्यस्मिन् । विभाषाफाल्गुनीत्यादिनापक्षेऽण् ॥ ऋषिविशेषे ॥ चित्रागर्भजेबुधपुत्रे सप्तद्वीपाधिपतौ सुरथराजस्यपितामहे ॥ बुद्धभिक्षुके ॥ न ।

म्रते ॥ देवकुले । देउल इति गौ डभाषा ॥ मृतकचैत्ये ॥

चैत्रकः । पुं । मधुमासि ॥ न । चित्र कस्यशाकादौ ॥

चैत्ररथम् । न । कुवेरस्योद्याने ॥ मेरोः प्राच्यांयोविष्कम्भशैल स्तस्यमू लोद्याने ॥ चित्ररथेन गन्धर्वेण निर्वृ त्तम् । तेननिर्वृत्तमित्यण् ॥

चैत्रावली । स्त्री । चैत्र्यांपूर्णिमायाम् । मधूत्सवे । सुवसन्ते ॥

चैत्रिकः । पुं । चैत्रे । मधुमासि ॥ चै त्रीपौर्णमास्यस्मिन् । विभाषाफाल्गु नी श्रवणाकार्त्तिकी चैत्रीभ्यइतिप क्षेठक् । ठस्येकः ॥

चैत्री । स्त्री । चैत्रपूर्णिमायाम् ॥ चित्र यायुक्ता पौर्णमासी । नक्षत्रेणयुक्तः कालइत्यण् । ततोङीप् ॥

चैद्यः । पुं । दमघोषात्मजे । शिशुपा ले ॥ चेदीनांजनपदानामयम् । वृ द्धेत्कोशला जादाञ्ञ्यङ् इतिञ्यङ् ॥ पुंभूम्नि । चेदिदेशोद्भवे । चेदिषु ॥

चैलम् । न । मृदुवस्त्रे ॥ चेलति चेल्य तेवा । चेलृगतौ । अच् घञ्वा । ततः प्रज्ञाद्यण् ॥

चोकम् । न । हेमाह्वायामूले ॥

चोचः । पुं । गीते ॥ त्रि । शुचौ ॥ स्व भावशुचा वरणादिदेशे ॥ दक्षे ॥

अभीक्ष्णे ॥ मनोज्ञे । चोखा इति भाषा ॥

चोचम् । न । वल्के ॥ चर्मणि ॥ गुडत्व चि ॥ त्वक्पत्रे । तेजपातइतिभाषा ॥ प्रशस्तंचोचमस्यास्ति । अर्शआद्यच् ॥

चोटी । स्त्री । शाट्याम् ॥ इति हे० ॥

चोडः । पुं । प्रावरण ॥ कञ्चुके ॥ पुंभू म्नि । देशविशेषे । चोडाः ॥

चोदकः । त्रि । प्रेरके ॥ चोदयति । चु दप्रेरणे । हेतुमणिजन्तात् कर्मणि ण्वुल् ॥

चोदनम् । न । प्रेरणे ॥

चोदना । स्त्री । विधौ ॥ चोदनाचोप देशश्च विधिश्चैकार्थवाचिनः इतिभ ट्टोक्तिः ॥ विधिवाक्ये । क्रियायाः- प्रवर्त्तके वचने ॥ चोदना नामलिङ् लोट् तव्यदादिशब्दव्यवस्थापितवि- धिनिषेधरूपयजनादिक्रियाप्रवर्त्तकं वचनमभिधीयते ॥ तर्जनायाम् ॥ प्रवर्त्तनायाम् ॥ प्रेरणायाम् ॥ शब्द भावनायाम् ॥ चोद्यते प्रवर्त्त्यते ऽन येति । युच् ॥

चोदनागुडः । पुं । कन्दुके ॥

चोदितः । त्रि । प्रेरिते ॥

चोद्यम् । न । अद्भुते ॥ प्रश्ने ॥ पूर्वप क्षे ॥ चौर्यंवा परिहारो वा क्रियतां दैत्यभाषया । अद्वैतभाषया चौर्यं

मास्ति नापितदुत्तरम् ॥ त्रि । चोदनार्हे । प्रेर्य्ये । प्रेरणायोग्ये ॥ चोदितुं योग्यः । अर्हेकृत्यतृचश्चेति यत् ॥

चोपनम् । न । शनैर्गमने ॥ मौने ॥ चुपेर्ल्युट् ॥

चोरः । पुं । स्तेयकर्त्तरि । तस्करे । दस्यौ । प्रच्छन्नापहारिणि ॥ गन्धद्रव्यविशेषे ॥ कृष्णशब्धाम् ॥ चोरयति । चुरस्तेये । पचाद्यच् ॥

चोरकः । पुं । पृक्कायाम् । ग्रन्थिपर्णभेदे । भंडिउर इति नैपालभाषा ॥

चोरघातः । पुं । रात्रां हस्तिविशेषे ॥ चोरं हन्ति । हन० । कृत्यल्युटोबहुलमित्यण् ॥

चोरपुष्पिका । स्त्री । शङ्खिन्याम् ॥ चोरपुष्प्येव । स्वार्थेकन् ॥

चोरपुष्पी । स्त्री । शङ्खिन्याम् । केशिन्याम् । सांखाहूली इति भाषा ॥ चोरइवपुष्पमस्याः रात्रिविकाशित्वात् । पाककर्णेति ङीष् ॥

चोरस्नायुः । स्त्री । काकनासालतायाम् ॥

चोरा । स्त्री । चोरपुष्प्याम् ॥

चोरिका । स्त्री । चौर्य्ये ॥

चोरितः । त्रि । मुषिते ॥ चोर्य्यतेस्म । चुर० । क्तः ॥

चोलः । पुं । कूर्पासके । स्त्रीणां कञ्चुलिकाख्ये आमपदीनकञ्चुके ॥ चोल्यते ऽनेनवा । चुलसमुच्छाये । घञ् घोवा ॥ चोला इति प्रसिद्धे पुंसो वस्त्रविशेषे ॥ अधुना ताञ्जोर इति प्रसिद्धे देशे । द्रविडतैलङ्गयोर्मध्ये चोलदेशः प्रकीर्त्तितः । लम्बकर्णाश्चते प्रोक्ता स्तद्देशो ऽवान्तरे भवेत् ॥ चीनदेशस्थेहृदविशेष ॥ शमश्रुधारिणि वेदयागानधिकारिणि म्लेच्छ विशेषे । पूर्वमयं क्षत्रिय आसीत् सगरोराजास्य धर्मनाशं वेशान्यत्वञ्च चकार ॥ न । वसने ॥

चोलकः । पुं । बाणवारके । कवचे ॥ न । वल्कले ॥

चोलकी । पुं । करीरे ॥ नारङ्गे ॥ किष्कुपर्वणि ॥

चोलण्डुकः । पुं । शिरोवेष्टे ॥

चोलनम् । न । नागरङ्गे ॥ किष्कुपर्वणि ॥ करीरे ॥

चोलहृदः । पुं । चीनदेशीयसरोविशेषे ॥

चोली । स्त्री । कूर्पासके । अंगिया इति भाषा ॥ अल्पश्चोलः गौरादित्वात् ङीष् ॥

चोलोण्डुकः । पुं । शिरोवेष्टे । उष्णीषे ॥

चोषः । पुं । दाहविशेषे । पार्श्वस्थिता

भिनेवसन्तापे ॥ चूषणेनेवपीडायाम् ॥

चोष्यः । त्रि । इक्षुदण्डादौ । यद्दन्तैर्निष्पीड्य रसांशं निगीर्य्या ऽवशिष्टं त्यज्यतेत चोष्यमुच्यते ॥

चोस्कः । पुं । सिन्धुवारे । हयोत्तमे ॥

चौडम् । न । चूडाकरणकर्मणि ॥ चूडामयोजनमस्य । चूडादिभ्यउपसङ्ख्यानमित्यण् ॥

चौक्ष्यम् । न । जलाशयविशेषे ॥ तज्जले ॥ शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लतावितानसञ्छन्नं चौक्ष्यमित्यभिधीयते ॥ चौक्ष्यंवह्निकरं नीरं रूक्षं कफहरं लघु । मधुरं पित्तनुद्रुच्यं पाचनं विशदंस्मृतम् ॥

चौपैया । स्त्री । मात्रावृत्तविशेषे ॥ यथा । चौपैयाछन्दं श्रिंशन्मात्रं फणिपतिपिङ्गलभणितम् कुवसतुरङ्गममतिहृदयङ्गममन्तेगुरुमुपनीतम् । यदिदशवसुरविभिश्छन्दोविङ्गिः क्रियतेयतिरभिरामम् सपदिस्तवसमये नृपतिः कवये वितरति संसदि कामम् ॥ यथा । कालियकुलगञ्जन दुरितविभञ्जनसज्जनरञ्जनकारी गोवर्द्धनधारी गोपविहारीवृन्दावनसञ्चारी । हतदुर्ज्जयदानवपालितमानवमुदिताखण्डलपाली सङ्गतगोपालीनिधुवनशाली भवतुमुदे वनमालीति ॥

चौरः । पुं । पाटच्चरे । तस्करे ॥ चोरपुष्पोषधौ ॥ सुगन्धे ॥ चोरणम् । चुरस्तेये । अप्रत्ययात् । संज्ञापूर्वकत्वान्नगुणः । चुराशीलमस्य । छत्रादिभ्योणः ॥ चोरएववा । स्वार्थिकः प्रज्ञादण् ॥

चौरा । स्त्री । चोरपुष्पिकायाम् ॥

चौरिका । स्त्री । चौर्य्ये ॥ चोरस्य भावः कर्मवा । मनोज्ञादित्वाद् वुञ् ॥

चौर्य्यम् । न । चौरिकायाम् । स्तैन्ये ॥ चोरस्य कर्म भावोवा । ब्राह्मणादित्वात् ष्यञ् ॥

चौलम् । न । मुण्डनकर्म्मणि । चूडाकरणे ॥

चौलुक्यः । पुं । राजर्षिविशेषे ॥ चुलुकस्य गोत्रापत्यम् । गर्गादित्वात् यञ् ॥ त्रि । चुलुकेन कृते ॥

च्यवनः । पुं । भार्गवे ऋषिविशेषे ॥ न । पतने ॥

च्युतः । त्रि । चरिते । गलिते ॥ च्यूयतेस्म । च्युङ्गतौ । क्तः ॥ गत्यर्थाकर्मकेतिकर्त्तरिक्तो वा ॥ त्रुटिते ॥

च्युताचारः । त्रि । स्खलितव्रते ॥

च्युतिः । स्त्री । क्षरणे ॥ यथा । धैर्यच्यु

लि: ॥ भगे । योनौ ॥ गुह्यद्वारे ॥

च्युतोपल: । पुं । भ्रष्टरत्ने ॥ भ्रष्टपाषाणे ॥

च्युप: । पुं । वक्त्रे । मुखे ॥ च्यवन्ते भाषन्तेऽनेन । च्युङ्० । अनेकार्थत्वाद्भाषणे । च्युव: किच्चेतिप: ॥

च्योतत् । त्रि । श्च्योतति ॥

च्यौत: । पुं । गन्तरि ॥ अण्डजे ॥ क्षीणपुण्ये । च्यवते । च्युङ्० । जनिदेच्यादिना तण् ॥

---

## छ:

छ: । पुं । छकारे ॥ छेदने ॥ त्रि । निर्मले ॥ तरले ॥ न । गृहे ॥

छग: । पुं । छागे । अजे ॥

छगण: । पुं । न । करीषे । छाणा इति भाषा ॥ इति हेमचन्द्र: ॥

छगल: । पुं । छागे ॥ न । नीलवस्त्रे ॥ छायते । छोछेदने । छोगुगह्रस्वश्चेति कलच् ॥

छगलक: । पुं । छागे ॥ स्वार्थे क: ॥

छगलण्ड: । पुं । दक्षिणदेशे समुद्रसन्निधौ प्रचण्डदेव्या: स्थाने ॥

छगला । स्त्री । वृद्धदारकवृक्षे ॥

छगलाम्त्रिका । स्त्री । वृद्धदारकभेषजे ॥ छगलस्येवान्त्रमस्या: । गौरादित्वान्ङीष् । कन् । ह्रस्व: ॥



छगलान्त्री । स्त्री । वृद्धदारकवृक्षे ॥ वृके ॥ छगलस्येवान्त्रमस्या: । गौरादित्वान्ङीष् ॥

छगली । स्त्री । वृद्धदारकभेषजे ॥ छागमातरि ॥

छच्छिका । स्त्री । छाछ इति प्रसिद्धे तक्रभेदे ॥ छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका ॥ छच्छिका शीतला लघ्वी पित्तश्रमतृषाहरी । वातनुत् कफकृत् सा तु दीपनीलवणान्विता ॥ सरहीनम् दधि इति सम्बन्ध: ॥

छटा । स्त्री । दीप्तौ ॥ परम्परायाम् ॥

छटाफल: । पुं । गुवाकवृक्षे ॥

छटाभा । स्त्री । विद्युति ॥

छत्र: । पुं । अतिच्छत्रे । मलेनपत्रेणच पत्राकारे तृणे । छातारियाविष छातनाविष खरविष इति च गौडभाषा ॥ भूतृणे ॥

छत्रम् । न । आतपत्रे । छाता इति छत्री इति च भाषा ॥ अथ राज्ञ: छत्रलक्षणम् । निचितन्तु हंसपक्षै: कृकवाकुमयूरसारसानां वा । दौकूलेन नवेन तु समन्ततश्छादितं शुक्लम् ॥ मुक्ताफलैरुपचितं प्रलम्बमालाबिलं स्फटिकमूलम् ॥ षड्हस्तमुच्छ्रितं हैमं नवपर्वनगैकदण्डन्तु ॥ दण्डार्द्धविस्तृतं तत्

समाहृतं रत्नभूषितमुद्ग्रम्' नृप ते स्तदातपत्रं कल्याणपरं विजयद ञ्च ॥ युवराजनृपतिपत्न्योः सेनाप तिदण्डनायकानाञ्च । दण्डोर्द्धपञ्च हस्तः समपञ्चकृतोर्द्धं विस्तारः ॥ अन्येषा मप्यग्रं प्रसादपट्टैर्विभूषित शिरस्कम् । व्यालम्बिरत्नमालं छत्रं कार्यन्तु मायूरम् ॥ अन्येषान्तु नरा णां शीतातपवारणान्तु चतुरस्रम् । समहस्तदण्डयुक्तं छत्रं कार्यन्तु विप्रा णाम् ॥ ६ ॥ इति वाराह्यामेक स- प्ततितमोध्यायः ॥ ७१ ॥ विशेषोयु क्तिकल्पतरौद्रष्टव्यः ॥ छादयति छा द्यतेऽनेनवा । छद् अपवारणे । गृय न्तः । ष्ट्रन् । इस्मन्त्रन्क्तिषु चेतिह्रस्वः ॥ पत्रपात्रपवित्रेत्यादिलिङ्गानुशास नात् पुंस्त्वमपिबोध्यम् ॥

छत्रकः । पुं । मत्स्यरङ्गखगे ॥ अतिच्छ त्रे । रांगाकुलियाखडा इति गौड भाषा ॥ ईश्वरगृहविशेषे ॥ न । छ त्रार्थे ॥

छत्रमुच्छः । पुं । गुण्डतृणे ॥

छत्रचक्रम् । न । राज्ञां शुभाशुभ- ज्ञानवोधके समयामृतोक्ते चक्रवि- शेषे ॥

छत्रधरः । पुं । ⎫ छत्रस्यधारके । छा
छत्रधारः । पुं । ⎭ याकरे । छातधा

र इति भाषा ॥

छत्रपत्रम् । न । स्थलपद्मे ॥ पुं । भूर्ज वृक्षे ॥

छत्रपुष्पकः । पुं । तिलकवृक्षे ॥

छत्रभङ्गः । पुं । नृपक्षये । नृपनाशे ॥ स्वातन्त्र्ये ॥ वैधव्ये ॥

छत्रवृक्षः । पुं । मुचुकुन्दे । पुष्पवृक्ष विशेषे ॥

छत्रा । स्त्री । मधुरिकायाम् । मिसौ ॥ अतिच्छत्रे ॥ धान्याके ॥ शिली न्ध्रे ॥ छत्रमस्याः अस्ति । अच् । छ त्राकारस्तवकत्वात् ॥ मञ्जिष्ठायाम् ॥ टाप् ॥

छत्राकः । पुं । जालवर्वुरकेवृक्षे ॥ न । शिलीन्ध्रे ॥

छत्राकी । स्त्री । रास्नायाम् ॥ छत्र मक ति । अककुटिलायांगतौ । कर्म ण्यण् ॥

छत्रातिच्छत्रः । पुं । छत्रातिच्छत्राया म् । छत्रवत्तृणे । छत्राकारे जलोद्भवे सुगन्धाख्यतृणविशेषे ॥

छत्राधान्यम् । न । धन्याके ॥

छत्रिका । स्त्री । दिलीरे । शिलीन्ध्रे ॥

छत्री । त्रि । छत्रवति ॥ मत्त्वर्थेइनिः ॥ पुं । नापिते ॥

छत्वरः । पुं । गृहे ॥ कुञ्जे ॥ छादयति । छद॰ । छित्वरछत्वरेत्यादिना

त्वरच् । इस्वतकारो निपातनात् ॥

छदः । पुं । पत्रे । पत्राये ॥ गरुति । पक्षे ॥ ग्रन्थिपर्णे ॥ तमालवृक्षे ॥ छद्यते ऽनेन । छद०। णिजभावे पुंसि संज्ञायामितिघः । छाद्यते ऽनेन वा । छादेर्घे इति ह्रस्वः ॥

छदनम् । न । पत्रे । पर्णे ॥ पक्षे ॥ पिधाने ॥ तेजपात इति प्रसिद्धे तमालपत्रे ॥ छद्यते ऽनेन । छद०। आधृषाद्वेति णिजभावपक्षे करणेल्युः ॥

छदपत्रः । पुं । भूर्जपत्रवृक्षे ॥

छदिः । पुं । छदिषि । छप्पर इति छान इतिच भाषाप्रसिद्धे ॥

छदिः । स्त्री । पटले । छान इति भाषा ॥ छादयति छाद्यते ऽनेनवा । छद०। चु०। अर्चिशुचीतिइसिः । इस्मन्निति ह्रस्वः ॥ छदिःस्त्रियामेवेतिलिङ्गानुशासनसूत्रम् ॥

छद्मजितः । त्रि । व्याजलब्धे ॥ छद्मना मिषेण जितो लब्धः ॥

छद्मतापसः । पुं । वैडालव्रतिके ॥

छद्म । न । कपटे । व्याजे । शाठ्ये ॥ अपदेशे ॥ स्वरूपाच्छादने ॥ छाद्यतेनेन । छद० चु०। मनिन् । इस्मन्नन्क्विपु चेतिह्रस्वः ॥

छद्मिका । स्त्री । गुडूच्याम् ॥

छद्वरः । पुं । छत्वरे ॥

छन्दः । पुं । वशे ॥ अभिप्राये ॥ विषभेदे ॥ इच्छायाम् ॥ यथा । छन्दः कामः कर्म पापं भयं स्यात् कर्मणः फलम् । अनर्थरूपं वितथ मन्यते वीक्ष्यते नहि ॥ कर्मशब्देन धर्माधर्मौ वुच्येते ॥ छन्द्यते छन्दनं वा । छदि संवरणे इच्छायामपि । घञ् ॥

छन्दःपर्णः । पुं । मायामये संसारवृक्षे ॥ छन्दांसि छादनात् तत्त्ववस्तुप्रावरणात् संसारवृक्षरक्षणाद्वा कर्मकाण्डानि ऋग्यजुः सामलक्षणानि । तानि पर्णानीव पर्णानियस्य । यथा वृक्षस्य परिरक्षणार्थानिपर्णानि भवन्ति तथासंसारवृक्षस्य परिरक्षणार्थानि कर्मकाण्डानि । धर्माधर्मतद्धेतुफलार्थत्वात् छन्दसाम् ॥

छन्दःस्तुत् । पुं । गरुडे । वैनतेये ॥ छन्दोभिःस्वावयवैःस्तौति । ष्टुञ्०क्विप्तुक् ॥

छन्दः । न । वेदे ॥ स्वैराचारे ॥ अभिलाषे ॥ नियताक्षरपादरूपेणायत्र्यनुष्टुबादौ । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्ति त्रिष्टुब्जगतीषु सप्तसु ॥ पद्ये ॥ पद्यस्यलक्षणं यथा । पद्यंचतुष्पदी तच्च वृत्तंजातिरितिद्विधा । वृत्त मक्षरसङ्ख्यातं जातिर्मात्राकृताभवेत् ॥ सममर्द्धसमंवृत्तं विषम

चेतितत्त्रिधा। समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥ आदिस्तृतीयवद्यस्य पादस्तुर्यो द्वितीयवत् । भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥ एषामर्थः। अक्षरसङ्ख्यातमक्षरगणनया परिप्राप्तं वृत्तमुच्यते । मात्राकृता मात्रागणनयानियमिता जातिः जातिसंज्ञका भवति ॥ समं समचतुष्पादम् । अर्द्धसमं यस्य प्रथमः पादः तृतीयेन पादेन तुल्यः । चतुर्थः पादो द्वितीयेन पादेन तुल्यः । विषमं पृथक्लक्षणचतुष्पादम् । इति ॥ तत्तु नानाविधम् । तस्य पिङ्गलादयो बहवो ग्रन्थाः सन्ति ॥ छन्दसां लक्षणोदाहरणानि तत्तत् स्थाने द्रष्टव्यानि ॥ चन्दनम् चन्द्यते ऽनेनवा । चदि आह्लादने दीप्तौ च । चन्देरादेश्च छः इत्यसुन् ॥

छन्दस्यः । त्रि । इच्छयाकृते ॥ छन्दसा निर्मितः। छन्दसो निर्मित इति यत् ॥

छन्दोगः । पुं । सामगे । सामवेदज्ञे ब्राह्मणे ॥ छन्दो गायति । गै शब्दे । गापोष्टगिति टक् ॥

छन्दोगपरिशिष्टम् । न । कात्यायनमुनिकृते सामवेदिनां कर्मबोधके गोभिलसूत्राणां परिशेषग्रन्थे ॥

छन्दोभङ्गः । पुं । छन्दसः पतने ॥ अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद्गिराम् ॥

छन्दोविचितिः । स्त्री । श्रुतच्छन्दसां प्रत्यायके शास्त्रे ॥

छन्नम् । न । निर्जनस्थाने । रहसि ॥

छम्पतेरम । छद० । क्तः । आगमशास्त्रस्यानित्यत्वादिट् ॥ त्रि । छादिते । ढका इतिभाषा ॥ छादयतेरम । छद० । णिजन्तः । वादान्तेत्यादिना साधुः ॥

छमण्डः । त्रि । मृतपितृके । छोरा छोरी इति छोकरा छोकरी इतिचभाषा इत्युणादिकोषः ॥

छर्द्दम् । न । वमने ॥

छर्द्दनः । पुं । अलम्बुषराक्षसे ॥ निम्बवृक्षे ॥ मदनद्रुमे ॥ न । वमने ॥

छर्द्दापनिका । स्त्री । कर्कट्याम् ॥

छर्द्दिः । स्त्री । वमनरोगे । वमथौ ॥ छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः । निरुच्यते छर्द्दिरिति दोषोवक्त्रं प्रधावितः ॥ छर्दयति । छृदी सन्दीपने । णिजन्तादचरः ॥ कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेवच । हृद्रोगस्तमकश्चेति ज्ञेयाश्छर्देरुपद्रवाः ॥

छर्द्दिका । स्त्री । उत्कासिकायाम् । छर्दिषि ॥ विष्णुक्रान्तायाम् ॥

छर्द्दिकारिपुः । पुं । चुद्रैलायाम् ॥ त्रि

। छर्दिघ्ने ॥

छर्दिघ्नः । पुं । अरिष्टे । निम्बे । मालके ॥

छर्दि० । स्त्री । वमौ । वमने ॥ छर्दति । छृदीसन्दीपने । अर्चिशुचीत्यादिना इसिः ॥

छर्दी । स्त्री । वमने ॥ आमाशयोत्क्लेशभवाहि सर्वा श्छर्द्योमता लङ्घनमेवतस्मात् । विधीयते मारुतजां विनात् संशोधनं वा कफपित्तहारी तिवैद्यकम् ॥ कृदिकारादक्तिन इति ङीष् ॥

छलम् । न । स्खलिते । कूटयुद्धादिना युद्धमर्यादायाश्चलने ॥ छद्मनि । शाठ्ये । व्याजे । स्वरूपाच्छादने ॥ तात्पर्यान्तरेण प्रयुक्तस्य शब्दस्याऽर्थान्तरेणकथने ॥ तथाचाचपाद प्रणीतं सूत्रम् । वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । ५० ॥ अर्थस्यवा अभिमतस्य योविकल्पोविरुद्धः कल्पोऽर्थान्तरकल्पनेतियावत् तदुपपत्त्या युक्तिविशेषेण योवचनस्य वा यक्तस्य विघातो दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्याऽविषयार्थकल्पनेन दूषणाभिधानमितिफलितम् । तात्पर्याविषयत्वम् विशेष्ये विशेषणे संसर्गेवा ॥ यथा । नेपालादागतोयं नवकम्बलवत्त्वादित्यत्र नव संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । प्रमेयं धर्मत्वादित्यत्र पुरुषत्वार्थकल्पनया भागासिद्ध्यभिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् ॥ तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्च ॥ ५१ ॥ छानम् । छोछेदने । वृषादित्वात्कलः ॥

छलना । स्त्री । परप्रतारणायाम् ॥

छलितः । पुं । स्खलिते । छले ॥

छल्ली । स्त्री । विरुधि ॥ सन्ताने ॥ वल्कले । छाल इति भाषा ॥ कुसुमविशेषे ॥

छविः । स्त्री । शोभायाम् ॥ रुचि ॥ छ्यति असारम् । छो० । कृविघृष्विच्छवी त्यादिनाक्विन्नन्तोनिपातितः ॥ छिनत्ति तमो वा । छिदिरद्वैधीकरणे ॥

छाः । पुं । शावके ॥ इत्येकाक्षरः ॥

छा । स्त्री । छादने ॥

छागः । पुं । वस्ते । छागलके । अजे । बर्करे । बकरा इतिभाषा ॥ ततपरीचोक्तायुक्तिकल्पतरौ भोजराजेन । नचचागां विभेदेन नराणां तु गणत्रयम् । तेषांशुभाय निर्दिष्टं पशुवस्तुत्रयंबली॥ येकृष्णाः शुचयश्छागाः पशवोन्ये तथैवच । देवजातिभिरुत्

छागः

सृज्यास्ते सर्वार्थोपसिद्धये ॥ ये पीता हरिताश्चापि न रजाते रुदीरिताः । ये शुक्लाश्च महान्तो वा रत्नोजाते: शुभप्रदाः ॥ यो मोहादथवा मानादू-विप्रमन्यं प्रयच्छति । वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेदिति ॥ अस्य मांसगुणाः । छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् । नातिशीतमदाहिस्यात् स्वादु पीनसनाशनम् ॥ परं बलकरं रुच्यं बृंहणं वीर्यवर्द्धनम् ॥ अजाया अप्रसूताया मांसं पीनसनाशनम् । शुष्ककासे ऽरुचैा शोषे हितमग्नेश्च दीपनम् ॥ अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् । हृद्यं ज्वरहरं श्रेष्ठं सुस्वादु बलदं भृशम् ॥ मांसं निष्कासिताण्डस्य छागस्य कफकृत्तथा । स्त्रोतः शुद्धिकरं वल्यं मांसदं वातपित्तनुत् ॥ वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च । ऊर्द्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदमिति॥ *॥ अथ छागलक्षणम् । छागशुभाशुभलक्षण मभिधास्ये नवदशाष्टदन्तास्ते । धन्याः स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्तास्ते ॥ दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भवति । ऋष्यनिभः कृष्णलोहितवर्णा नाश्वे तमतिशुभदम् ॥ स्तनवदवलम्बते य

छागः

कण्ठेऽजानां मणिः स विज्ञेयः । एकमणिः शुभफलकृद् धन्यतमा द्वित्रिमणयो ये ॥ मुण्डाः सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च । अर्द्धासिताः सितार्द्धा धन्याः कपिलार्द्धकृष्णाश्च ॥*॥ अथ चतुर्णां कुट्टककुट्टिकजटिलवामनानां क्रमेण लक्षणं करोति। विचरति यूथस्याग्रे प्रथमं वाम्भोवगाहते योऽजः । स शुभः सितमूर्द्धा वा मूर्द्धनि वा कृत्तिकायस्य ॥ स पृषतकण्ठशिरा वा तिलपृष्ठनिभश्च ताम्रदृक् शस्तः । कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः ॥ यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन । यो वा चरति सशब्दं मन्दञ्च स शोभनश्छागः ॥ ऋष्यशिरोरुहपादो यो वा प्राक्पाण्डुरोऽपरे नीलः । स भवति शुभकृच्छागः श्लोकश्चाप्यत्र गर्गोक्तः ॥ तमाह । कुट्टकः कुट्टिकश्चैव जटिलो वामनस्तथा । ते चत्वारः श्रियः पुत्रा नालक्ष्मीके वसन्ति वै ॥*॥ अथाऽप्रशस्तानां लक्षणम् ॥ अथाऽप्रशस्ताः खरतुल्यनादाः प्रदीप्तपुच्छाः कुनखा विवर्णाः । निकृत्तकर्णा द्विपमस्तकाश्च भवन्ति ते चासिततालुजिह्वाः ॥*॥ अथ शुभलक्षणानि । वर्णैः प्रशस्तैर्मणिभिः प्रयुक्ता

मण्डाश्च ये तान्विलोचनाश्च । ते पूजिता वेश्मनि मानवानां सौख्या नि कुर्वन्ति यशःश्रियश्चेति ॥ पुरो डाशे ॥ न । छागीदुग्धे ॥ छ्यति । छो०। छायते छिद्यते वा । छापूछ शिभ्यः किदिति गन् ॥ त्रि । छाग च्छा ग्योःसम्बन्धिनि ॥ मत्स्यविशेषे ॥ यथा । श्वेतं सुपाकं समदीर्घवृत्तं भिः प्र- लम्बकं छागलकं वदन्ति । गले त्विक गटःकिलतस्यपृष्ठे कगटःसुपथ्यो रुचि दोषनाशप्रद इति ॥

छागणः । पुं । करीषाग्नौ । गोठेकी आग इतिभाषा ॥

छागभोजी । पुं । वृके ॥ त्रि । छागभ क्षके ॥

छागरथः । पुं । अग्नौ ॥ छागोरथेऽस्य ॥

छागलः । पुं । छागे ॥ छागलएव । प्रज्ञा चण् ॥ आत्रेये ऋषिविशेषे ॥ छग लस्या पत्यम् । विकर्णशुङ्गच्छगला द्वित्यण् ॥

छागलकः । पुं । अजे । स्तुभे । वर्करे । छा गे ॥ स्वार्थेकः ॥

छागलाद्यम् । न । भैषज्यरत्नावल्युक्ते भिषजांघृतविशेषे ॥

छागलान्त्रिका । स्त्री । वृद्धदारकवृक्षे ॥

छागलान्त्री । स्त्री । वृके ॥

छागवाहनः । पुं । अग्नौ ॥

छागिका । स्त्री । छाग्याम् ॥ स्वार्थेकः । केश इति ह्रस्वः ॥

छागी । स्त्री । अजायाम् । छागमात रि ॥ छागात् जातेरितिङीष् ॥

छागीदुग्धम् । न । अजाक्षीरे । छागं क षायं मधुरं शीतं ग्राहि पयो लघु । रक्तपित्तातिसारघ्नं क्षयकासज्वरा पहम् ॥ अजानांलघुकायत्वान्नाना द्रव्यनिषेवणात् । नात्यम्बुपानाद् व्यायामात् सर्वव्याधिहरंपयः ॥

छातः । त्रि । छिन्ने ॥ दुर्बले ॥ छायते स्म । छो० क्तः । द्यतिस्यवा । गप्य र्थेतिक्तः । शाछोरन्यतरस्यामितीत्वा भावः ॥

छात्रः । पुं । अन्तेवासिनि । शिष्ये ॥ गुरुदोषाच्छादनं छत्रम् । तच्छील मस्य । छत्रादिभ्योणः ॥ न । मधुप्र भेदे ॥ वरटाःकपिलाःपीताः प्रा योहिमवतोवने । कुर्वन्ति छत्रकाका रंतज्जंछात्रमधुस्मृतम् ॥ छात्रंकपि- लपीतंस्यात् पिच्छिलंशीतलंगुरु । स्वादुपाकं कृमिश्वित्ररक्तपित्तप्रमेह जित् ॥ भ्रमतृण्मोहविषहृत्तर्पणा द्यगुणाधिकम् ॥

छात्रकम् । न । छात्रेमधुनि ॥ यथा । छत्राकारन्तुपटलं सरघाः पीतपिङ्ग लाः । याः कुर्वन्तितदुत्पन्नंमधुच्छा

चकमीरितम् ॥ श्रियमेवमूभिमन्यविद्याच्छाचं गुणोत्तरम् ॥

छात्रगण्डः । पुं । पदार्थविदि । श्लोकार्थपदवेत्तरि ॥

छात्रदर्शनम् । न । हैयङ्गवीने ॥ इति शब्दचन्द्रिका ॥ मिथ्यावलोकने ॥

छात्रादिनिलयः । पुं । मठे ॥ छात्रोऽन्तेवासी आदिर्येषां परिव्राजकक्षपणकादीनाम् तेषांनिलयः ॥

छादनम् । न । दले । पत्रे ॥ आच्छादने ॥ अन्तर्हाने ॥ पुं । नीलाम्लानवृक्षे ॥

छादितः । त्रि । संवृते । आच्छादिते ॥ यथा । घनतरघनवृन्दैश्छादितोपुष्पवन्तौ विश्वयुद्धः ॥ छाद्यतेस्म । छद्‌°णिचाद्यन्तोतपक्षेसाधुः ॥

छादिषेयम् । न । तृणे ॥ छदिषे इदम् । छदिरुपधिवलेर्ढञ् ॥

छाद्मिकः । त्रि । कापटिके । व्याजेन चरति ॥ छद्मना चरति । ठक् ॥

छान्दसः । पुं । श्रोत्रिये । वेदाध्ययनकर्त्तरि । वेदवेत्तरि ॥ छन्दोधीते वेत्तिवा । पक्षे तदधीतेतद्वेदेत्यण् ॥ छन्दसो व्याख्यानस्तत्र भवोवा । छन्दसोयदणौ वित्यण् । यतित् छन्दस्यः ॥ त्रि । छन्दसम्बन्धिनि ॥

छान्दोग्यम् । न । छन्दोगानां धर्मे आम्नाये समूहेच ॥ चरणेभ्योधर्मवदिति छन्दोगौक्थिकेतिञ्यः ॥ सामवेदोपनिषदि ॥

छाया । स्त्री । आतपाभावे । भावानुगायाम् । श्यामायाम् ॥ प्रतिबिम्बे ॥ अर्कयोषिति । संज्ञाप्रतिकृतौ ॥ पालने ॥ उत्कोचे ॥ कान्तौ ॥ सच्छोभायाम् ॥ पङ्क्तौ ॥ तमसि ॥ अतिधृतिसंज्ञकोनविंशाक्षरा वृत्तिविशेषे ॥ यथा । भवेत् सैवच्छाया तयुगगयुतास्याद्‌द्वादशान्ते यदा ॥ सैव मेघविस्फूर्जितैवेत्यर्थः । यथा । अभीष्टंजुष्टोयो वितरति सदाशाखाशाखोज्ज्वलःस्फुरन्नानारत्नप्रकिततनुश्चिरांशुकालम्बितः । नयस्याङ्घ्रिच्छाया मपगतवतांसंसारतीव्रातप स्तनोतिप्रोत्तापं स जगद्वतात्कंसारिकल्पद्रुमः ॥ इति । छो° । श्यादयधोतिणः । आतोयुक् ॥ यद्वा । माच्छासस्भ्यो यः ॥ सादृश्ये ॥

छायाकरः । त्रि । छत्रधारे । छाताधार इतिभाषा ॥

छायातनयः । पुं । शनैश्चरे ॥ छायायास्तनयः ॥

छायातरुः । पुं । स्थिरच्छायवृक्षे ॥

छायात्मजः । पुं । शनिग्रहे ॥

छायापथः । पुं । आकाशे ॥ देवपथे ।

नभः सरिति ॥ स्वातीपथे ॥ छाया पथोनाम ज्योतिश्चक्रमध्यवर्त्तीकश्चि त्तिरश्चीनोऽवकाशइतिमल्लिनाथः॥

छायापुत्रः । पुं । मन्दे । शनौ ॥

छायापुरुषः । पुं । आकाशेद्रष्टव्ये निजच्छायारूपे पुरुषे ॥ तदवलोकन विधिर्योगप्रदीपिकायां द्रष्टव्यः ॥

छायाभृत् । पुं । चन्द्रे ॥

छायामित्रम् । न । आतपत्रे । छत्रे ॥

छायामृगधरः । पुं । विधौ । चन्द्रे ॥

छायावृत्तः । पुं । छायाप्रधाने वृक्षे ॥ शाकपार्थिवादिः ॥

छायासुतः । पुं । शनौ ॥

छिः । पुं । गर्हायाम् ॥ इत्येकाक्षर-कोषः ॥

छिक्कनी । स्त्री । चवकृति । नक्वछिकनीतिख्यातौषधौ ॥ छिक्कनी कटुका रुच्यातीक्ष्णोष्णा वह्निपित्तकृत् । वातरक्तहरीकुष्ठकृमिवातकफापहा ॥

छिक्करः । पुं । मृगविशेषे ॥ मांसं छिक्करजं कृत्तमाज्ये तप्ते सुभृष्टकम् । दधिसैन्धवहिङ्ग्वाढ्यं सुधूत्तेनातिधूपितम् ॥ कषायं मधुरं स्वादु कफपित्तानिलापहम् । त्रिपाकेकटुकं प्रोक्तं विशेषेणाग्निवर्द्धनम् ॥

छिक्का । स्त्री क्षुते ॥ छींकइतिभाषा॥

छिक्किका । स्त्री । छिक्कन्याम् ॥

छितः । त्रि । लूने ॥ छायतेस्म । छो० । क्तः । शाछारन्यतरस्यामितीत्त्वंवा॥

छित्तिः । स्त्री । छेदे ॥ छिदे ॥ छिद्यते छेदनं वा । छिदिर्० । स्त्रियांक्तिन् ॥ पुं । करज वृक्षे ॥

छित्वरः । त्रि । धूर्त्ते ॥ वैरिणि ॥ न । छेदनद्रव्ये ॥ छिनत्ति । छिदिर्० । छित्वरछत्वरेत्यादिना ष्वरच् निपातनाद्दकारस्यतकारोगुणाभावश्च॥

छिद् । त्रि । छेदनकर्त्तरि ॥ छिनत्ति । छिदिर्० । क्विप् ॥

छिदकम् । न । वज्रे ॥

छिदा । स्त्री । छेदने । द्वैधीकरणे ॥ छिदिर्० । षिद्भिदादिभ्योङ् । टाप् ॥

छिदिः । स्त्री । कुठारे ॥ शस्त्रे ॥ छिनत्ति । छिदिर्० । इन् ॥ क्षगृधृपुकुटीत्यादिनाइः किद्वा ॥

छिदिरः । पुं । पावके ॥ रज्जौ ॥ करवाले ॥ परश्वधे ॥ छिनत्ति । छिदिर्० । इषिमदिमुदिखिदिच्छिदी-त्यादिनाकिरच् ॥

छिदुरः । त्रि । वैरिणि ॥ धूर्त्ते ॥ न । छेदनद्रव्ये ॥ छेदके ॥ छिनत्ति तच्छीलः । छिदिर्० । विदिभिदिच्छिदेः कुरच् ॥

छिद्रम् । न । दूषणे ॥ रन्ध्रे ॥ मिनत्ति

छिद्रानुसार्य्येरेः ॥ अवकाशे ॥ गर्त्ते ॥ अधमभवने ॥ छिद्र्यते । छिद्रभेदने । घञ् । यद्वा । छिद्यते । छिद्रि° । स्फायितञ्चीतिरक् ॥
छिद्रवैदेही । स्त्री । गजपिप्पल्याम् ॥
छिद्रान्तः । पुं । नले । पोटगले ॥
छिद्राफलम् । न । मायाफले ॥
छिद्रितः । त्रि । विद्धे । कृतच्छिद्रे । वेधिते । वींधा इति भाषा ॥ छिद्र्यते स्म । छिद्र° अदन्तः । क्तः ॥
छिन्नः । त्रि । कृत्ते । छाते । लूने । कृतच्छेदने । काटा चीरा फाड़ा इति भाषा ॥ छिद्यते स्म । छिदिर्° । क्तः ॥
छिन्नग्रन्थिनिका । स्त्री । त्रिपर्णिकायाम् ॥
छिन्नद्वैधः । त्रि । अवधादिवरिपाकेस्य निवृत्तसर्वसंशये ॥
छिन्नपत्री । स्त्री । अम्बष्ठायाम् ॥
छिन्नमस्ता । स्त्री । महाविद्याप्रभेदे । प्रचण्डचण्डिकायाम् ॥ छिन्नं मस्तं यस्याः ॥ त्रि । छिन्नमस्तके ॥
छिन्नरुहः । पुं । तिलकवृक्षे ॥
छिन्नरुहा । स्त्री । अमृतायाम् । गुडूच्याम् ॥ छिन्नारोहति । रुह° । इगुपधेतिकः । ड्यापोरितिह्रस्वः ॥ ग्रन्थिपर्ण्याम् ॥ स्वर्णकेतक्याम् ॥
छिन्नवेशिका । स्त्री । पाठायाम् ॥
छिन्ना । स्त्री । छिन्नमस्तायां देव्याम् ॥ गुडूच्याम् ॥ दूर्व्वायाम् । पुंश्चल्याम् ॥ कान्ताच्छेदेष्टाप् ॥
छिन्नोद्भवा । स्त्री । गुडूच्याम् । गिलोय इतिविख्यातायाम् ॥
छिलिहिण्टः । पुं । पातालगरुड्याख्यौषधौ ॥ छिलिहिण्टः परंवृष्यः कफघ्नः पवनापहः ॥ छिलिहिण्डोपि ॥
छुच्छुका । स्त्री । छुच्छुन्दर्याम् ॥
छुच्छुन्दरी । स्त्री । गन्धमुख्याम् । छुछूंदर इतिभाषा ॥
छुद्मम् । न । प्रतीकारके ॥ रश्मौ ॥
छुपः । पुं । क्षुपे ॥ स्पर्शने ॥
छुरणम् । न । विलेपने ॥
छुरा । स्त्री । सुधायाम् । चूर्णे । लेपनद्रव्ये । चूना इतिभाषा ॥
छुरिका । स्त्री । शस्त्रविशेषे । असिपुत्र्याम् ॥ छुरति । छुरच्छेदने । क्वुन् ॥ इगुपधेतिके कन् वा । ह्रस्वम् ॥
छुरितः । त्रि । खचिते ॥ रञ्जिते ॥ रूषिते ॥
छुरी । स्त्री । छुरिकायाम् ॥
छूरिकापत्री । स्त्री । श्वेतायाम् ॥
छूरी । स्त्री । छुरिकायाम् ॥ इति- भरतः ॥
छेकः । त्रि । गृह्यके । गृहाश्रिते मृगे पक्षिणि च ॥ नागरे । विदग्धे ॥ छ

तिच्छायते वा । छो० । वा० छेकम् ॥

छेका । स्त्री । गृहपालितपशुपक्षिजातौ । मत्तायाम् ॥

छेकानुप्रासः । पुं । अलङ्कारविशेषे ॥ सोनेकस्य सकृत् पूर्वः । अनेकस्य अर्थाद्व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः । उदाहरणं यथा । ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी । दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

छेकोक्तिः । स्त्री । वक्रोक्तौ ॥ छेकाया उक्तिः ॥

छेत्ता । त्रि । छेदनकर्त्तरि ॥ छिनत्ति । छिदिर्० । तृच् ॥

छेदः । पुं । खण्डे ॥ छेदने ॥ छेदनम् छिद्यते वा । छिदिर्० । घञ् ॥

छेदनम् । न । भिदि ॥ कल्पने । वर्द्धने । कर्त्तने । अस्त्रेण द्विधाकरणे । काटना इति भाषा ॥ छिदिर्० । ल्युट् ॥

छेदनीयः । पुं । कतकवृक्षे ॥ त्रि । छेद्ये ॥ छेदितुं योग्यः । अर्हे कृत्यतृचश्चेति अनीयर् ॥

छेदवत् । त्रि । विच्छेदयुक्ते ॥

छेदिः । त्रि । छेत्तरि ॥ छिनत्ति । छिदिर्० । कृपिभिदिच्छिदिविदिच्छिदिकीर्त्तिभ्यश्चेति इन् ॥

छेदितः । त्रि । छिन्ने ॥



छेद्यः । त्रि । छेदनीये ॥ परिच्छेद्ये ॥ ॥ छेत्तुं शक्यः । शकि लिङ् चेति शक्यार्थे कृत्यः ॥

छेमण्डः । पुं । पितृहीने । छोंडा छोरा इत्यादिभाषा ॥ इत्युणादिकोषः ॥

छेलकः । पुं । छागे ॥

छेलिका । स्त्री । आजायाम् । छाग्याम् ॥

छलुः । पुं । सोमराज्याम् ॥

छैदिकः । पुं । वेतसे ॥ छिन्नप्ररूढत्वात् छेदं नित्यमर्हति छेदादिभ्यो नित्यमिति ठञ् ॥

छोटिका । स्त्री । सर्व्वाङ्गुष्ठशब्दध्वनौ । अङ्गुलिध्वनौ ॥

छोटी । पुं । कैवर्त्ते । जालिके ॥

छोरणम् । न । परित्यागे । छोडना इति भाषा ॥ इति त्रिकाण्डशेषः ॥

छोलङ्गः । पुं । मातुलुङ्गे । टावानेबु इति गौड भाषा ॥

छोहारा । स्त्री । द्वीपान्तरखर्जूरिकायाम् ॥ खर्जूरी गोस्तनाकारा परद्वीपादिहागता । जायते पश्चिमे देशे सा छोहारेति कीर्त्यते ॥

---

जः

जः । पुं । जकारे ॥ मृत्युञ्जये ॥ जन्मा

म् ॥ तातमाचे ॥ अनाद्दने ॥ वेगे ॥ भुक्तौ ॥ विषे ॥ गुरुमध्यगे(।ऽ।) ॥ चि। वेगिते ॥ जेतरि॥ जायते। जनी॰। अन्येष्वपि दृश्यत इति डः ॥

जकुटः । पुं । मलयाचले ॥ शुनि ॥ ॥ न । वार्त्ताकुपुष्पे ॥

जक्षणम् । न । भक्षणे ॥

जक्षिः । स्त्री । भोजने ॥

जगच्चक्षुः । पुं । सूर्ये ॥

जगत् । पुं । वायौ ॥ चि । जङ्गमे ॥ न । विश्वस्मिन् । लोके । सचराचरे प्रपञ्चभूते भोगोपयोगिपरिकरखचिते मायामये जन्तुचक्रे ॥ यथा । न निरूपयितुं शक्या विस्पष्टं भासते यथा । सा मायेतीन्द्रजालादौ लोकाः सम्प्रतिपेदिरे ॥ स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् । मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ यथा । यदुपतेः क्वगता मथुरापुरी रघुपतेः क्वगतोत्तरकोशला । इति विचिन्त्य कुरुष्व मनः स्थिरं न सदिदं जगदित्यवधारयेति रूपसनातन गोस्वामिनौ ॥ गच्छति । गम्लृ-गतौ । द्युतिगमिजुहोतीनां द्वे चेति क्विपि द्वित्वे गमः क्वावितिमलोपे तुकि जगत् जगतौ । यद्वा तु वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति ब्युत्पा-यते तद्वा उभिद्वचामिति नुमि अगन् जगन्ता विस्थादि वोध्यम् ॥ साम विशेषे ॥

जगती । स्त्री । भुवने । लोके । अगति ॥ च्छायाम् ॥ जने ॥ जम्बूवप्रे ॥ वास्तुविशेषे ॥ छन्दोविशेषे । द्वादशाक्षरपादवृत्ते ॥ गच्छति । गम्लृ॰ । वर्त्तमाने पृषदिति साधुः । उगृवत्त्वाद्गतिश्चेति ङीप् ॥ यद्वा । द्युति गमिजुहोतीनां द्वे चेति क्विप् । गमः क्वावितिमलोपे तुक् ॥

जगतीधरः । पुं । भूधरे ॥ जगत्याः धरः ॥

जगत्कर्त्ता । पुं । ब्रह्मणि ॥ जगतः कर्त्ता ॥

जगत्पतिः । पुं । परमेश्वरे । स्थितास्थितोपदेशकवेदप्रणेतृत्वेन सर्वस्य जगतः पालयितरि ॥ जगतां पतिः ॥

जगत्प्रभुः । पुं । नारायणे ॥ जगत् जङ्गमाजङ्गमम् तस्यप्रभुः स्वामी ॥ वुद्धे ॥

जगत्प्राणः । पुं । समीरणे । वायौ ॥ जगतां प्राणः ॥

जगत्साक्षी । पुं । सूर्ये ॥ जगतां साक्षी॥

जगदम्बा । स्त्री । जगज्जनन्याम् । गौर्याम् । पार्वत्याम् ॥ जगतामम्बा॥

जगदम्बिका । स्त्री । दुर्गायाम् ॥

जगद्धात्री । स्त्री । दुर्गाप्रभेदे ॥

जगदाधारः । पुं । वायौ ॥ काले ॥ त्रि । जगतामाश्रये ॥ जगताम् आधारः॥

जगदीशः । पुं । विष्णौ ॥ जगतामीशः॥

जगद्गौरी । स्त्री । मनसादेव्याम् ॥

जगद्बलः । पुं । वायौ ॥ जगतो बलं येन॥

जगद्योनिः । पुं । सदाशिवे ॥ विधातरि ॥ विष्णौ ॥ स्त्री । प्रकृतौ ॥ भूमौ ॥ जगतो योनिः ॥

जगद्रूपम् । न । नामरूपात्मके विश्वस्मिन् ॥ अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

जगद्वहा । स्त्री । धरित्र्याम् ॥

जगद्विनाशः । युगान्ते ॥ जगतां विनाशो यस्मिन् जगत्याः विनाशः ॥

जगनुः । पुं । अग्नौ ॥ वैश्वानरे ॥

जगन्नाथः । पुं । विष्णौ ॥ पुरुषोत्तमक्षेत्रे । उड्यानपीठस्थे भैरवे ॥ उड्यानेविमलाक्षेत्रे जगन्नाथस्तु भैरवः । इत्यागमशास्त्रम् ॥ शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् । कलेर्दशसहस्राणि यथैव त्यक्ष्यति हरिः पदमिति ब्रह्मवैवर्त्तम् ॥ वैशाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः । कृता प्रतिष्ठा भेरविप्राः शोभने गुरुवासरे ॥ कृता ब्रह्मणा तिशेषः ॥ इत्यापद्विध्वं छिद्दरे



निवेदितं नियोजयेद् यः पितृदेवकर्मसु । तृप्यन्ति तस्मै पितरः सुराश्च प्रयान्ति लोकं मधुसूदनस्येति महाप्रसादमाहात्म्यस्थं वचनम् ॥

जगन्निवासः । पुं । जगतामाधारे सर्वाश्रये परात्मनि ॥ जगतां निवासः ॥

जगन्मः । पुं । जगन्मर्थे ॥

जगरः । पुं । कवचे । सन्नाहे ॥ जगता गृह्यते । प्रातिपदिकाद्धात्वर्थे इति णिच् । बाहुलकादरः । जागर्त्ति । अच् । पृषोदरादिर्वा ॥

जगलः । पुं । मदनद्रुमे ॥ मेदके । सुराकल्के ॥ पिष्टमद्ये ॥ त्रि । धूर्त्ते । कितवे ॥ भृशं गलति गल्यते वा । गल अदने । यङ्लुगन्तात् अच् । संज्ञापूर्वकत्वाद्दीर्घो ऽकित इति न दीर्घः ॥

जग्धम् । त्रि । भुक्ते । भक्षिते ॥ अद्यते स्म । अद° । क्तः । अदो जग्धिर्ल्यप्ति किति इति जग्धिः । इकार उच्चारणार्थः । धत्वम् । झरो झरि सवर्णे ॥

जग्धतृणः । त्रि । भक्षिततृणे ॥ जग्धं तृणमनेन ॥

जग्धिः । स्त्री । विघसे । भोजने । जेमने ॥ अदनम् । अद° । स्त्रियां क्तिन् । अदो जग्धिर्ल्यप्ति किति ॥

जघनम् । न । स्त्रियः श्रोणिपुरोभागे

॥ कटौ ॥ हन्यते । हन्तेः शरीराव यवेद्वेचेत्यच् ॥ यद्वा । वक्रं हन्ति । यङ्लुगन्तादच् । अनित्यमागमशा- सनमित्यभ्यासस्यनुगतोनुनासिका- न्तस्येतिनुकन ॥

जघनकूपैा । पुं । कुकुन्दरयोः ॥ द्विव चनान्तोयमिति हलायुधः ॥

जघनचपला । स्त्री । मात्राहत्तेष्वार्या- प्रभेदे ॥ यथा । प्राक्प्रतिपादितम र्द्धे प्रथमेतरमेदलेतुचपलायाः । स स्याश्रयेत सोक्ता विशुद्धधीभिर्जघ नचपला ॥ यथा । कृष्णः शृङ्गारपटु र्यैावनमदचञ्चलः सुललिताङ्गः । आसीद्व्रजाङ्गनानां मनोहरोजघ नचपलानामिति ॥

जघनेफला । स्त्री । काकोदुम्बरिका याम् । कठम्बरी इति भाषा ॥ जघ नेफलमस्याः । अमूर्द्धेतिसप्तम्याः अ लुक् ॥

जघन्यः । त्रि । चरमे ॥ गर्हिते ॥ ध- र्मार्थकामाः सममेवसेव्या योह्येक सक्तः सजनोजघन्यः ॥ अल्पे ॥ पुं । शूद्रे ॥ न । मेहने । भिस्ने ॥ अश्ले षा शतभिषा आर्द्रा स्वातिः ज्येष्ठा भरणी एषुनक्षत्रेषु ॥ जघनेभवः । दिगादित्वात् यत् शरीरावयवत्वा द्वा ॥ यद्वा । कुटिलं हन्यते । हन्ते र्यङ्लुगन्तादचोयत् । अनित्यमागम शासनमिति नुगतो ऽनुनासिकान्त- स्येति ननुक् ॥ जघनमिववा ।- शा०यः ॥

जघन्यजः । पुं । स्त्री । दृषले । शूद्रे ॥ त्रि । कनिष्ठे ॥ जघन्ये ऽवरकाले जा तः । सप्तम्यांजनेर्डः ॥ जघन्यात् त्या ज्यात् जातः । जनी० । पञ्चम्यामजा ताविति डः ॥

जघन्यभम् । न । जघन्यसंज्ञकेषु ष ट्सु नक्षत्रेषु ॥ जघन्यञ्चतत्भञ्च ॥

जघ्निः । पुं । हननयोग्यास्त्रे ॥

जघ्नः । त्रि । घातके । हन्तरि ॥ हन्ति । हन० । कुर्भ्रश्चेतिचकारात् अन्य तोपि कुर्द्धातोद्दित्वञ्च ॥

जङ्गमः । त्रि । स्थावरेतरे । चरे । च रिष्णौ ॥ वक्रंगच्छति । गत्यर्थानां नित्यंकैाटिल्यइति यङ् भृशार्थे वा- । पचाद्यच् ॥

जङ्गमकुटी । स्त्री । छत्रे ॥ वारित्रा- याम् ॥

जङ्गमगुल्मः । पुं । प्रचारिपदातिसमू हे । गन्त इति भाषा ॥

जङ्गमेतरः । त्रि । स्थावरे ॥

जङ्गलः । पुं । न । पिशिते ॥ त्रि । नि र्जनस्थाने ॥ वनप्रधानदेशे ॥

जङ्गालः । पुं । सेतैा ॥ रोधविशेषे ।

जंगलाइतिख्याते ॥ इतिजटाधर: ॥

जङ्गलम् । नं । विषे ॥ इतिचिकाण्डशेष: ॥

जङ्घन्यमान: । चि । अतिशयेन हन्यमाने । भृशंपीड्यमाने ॥

जङ्घा । स्त्री । प्रसृतायाम् । गुल्फोर्द्ध जान्वधोभागे । टङ्कायाम् । टांग जांघ इतिच भाषा ॥ जायन्ते रोमाण्यस्याम् । जनी॰ । अच् । तस्य जङ्घच ॥ यद्वा । जङ्घन्यते कुटिलं गच्छति । हन्तेर्यङ्लुगन्तात् अन्येभ्योपीति-ड: ॥ टाप् ॥

जङ्घाकरिक: । चि । धावके । जाङ्घिके । जङ्घाजीविनि ॥ जङ्घामाध्यस्थानु पचारात् गतिर्जङ्घा । सैवकरो रा-जदेयो भाग: आकर: श्रेष्ठोवा । ज-ङ्घाकरोऽस्यास्ति । अतइनिठनाविति ठन् ॥ जङ्घैव करीहस्ती यस्येति वा । कन् ॥

जङ्घात्राणम् । न । जङ्घासन्नाहे । मङ्-चुणे ॥

जङ्घाल: । चि । वेगिनि । अतिजवे ॥-अतिशयिता जङ्घास्य ॥ सिध्मादित्वा लच् ॥ पशुविशेषाणांगणे ॥ हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बरा: । राजीवोपिच मुण्डीचेत्याद्या जङ्घालसंज्ञका: ॥ हरिणस्ताम्रवर्ण: स्यादेण: कृष्ण: प्रकीर्त्तित: । कुरङ्गईष-त्ताम्र: स्याद्धरिणाकृतिकोमहान् ॥ ऋष्यो नीलाण्डको लोके स रोहित इतिकीर्त्तित: । पृषतश्चन्द्रबिन्दु: स्याद्धरिणात्किञ्चिदल्पक: । न्यङ्कुर्बहुविषाणोथशम्बरोगवयान् महान् । राजीवस्तुमृगोज्ञेयोराजीभि: परितोवृत: ॥ योमृग: शृङ्गहीन: स्यात् समुण्डीति निगद्यते ॥ जङ्घाला: प्रायश: सर्वेपित्तश्लेष्महरा: स्मृता: । किञ्चिद्वातकराश्चापिलघवोबलवर्द्धना: ॥

जङ्घिल: । चि । जङ्घाले ॥ अतिशयिते जङ्घेअस्य । पिच्छादित्वात् इलच् ॥

जज: । पुं । योधे ॥ जजति । जजयुद्धे । पचाद्यच् ॥

जञ्जपूक: । चि । वाचाले ॥ पुन:पुनर्भृशंवा गर्हितं जपति तच्छील: । यजजपदशांयङ इत्यूक:

जञ्जभ्यमान: । चि । गात्रविनामेन विदारितमुखेपुरुषे ॥ इति कर्ममीमांसा ॥

जटा । स्त्री । केशविकारे । जटामांसी । व्रतिन: शिखायाम् । सटायाम् ॥ जायते जन्यतेवा । जनेष्टन्लोपश्चेति टन् धातोरन्त्यस्य लोपश्च ॥ मूले । शिफायाम् । जड इति भाषा ॥ मांस्याम् ॥ वेदपाठविशेषे ॥ सामगा-

नोपकरणे ॥ रुद्रजटायाम् ॥ ऋताव यीम् ॥ जटति। जटसङ्घाते। ष्वुन्। टाप् ॥ जटाश्रस्यस्याः। अर्शआद्यच् ॥

जटाजूटः। पुं। जटासमूहे ॥ जटा नां जूटोबन्धः ॥

जटाज्वालः। पुं। प्रदीपे ॥

जटाटङ्कः। पुं। शिवे॥ जटायांटङ्को- यस्य ॥

जटाटीरः। महादेवे। शिवे ॥

जटाधरः। पुं। महेश्वरे ॥ बुद्धभेदे ॥ धरति। धृञ्०। पचाद्यच्। जटानांध रः ॥ चि। जटाधारिणि ॥ जटाधरः सन् जुहुधीह पावकम् ॥

जटामांसी। स्त्री। नलदे। मांस्याम्। सुगन्धिद्रव्यविशेषे ॥

जटायुः। पुं। अरुणपुत्रे सम्पातेः क नीयसि दशरथसखे गृध्रविशेषे ॥ ॥ जटांयाति प्राप्नोति। या०। मृ० कुः ॥ गुग्गुलौ ॥

जटायुधः। पुं। गुग्गुलौ ॥

जटायुः। पुं। जटायौ ॥ गुग्गुलौ ॥ जटाआयुरस्य ॥

जटालः। पुं। कर्पूरे ॥ गुग्गुलौ ॥ मु- ष्कके ॥ वटे ॥ चि। जटाधरे। जटा वति ॥ जटाऽस्यस्य। प्राणिस्थादा- तोलजन्यतरस्याम् ॥

जटाला। स्त्री। जटामांस्याम् ॥ टाप्॥

जटावान्। त्रि। जटिले ॥

जटावती। स्त्री। जटामांस्याम् ॥

जटावल्ली। स्त्री। गन्धमांस्याम् ॥ रुद्र जटायाम् ॥

जटिः। पुं। प्लक्षद्रुमे ॥ जटायाम् ॥ स मूहे। जटति। जट०। सर्वधातुभ्य इन् ॥

जटितः। त्रि। खचिते ॥

जटी। पुं। प्लक्षागमे। पाकरि इति भाषा ॥ सर्पविशेषे ॥ चि। जटायुक्ते ॥ मत्वर्थे व्री० इनिः ॥

जटिलः। पुं। जटावति ब्रह्मचारिप्रभे दे ॥ सिंहे। केशरिणि ॥ त्रि। जटा युक्ते॥ यथा। यच्चिन्तितं तदिह दूर तरं प्रयाति यच्चेतसा नगणितं तदि हाभ्युपैति। प्रातर्भवामि वसुधाधि पचक्रवर्त्ती सोऽहं व्रजामि विपिने- जटिल स्तपस्वीति ॥ जटास्यस्य।- पि०इलच् ॥

जटिला। स्त्री। जटामांस्याम् ॥ पिप्प ल्याम् ॥ वचायाम् ॥ दमनकवृक्षे ॥ राधिकाश्वश्र्वाम् ॥ टाप् ॥

जटी। स्त्री। प्लक्षवृक्षे ॥ जटामांस्याम् ॥ कृदिकारादिति ङीष् ॥

जटुलः। पुं। पिप्लौ। देहस्थेकृष्णलक्ष्म णि। लसन इति भाषा ॥ जटति। जट०। बाहुलकादुलच् ॥

जठरः। पुं। न। कुक्षौ॥ त्रि। बद्धे॥ कर्कशे। कठिने॥ जायतेऽस्मिन् जन्तुर्मलो वा। अनेरष्ठचेत्यरः। पृषोदरादिः॥

जठरनुत्। पुं। आरग्वधे॥

जठरामयः। पुं। जलोदररोगे॥

जडः। पुं। स्वनाम्ना प्रसिद्धे पुरुषे॥ यथा। इष्टं वाऽनिष्टं वा सुखदुःखं वा भवेत्ति योमोहात्। परवशगः स भवेदिह नाम्ना जडसंज्ञकः पुरुष इति॥ वेदग्रहणासमर्थे। मूर्खे॥ न। वारिणि॥ सीसके॥ त्रि। हिमग्रस्ते॥ मूके॥ अप्रज्ञे। बुद्धिविकले॥ अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत्॥ जनुशमे॥ जलति घनीभवति। जलघातने। अच्। डलयोरेकत्वम्॥

जडक्रियः। त्रि। चिरक्रिये। दीर्घसूत्रिणि॥ जडा क्रिया यस्य॥

जडता। स्त्री। जाड्ये। सैमिष्ये। अपाटवे॥ विरहदुःखेन जीवनमात्रस्थितौ॥

जडभरतः। पुं। ऋषभपुत्रे। राज्ञि॥ यत्नामेदं भारतं वर्षमभूत्॥

जडा। स्त्री। शूकशिम्ब्याम्॥ भूम्यामलक्याम्। अग्रायाम्॥ जडयति। तत्करोतीति णिजन्तात् अच्। टाप्॥

जडिमा। पुं। जडतायाम्॥ यथा। इष्टाऽनिष्टापरिज्ञानं यत्र प्रश्नेष्वनुत्तरम्। दर्शनश्रवणाभावो जडिमा सोऽभिधीयते॥ जडस्य भावः। इमनिच्॥

जडुलः। पुं। जटुले॥ जलति। जल घाण्डुलच्। डलयोरैक्यम्॥

जतु। न। अलक्ते। लाक्षायाम्॥ जायते। जनी०। फलिपाटीत्युःतोन्तादेशश्च॥

जतुकम्। न। हिङ्गुनि॥ लाक्षायाम्॥ जटुले॥ अस्त्रिव। इवेप्रतिकृताविति कन्॥

जतुका। स्त्री। अजिनपत्रायाम्। चर्मचटिकायाम्॥ गन्धद्रव्यविशेषे। जन्याम्॥ पर्पट्याम्॥ मालवदेशप्रसिद्धे लताविशेषे। तिर्यक्फलायाम्। निशान्धायाम्। अनेष्टायाम्॥ कन्नन्तात् टाप्॥

जतुकारी। स्त्री। जतुकालतायाम्॥

जतुकृत्। स्त्री। जयम्। चक्रवर्तिन्याम्। गन्धद्रव्यविशेषे। चकवत् इति भाषा॥ जतु करोति। क्विप्॥

जतुकृष्णा। स्त्री। पर्प्यट्याम्॥

जतुनी। स्त्री। चर्मचटिकायाम्॥

जतुपुत्रकः। पुं। नये। द्यूतोपकरणविशेषे। पाशकगुटिकायाम्॥

जतुमणिः । पुं । चर्म्मरोगविशेषे ॥ यथा । सममुत्सन्नमरुजं मण्डलं कफरक्तजम् । सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च सः ॥ इति निदानम् ॥

जतुरसः । पुं । अलक्तके ॥

जतुका । स्त्री । अजिनपत्रायाम् ॥ जतुकीवृक्षे । चकवत इति भाषाप्रसिद्धे ॥ जायते आरोग्यमनया । जनी० । उणूकादयश्चेति निपातनात् क्वचिदकिङित्यपि नलोपः ॥

जत्रु । न । स्कन्धकक्षयोः सन्धौ । कण्ठस्याधोभागे स्थितयोरस्थ्नोः ॥ कक्षयोर्वक्षसः सन्धौ जत्रुणी समुदाहृते ॥ जायते वाहुरस्मात् । जनी० । जत्र्वादित्वात् रुप्रत्यये नकारस्य तकारश्च ॥

जत्वश्मकम् । न । शिलाजतुनि ॥

जनः । पुं । लोके ॥ पृथग्जने । पामरे ॥ शास्त्रीयविवेकहीने ॥ महर्लोकोर्द्ध्वलोके ॥ जनोऽष्टकोऽव्यवच्छिन्नः पितृजन्मजनाश्रयः ॥ जननं जनः जन्म । भावे घञ् । जनिवध्योश्चेति न वृद्धिः ॥ समुद्रस्थदैत्यविशेषेषु ॥ शार्कराक्ये मुनौ ॥

जनकः । पुं । पितरि ॥ मिथिलाधिपे विदेहे ॥ कारके ॥ जनयति । जनीप्रादुर्भावे । ण्वुल् । जनिवध्योश्चेति न वृद्धिः ॥ त्रि । उत्पादयितरि ॥

जनकतनया । स्त्री ।<br>
जनकनन्दिनी । स्त्री । } सीतायाम् ॥

जनकराजकूपः । पुं । तीर्थविशेषे ॥

जनकसुता । स्त्री । जानक्याम् ॥

जनकात्मजा । स्त्री । श्रीरामपत्न्याम् । सीतायाम् ॥ जनकस्य आत्मजा ॥

जनकारी । पुं । अलक्तके ॥ नान्तोऽयम् ॥ इति राजनिर्घण्टः ॥

जनङ्गमः । पुं । चण्डाले ॥ अधार्मिकान् जनान् गच्छति । जनेभ्यो गच्छति वा । गमश्चेति खच् मुमागमः ॥

जनता । स्त्री । जनानां समूहे ॥ ग्रामजनबन्धुभ्यस्तल् । तलन्तः स्त्रियाम् ॥ जनत्वे ॥ भावे तल् ॥

जननम् । न । वंशे ॥ जन्मनि ॥ जन्यते । जनी० जनजनने वा । स्वार्थे । कर्मणि ल्युट् ॥ दीक्षयाध्वरे यजमानस्य जन्मनि ॥ पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति ये दीक्षयन्तीत्यादिश्रुतेः । मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनादिति मनुस्मृतेश्च ॥

जननिः । स्त्री । जनीनामगन्धद्रव्ये ॥

जननी । स्त्री । मातरि । प्रसूयाम् ॥ दयायाम् ॥ कटुकायाम् ॥ मञ्जिष्ठायाम् ॥ अलक्तके ॥ जटामांस्याम् ॥

जनीनामयनम्स्रस्यये ॥ जनयति । ज
नी०। कृत्यल्युटो बहुलमितिल्युट्।
टिस्त्वात् ङीप् ॥

जनपदः। पुं। देशे। नीवृति ॥ जनःप
पदं वस्तु यत्र ॥ जने ॥

जनपदी। पुं। जनपदस्वामिनि ॥

जनप्रवादः। पुं। कौलीने। वचनीय
तायाम्। लोकापवादे ॥

जनप्रियः। पुं। धान्यके ॥ शोभाञ्जने
॥ त्रि। जनानां प्रीतिविषये ॥

जनमेजयः। पुं। परीक्षितराजस्य सुते
। पारीक्षिते ॥ पुरुराजसुते ॥ जनमे
जयति। स्यन्नादेर्जेः कर्त्तरिखश्।
जनस्यमुमागमः ॥

जनयिता। पुं। जाते। पितरि॥ जनय
ति। जनी। तृच् ॥

जनयित्री। स्त्री। जनन्याम्। मातरि
॥ तृजन्तात्। ऋन्नेभ्योङीप् ॥

जनरवः। पुं। लोकवादे ॥ यथा। परी
वादः सत्यो भवति वितथोवापि म
हतां तथा प्युच्चैर्धाम्नां हरतिमहि
मानं जनरवः। तुलोत्तीर्णस्यापि प्र
कटनिहताशेषतमसो रवेस्तादृक्
तेजो नहिभवति कन्यां गतवतः ॥
इति सद्वाक्यालसेन: ॥

जनलोकः। पुं। महर्लोका परिभुवने
। जनलोकः चितेकृत्वा नेककोटि
प्रमाणतः। कोटिद्वयेन संख्यातो
जनोभूर्लोकतोजने: ॥ निवसन्त्यम
ला यत्रमानसा ब्रह्मणः सुताः। सन
न्दनाद्या योगीन्द्राः सर्वेतेदूर्ध्वरेत
स इतिकाशीखण्डम् ॥

जनवल्लभः। पुं। श्वेतरोहितवृक्षे ॥ त्रि।
लोकप्रिये ॥

जनवादः। पुं। जनप्रवादे ॥

जनवार्त्ता। स्त्री। लोकानां किंवद
न्त्याम् ॥

जनश्रुतिः। स्त्री। सकलजनसाधारण
लोकप्रसिद्धौ। किंवदन्त्याम् ॥ जने
भ्यः श्रूयते। श्रुश्रवणे। क्तिन् ॥

जनस्थानम्। न। दण्डकारण्ये ॥ दण्ड
कारण्यस्थाने के स्थानविशेषे ॥

जनातिगः। त्रि। लोकातिशयिनि ॥
जनमतिमच्छति। गम०। अन्यत्रा
पीतिडः ॥

जनान्तः। पुं। देशे। जिला इति पार
स्य भाषा ॥ इति धनञ्जयः ॥

जनान्तिकम्। न। अप्रकाशे। अशोच
रे ॥ त्रिपताकाकरेणाऽन्यानपवाय
न्तिये कथाम्। अन्योन्याममन्त्रणं यत्
स्या ज्जनानांतज्ज नान्तिकम् ॥

जनार्द्दनः। पुं। नारायणे। विष्णौ ॥
सर्वैःसाधुभिर्जनैः स्वाभिलषिताभ्युद
यनिः श्रेयसमिद्धये अर्द्यते याच्यते

इति कुत्सत्वी अर्दतेर्यांआर्थात कृ त्यल्युटोबहुलमितिकर्मणिल्युट् ॥ मदा। जननं जनः अत्र । तमर्दय ति इति जनार्दनः । अर्दहिंसायाम् । नन्द्यादित्वाल्ल्युः ॥ जनाःसमुद्र स्थादैत्यभेदाः तेषामर्दन इतिवा॥ जनान् दुर्जनान् अर्दयति हिनस्ती तिवा ॥

जनाश्मनः । पुं । वृके ॥

जनाश्रयः । पुं । मण्डपे ॥ जनानांलो कानामाश्रयः ॥

जनिः । स्त्री । उत्पत्तौ । अभूतप्रादुर्भा वे ॥ माऽसतोजन्मनायोगः सतः सत्त्वान्नचेष्यते । कूटस्थेविक्रियाना स्ति तस्माद्भ्रामतोजनिः ॥ जनन म् । जनी० । जनिघसिभ्यामिण् । ज निवध्योश्चेति वृद्धिनिषेधः ॥

जनितः । त्रि । उत्पादिते ॥

जनित्रः । पुं । पितरि ॥ जायतेऽस्मा त् । जनी० । जनिदेश्यादिना जने रित्वन् । जनित्रौ मातापितरौ ॥

जनित्री । स्त्री । मातरि ॥ टाप् ॥

जनिमीलिका । स्त्री । महामील्याम् ॥

जनिमा । पुं । जन्मनि ॥ जायते । ज नी० । जनिमृङ्भ्यामिमनिच् ॥

जनी । स्त्री । सीमन्तिन्याम् ॥ वध्वाम् । स्नुषायाम् ॥ जायते गर्भोऽस्यांवा ऽस्याम् ॥ उत्पतौ ॥ ओषधीभेदे । जतुकायाम् ॥ जायते आरोग्यमन या । जनी० । जनिघसिभ्यामितीण् । जनिवध्योश्चेति नवृद्धिः । कृदिका रादितिङीष् ॥

जनुः । न । जन्मनि ॥ जननम् । जनी० । जनेरुसिः ॥

जनूः । स्त्री । जनने । जन्मनि ॥

जनेष्टः । पुं । मुद्गरवृक्षे ॥

जनेष्टा । स्त्री । जतुकायाम् ॥ जातीपु ष्पे ॥ वृद्धिनामौषधौ ॥ हरिद्रायाम् ॥

जनोदाहरणम् । न । यशसि ॥

जनौकः । पुं । जनरक्षके ॥ जनान् अव ति । अव० । उकोरिव्यूठ् । वृद्धिः । ग्लौवत् ॥

जन्तुः । पुं । प्राणिनि । जननशीले ॥ अविद्यादिहृदयग्रन्थिभिर्युतेसंसारि णि । ब्रह्मस्वरूपादर्शिनि ब्रह्मादिस्त म्बपर्यन्ते प्राणिजाते ॥ जायते । ज नी० । कमिमनिजनीति तुः ॥

जन्तुकम्बुः । पुं । कृमिशङ्खे ॥

जन्तुका । स्त्री । नाडीहिङ्गुनि । राम ठ्याम् ॥ लाक्षायाम् ॥

जन्तुघ्नः । पुं । बीजपूरे ॥ न । विडङ्गे ॥ हिङ्गुनि ॥ त्रि । जन्तुघातिनि ॥

जन्तुघ्नी । स्त्री । विडङ्गे ॥

जन्तुनाशनम् । न । हिङ्गुनि ॥ विडङ्गे ॥

जन्तुपादपः । पुं । कोषाम्रवृक्षे ॥
जन्तुफलः । पुं । उदुम्बरे । जन्तवःफलेऽस्य
जन्तुमारी । स्त्री । निम्बूके ॥
जन्तुला । स्त्री । काशतृणे ॥
जन्तुहन्त्री । स्त्री । विडङ्गे ॥
जन्मः । पुं । न । जन्मनि ॥ जननम् । इ
षुयुधीति बाहुलकाज् जनेर्मक् ॥
जन्मकीलः । पुं । हरौ ॥
जन्मदः । पुं । पितरि ॥
जन्मदा । स्त्री । मातरि ॥
जन्म । न । आत्मलाभसम्बन्धे । उत्पत्तौ
। जनने । शुभाशुभकर्मवशात् पौनः
पुन्येनतत्तद्विविधयोनिषूद्भवे । गर्भ
वासयोनिद्वारनिस्सरणरूपे विग्रह
भेदग्रहणे ॥ वासना कर्म विद्याच त्रयं
जन्मप्रयोजकम् ॥ उक्तञ्च सारकलि
कायाम् । गर्भात् कोटिगुणं दुःखं
योनियन्त्रनिपीडने । संमूर्च्छितस्य
जठराज्जायमानस्य देहिनः ॥ जाय
मानः पुरीषासृङ्मूत्रशुक्राविलान
नः । प्राजापत्येन वातेन पीड्यमाना
स्थिबन्धनः ॥ अधोमुखो वैक्रियतेप्र
बलैः सूतिमारुतैः । क्लेशान्निष्क्रा-
न्तिमायातिजठरान्मातु रातुर इति
॥ प्रेत्यभावे ॥ सच अपूर्वदेहेन्द्रि
यादिसम्बन्धः । निकायविशिष्टाभिर
पूर्वाभिर्देहेन्द्रिय मनो ऽहङ्कारबुद्धि
वेदनाभिः पुरुषस्याभिसम्बन्धो जन्म
। ननु पुरुषस्य परिणामः तस्यापरि
णामित्वात् । अन्माच मारतः सत्त्वं
किन्तु देहेन संयुतिः । प्रादुर्भावो
जनेरर्थः सतएवसयुज्यते रत्युक्तः ॥
प्रथमतारायाम् ॥ जननम् जायते-
वा । जनी० । मनिन् ॥
जन्मबन्धविनिर्मुक्तः । त्रि । जन्मात्मके
न बन्धेन विशेषेणात्यन्तिकत्वलक्षणे
न निरवशेषंत्यक्ते ॥
जन्ममासः । पुं । जन्मनोमासे ॥ आर
भ्य जन्मदिवसं यावत् त्रिंशद्दिनंभवे
त् । जन्ममासः स विज्ञेयो वर्जितः
सर्वकर्मसु ॥
जन्मर्क्षम् । न । जन्मनो नक्षत्रे ॥
जन्मवर्त्म । न । योनौ । भगे ॥ जन्म
नोवर्त्म ॥
जन्मान्तरम् । न । परलोके । भवान्त-
रे । अमुत्र ॥
जन्माष्टमी । स्त्री । श्रीकृष्णस्य जन्मति
थौ ॥ सातुमुख्यचान्द्रेण श्रावणस्य-
कृष्णाष्टमी । गौणचान्द्रेण भाद्रस्य कृ
ष्णाष्टमी ॥ अथ भाद्रपदे मासि कृ
ष्णाष्टम्यां कलौयुगे । अष्टाविंशति
मे जातः कृष्णोऽसौदेवकीसुतः ॥
जन्मी । पुं । प्राणिनि ॥ जन्मोऽस्या
स्ति । अतइनिः ॥ जन्माऽस्त्यस्य वा ॥

व्री० इति: ॥

जन्मेजय: । पुं । जनमेजये राज्ञि ॥ जनमनैवाभिमुखेन शत्रूनेजितवान् यत: । एजृकम्पनेधातोर्हि जनमेज यइतिश्रुतइतिनिरुक्ति: ॥ शकंध्वादि त्वात् पररूपम् ॥

जन्य: । पुं । जनके ॥ न । हट्टे ॥ परी वादे । कौलीने ॥ युधि । सङ्ग्रामे ॥ त्रि । उत्पाद्ये ॥ जनकस्य स्वभावो- हि अन्येतिष्ठति निश्चितम् । यथा श्रीकृष्णपादाङ्कं कालीयवंशमस्तके ॥ नवोढाज्ञातिमित्रभृत्येषु ॥ नव वरस्यज्ञातिमित्रभृत्येषु ॥ वरस्निग्धे । जामातृवत्सले ॥ देहे ॥ जननम् । जनेर्यक् ॥ जायते वा । भव्यमेये तिसाधु: ॥ यद्वा । जायते जनयति वा । अचीयत् तकिमसिचसितयति जनिभ्योयद्वाच्य: । जनेर्यद्विधि: स्वरा र्थ: । कहलोर्ण्यदिति यत्तापिरूप सिद्धे: । नचवृद्धिप्रसङ्ग: जनिवध्योश्च तिनिषेधात् ॥ जनस्यजल्प: मतजन हलादितियत् ॥ यद्वा । जनीं वधूं व हति प्रापयति । संज्ञायामितिसाधु: ॥

जन्या । स्त्री । मातृवयस्यायाम् ॥ मुदि । प्रीतौ ॥ जायते ऽस्याम् । जनयति वा । यद्यदन्तात् यदन्ताद्वा टाप् ॥

जन्यु: । पुं । प्राणिनि ॥ अग्नौ ॥ धात रि । परमेष्ठिनि ॥ जायते । जनी० । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥

जप: । पुं । श्रुतिमन्त्राद्यावृत्तौ ॥ जप स्तद्वाचयं ध्येयसम्मुखीकरणं मते । मानसस्यान्त: सञ्जल्परूपस्य उपांशु संज्ञकस्यच स्वसंवेद्यलघुध्वने र्भाष्य स्यच श्रूयमाणस्य मन्त्रस्य ध्येयसम्मु खीकरणायावर्त्तने ॥ मन्त्रार्थोज्ञाने जपस्य फलाजनकत्वमुक्तं तन्त्रशास्त्रे । यथा । यथापशुर्भारवाही न तस्य- भजते फलम् । तथैवार्थानभिज्ञो न जपस्यफलमश्नुतइति ॥ स्वाध्याये ॥ जपनम् जप्यतेवा । जपमानसेच । व्यधजपोरनुपसर्गे इत्यप् ॥

जपनम् । न । जपे ॥

जपपरायण: । पुं । जपनशीले । जपा- सक्ते ॥

जपा । स्त्री । जवावृक्षे ॥ जपासङ्ग्राहि णी केश्या त्रिसन्ध्याकफवातजित् ॥ जपति । जप० । पचाद्यच् । टाप् ॥

जप्यम् । त्रि । अघमर्षणादौ ॥ जप्यते । जप० । पोरदुपधादितियत् ॥

जप्येश्वर: । पुं । सिद्धस्थानविशेषे ॥ य त्रा । जप्येश्वरे महास्थानेशङ्करीच- त्रिशूलिनो । त्रिशूलीशङ्करस्तत्रसर्व- पापविमोचक इति ॥

जबाला । स्त्री । सत्यकामस्यर्षेर्मातरि ॥

जमजः । त्रि । यमजे ॥

जमदग्निः । पुं । परशुरामपितरि । ऋचीकमुनिपुत्रे भृगुवंशजे यमदग्निमुनौ ॥

जमनम् । न । भोजने ॥ जमुअदने । ल्युट् ॥

जम्पती । पुं । सहोक्त्या जायापत्योः ॥ जायाच पतिश्च राजदन्तादिगणे पाठात् जायाशब्दस्य जमभावोनिपात्यते ॥ नित्यंद्विवचनान्तः ॥

जम्बालः । पुं । शैवाले ॥ पङ्के ॥ जमति । जमु० । बाहुलकादालम् ॥ यद्वा । जम्बअदने इति धातुः । भावे घञ् । जम्बंलाति । लादाने । आतोनुपे तिकः । पृ० ॥

जम्बालिनी । स्त्री । नद्याम् । शैवलिन्याम् ॥

जम्बीरः । पुं । जंभोरीइति जमट इतिच पर्वतीयभाषाप्रसिद्धे दन्तशठे । जम्भीरे । जम्भले ॥ जम्बीर मुष्णं गुर्वम्लं वातश्लेष्मविबन्धनुत् । शूलकासकफक्लेशच्छर्दितृष्णामदोषजित् ॥ आस्यवैरस्यहृत्पीडा वह्निमान्द्यकृमीन् हरेत् । स्वल्पजम्बीरिकातद्वत्तृष्णाछर्दिनिवारिणी ॥ प्रस्थपुष्पे । मरुवा इतिख्याते ॥ अर्जके ॥ सितार्जके ॥ जम्यते । जमु० । गमभीरां

दयश्चेति ईरन्प्रत्ययान्तः साधुः ॥ यद्वा । जम्यते । विच् । वीरयति । वीरविक्रान्तौ । अच् । जम्चासौ वीरश्च ॥

जम्बुः । स्त्री । जामन इति प्रसिद्धे वृक्षे । सुरभिपत्रायाम् । नीलफलायाम् ॥ मेरुसरिति ॥ जम्बुद्वीपे ॥ जम्बुद्वीपं क्षितेर्मध्ये भिस्तद्दृत्तं लक्षयोजनम् । क्षाराब्धिना परिवृतं परिवृत्तेन तावता ॥ न । जम्बूफले । जाम्बवे ॥ जमति । जमु० । अन्दूदृन्भूजम्बू इत्यादिना कू प्रत्ययो बुगागमश्च निपातितः । बाहुलकात् ह्रस्वः ॥ फलेतु जम्ब्वाः फलम् । जम्ब्वा वेत्यणोऽभावे औरञ् । फलेलुक् । ह्रस्वोनपुंसके ॥

जम्बुकः । पुं । जम्बूकार्थेषु ॥ गोलापजाम इति गौडभाषाप्रसिद्धे वृक्षे ॥ श्योनाकप्रभेदे ॥ जमति । जमु० । मृगय्वादयश्चेतिसाधुः ॥ शृगाले ॥

जम्बुद्वीपः । पुं । न । भूमेःसप्तद्वीपान्तर्गते द्वीपविशेषे । जम्बूद्वीपे ॥

जम्बुमार्गः । पुं । तीर्थविशेषे ॥

जम्बुलः । पुं । जम्बूले ॥

जम्बुवनजम् । न । श्वेतजवापुष्पे ॥

जम्बूः । स्त्री । मेरुतरङ्गिण्याम् ॥ नागदमन्याम् ॥ जामनइति प्रसिद्धे वृक्षे । राजफलायाम् । सुरभिपत्रायां

म् ॥ वाग्भटस्तु द्रभेदेन त्रिविधा । तन्नदहत्याः पर्य्यायाः । महाजम्बूः महापत्ना राजजम्बूः बृहत्फला फलेन्द्रः नन्दः महाफला सुरभिपत्राचेति ॥ विष्टम्भित्वं रोचनत्वं गुरुत्वञ्च फलेगुणाः ॥ क्षुद्रायाःपर्य्यायाः । सूक्ष्मकृष्णफला दीर्घपत्रा मध्यमा ॥ अथैववनजम्बूपर्य्यायाः । भूमिजम्बूः काकजम्बूः नादेयी शीतपल्लवा सूक्ष्मपत्रा जलजम्बुका ॥ फलगुणाः । जम्बूः सङ्ग्राहिणी रूक्षा कफपित्तास्रदाहनुत् ॥ जम्ब्वाःफले । जम्बुनि । जाम्बवे ॥ जम्बूद्वीपे ॥ जमति । जमु० । जम्बूदनभू जम्बूकफेलूकर्कन्धूदिधिषूरित्युणादिसूत्रेण कूप्रत्ययोवुगागमश्चनिपातितः ॥ जायते वा । जनेर्वा तौ तेनैवनिपातितौ ॥ फलेतु जम्ब्वाःफलम् । जम्ब्वा वेत्यणोऽभावपक्षे ओरञ् । तस्य लुप्चेतिलुप् । लुपियुक्तवत् ॥ जम्बुद्वीपे ॥

जम्बूकः । पुं । फेरवे । शृगाले ॥ नीचे ॥ पश्चिमाशापतौ । वरुणे ॥ गुलापजामनइति प्रसिद्धे फलवृक्षे ॥ श्योनाकप्रभेदे । जमति । जमु० । उलूकादित्वात् साधुः ॥

जम्बूका । स्त्री । काकलीद्राक्षायाम् । निर्वीजायाम् । रक्ताधिकायाम् ॥

जम्बूद्वीपम् । न । पुं । भूमेःसप्तद्वीपान्तर्गते द्वीपविशेषे ॥ यथा । भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्ययाम्ये क्षारक्षीराद्यम्बुधीनांनिवेशः ॥ इतिसिद्धान्तशिरोमणिः ॥ पुराणमतेनतु । अयंद्वीपः पद्मकोषमध्यवर्त्तिकोषवल्लक्षयोजनविस्तीर्णः पद्मपत्रमिवसमवर्त्तुलः लक्षयोजनविस्तृतलवणसमुद्रेण वेष्टितः । यस्मिन् प्रत्येकनवसहस्रयोजनायामानि नववर्षाणितेषांवर्षाणामष्टौ सीमापर्वताःसन्तीति ॥

जम्बूलः । पुं । जम्बूविटपे ॥ केतकीवृक्षे । क्रकचच्छदे ॥ न । वरपक्षीयस्त्रीणांपरिहासवचने ॥

जम्बूलमालिका । स्त्री । कन्यावरयोर्मुखचन्द्रिकायाम् ॥ जम्बूलानांवरपक्षीयस्त्री परिहासवचनानांमालिका श्रेणी ॥ इतिहरिवंशटीकायां नीलकण्ठः ॥

जम्भः । पुं । दैत्यविशेषे ॥ दन्ते ॥ जम्बीरे ॥ भक्षणे ॥ अंशे ॥ हनौ ॥ तूणे ॥ जम्भयति । जभीगात्रविनामे । पचाद्यच् । रधिजभोरचीतिनुम् ॥

जम्भकः। पुं। जम्भार्थेषु॥ जभी०। खु लुट्चाविति गवुल्। नुम्॥ स्वार्थे कोवा॥

जम्भका। स्त्री। जृम्भायाम्॥

जम्भनः। पुं। राक्षसविशेषे॥

जम्भद्विट्। पुं। इन्द्रे॥

जम्भभेदी। पुं। हरिहये। इन्द्रे॥ जम्भमसुरंभेत्तुं शीलमस्य। सुप्यजातावितिणिनिः॥

जम्भरः। पुं। जम्बीरे॥

जम्भलः। पुं। जम्बीरे॥ बुद्धदेवताविशेषे॥ जम्भयति। जभी०। वृषादित्वात्कलः। रधिजभोरितिनुम्॥

जम्भला। स्त्री। राक्षसीविशेषे॥ यथा समुद्रस्योत्तरेतीरे जम्भला नाम राक्षसी। तस्याःस्मरणमात्रेण विशल्यागर्भिणी भवेदिति॥

जम्भा। स्त्री। जृम्भायाम्॥ इतिराजनिर्घण्टः॥

जम्भारिः। पुं। इन्द्रे॥ वह्नौ॥ वज्रे॥ जम्भस्यारिः॥

जम्भी। पुं। जम्बीरे॥ इतिशब्दचन्द्रिका॥

जम्भीरः। पुं। जंभीरी इति ख्याते जम्बीरद्रुमे॥ जम्भयति। जभी०। गम्भीरादित्वात् ईरन्। रधिजभोरितिनुम्॥

जयः। पुं। अग्निमन्थे॥ जयन्ते॥ युधिष्ठिरे॥ शत्रुपराङ्मुखीकरणे। विजये। उत्कर्षप्राप्तौ। पराजितापेक्षयोत्कर्षलक्षणे। जीत इति भाषा॥ जयोरन्ध्र प्रशारिणाम्॥ वीररसे॥ नारायणस्य पार्षदविशेषे॥ इक्ष्वाकुवंशजे विजयनन्दनराजे॥ दक्षिणद्वारगृहे॥ अष्टाविंशतितमे वत्सरे॥ क्षत्रियास्तथा वैश्याः शूद्राश्चनटनर्त्तकाः। पीडितास्ते वरारोहेजये सर्वेनसंशयः॥ जयनम् जीयतेऽनेनवा। जि०। एरच्॥ जयतिवा। पचाद्यच्॥ शास्त्रविशेषे॥ यथोक्तं ब्रह्मचारिकाण्डे भविष्यपुराणे। अष्टादशपुराणानि रामस्यचरितं तथा। विष्णुधर्मादिशास्त्राणिशिवधर्माश्चभारत॥ कार्ष्णं च पञ्चमोवेदो यन्महाभारतंस्मृतम्। सौराश्चधर्माराजेन्द्रमानवोक्ता महीपते॥ जयेतिनाम एतेषांप्रवदन्तिमनीषिण इति॥

जयकोलाहलः। पुं। पाशकभेदे॥ जयस्य कोलाहलो यस्मिनक्षः॥- जयध्वनौ॥

जयढक्का। स्त्री। जीतकाडङ्का इति भाषा प्रसिद्धे वाद्यविशेषे॥

जयदत्तः। पुं। इन्द्रपुत्रे। पाकशासनौ॥

जयद्रथः । पुं । सिन्धुराजे ॥

जेवमम् । न । तुरङ्गादिसन्नाहे ॥ जये ॥ जिजये । ल्युट् ॥

जयनी । स्त्री । इन्द्रसुतायाम् ॥

जयन्तः । पुं । इन्द्रपुत्रे । पाकशासनौ ॥ भीमे ॥ चन्द्रे ॥ शिवे । शम्भौ ॥ ॥ कृष्णानुजे ॥ ध्रुवकविशेषे ॥ तल्लक्षणं यथा । आदिताले जयन्तःस्यात् शृङ्गाररससंयुतः । रुद्रसंख्याचरपद आयुर्वृद्धिकरः परइतिदामोदरः ॥ जयति । जि० तॄभूवहिवसीत्यादिनाझच् । झोन्तः ॥ तीर्थविशेषे ॥

जयन्तिका । स्त्री । हरिद्रायाम् ॥ जायती त्वगितिच प्रसिद्धद्रव्ये ॥

जयन्ती । स्त्री । जयायाम् । तर्कार्याम् ॥ नादेय्याम् ॥ अस्यागुणाः । मदगन्धयुक्तत्वम् । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । कृमिभूतनाशित्वम् । कण्ठविशोधनत्वम् । तथकृष्णारसायनी । इतिराजनिर्घण्टः ॥ उमायाम् । गौर्याम् ॥ इन्द्रपुत्र्याम् ॥ पताकायाम् ॥ जीवन्त्याम् ॥ योगविशेषे ॥ यथा । जयं पुण्यञ्चकुरुते जयन्तीमितितांविदुः । रोहिणीसहिताकृष्णा मासेच श्रावणे ऽष्टमी ॥ अर्द्धरात्रादधश्चोर्द्ध्वं कलयापियदाभवेत् । जयन्तीनामसा प्रोक्ता सर्वपापप्रणाशिनी ॥ यात्रायोगविशेषे ॥ यथा । यत्र स्वोच्चगतश्चन्द्रो लग्नादेकादशे स्थितः । जयन्तानामयोगोयं शत्रुपक्षविनाशकृत् ॥ जयति । जि० । तॄभूवहिवसि भासि साधि गडि मण्डि जिनन्दिभ्यश्चेति झच् सच षित् । झोन्तः । षित्वात् ङीष् ॥

जयपत्रम् । न । डिक्री इति डिगरी इतिच इङ्ग्रेजभाषा प्रसिद्धे विजयपत्रे । विवादविषयकजयबोधकलिपौ ॥ यथा । यद्वृत्तं व्यवहारात्तु पूर्वपक्षोत्तरादिकम् । क्रिया ऽवधारणोपेतं जयपत्रे ऽखिलं लिखेत् ॥ पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः । प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते इति ॥ अश्वमेधीययज्ञघोटककपालवद्धायां लिपौ ॥ यथा । त्रैलोक्यविजयीरामो रावणान्तकरः प्रभुः । तदीचितो वाजिमेधे तस्यायं प्रोक्षितः पशुः ॥ पालितो लक्ष्मणेनैव सुलक्षणविलक्षितः । सम्पूज्यचपरित्याज्यः सर्वैरितिचसंस्कृताम् ॥ इतिवाशिष्ठरामायणम् ॥

जयपालः । पुं । दन्तीवीजे । सारके । जमालगोटा इति भाषा ॥ विधातरि ॥ विष्णौ ॥ नृपे ॥ इतिशब्दरत्नावली ॥

जयपुत्रकः । पुं । पाशकविशेषे ॥

जयमङ्गलः । पुं । ज्वरघ्ने औषधविशेषे ॥ राजवाह्ये हस्तिनि ॥ ध्रुवकविशेषे ॥ यथा । चतुर्विंशतिवर्णाङ्घ्रिः कथितोजयमङ्गलः । शृङ्गारवीरयोरेव ताले चाँचपुटेचसइति ॥

जयवाहिनी । स्त्री । शच्याम् । इन्द्राण्याम् ॥ चारुधारा महेन्द्राणी चेन्द्राणी जयवाहिनीतिरभसः ॥ जयवादिनीतिपाठान्तरम् ॥ माहेय्याम् ॥ जय सैन्ये ॥ जयस्य वाहिनी ॥

जयशेखरः । पुं । स्वर्क्षमूलत्रिकोणोच्चस्थानगोयदिगीष्पतिः । जयशेखरयोगोयं नानाऽमितफलप्रदः इतिवर्णिते याचायोगे ॥

जया । स्त्री । जयन्त्याम् ॥ तिथिविशेषे । चयोदश्यष्टमीचैव तृतीयाचजया स्मृता ॥ पथ्यायाम् । हरीतक्याम् ॥ उमायाम् । दुर्गायाम् ॥ व्युत्पत्तिर्यथा । जयः कल्याणवचनो ह्याकारोदातृवाचकः । जयंददातियानित्यं साजयापरि कीर्त्तितेति ब्रह्मवैवर्त्तपुराणम् ॥ दुर्गायाः सख्याम् ॥ बुद्धशक्तिविशेषे । तारायाम् ॥ गणिकारिकायाम् । अग्निमन्थवृक्षे ॥ विजयायाम् । भङ्गायाम् ॥ पताकाविशेषे ॥ नीलदूर्वायाम् ॥ शाल्मलवृक्षे ॥ जयति । जि० । पचाद्यच् । टाप् ॥

जयारवः । पुं । वन्दिनांजयजयेतिशब्दे ॥

जयावहा । स्त्री । भद्रदन्तीवृक्षे ॥

जयाश्रया । स्त्री । जरडीतृणे ॥

जयाह्वा । स्त्री । भद्रदन्तीवृक्षे ॥

जयी । त्रि । जययुक्ते । विजयिनि ॥ जेतुंशीलमस्य । प्रजोरिनिरित्यधिकारे जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्चेति इनिः ॥

जय्यः । त्रि । जेतुंशक्ये ॥ जिजये जि-अभिभवेवा । शकिलिङ्चेति शक्यार्थेयत् । गुणः । चय्यजय्यौशक्यार्थे इति यान्तादेशः ॥

जरठः । त्रि । कर्कशे ॥ पाण्डौ ॥ कठिने ॥ जीर्णे ॥ जीर्यति । जृष्वयोहानौ । बाहुलकादठः ॥ पुं । जरायामितिविश्वः ॥

जरडी । स्त्री । तृणविशेषे । गण्डाटिकायाम् । सुनालायाम् ॥

जरणः । पुं । न । जीरके ॥ अजाज्याम् । कृष्णजीरके ॥ हिङ्गुनि ॥ सौवर्चले ॥ कुष्ठौषधौ ॥ पुं । कासमर्दे ॥ जरयति । जृष्० । नंद्यादित्वाल्ल्युः ॥

जरणाद्रुमः । पुं । अश्वकर्णवृक्षे ॥

जरणा । स्त्री । कृष्णजीरके ॥

जरन् । त्रि । जरातुरे । वृद्धे ॥ पुराण

मे ॥ जीर्य्यति । जृष्० । जीर्द्देर-
तृन् ॥
जरती । स्त्री । जीर्णायाम् । वृद्धायाम्
॥ उगितश्चेतिङीप् ॥
जरत्कारः । पुं । जरत्कारुमुनौ ॥
जरत्कारुः । पुं । मुनिविशेषे । यायात्रे
रे ॥ इति त्रिकाण्डशेषः ॥
जरत्कारुः । स्त्री । मनसादेव्याम् ॥
जरत्कारुप्रिया । स्त्री । मनसादेव्याम् ॥
जरद्गवः । पुं । वृद्धोक्षे ॥ जरन् चासौगौ
श्च । पूर्वकालैकेतिसमासः । गोरत
द्धितलुकीतिटच् ॥ गृध्रविशेषे ॥
जरन्तः । पुं । महिषे ॥ चि । वृद्धे ॥ जी
र्य्यति । जृष्० । जृविशिभ्यांभच् ॥
जरसानः । पुं । पुरुषे ॥ जीर्य्यते । जृष्०
। छन्दस्यसानच्शुजृभ्यामित्यसानच् ॥
जरा । स्त्री । विस्रसायाम् । वयः कृत
श्लथमांसाद्यवस्थाविशेषे । प्रत्याश-
क्तिते जोनिरोधपरपरिभवादिरू-
पायां वलिपलितादिलक्षणायां व
योहानौ ॥ सातुकालकन्या । यथा ।
कालकन्या जरा साचात् लोकस्तां
नाभिनन्दति । स्वसारं जगृहे मृत्युः
चयाय जवलेश्वरः ॥ इति श्रीभागव
तम् ॥ एषां भेदप्रभेदेन चतुष्षष्ठि
रुजस्मृताः । मृत्युकन्यासुताश्चैव
जरा तस्याश्चकन्यका ॥ जराच भा



तृभिः सार्द्धं शश्वद्भ्रमति भूतलम् ।
एते चोपायवेत्तारं न गच्छन्ति च
सम्मतम् ॥ पलायन्तेच तंदृष्ट्वा वै
नतेय मिवोरगाः ॥ चक्षुर्जलस्य व्या
यामः पादाधस्तैलसेवनम् । कर्णेतै
लंमूर्द्धितैलं जराव्याधिविनाशनम्
॥ वसन्ते भ्रमणं वह्निसेवा ऽस्वप्नंक
रोतियः । बालाञ्चसेवते काले जरा
तं नोपगच्छति ॥ खातशीतोद-
कस्नायी सेवते चन्दनद्रवम् । नोपया
ति जरातञ्च निदाघे ऽनिलसेवि-
नम् ॥ प्रावृड्ष्णोदकस्नायीघन-
तोयं नसेवते । समयेच समाहा-
री जरातं नोपगच्छति ॥ शरद्रौ
द्रं न गृह्णाति भ्रमणं तत्रवर्जये-
त् । खातस्नायी समाहारी जरातं
नोपतिष्ठते ॥ खातस्नायीचहेमन्ते
कालेवह्निं निषेवते । भुङ्क्ते नवा
न्नमुष्णञ्चजरातं नोपगच्छति ॥ शि
शिरे ऽशुकवह्निंच नवोष्णान्नञ्चसेव
ते । य एवोष्णोदकस्नायी जरातंनो
पगच्छति ॥ सद्योमांसं नवान्नञ्च
बालस्त्रीचीरभोजनम् । घृतञ्चसे
वते योहि जरा तं नोपगच्छति ॥
भुङ्क्ते सदन्नं चुत्काले तृष्णायांपीय
तेजलम् ॥ । नित्यं भुङ्क्तेचताम्बू
लं जरा तं नोपगच्छति ॥ दधिहैय

क्षीनञ्च नवनीतं तथागुडम् । नित्यं भुङ्क्ते संयमीयो जरातंनैव गच्छति ॥ शुष्कमांसं स्त्रियो वृद्धा बालार्क स्तरुणं दधि । तं सेवन्तंजरा याति प्रहृष्टाभ्रातृभि.सह ॥ रात्रौ येदधिसेवन्ते पुंश्चलीञ्च रजस्वलाम् । तमुपैति जरा हृष्टाभ्रातृभिः सह सुन्दरि इतिब्रह्म वैवर्त्तपुराणे ब्रह्मखण्डम् ॥ अस्याऔषधं यथा । पलाशचूर्णं समधु गव्याज्यामलकान्वितम् । सविडङ्गं पीतमाचं नरंकुर्यान्महामतिम् ॥ मासैकेन महादेव जरामरणवर्जितः ॥ पलाशबीजं सघृततिलम ध्वन्वितं समम् । समाहं भक्षितं रुद्र जरां नयति संचयमिति गारुडे १९९ अध्यायः ॥ चौरिकावृक्षे ॥ राक्षसीविशेषे ॥ यथा । अन्यस्यामपिभार्य्यायां शकले द्वदृहद्रथात् । तेमात्रावहिरुत्सृष्टे जरयाचाभिसन्धिते ॥ जीर्य्यत्यनया । जृष्० । षिद्भिदादिभ्योङ् । ऋदृशोङिगुणः । टाप् ॥ याचभार्य्याविरूपा चौकशला कलहप्रिया । वचनोत्तरवक्रीच साजरान जराजरेति चाणक्यम् ॥

जरातुरः । त्रि । जर्ज्जरे । जरारोगग्रस्ते ॥

जरापुष्टः । पुं । जरासन्धे ॥

जराभीरुः । पुं । मदने । कामदेवे ॥ त्रि । जराभयशीले ॥

जरायणिः । पुं । जरासन्धे ॥

जरायुः । पुं । उल्वे । गर्भाशये । गर्भावरणचर्म्मणि ॥ येनवेष्टितो गर्भःकुक्षौतिष्ठतिसजरायुः ॥ यातुचर्म्माकृतिः सूक्ष्माजरायुः सानिगद्यतेइति भगवतीगीतोक्तेः ॥ जटायौ पक्षिराजे ॥ जरामेति । किञ्जरयेःश्रिणइतिञुण् ॥

जरायुजः । त्रि । मनुष्यपश्वादौ ॥ पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसिच पिशाचाश्च मनुष्याश्च जरायुजा इति मनुः ॥ यातुचर्म्माकृतिः सूक्ष्मा जरायुः सानिगद्यते । शुक्रशोणितयोर्योग स्तस्मिन्नं जायतेयतः । ततगर्भोभवेद्यस्मात्तेनप्रोक्तोजरायुजइति श्रीभागवतेभगवतीगीता ॥ जरायोर्जातः । पञ्चम्यामितिजनेर्डः ॥

जरासन्धः । पुं । चन्द्रवंशीयेनृपविशेषे । मागधभूपे । बार्हद्रथे ॥ अन्यस्यामपि भार्य्यायां शकले द्वे बृहद्रथात् । तेमात्रावहिरुत्सृष्टे जरया चाभिसन्धिते ॥ जीवजीवेति क्रीडन्त्याजरासन्धोऽभवत्सुतः इति भागवम् ॥ जरयासन्धितोयस्मात जरासन्धस्त

तःस्मृतः ॥

जरासन्धजित् । पुं । भीमसेने ॥

जरी । चि । वृद्धे ॥ इतिहेमचन्द्रः ॥

जरूथम् । न । मांसे ॥ श्वथमांसे ॥ जीर्यति । जृष्० । जृवृञ्भ्या मून् ॥ पुं । असुरविशेषइतिवेदभाष्यम् ॥

जर्जरम् । न । शैवले ॥ शक्रध्वजे ॥ त्रि । जरातुरे ॥ जीर्णे ॥ जर्जति । जर्ज परिभाषणभर्त्सनयोः । वाहुलकादरः ॥

जर्जरीकः । त्रि । वहुच्छिद्रद्रव्ये ॥ जरातुरे ॥ जर्जति । जर्ज० । पर्फरीकादयश्चेति साधुः ॥

जर्णः । पुं । चन्द्रे ॥ वृक्षे ॥ जीर्यति । जृष० । क्रृष्ट्जसीतिनन् ॥ त्रि । जार्णे ॥

जर्त्तिकः । पुं । जट्ट इतिप्रसिद्धे वाल्हीकदेशस्थेशूद्रे ॥ यथा । शाकलं नामनगर मापगानामनिम्नगा । जर्त्तिका नामवाल्हीका स्तेषांवृत्तं सुनिन्दितमितिभारतेकर्णपर्व ॥

जर्त्तिलः । पुं । अरण्यतिले ॥ जर्त्तिलः कथ्यतेसद्भिररण्य प्रभवस्तिलः ॥

जर्तुः । पुं । योनौ ॥ मतङ्गजे ॥ जायते । जनी० । जनेस्तुरश्च । तु इत्यविभक्तिकोनिर्देशः । तुप्रत्ययोरेफश्चान्तादेशः ॥

जलः । त्रि । जडे ॥ न । गोकलने ॥ ह्रीवेरे ॥ नीरे । अम्बुनि । तोये ॥ ॥ पञ्चभूतान्तर्गतभूतविशेषएतत् ॥ अस्योत्पत्त्यादयो निरूप्यन्ते ॥ रूपमात्राद्धि कुर्वाणात् तेजसोदैवचोदितात् । रसमात्रमभूत् तस्मादम्भो जिह्वारसग्रहः ॥ वर्णःशुक्लोरसस्पर्शो जलेमधुरशीतलौ । स्नेहस्तद्द्रवत्वञ्च तुसांसिद्धिकमुदाहृतम् ॥ नित्यतादिप्रथमवत् किन्तुदेहमयोनिजम् । इन्द्रियंरसनंसिन्धुहिमादिर्विषयोमत इतिकारिकावली ॥ जलंचतुर्विधं प्राहु रन्तरीचोद्भवं वुधाः । धाराजं कारकञ्चैव तौषारं हैममित्यपि ॥ हेमन्ते सारसं तोयं ताडागं वाहितं स्मृतम् । हेमन्तविहितं तोयं शिशिरेपिप्रशस्यते ॥ वसन्तग्रीष्मयोःकौपं वाप्यं वानैर्भरंजलम् । नदेयं वारिनादेयंवसन्तग्रीष्मयोर्वुधैः । विषवद्दनष्टचायां पत्राद्यैर्दूषितं यतः ॥ औद्भिदं वान्तरीक्षंवा कौपंवा प्रावृषिस्मृतम् । शस्तं शरदि नादेयं नीरं मंशूदकंपरम् ॥ दिवा रविकरैर्जुष्टं निशिशीतकरांशुभिः । क्षेयमंशूदकंनाम स्निग्धंदोषत्रयापहम् ॥ अनभिष्यन्दि निर्दोषमान्तरीक्षजलोपमम् । वल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ॥ अन्यच्च

। शरदि स्वच्छमुदयादगस्त्यस्याखिलं हितम् ॥ वृद्धसुश्रुतस्तु । पौषे वारि सरोजातं माघे तत्तु तडागजम् । फाल्गुने कूपसम्भूतं चैत्रे चौण्ड्यं हितं मतम् ॥ वैशाखे नैर्झरं नीरं ज्यैष्ठे शस्तं तथौद्भिदम् । आषाढे शस्यते कौपं श्रावणे दिव्यमेव च ॥ भाद्रे कौपं पयः शस्तं आश्विने चौण्ड्यमेव च । कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ॥ पानविधिस्तु । अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्द्धनाय मुहुर्मुहुर्वारि पिबेदभूरि ॥ अल्पाम्बुपानविषयस्तु । अरोचके प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये । मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्वरे ॥ व्रणे च मधुमेहे च पिबेत् पानीयमल्पकम् ॥ पानावश्यकन्तु । जीवनं जीविनां जीवो जगत्सर्वन्तु तन्मयम् । अतोऽत्यन्तनिषेधेऽपि न क्वचिद्वारि वारयेत् ॥ अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम् । तोयाभावे पिपासार्त्तः क्षणात् प्राणैर्विमुच्यते ॥ हारीतोऽप्याह । तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी । तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम् ॥ तृषितो मोहमायाति मो-

हात् प्राणान् विमुञ्चति । अतः सर्वास्ववस्थासु न क्वचिद्वारि वारयेत् ॥ प्रशस्तजलन्तु । अगन्धमव्यक्तरसं सुशीतं तर्षनाशनम् । अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥ निन्द्यं जलम् । पिच्छिलं कृमिलं क्लिन्नं पर्णशैवालकर्द्दमैः । विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ॥ अतिनिन्द्यं जलम् । कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः । दुर्द्दर्शजमसंस्पृष्टं सौरचान्द्रमसांशुभिः ॥ अनार्त्तवं वार्षिकमपि प्रथमं तच्च भूमिगम् । व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपनम् ॥ तत्कुर्यात् स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान् । कासाग्निमान्द्याभिष्यन्दकण्डूगण्डादिकांस्तथा ॥ दुष्टोदकनिर्द्दोषीकरणोपायस्तु । निन्दितञ्चापि पानीयं क्वथितं सूर्यतापितम् । सुवर्णरजतं लोहं पाषाणं सिकतां मृदम् ॥ भृशं सन्ताप्य निर्वाप्य सप्तधा साधितं तथा । कर्पूरजातीपुन्नागपाटलादिसुवासितम् ॥ शुचिसान्द्रपटस्रावैः क्षुद्रजन्तुविवर्जितम् । स्वच्छं कनकमुक्ताद्यैः शुद्धं स्याद्दोषवर्जितम् ॥ पर्णमूलविसग्रन्थिमुक्ताकनकशैवलैः । गोमेदेन च वस्त्रेण कुर्यादम्बुप्रसादनम् ॥ जलस्य पाकाव-

धिस्तु। आमंजलंजीर्यति याममा
त्रं तदर्द्धमात्रं शृतशीतलञ्च। तदर्द्धं
मात्रन्तुशृतंकदुष्णं पयः प्रपाकेषयए
वकाला:॥ विशेष: पानीये द्रष्टव्यः
॥ पूर्वाषाढाख्ये नक्षत्रे ॥ जलति । ज
लमपवारयति। पचाद्यच्॥ ईशाने चा
पिपूर्वस्मिन्पश्चिमेचतथोत्तरे। शि
विरस्यजलं भद्रमन्यत्राशुभमेवच॥
जलकण्टकः।पुं।शृङ्गाटके॥कुम्भीरे॥
जलकपिः। पुं। शिशुमारे॥
जलकपोतः। पुं। जलपारावते॥
जलकरङ्कः। पुं।नारिकेलफले॥ अम्बुजे॥शङ्खे॥जललतायाम्॥मेघे॥
जलकल्कः। पुं। जम्बाले॥
जलकाकः। पुं। जलकौवा इति प्रसिद्धे दात्यूहे पक्षिणि। पानीकौडि
इतिगौडभाषा॥ स्निग्धंगुरुहिमंदृ
ष्यंमांसंजलपक्षिणान्तु वातहरम्॥
जलकाङ्क्षः। पुं। हस्तिनि॥
जलकाङ्क्षी। पुं। हस्तिनि॥ त्रि। जलाऽभिलाषिणि॥
जलकान्तारः। पुं। वरुणे॥
जलकामुकः। पुं। कुटुम्बिनीवृक्षे॥
जलकिराटः। पुं। ग्राहे॥
जलकुक्कुटः।पुं।कारण्डवखगे।मद्गौ॥
जलकुक्कुटी। स्त्री। गङ्गाचिल्ल्याम्॥
जलकुक्कुभः। पुं।कोयष्टिखगे। कोडा



पाखी इति गौडभाषा॥
जलकुन्तलः। पुं। शैवाले॥
जलकुब्जकः। पुं। पङ्कारे॥
जलकूपी। स्त्री। कूपगर्त्ते॥ पुष्करिण्याम्॥
जलकूर्म्मः। पुं। शिशुमारे॥
जलकेशः। पुं। शैवाले॥
जलक्रीडा। स्त्री। नद्यादौवयस्यादिभिः सहजलैः क्षेपादिरूपायां खेलायाम्। व्याख्याम्। करपक्षिकायाम्॥ परितापिषु वासरेषु पश्यं स्फटलेखास्थितमात्तसौम्यकम्। सुविशोधितनक्रमीनजालं व्यवगाहेत जलं सुहृत्समेतः॥
जलगुल्मः। पुं। जलावर्त्ते॥ कच्छपे। कमठे॥ जलचत्वरे॥
जलङ्कः। पुं। ओषधिविशेषे। महाकाले॥
जलचत्वरम्। न। चहर इतिख्याते जलगुल्मे। चातरजल इति गौडभाषा॥
जलचरः। पुं। ग्राहादियादसु॥ जले चरति। चर०। चरेष्टः॥
जलचारी। पुं। मत्स्ये॥ त्रि। जलचरमात्रे॥
जलजः। पुं। हिज्जलवृक्षे॥ शैवले॥ वानीरवृक्षे॥ शङ्खे॥ कुपीलौ॥क

क्रिमीनैाल जलजावन्त्याद्दूं मकर स्यचेति प्रसिद्दरासिषु ॥ मत्स्य ॥ न । पद्मे ॥ शङ्खे ॥ चारविशेषे । स्त्रो त्वारे ॥ त्रि । जलजाते ॥ जलेजात: । जनी० । ड: ॥

जलजन्तु: । पुं । यादसि ॥ जलानां जन्तु: ॥

जलजन्तुका । स्त्री । जलौकायाम् ॥

जलजन्म । न । पद्मे ॥ जले जन्मास्य ॥

जलजम्बूका । स्त्री । चुद्रजम्बाम् । भुजिजामन वनजामन इतिचभाषा ॥

जलजिह्व: । पुं । नक्रे ॥

जलडिम्ब: । पुं । शम्बूके । संखुला इति भाषा ॥

जलतण्डुलीय: । पुं । कच्छटे ॥

जलतापिक: । पुं । इल्लीशमत्स्ये ॥ काकचीमत्स्ये ॥

जलतापी । पुं । जलतापिके ॥

जलताल: । पुं । इल्लीशे ॥

जलतिक्तिका । स्त्री । शल्लकीवृक्षे ॥

जलत्रा । स्त्री । छत्रे । जङ्गमकुट्याम् ॥

जलद: । पुं । मुस्तके ॥ मेघे ॥ त्रि । जलदानकर्त्तरि ॥ जलंददाति । डुदाञ्० । आतोनुपेतिक: ॥

जलदागम: । पुं वर्षाकाले ॥

जलदाशन: । पुं । शालवृक्षे ॥

जलदुर्गम् । न । अब्दुर्गे ॥

जलद्राची । स्त्री । शालिञ्च्याम् ॥

जलद्रोणी । स्त्री । नौकाया: सेकभाजने । अवगाहे ॥

जलधर: । पुं । मेघे ॥ मुस्तके ॥ तिनिशवृक्षे ॥ समुद्रे ॥ त्रि । जलधारिणि ॥ जलस्यधर: ॥

जलधरमाला । स्त्री । मेघपङ्क्तौ ॥ जगतीसंज्ञकद्वादशाक्षरावृत्तभेदे । मोभस्मौचेज्जलधरमालाब्ध्यङ्कै: ॥ याभक्तानां कलिदुरितोत्तप्तानां तापच्छेदेजलधरमालानव्या । भव्याकाराद्दिनकरपुत्रीकूले केलीलोलाहरितनुरव्यात् साव: ॥

जलधरमालाकाल: । पुं । वर्षाकाले ॥

जलधि: । पुं । समुद्रे । रसमात्राया अविशेषात् चारोदादिसप्तसु ॥ तेच । चारोदेचुरसोदसुरोदघृतोदचीरोददधिमण्डोदशुद्धोदा: सप्तद्वीपपरिखा इवाभ्यन्तरद्वीपसमाना एकैकश्येन यथानुपूर्वं सप्तस्वपिवहिर्द्वीपेषु पृथक् परितउपकल्पिता: ॥ जलानिधीयन्ते ऽत्र । डुधाञ्० । कर्मण्यधिकरणेचेतिकि: । आकारलोप: ॥ दशशङ्कसङ्ख्यायाम् । शतलक्षकोटिषु १०००००००००००००० ॥

जलधिगा । स्त्री । नद्याम् । सरिति ॥ जलधिं गच्छति । गम्लृ० । ड: ॥

जलधिजा । स्त्री । लक्ष्म्याम् ॥ जलधौ जाता । सप्तम्यां जनेर्डः ॥ चि । अब्धि जमाचे ॥

जलधेनुः । स्त्री । दानार्थकृत्रिमधेनौ ॥

जलनकुलः । पुं । उद्रे । जलमार्जारे । उद्‌विलाव इति भाषा । धाडिया इति गौडभाषा ॥

जलनिधिः । पुं । उदन्वति । समुद्रे ॥ जलानि नितरां धीयन्तेऽत्र । कर्मण्यधिकरणे चेतिधाञः किः ॥ जलानां निधिरितिवा । नेरुपसर्गस्योपसर्गान्तर निवृत्त्यर्थमुपादानम् ॥

जलनिर्गमः । पुं । भ्रमे । अम्बुमार्गे ॥ प्राकारगृहभित्त्यादिषु जलनिःसरणजालके ॥ नद्यादावधःस्थस्यजलस्योर्द्ध्वनिस्सरणे ॥ निर्गमनम् । गम्लृ० । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥ निर्गम्यतेऽनेनवा करणे खनोघचेतिघः । जलानां निर्गमः ॥

जलमौलिका । स्त्री । शैवाले ॥ स्वार्थेकन् । ह्रस्वः ॥

जलनीली । स्त्री । शैवाले ॥ जलंनीलयति । णीलवर्णे । णिच् । कर्मण्यण् ॥

जलन्धरः । पुं । असुरविशेषे ॥

जलपतिः । पुं । वरुणे । दैत्यदेवे ॥ समुद्रे ॥



जलपवित्रम् । न । संन्यासिनांत्रिदण्डवद्धवस्त्रे ॥ तच्चवितस्तिमात्रं शुक्लवस्त्रं सर्वदाचमनादौ जलशोधनार्थंच तच्चकोणद्वयं त्रिकोणादौरंवा भवति ॥

जलपारावतः । पुं । कोपिनि । जलकपोते ॥

जलपित्तम् । न । वह्नौ ॥ जलानां पित्तमिव दाहकत्वात् ॥

जलपिप्पली । स्त्री । जलपीपर इति भाषाप्रसिद्धे पिप्पलीविशेषे । शारदी इत्याम् । शारद्याम् ॥ जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः । संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा ॥ कटुपाकरसा रुच्याकषाया वह्निवर्द्धिनी ॥ जलस्य पिप्पलीव ॥

जलपृष्ठजम् । न । शैवाले ॥

जलप्रायम् । न । अनूपे ॥ जलंप्रायंयत्र ॥

जलप्रियः । पुं । चातके ॥ मत्स्ये ॥

जलप्लवः । पुं । उद्रे । जलनकुले ॥

जलफलम् । न । शृङ्गाटके ॥

जलरन्ध्रकः । पुं । जलमध्यगे स्रोतोभेदकरे दारुशिलादौ । विदारके । कूपके ॥

जलबन्धुः । पुं । मीने ॥

जलबुद्बुदम् । न । जलविम्बे । वुलवुला बुदबुदा इतिच भाषा ॥ यथा ।

मानुष्येकदलीस्तम्भनिस्सारे सारमार्गणम् । यः करोति स वैमूढोजलबुद्बुदसन्निभे ॥

जलब्रह्मी । स्त्री । हिलमोच्याम् ॥

जलभूः । पुं । मेघे ॥ जलपिप्पल्याम् ॥

जलमक्षिका । स्त्री । वारिकूर्मी ॥

जलमद्गुः । पुं । मत्स्यरङ्गविहङ्गमे ॥

जलमधूकः । पुं । जलमहुआ इतिख्याते मधूकवृक्षप्रभेदे । दीर्घपत्रे । मङ्गल्ये ॥

जलमसिः । पुं । मेघे ॥ इतिहारावली ॥

जलमार्गः । पुं । प्रणालके । प्रणाल्याम् । पनाला पनारा इतिच ख्याते ॥

जलमार्ज्जारः । पुं । जलनकुले ॥

जलमुक्-ग् । पुं । धूमयोनौ । मेघे ॥ जलं मुञ्चति । मुच्लृ मोचणे । क्विप् ॥

जलमूर्त्तिः । पुं । शिवे ॥ जलं मूर्त्तिर्यस्य ॥ स्त्री । करकायाम् ॥ जलस्य मूर्त्तिः ॥

जलमोदम् । न । उशीरे ॥

जलयन्त्रम् । न । फुहारा इतिख्याते धारायन्त्रे ॥

जलयन्त्रगृहम् । न । जलमध्यकृतगृहे । जलभवने । जलमहल इति भाषा ॥ समुद्रगृहे । फुहारेकाघरइतिभाषा ॥

जलयन्त्रनिकेतनम् । न । जलयन्त्रगृहे ॥

जलयन्त्रमन्दिरम् । न । समुद्रगृहे । फुहारेकाघरइतिभाषा ॥

जलरङ्कः । पुं ।
जलरङ्कुः । पुं । } दात्यूहपक्षिणि ॥
जलरङ्गः । पुं ।

जलरण्डः । पुं । जलकण्डे ॥ इतिहैमः ॥

जलरसः । पुं । लवणे ॥

जलरुण्डः । पुं । जलावर्त्ते ॥ पयोरेणौ ॥ भुजङ्गमे ॥ इतिमेदिनी ॥

जलरुट्-ड् । पुं । पद्मे ॥

जलरुहम् । न । पद्मे ॥ जले रोहति । रुह० । इगुपधेतिकः ॥

जलरूपः । पुं । मकरे ॥ इतित्रिकाण्डशेषः ॥

जललता । स्त्री । तरङ्गे ॥ इतिहारावली ॥

जलवरराटः । पुं । जलवसन्ताख्यव्रणे । रोगे ॥ पानीवसन्त इतिगौडभाषा ॥

जलवल्कलः । पुं । कुटणे । कुम्भिकायाम् ॥

जलवल्ली । स्त्री । शृङ्गाटके ॥

जलवानीरः । पुं । अम्बुवेतसे ॥ जले जातोवानीरः । शाकपार्थिवादिः ॥

जलवायसः । पुं । मद्गुपक्षिणि ॥

जलवालकः । पुं । विन्ध्यपर्वते ॥

जलवालिका । स्त्री । विद्युति ॥

जलवासः । पुं । विष्णुकन्दे ॥ न । उशीरे ॥

जलवाहः । पुं । मेघ ॥ जलंवहति । वहेः कर्मण्यण् ॥

जलवाहकः । पुं । महिषे । लुलापे ॥ जलस्य वाहकः ॥

जलविडालः । पुं । जलनकुले ॥

जलविन्दुजा । स्त्री । यावनालीशर्करायाम् ॥

जलबिल्वः । पुं । कर्कटे ॥ पञ्चाङ्ग ॥ जलचत्वरे । चातरजल इति गौड भाषा । चद्दर इतिभाषा ॥

जलविषुवम् । न । आश्विनचिह्निते । तुलासङ्क्रान्तौ ॥ ज्योतिर्विदां चक्रविशेषे ॥

जलविहङ्गमः । पुं । सलिलकुक्कुटकारण्डवकलहंसादिषु ॥

जलवृश्चिकः । पुं । चिङ्गटमत्स्ये ॥

जलवेतसः । पुं । परिव्याधे । वानीरवृक्षे ॥ जलेजातोवेतसः । शाकपार्थिवादिः । जलजोवेतसः शीतःसङ्ग्राहीवातकोपनः ॥

जलव्यधः । पुं । कङ्कोटमत्स्ये ॥

जलव्यालः । पुं । अलगर्द्दसर्पे । अलाध इतिभाषा ॥ जलस्थो व्यालः ॥ क्रूरकर्म्मणि जलजन्तौ ॥

जलशयः । पुं । विष्णौ ॥ शेते ऽस्मिन् । पुंसीतिशीङोघः । जलेशयः शय्याऽस्य ॥

जलशयनः । पुं । विष्णौ ॥ जलेशयनं यस्य ॥

जलशायी । पुं । नारायणे ॥

जलशुक्तिः । स्त्री । शम्बूके ॥

जलशूकम् । न । शैवाले ॥

जलशूकरः । पुं । कुम्भीरे ॥

जलसर्पिणी । स्त्री । जलौकायाम् ॥

जलसूचिः । पुं । कङ्कोटिमत्स्ये ॥ शृङ्गाटके ॥ शिशुमारे ॥ काके ॥ स्त्री । जलौकायाम् ॥

जलस्तम्भनम् । न । मन्त्रादिना जलगतिवारणे ॥

जलस्था । स्त्री । गण्डदूर्वायाम् ॥

जलहम् । न । स्वल्पजलयन्त्रगृहे ॥

जलहरणम् । न । मात्रावृत्तप्रभेदे ॥ यथा । लघुगुरुकनियमगत मिह फणिपतिमत मवगत मतिसुखनिगदपदम् दशवसुभुवने र्यति रिह यदि भवतिहि रसिकजन हृदयविहितमदम् । वसुविमलचतुष्कलगणाकृत गणिगणचरणविरामाहितसगणम्- क्वचिदपि गुरुसहितं भवति कृतिहितं छन्दः सुन्दरि जलहरणम् ॥ यथा ॥ उपगम्य निभृततर मभिनवजलधर सुभगसुदर्शनचक्रधरम्- सखिकथयहृदयरुज मुरगराजभुजममलकमलदलनयनवरम् । अति

कुटिलकठिनहठ मपनय मयि शठ दर्शन मपि न ददासि चिरा द्दचि राङ्गलतासदृशीनवयौवनकान्ति र चिरमिहरुचिरतरा ॥

जलहस्ती । पुं । ग्राहाख्ययादसि ॥

जलहासः । पुं । समुद्रफेने । फेने ॥ इ तिचिकाण्डशेषः ॥

जलाकाशः । पुं । जलस्थाकाशे ॥ यथा । घटावच्छिन्नखे नीरं यत् तत्र प्रति विम्बितः । साभ्रनक्षत्र आकाशो ज लाकाशउदीर्यते ॥

जलाची । स्त्री । जलपिप्पल्याम् ॥

जलाखुः । पुं । जलप्लवे ॥

जलाच्चलम् । न । स्वतोवारिनिर्गमे ॥ शैवाले ॥

जलाटनः । पुं । लोहपृष्ठे । कङ्कखगे ॥

जलाटनी । स्त्री । जलौकायाम् ॥

जलाण्टकः । पुं । नक्रराजे । हांगर-इतिभाषा ॥ न । पोताधाने ॥

जलात्मिका । स्त्री । जलौकायाम् ॥

जलाधारः । पुं । तडागादिजलाशये ॥ जलपात्रे । आध्रियते ऽस्मिन् । धृङ् अवस्थाने । अध्यायन्यायोद्यावेस्यत्र अवहाराधारावायानामुपसंख्यानाद् घञ् । जलस्य आधारः ॥

जलाधिदैवतः । पुं । न । वरुणे ॥ न । पूर्वाषाढानक्षत्रे ॥

जलाम्बिका । स्त्री । कूपे ॥

जलायुका । स्त्री । जलौकायाम् ॥ जल मस्याः आयुः इत्यर्थे पृषोदरादित्वा त् साधुः ॥

जलार्णवः । पुं । वर्षाकाले ॥ जलस मुद्रे ॥

जलार्द्रः । पुं । आर्द्रवस्त्रे ॥

जलार्द्रा । स्त्री । याज्ञिकानां व्यजनवि शेषे । धुविचे ॥ धुविन्नंतालवृन्तंस्या दुतचेपव्यजनच्चतत् । जलेनार्द्रं ज लार्द्रास्यादिति वैजयन्ती ॥ क्लिन्न-वस्त्रे ॥

जलालुः । पुं । पानीयालौ ॥

जलालुकम् । न । पद्मकन्दे ॥

जलालुका । स्त्री । जलौकायाम् ॥

जलालूकम् । न । शालूके । पद्मादिक न्दे । मृणालमूले ॥

जलालोका । स्त्री । जलौकायाम् ॥

जलावर्त्तः । पुं । अम्भसाम्भ्रमे । जल-गुल्मे ॥

जलाशयः । पुं । तडागादिजलाधारे ॥ शृङ्गाटके ॥ समुद्रे ॥ न । उशीरे ॥ लामज्जके ॥ चि । जडाशये ॥ जल माशयो हृदय मस्य ॥ जलमाशेते तिष्ठत्यत्रवा । पुंसीतिघः ॥ जलेष्वा शेते वा । अच् ॥

जलाशया । स्त्री । गुण्डालाहृचे ॥

जलाश्रयः । पुं । वृत्तगुण्डतृणे ॥

जलाश्रया । स्त्री । शूलीतृणे ॥ जला-
कायाम् ॥

जलाष्ठीला । स्त्री । पुष्करिण्याम् ॥

जलाह्वयम् । न । उत्पले ॥

जलूका । स्त्री । जलौकायाम् ॥

जलेचरः । पुं । हंसमद्गुवकादिजलच
रपक्षिणि ॥ जले चरति । चरेष्टः ।
तत्पुरुषेकृतीत्यलुक् ॥

जलेच्छया । स्त्री । हस्तिशुण्डावृक्षे ॥

जलेजातम् । न । पद्मे ॥

जलेन्द्रः । पुं । वरुणे ॥ जम्भले । पूर्वेय
क्षे ॥ महोदधौ ॥ जलाना मिन्द्रः ॥

जलेन्धनः । पुं । वाडवाग्नौ ॥ न । सौ
रविद्युदादितेजसि ॥

जलेरुहा । स्त्री । कुटुम्बिनीवृक्षे ॥

जलेवाहः । पुं । डूबाइति गोताखोर
इतिचख्याते जाति विशेषे ॥ यथा । ज
लेवाहा नयाहूय वरुणस्त्र न्ययोज-
यत् । तत्कृत्वा परमं यत्न माप रा
रत्नं न तत् । इति पाद्मे पातालख
ण्डम् ॥

जलेशयः । पुं । मत्स्ये ॥ जले शेते । शी
ङ् ० । अधिकरणेशेतेरित्यच् । शय
वासेत्यलुक् ॥

जलेश्वरः । पुं । वरुणे ॥ समुद्रे ॥ जला
नामीश्वरः ॥

जलोका । स्त्री । जलौकायाम् ॥

जलोच्छ्वासः । पुं । परीवाहे । प्रवृद्धजल
स्य निर्गममार्गे । समधिकजलस्य सर्व
तो वहने वा । समधिकजलस्योपाये
निष्कासने वा ॥ जलानि उच्छ्वसन्त्ये
भिः । श्वसप्राणने । हलश्चेति घञ् ॥
जलानामुच्छ्वसनं वा । भावे घञ् ॥

जलोदरम् । न । जठरामये ॥ तस्य-
निदानादि यथा । यः स्नेहपीतो-
ऽप्यनुवासितो वा वान्तो विरिक्तो
ऽप्यथवानिरूढः । पिबेज्जलं शीतल-
माशु तस्य स्रोतांसि दूष्यन्ति हि त-
द्वहानि ॥ स्नेहोपलिप्तेष्वथवापितेषु
दकोदरं पूर्ववदभ्युपैति । स्निग्धं म-
हत् तत्परिवृत्तनाभिसमाततं पू-
र्णं मिवाम्बुनाच ॥ यथादृतिःक्षुभ्य
ति कम्पतेच शब्दायतेचापिदकोद
रन्तत् । जन्मनैवोदरं सर्वं प्रायः कृ
च्छ्रतमंमतम् । बलिनस्तदजाताम्बु
यत्नसाध्यं नवोत्थितमिति ॥

जलोद्धतगतिः । स्त्री । द्वादशाक्षराया
जगत्याः प्रभेदे ॥ यथा । जसौ जस
युतौ जलोद्धतगतिः । यथा । यदीय
हलतो विलोक्य विपदङ् कलिन्दत
नया जलोद्धतगतिः । विलासविपिनं
विवेश सहसा करोतु कुशलं हली
स जगताम् ॥

जलोद्भवा । स्त्री । लघुब्राह्म्याम् ॥

जलोद्भूता । स्त्री । गुण्डालाबुपे ॥

जलोरगी । स्त्री । जलौकायाम् ॥

जलौकाः । स्त्री । जलौकायाम् ॥ जल मोकः स्थान मस्याः । ओकस् सान्त म् प्रसिद्धम् ॥

जलौकसः । स्त्री । भूम्नि । रक्तपायाम् ॥ जलमोकः स्थानमासाम् । सान्तोयं बहुवचनान्त इत्यमरः ॥ जलोरगी जलौकातु जलौकाच जलौकसीति संसारावर्त्ता बहुवचनं प्रायिकमिति वदन्ति ॥

जलौकसः । पुं । रक्तपायाम् ॥ जलमोकोऽस्यास्ति । अर्श आद्यच् । जलौकसे नेव रक्ताकृष्टिनिपुणेन वेश्याजनेनेति वासवदत्ता ॥

जलौका । स्त्री । जलोरग्याम् । रक्तपायाम् ॥ * ॥ अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः ॥ * ॥ नृपाढ्यबालस्थविरभीरुदुर्ब्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः । तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालाबुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्व्वाणिसर्व्वैर्व्वा ॥ * ॥ भवन्ति चात्र ॥ उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम् । तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ शीताधिवासा मधुरा जलौका वारिसम्भवा तस्मात् पित्तोपसृष्टे तु हिता सात्ववसेचने ॥ अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् । तस्माच्च श्लेष्मोपसृष्टे तु हितंतदवसेचने ॥ * ॥ तच प्रच्छितेतनुवस्त्रपटलावनद्धेन शृङ्गेण शोणित मवसेचयेदाचूषणात् । सान्तर्दीपयाऽलाब्वा ॥ * ॥ अथ जलायुका वक्ष्यन्ते । जलमासामायुरितिजलायुकाजलमासामोक इति जलौकसः । ताद्वादश तासां सविषाः षट् । तावन्त्यएव निर्विषाः । तत्र सविषाः । कृष्णा कर्बुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा । वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा । रोमशा महापार्श्वा कृष्णमुखा अलगर्द्दा । इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरोदाहश्छर्द्दिर्मदः सदनमि

अलौका

ति लिङ्गानि भवन्ति । तत्र महागदः पानालेपनस्यकर्म्मादिषु प्रयोज्यः । इन्द्रायुधादष्ट मसाध्यमित्येताः सविषाः सचिकित्सिताव्याख्याताः ॥ * ॥ अथ निर्विषाः । कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिकाचेति ॥ * ॥ तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धामुद्गवर्णा कपिला । किञ्चिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगाच पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यमुखी पुण्डरीकमुखी । स्निग्धपद्मपत्रवर्णाऽष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे ॥ इत्यविषाव्याख्याताः ॥ तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि । तेषु महाशरीरा बलवन्त्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति ॥ तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः । पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेष्वम्भःसु च निर्विषाः ॥ * ॥ भवति चात्र ॥ क्षेत्रेषु विचरन्त्येता

अलौका

सलिलेषु सुगन्धिषु । न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥ * ॥ तासां ग्रहणमार्द्रचर्म्मणाऽन्यैर्वा प्रयोगैर्गृह्णीयात् । अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात् । भक्ष्यार्थं चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य निदध्यात् । स्वापार्थं तृणमौदकानिच पत्राणि । त्र्यहात् त्र्यहाच्चान्यज्जलं भक्ष्यंच दद्यात् सप्तरात्रात् सप्तरात्राच्चघटमन्यं संक्रामयेत् ॥ * ॥ भवतिचात्र ॥ स्थूलमध्याःपरिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः । अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः ॥ अथ अलौकोऽवसेकसाध्यव्याधितमुपवेश्य संविवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलशरावमध्ये मुहूर्त्तं स्थिताविगतक्लमा ज्ञात्वा ताभीरोगं ग्राहयेत् । श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात् । अगृह्णन्त्यै चीरबिन्दुं शोणितबिन्दुं वा दद्यात् शस्त्रपदानि वा कुर्वीत यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृ

च्छातीति गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां धारयेत्सेचयेच्च। दंशे तोदकण्डूप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति शुद्धमाददानामपनयेत्। अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत्। अथपतितां तण्डुलकण्डन प्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैः शनैरनुलोममनुमार्जयेत् तां मुखाद्वामयेत् यावत्सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्वान्ता तां पुनः सम्यग्वामयेत्। दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम गदो भवति। अथ सुवान्तां तां पूर्ववत्सन्निदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौकाव्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेत् बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति। भवति चात्र ॥ क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणं। जलौकसाञ्च यो वेत्ति तत्साध्यान्स जयेद्गदान् ॥ इति सुश्रुते सूत्रस्थाने * १३ ऽध्यायः ॥ जलमोको ऽस्याः । ओकच्च:के

इति निपातनादोकोऽदन्तः। टाप् ॥

जल्पः। पुं। विजिगीषुवचने। स्वपक्षस्थापनपरपक्षदूषणवत्यां विजिगीषुकथायाम् ॥ यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। न्यायसूत्राम् १। ४२ ॥ यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः। मध्यमपदलोपीसमासः ॥ भाषणे ॥ वादे ॥ जल्पनम्। जल्पव्यक्तायां वाचि। घञ् ॥

जल्पकः। त्रि। वहुभाषिणि ॥ जल्पति। जल्प०। ण्वुल् ॥

जल्पन्। त्रि। व्याहरति ॥

जल्पनम्। न। कथने ॥ किं मिथ्याशत जल्पनेन सततं रे वक्र रामं वद ॥ त्रि। वहुभाषिणि ॥ जल्पति। जल्प०। नन्द्यादित्वाल्ल्युः ॥

जल्पाकः। त्रि। वाचाले। वहुकुत्सितभाषिणि ॥ जल्पति। जल्प०। तच्छीलः। जल्पभिक्षेति षाकन्। षित्त्वात् स्त्रियां जल्पाकी ॥

जल्पितः। त्रि। उक्ते। कथिते ॥ जल्प्यते स्म। जल्प०। क्तः ॥ न। कथने ॥

जवः। पुं। वेगे ॥ त्रि। वेगवति ॥ जु इति सौत्रो धातुः। जवनम्। ऋदोरप् ॥ न। सवेगगतिवचने ॥ वेगाख्यगुणे ॥

जवनः । पुं ॥ वेगिद्रव्ये ॥ जवनोजः । जु इति सौत्रो गतौ वेगेच । जुचङ् क्रम्येतियुच् ॥ तुरुनाम इति जन प्रसिद्धे देशे ॥ म्लेच्छजातिविशेषे । जवनदेशोद्भवे प्रथमतःक्षत्रिये प-श्चाद्विहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये ॥ सगरोऽस्य सर्वशिरोमुण्डनं सर्वधर्मबहिष्कृतत्वञ्च चकार ॥ श्रीकारीमृगे ॥ घोटके ॥ न । वेगे । स्यदे ॥ त्रि । वेगिनि ॥

जवनालम् । न । जुन्हरी जुवार इतिच प्रसिद्धे धान्ये ॥

जवनिका । स्त्री । कनात चिक सिरकी इत्यादिभाषाप्रसिद्धे व्यवधायकवस्त्रादौ । प्रतिसीरायाम् । तिरस्करिण्याम् । व्यवधानपट्याम् ॥ जवन्त्यनयाम् । जु० । ल्युट् । कन् ॥

जवनी । स्त्री । अपट्याम् ॥ औषधीभेदे ॥

जवसम् । न । घासे ॥ इतिशब्दरत्नावली ॥

जवा । स्त्री । ओड्रपुष्पे ॥ ओडहले ॥ जवति । जु० । अच् । टाप् ॥ मरुप्रसिद्धे चद्रजन्तुविशेषे ॥

जवादि । न । सुगन्धिद्रव्यविशेषे । गन्धराजे । कृत्रिमे । मृगधर्मजे ॥ जवादि नीरसं स्निग्धं शीतपित्तं सुगन्धदम् । आतपेबहुलामोदं राज्ञां योग्यञ्चतन्मतमितिलक्षणाम् ॥

जवाधिकः । पुं । जवने । वेगाधिकद्रव्ये ॥ जवेन अधिकः ॥ त्रि । अतिशयवेगवति ॥

जवापुष्पम् । न । ओड्रपुष्पे ॥ जवाऽख्यमस्य ॥

जवी । त्रि । वेगवति ॥ जवोऽस्यास्ति । इनिः ॥ उष्ट्रे ॥ घोटके ॥

जविष्ठः । त्रि । अतिवेगवति ॥ अतिशयेन जववान् । अतिशायने इष्ठन् । विन्मतोर्लुगिति मतुपोलुक् ॥

जवीयः । त्रि । जववत्तरे ॥ मत्वन्तादीयसुनि मतुपोलुक् ॥

जसुरिः । पुं । वज्रे ॥ जस्यति । जसुमोक्षे । जसिसहोरुरिन् । जसुरये श्नाप्नाय जसुरिं युधित मितिवेदभाष्यम् ॥

जहकः । पुं । काले ॥ त्राले ॥ निर्मोके ॥ निर्मोके ॥ जहाति । ओहाक्० । जहातेर्द्वेचेतिकुन् ॥ त्रि । त्यागिनि ॥

जहदजहल्लक्षणा । स्त्री । अंशान्तरपरित्यागेनांशान्तरलक्षणायाम् । भागत्यागलक्षणायाम् । वाच्यार्थैकदेशपरित्यागेनैकदेशवृत्तौ ॥ यथा । सोयंदेवदत्तः इतिवाक्ये सशब्दायं शब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेन अविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभाव

तत्सम्बन्धात्ति ॥

जहत्स्वार्था । स्त्री । वाच्यार्थं मशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरेऽप्रवृत्तिरूपायां लक्षणायाम् ॥ यथा । गङ्गायां घोषः प्रतिवसतीति वाक्ये गङ्गाघोषयो राधाराधेयभावलक्षणस्य वाक्यार्थस्या ऽशेषतोविरुद्धत्वात् वाच्यार्थमशेषं परित्यज्य तत् सम्बन्धितीरलक्षणाया युक्तत्वात् जहल्लक्षणासङ्गच्छते ॥

जहत्स्वार्था । स्त्री । जहल्लक्षणायाम् ॥ जहत्स्वार्थातुतत्रैव यत्रवृत्तिर्विरोधिनीत्युक्तेः ॥

जहा । स्त्री । मुण्डितिकायाम् ॥

जहानकः । पुं । प्रलये ॥ इति हेमचन्द्रः ॥

जहुः । पुं । अपत्ये ॥ यथा । मृगजहुना मृगापत्येनेति श्रीधरस्वामी ॥

जह्नुः । पुं । चन्द्रवंशोद्भवेकुरुराजपूर्वे ॥ गङ्गाऽऽगमनकाले येन गङ्गा पीता पुनर्भगीरथप्रार्थनया जङ्घं भित्वा-वहिर्निर्गमिता तेनसाजाह्नवीतिख्यातिमागता ॥ विष्णौ ॥ जनान् संहारसमये ऽपह्नुतेऽपनयति ।ह्नुङ् अपनयने । क्विप् ॥ जह्नाश्यविदुषः भक्तान् नयति परमिति वा ॥

जुहा । जहाति । ओहाक् त्यागे । बाहुलकाद्वित्वे ऽन्त्यलोपश्चेतिनुः ॥

जह्नुतनया । स्त्री । गङ्गायाम् ॥ जह्नोरात्मजेत्यमया ॥

जह्नुसप्तमी । स्त्री । वैशाखशुक्लसप्तम्याम् ॥ शुक्लपक्षस्य सप्तम्यां वैशाखे जह्नुपुत्रिकाम् । प्रपूजयेत् सुखार्थाय स्वर्गमोक्षफलायचेत्युक्तरकामाख्यातन्त्रे ११ पटलः ॥

जह्नुसुता । स्त्री । गङ्गायाम् ॥

जा । स्त्री । यातरि । भर्त्तृभ्रातृभार्यायाम् ॥ इत्येकाक्षरकोषः ॥

जागतः । पुं । प्रगाथविशेषे ॥ जगती आदिरस्य । सोस्यादिरितिच्छन्दसः प्रगाथेष्विस्यण् ॥ न । जगतीछन्दसि ॥ स्वार्थे ऽण् ॥

जागरः । पुं । जागरणे । कन्नः कारकस्य कृतसन्निकाशे ॥ जागृनिद्राक्षये । भावे घञ् ॥ जाग्रोविचीतिगुणः ॥

जागरणम् । न । जागरे । निद्राभावे ॥ प्रसितिजागरेजाग्रद् भ्रमः स्वप्नोऽयमूढता । पानाद्विजस्यासुप्तिः स्यादेवंजागरणं त्रिधा ॥ जागृ० । ल्युट् ॥

जागरा । स्त्री । जागर्यायाम् ॥ जागरणम् । स्त्रियामधिकारे जागर्त्तेरकारो वा । जाग्रोविचिण्णल्ङित्स्विति गुणः ॥

जागरितम् । न । इन्द्रियैरर्थोपलब्धौ ॥ स्वप्नदर्शनहेतुककर्मक्षये जागरित

मागच्छन् स्थोपाध्यन्तःकरणेन्द्रियसचिवस्तत्तदिन्द्रियविषयाननुमेयांश्चाभूतान् व्यावहारिकान् पदार्थाननुभवति तदिदमस्य जागरितमित्युक्तम् ॥ जागृ० । क्तः ॥

जागरितस्थानः । पुं । स्थूलप्रपञ्चितचैतन्ये विश्वशब्दवाच्ये ॥ जागरितं-स्थानमस्य ॥

जागरितान्तम् । न । जागरितमध्ये जागरितविषये ॥

जागरिता । त्रि । सजागरे । जागरूके ॥ जागरणशीलः । जागृ० । तृन् ॥

जागरी । त्रि । जागरूके ॥ जागरमस्यास्ति । इनिः ॥

जागरूकः । त्रि । अप्रमत्ते । सजागरे । जागरितरि । जागरणशीले ॥ जागरितच्छीलः । जागृ० । जागरूकरूपतिजागर्त्तिरूकः ॥

जागर्त्तिः । स्त्री । जागरणे ॥ स्त्रियां-क्तिन् ॥

जागर्य्या । स्त्री । जागरे ॥ जागरणम् । जागर्त्तेरकारोवेति पक्षेशः । यक् । जाग्रोविचीतिगुणः ॥

जागुडम् । न । कुङ्कुमे ॥ पुं । देशविशेषे ॥ तत्रत्यंकुङ्कुममत्युत्कृष्टंभवति ।

जागृत् । पुं । जागरणे ॥ जागृ० । क्विप्तुकौ ॥

जागृवान् । त्रि । जागरूके ॥

जागृविः । पुं । अग्नौ ॥ नृपे ॥ जागर्त्ति । जागृ० । जॄशॄस्तॄजागृभ्यः क्विन् ॥

जाग्रत् । त्रि । जागरणविशिष्टे ॥ स्त्री । जागरितावस्थायाम् ॥ यथा । श्रोत्रादिभिरिन्द्रियैः शब्दादिविषयं यदुपलभ्यते सा जाग्रदवस्था । साच त्रिधा । यथा । प्रमितिर्जागरे जाग्रत् भ्रमः स्वप्नोऽथमूढता । पानादिजन्यासुप्तिः स्यादेवं जागरणं त्रिधा ॥ जाग्रति । जागृ० । शतृ ॥

जाग्रिया । स्त्री । जागरणे ॥ जागरणम् । जागृ० । जागर्त्तेरकारोवेतिपक्षेशः । यक् । गुणात् परत्वेन रिङादेशइति धातुपारायणम् ॥

जाघनी । स्त्री । ऊरौ ॥ इतित्रिकाण्डशेषः ॥

जाङ्गलः । पुं । कपिञ्जले पक्षिणि ॥ स्वनामख्याते निर्जलदेशे ॥ आकाशशुभ्र उच्चश्च स्वल्पपानीयपादपः । शमीकरीरबिल्वार्कपीलुकर्कन्धुसङ्कुलः ॥ हरिणैणर्ष्यपृषतगोकर्णखरसङ्कुलः । सुस्वादुफलवान् देशो वातलो जाङ्गलः स्मृतः ॥ * ॥ मांसवर्गेऽत्र जङ्घाला बिलस्थाश्च गुहाशयाः । तथा पर्णमृगा श्चैव विष्किराः प्रतुदा अपि ॥ प्रसहा अम्बुचा

कारणाभावकल्पनात् गोपदस्य गोत्वविशिष्टे शक्तिरेवस्यादिति ॥ नित्यत्वे सत्यनेकसमवेतत्वं जातित्व मिति न्यायसिद्धान्तमुक्तावलिः- ॥ * ॥ गोत्वादौ ॥ तस्य लक्षणं यथा । आकृतिग्रहणाजाति र्लिङ्गानाञ्च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैःसह ॥ अस्यार्थः । आ क्रियते व्यज्यते ऽनयेति आकृतिःसंस्थानम् । गृह्यते ऽनेनेतिग्रहणंज्ञानम् । आकृत्याग्रहणं यस्याः सा आकृतिग्रहणा । जातिराकृतिग्रहणा भवति । संस्थानव्यङ्ग्येत्यर्थः । तेन मनुष्यगोमृगहंसादीनां पृथक् पृथक् संस्थानैर्व्यज्यमाना मनुष्यत्वगोत्वमृगत्वहंसत्वादि जातिः ॥ एवं ब्राह्मणक्षत्रियवैश्यशूद्राणां पृथक्संस्थानाभावत् ब्राह्मणत्वादेर्जातित्वं नायातमिति लक्षणान्तरमाह । लिङ्गानाञ्च न सर्वभागिति । या सर्वाणि लिङ्गानि नभजते साच जातिरित्यर्थः । स्त्रीपुंसयोरपत्यान्ताद्विचतुःषट्पदोरगाः । जाति भेदाः पुमाख्याश्चे त्यमरसिंहेजातिभेदानांस्त्रीपुंसयोरेवेतिनियमे ब्राह्मणादीनां सर्वलिङ्गभाजित्वा भावाज्जातित्वम् । किन्त्वज्ञातहंसस्य



जनस्य हंसं दृष्टवतोपि तस्य संस्थानेन हंसत्वंव्यञ्जितुं नशक्यते इति हंसस्यापिजातित्वं नायातमिति पूर्वलक्षणस्य दोषः । एवं देवदत्तादिसंज्ञाशब्दस्यापिसर्वलिङ्गभाजित्वा भावाज्जातित्वापत्तिरिति द्वितीयलक्षणस्यदोषः । इतिदोषद्वयमपाकर्त्तुं द्वयोर्लक्षणयोर्विशेषणमाह । सकृदाख्यातनिर्ग्राह्येति । सकृदेकवारमाख्यातेन उपदेशेन निर् निश्चयेन ग्राह्या ग्रहीतुं शक्या इत्यर्थः । तेन ईदृशोहंसइत्युपदेशे हंसंदृष्टवतस्तस्य संस्थानेन हंसत्वं व्यञ्जितुं शक्यतएवेति पूर्वलक्षणस्य नदोषः । एवं देवदत्तादिसंज्ञाशब्दस्यैकस्मिन्नुपदेशेपि अन्यस्मिन् ज्ञाना भावात् जातित्वं न स्यादिति परलक्षणस्यापि न दोषः । गार्ग्यः पुरुषः गार्गी स्त्री गार्ग्यं कुल मिति सर्वलिङ्गभाजित्वात् संस्थानव्यङ्ग्यत्वाभावाच्च गार्ग्यादीनां जातित्वानुपपत्तौ तृतीयलक्षणमाह । गोत्रञ्चेति । पुत्रपौत्रप्रभृतिकमपत्यं गोत्रमिति पूर्वाचार्यपरिभाषितं गोत्रमिहगृह्यते गार्गीवात्सीत्यादि । चतुर्थलक्षणमाह । चरणैः सहेति । चरणञ्जातिरित्यर्थः । चरणश

ब्दो वेदैकदेशवाची कठादिरूपः स च अध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियावाचक एव न तु जातिवाचकः । तेनास्य जातिसंज्ञार्थं चरणैः सहेत्युक्तम् गार्ग्यादीनां यञश्चेति ङीपि सिद्धेपि जातिसंज्ञाफलन्तु गार्गी भार्या यस्यासौ गार्गीभार्य इत्यादौ जातेश्चेति पुंवद्भावनिषेधः । गार्गी चासौ भार्या चेति गार्ग्यभार्या इत्यादौ पुंवत्कर्मधारयेति पुनः पुंवद्भावः ॥ * ॥ प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥ गोत्रञ्च चरणानि चेत्यपरस्य जातिलक्षणम् । यथा पूर्वं जातिलक्षणं तथा कुमारीभार्य इति भवितव्यम् । यथोत्तरं तथा कुमारभार्य इति इति भाष्यम् ॥ जननम् जनयति वा । जनी० । स्त्रियां क्तिन् । जनसनेत्यात्वम् ॥ * ॥ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । साधर्म्यवैधर्म्याभ्यामिति सावधारणो निर्देशः । तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः ॥ षड्जादिसप्तसु ॥ काव्यालङ्कारप्रभेदे ॥ घटत्वादिरूपा जातिर्हि घटादिशब्द इव प्रवृत्तौ निमित्तम् ॥

जातिकोषम् । न । जातीफले । जायफल इति भाषा ॥

जातिकोषी । स्त्री । जातीपत्र्याम् । जावित्री इति भाषा ॥

जातिधर्म्मः । पुं । ब्राह्मणत्वादिनिबन्धने अध्ययनाध्यापनादौ ॥ जातेर्धर्मः ॥

जातिफलम् । न । जातिकोषे ॥

जातिब्राह्मणः । पुं । तपःश्रुतविहीने विप्रे ॥ यथा । तपः श्रुतञ्च योनिश्च एतद्ब्राह्मणकारणम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः इति ॥ जात्या जन्मना ब्राह्मणः ॥

जातिभ्रंशकरम् । न । नवविधपातकान्तर्गते पातकविशेषे ॥ यथा । ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः । जैह्म्यञ्च मैथुनं पुंसि जातिभ्रंशकरं स्मृतमिति ॥

जातिवैरम् । न । स्वाभाविकशत्रुत्वे ॥ तत् पञ्चविधम् । स्त्रीकृतम् १ यथा श्रीकृष्णशिशुपालयोः ॥ वास्तुजम् २ यथा कौरवपाण्डवानाम् ॥ वाग्जम् ३ यथा द्रोणद्रुपदयोः ॥ सापत्नम् ४ यथा मूषिकनकुलयोः ॥ अपराधजम् ५ यथा पूजनीब्रह्मदत्तयोः । इति महाभारतम् ॥

जातिशस्यम् । न । } जातीफले ॥
जातिसारम् । न । }

जातिस्मरः । पुं । तीर्थविशेषे ॥ त्रि । पूर्वजन्मजातिस्मरणवति ॥

जाती । स्त्री । सुमनायाम् । सुमनसि । मालत्याम् । चमेली इतिभाषा ॥ तत्पुष्पे ॥ क्तिन्नन्तात् क्तिन्नन्ताद्वा ङीष् ॥ आस्याः पुष्पम् । पुष्पमूलेषु बहुलमित्यनुदात्तादेरञो ऽस्य लुक् ॥

जातीकोशम् । न । जायफल इतिप्रसिद्धे जातीफले ॥

जातीपत्री । स्त्री । सुमनः पत्रिकायाम् । जावित्री इतिभाषा ॥ जातीपत्री लघुः स्वादुः कटुष्णा रुचिवर्णकृत् । कफकासवमिश्वासतृष्णाकृमिविषापहा ॥

जातीफलम् । न । जातीकोषे ॥ जातीफलं रसेतिक्तं तीक्ष्णोष्णं रोचनं लघु । कटुकं दीपनं ग्राहि स्वर्यं श्लेष्मानिलापहम् ॥ निहन्ति मुखवैरस्यमलदौर्गन्ध्यकृष्णताः । कृमिकासवमिश्वासशोषपीनसहृद्रुजः ॥ जात्याः फलम् । जातीलतायाः फलं वा ॥

जातीयः । त्रि । जातौभवे ॥ वृद्धाच्छः ॥ प्रकारार्थबोधके तद्धितप्रत्ययविशेषे ॥ यथा । तार्किकप्रकारः । तार्किकजातीयः । प्रकारवचनेजातीयर् ॥

जातीरसम् । न । बोले ॥

जातु । अ । कदाचिदर्थे ॥ यथा । जातु जनो नैति सुखं कर्मबाहुल्यात् कर्मणैव याति सुखं ज्ञानपुरस्सरात् । ज्ञानरसं ब्रह्मरसं येन निपीतं क्षारभयं मारभयं तेनविगीतमिति ॥ ॥ सम्भवे ॥ विमर्शने ॥ अविकल्पे ॥ निषेधे ॥ जायति । जैमये । बाहुलकात् क्तुन ॥

जातुकम् । न । हिङ्गुनि ॥ इतिशब्दचन्द्रिका ॥

जातुधानः । पुं । राक्षसे ॥ जातु कदाचित् रक्षांस्याप्य धानं सन्निधानमस्य ॥

जातुषम् । त्रि । जतुनिर्मिते ॥ जतुनोविकारः । त्रपुजतुनोःषुगिति ॥

जातूकर्णः । पुं । ऋषिविशेषे ॥ वैद्यशास्त्रप्रवर्तके मुनिविशेषे ॥

जातेष्टिः । स्त्री । वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रेजातइतिजातकर्माणि विहितायामिष्ट्याम् ॥

जातोक्षः । पुं । दम्यवत्से । युवबृषे ॥ जातश्चा सा वुक्षा च । अचतुरेति साधुः ॥ उत्पन्न उक्षाजातोक्ष इत्यमरः । अत्र उत्पन्नोदृष्टदम्यभावःप्राप्तबलीवर्दभावोवार्थः ॥

जाघ्यः । त्रि । श्रेष्ठे । कुलीने ॥ कान्ते

॥ आत्तोभवः । यत् ॥

आत्यन्धः । त्रि । जन्मान्धे ॥

आत्माभासः । त्रि । मायोत्पन्ने रज्जुस पौदौ ॥ अजातिसत् आतिवदाभासते इतिविग्रहः ॥

आत्युत्तरम् । न । असदुत्तरे ॥

आनकी । स्त्री । सीतायाम् ॥

आनपदः । पुं । जने ॥ देशे ॥ त्रि । जनपदोत्पन्ने ॥ जनपदे भवः । उत्सादित्वादञ् ॥

आनपदी । स्त्री । जनपदोत्पन्नवृत्तौ ॥ आनपदात् इत्तौ वाच्यायां जानपदकुण्डेत्यादिना ङीष् ॥ अजन्यत्वेन टिड्ढेतिङीप्याद्युदात्तः ॥ जनपदप्रभवायाम् ॥

आमानः । त्रि । ज्ञानवति ॥

आनु । न । उरुजङ्घयोर्मध्यभागे । अष्ठीवति । घोंटु इति भाषा ॥ जायते । जनी० । दृसनिजनीतिञुण् । अनिवध्योश्चेति नप्रवर्त्तते अनुवन्धद्वयसामर्थ्यात् ॥

जानुकम् । न । जानुनि ॥ स्वार्थेयावादिभ्यःकन् ॥

आनुकारकः । पुं । रवेःपार्श्वगविशेषे ॥

आपः । पुं । जपे ॥ जपैर्भावेघञ् ॥

आपकः । त्रि । जपकर्त्तरि ॥ जपति । जपमानसे । ण्वुल् ॥

आपनम् । न । निरसने ॥ निर्वर्त्तने ॥

आवालः । पुं । सत्यकामेमुनौ ॥ जवालाया अपत्यम् । अण् ॥

आवालिः । पुं । मुनिविशेषे ॥

आमदग्न्यः । पुं । जमदग्निसुते । परशुरामे ॥ जमदग्नेर्गोत्रापत्यम् । गर्गादिभ्योयञ् इत्यनन्तरापत्येपि गोत्रत्वाध्यारोपात् यञ् । अनन्तरविवक्षायान्त्वण्यन्धकेत्यऽणि जामदग्न इतिबोध्यम् ॥

आमलम् । न । तन्त्रशास्त्रविशेषे । यामले ॥

आमाता । पुं । दुहितुःपत्यौ ॥ सूर्यावर्त्ते । सुलचिया इति गौडप्रसिद्धे शाके ॥ धवे । वल्लभे ॥ जायां माति मिमीते मिनोति वा । मा० । माङ्० । डुमिञ्० वा । नप्तृनेष्टृतिसाधुः ॥

आमिः । स्त्री । स्वसरि । भगिन्याम् ॥ कुलस्त्रियाम् ॥ दुहितरि ॥ स्नुषायाम् ॥ शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् । न शोचन्ति तु यत्रैता वर्द्धते तद्धिसर्वदेतिमनुः । ग्रहपतिसंवर्द्धनीयसन्निहितसपिण्डस्त्रियोजामयइतिकुल्लूकभट्टः ॥ जायति जायतेवा । जैक्षये । वाहुलकान्मिः ॥ यद्वा । जमति । अनु अदने । वाहुलकादिञ्दीर्घश्च-

॥ कर्मण्यग्जादिभ्यश्चतीम् वेति-
स्वामी ॥
जामिता । स्त्री । आलस्ये ॥
जामा । स्त्री । कुलयोषायाम् ॥ स्वसरि
॥ ङीष् ॥
जामेयः । पुं । भागिनेये ॥ जाम्याअप
त्यम् । स्त्रीभ्योढक् ॥
जाम्बवम् । न । जम्बूफले ॥ जम्ब्वाःफल
म् । जम्ब्वा वेत्यण् । तस्यविधानात्र
लुक् ॥ सुवर्णे ॥ कपिविशेषे ॥ नगर
विशेषे ॥
जाम्बवान् । पुं । ब्रह्मणःपुत्रे । रामाय
गादिप्रसिद्धपराक्रमे ऋक्षराजे ॥-
जाम्बवती । स्त्री । जाम्बवतोदुहितरि
श्रीकृष्णपत्न्याम् ॥ नागदमन्याम् ।
जाम्बवी । स्त्री । नागदमन्याम् ॥
जाम्बुवान् । पुं । जाम्बवति ॥
जाम्बूनदम् । न । स्वर्णे ॥ धुस्तूरे ॥ का
ञ्चनविशेषे ॥ यथा जाम्बूनदेनाम्ब
सदृशं लोहमस्तिचेत् । तथा चक्र-
कधर्मेणसमयोन्धः समोभवेदिति॥
समयः आचारः ॥ जम्बूरसस्य नद्यां
भवम् । तत्रभवइत्यण् ॥ तीरमृत्त
द्रसंप्राप्य सुखवायुविशोषिता । जा
म्बूनदाख्यं भवति सुवर्णं सिद्धभूषणा
म् ॥ तद्रसं जम्बूरसम् ॥ यथा मेरु
मन्दरपर्वतस्यजम्बूफलाना मत्युच

निपातविशीर्णाना मनस्थिप्रायाणा
मिभकायनिभानां रसेन जम्बूनाम
नदी इलावृतं वहति । तस्या उभ-
योस्तीरयो र्मृत्तिका जम्बूरसेनानु
विध्यमाना वाय्वर्कसंयोगविपाके-
न सदामरलोकाभरणं जाम्बूनदं-
नाम स्वर्णं भवति ॥ इति श्रीभाग
वतम् ॥
जम्बूनदेश्वरी । स्त्री । देवीविशेषे ॥
तत्स्थाने ॥
जायकम् । न । कालीयके । पीतवर्णे
सुगन्धिकाष्ठप्रभेदे । कालिया इति
गौडभाषा ॥ जयति गन्धान्तरम् ।
जिअभिभवे । ण्वुल् ॥
जायमानः । पुं । उपनीते ॥
जाया । स्त्री । विधिनाविवाहितायां
स्त्रियाम् । पत्न्याम् । द्वितीयायाम्
॥ जायतेऽस्याम् । अनो० । अनेस्यक् ।
येविभाषेत्यात्वम् । पतिर्भार्यां संप्र
विश्य गर्भोभूत्वेह जायते । जायाया
स्तद्धि जायात्वं यदस्यां जायते पुनः
॥ तस्मात् सप्तमभवने ॥
जायाघ्नः । त्रि । तिलकालकादिचिह्न-
॥ जायांहन्ति । हन० । अमनुष्यक
र्तृके चेतिटक् ॥ ङीपि जायाघ्नी ॥
जायाजीवः । पुं । नटे ॥ जाययाजीव
ति । जीव० । इगुपधेतिकः ॥

आयानुजीवी । पुं । नटे ॥ चक्रान्ति-
कि ॥ वेश्यापतौ ॥ दुःखे ॥
जायापती । पुं । द्विवचनान्तः । सहोक्त्या
भार्याभर्तारौ ॥ जायाच पतिश्च । रा
जदन्तादिषु निपातनमात् पूर्वनिपातः ॥
जायुः । पुं । औषधे ॥ जयति रोगान्
। जि० । कृवापाजिमिस्वदिसाध्यशू
भ्यउण् इत्युण् ॥
जारः । पुं । उपपतौ ॥ जरयति । जॄ०
। दारजारौकर्त्तरिणि लुक्चेति घञ्
। जीर्यतेऽनेनेति करणेवा घञ् ॥
जारजः । त्रि । विजन्मनि । अनियुक्ता
सुते ॥ जारात् जातः । जनी०डः ॥
जारणी । स्त्री । स्थूलजीरके ॥
जारद्गवी । स्त्री । मध्यममार्गे नक्षत्रवि
शेषाणां संज्ञाविशेषे ॥ यथा । ज्येष्ठा
नुराधाविशाखाश्चोर्भिजारद्गवीमता
। एतास्तृतीयपङ्क्तिस्था मध्यमेमार्गे
उच्यतइति ॥
जारितः । त्रि । शोषिते ॥
जारी । स्त्री । औषधीभेदे । जाडी
इतिगौडभाषा ॥
जालक्यः । पुं । त्रिमुखादित्रिशाकयत्ने ॥
जालः । पुं । नीपवृक्षे ॥ न । गवाक्षे ।
जाली इतिभाषा ॥ आनाये । सू
त्रादिनिर्मिते मत्स्यादिजन्तुरोधकव
स्तुनि ॥ क्षारके । पक्ष्यादिधारणार्थे
पाशे ॥ दम्भे ॥ वृन्दे । गर्वे ॥ इन्द्र-
जाले ॥ जलेक्षिप्यते । शेषत्वस्य ण् ॥
जलतिघनीभवति । जलघातने ।
ज्वलितीतिणः ॥ यद्वा । जालयति ।
जलसंवरणे । च० । पचाद्यच् ॥
जालकः । पुं । गवाक्षे ॥ न । कोरके ॥
दम्भे ॥ कुलाये ॥ आनाये ॥ न ।
स्त्री । मोचकफले ॥ नवकलिकाल-
न्दे । क्षारके ॥ समूहे ॥
जालकारः । त्रि । जालकर्त्तरि ॥
जालकारकः । पुं । मर्कटके । लूतायां
म् ॥ त्रि । जालकर्त्तरि ॥ जालस्य-
कारकः ॥
जालकिनी । स्त्री । मेष्याम् ॥
जालगर्दभः । पुं । रोगविशेषे ॥ तस्य
लक्षणं यथा । विसर्पवत् सर्पति यः
शोथस्तनुरपाकवान् । दाहज्वरकरः
पित्तात् सज्ञेयोजालगर्दभइति ॥
जालगोणिका । स्त्री । कराठालाशम् ॥
जालजीवी । पुं । धीवरे ॥
जालन्धरः । पुं । पीठविशेषे ॥ त्रिगर्त्तदे
शे ॥ पुंभूम्नि । जालन्धराः ॥ तद्देशस्थे
षु । त्रिगर्तेषु ॥
जालपात् । पुं । हंसे ॥
जालपादः । पुं । शरारिप्रभृतिपक्षि त्रि
शेषेषु ॥ जालाकारपादत्वादेषाम् ॥
जालप्राया । स्त्री । योद्धृणां लोहमय्या

मङ्गराजयाम् ॥

आलवर्बूरक: । पुं । बर्बूरकविशेषे । छाके ॥ आलवर्बूरको रूक्षो वातरोगकफापह: । पित्तदाहकर ग्राही ख: कषायश्च प्रकीर्तित: ॥

आलवान् । त्रि । मायाविनि ॥

आलिक: । पुं । वागुरिके । जालजीविनि ॥ लूतायाम् ॥ कैवर्त्ते ॥ त्रि । ग्राम जालिनि ॥ जालेन चरति । पर्पादिभ्यष्ठन् । ङीषि जालिकी ॥

जालिका । स्त्री । वस्त्रविशेषे ॥ स्त्रीणां मुखावरणवस्त्रे ॥ गिरिसारे ॥ जलौकायाम् ॥ विधवायाम् ॥ मटामांलौहरचिताङ्गरक्षिकायाम् । लोहकवचे ॥ चारके ॥

जालिनी । स्त्री । चित्रशालागृहे । चित्रशालायाम् ॥ कोषातक्याम् ॥ राजकोषातक्याम् । तोरणी इति यस्या: प्रसिद्धि: ॥

जाली । स्त्री । पटोलिकायाम् । तोरणी इति प्रसिद्धलतायाम् ॥ पटोले ॥ जलति । अल० । अजितीतिया: । जातेरिति गौरादित्वाद्धा ङीष् ॥

जाल्म: । पुं । पामरे ॥ क्रूरे ॥ असमीक्ष्यकारिणि ॥ जालयति जाल्यते वा । जलअपवारणे । बाहुलकान्मः । नैरुक्तिकास्तु ॥ जालं करोतिवा ॥

जावाल: । पुं । सत्यकामेमुनौ ॥ अजावालाया अपत्यम् । अण् ॥ अजाजीवे । छागजीविनि । गडरिया इतिभाषा ॥ जवमलतिबालाति वा । अल० । अण् वोधा । जबालो ऽजः तस्यायम् । अण् ॥

जाषकम् । न । कालीयनामगन्धद्रव्ये ॥ इतिसारसुन्दरी ॥

जाषी । पुं । ध्रुवकप्रभेदे ॥ जाषीतिनामा ध्रुवको द्विविंशत्यक्षराम्वित: । सन्निपातेन तालेन श्रृङ्गारे ऽभीष्टदैरसे ॥ नाम्न: शब्दोयम् ॥

जाहक: । पुं । घोङ्घ खगे । घोंघ इति भाषा ॥ मार्जारे ॥ खट्वायाम् ॥ कायस्थाम् । जलौकायाम् ॥ गात्रसङ्कोचिनिप्राणिविशेषे । कामरूपिणि । बिलवासे ॥

जाह्नवी । स्त्री । गङ्गायाम् । त्रिपथगायाम् ॥ जानुद्वारा पुरादत्ता अह्नु: सम्पीयकोपत: । तस्यकन्या स्वरूपा च जाह्नवी तेनकीर्त्तितेतिब्रह्मवैवर्त्तपुराणम् ॥ जह्नो रपत्यं स्त्री । अण् । ङीप् ॥

जाह्नवीय: । त्रि । गाङ्गे ॥ जाह्नव्याइदम् । तस्येदमित्यर्थे वृद्धाच्छ: ॥

जि: । पुं । पिशाचे ॥ त्रि । जेतरि ॥ इत्येकाक्षरकोष: ॥

जिगत्नुः । पुं । प्राणेषु ॥ जिगंसति । गत्नु० । गमेः सन्वच्चेतिक्नुः । अनुदात्तोपदेशेत्यादिना मलोपः ॥

जिगमिषा । स्त्री । गमनेच्छायाम् । गन्तुमिच्छायाम् ॥

जिगमिषुः । त्रि । गन्तुमिच्छौ ॥

जिगीषा । स्त्री । जेतुमिच्छायाम् । जयस्पृहायाम् ॥ जेतुमिच्छति जिगीषति । जिगीषतीति जिगीषा । अप्रत्ययात् । टाप् ॥ व्यवसाये ॥ प्रकर्षे ॥

जिगीषुः । त्रि । जयेच्छौ । जेतुमिच्छौ । नित्योत्साहवति ॥

जिघत्सा । स्त्री । क्षुधायाम् । बुभुक्षायाम् ॥ अत्तुमिच्छा घस्तुमिच्छा वा । अदेः सन्नन्तादप्रत्ययः । लुङ्सनो र्घस्लृ इति घस्लादेशः ॥

जिघत्सुः । त्रि । क्षुधार्त्ते । वुभुक्षिते ॥ अत्तुमिच्छुः । अदेः सनि लुङ्सनोर्घस्लृ । ततः सनाशंसेत्युः ॥

जिघांसकः । त्रि । हननेच्छुके ॥

जिघांसा । स्त्री । हननेच्छायाम् ॥ हन्तुमिच्छेत्यर्थः ॥

जिघांसुः । पुं । शत्रौ ॥ त्रि । हन्तुमिच्छौ ॥ हन्तेः सन्नन्तादुप्रत्ययः । अभ्यासाच्चेतिकुत्वम् । अज्झनगमांसनीतिदीर्घः ॥

जिघृक्षा । स्त्री । गृहीतुमिच्छायाम् ॥

जिघृक्षुः । त्रि । गृहीतुमिच्छौ ॥ गृहेः सन्नन्तादुः ॥

जिघ्रः । त्रि । घ्राणकर्त्तरि ॥

जिङ्गिनी । स्त्री । वृक्षविशेषे । प्रमोदिन्याम् । झिङ्गिन्याम् ॥ जिङ्गिनीमधुरा सोष्णा कषाया योनिशोधिनी । कटुका व्रणहृद्रोगवातातीसारहृत्पटुः ॥

जिङ्गी । स्त्री । मञ्जिष्ठायाम् ॥ जिङ्गति । जिगिगतौ । पचाद्यच् । गौरादित्वान् ङीष् ॥

जिजीविषा । स्त्री । जीवितुमिच्छायाम् ॥

जिजीविषुः । त्रि । जीवितुमिच्छौ ॥

जिज्ञासनीयः । त्रि । जिज्ञासितव्ये । जिज्ञास्ये ॥

जिज्ञासा । स्त्री । ज्ञातुमिच्छायाम् ॥

जिज्ञासितम् । त्रि । ज्ञातुमिष्टे ॥ विचारिते ॥ कृतजिज्ञासे ॥

जिज्ञासुः । त्रि । मुमुक्षौ । आत्मज्ञानार्थिनि ॥ ज्ञातुमिच्छौ ॥ बहुश्रुतः स्वल्पभाषी जिज्ञासुर्ज्ञानवानपीतितन्त्रम् ॥

जितः । त्रि । प्राप्तपराजये । परिभूते । पराजिते ॥ यथा । नहि जितै र्जेतुरग्रे स्थातु मुचितम् ॥ भक्ते विदे

श मधिकेनजित स्तदनुशवेन सथ वा कुशल: ॥ लब्धे । स्वायत्तीकृते । वशीकृते ॥ पुं । अर्हदुपासकविशेषे ॥

जितकाम: । चि । सदाशिवे ॥ जित:- कामोयेन ॥

जितकाशि: । त्रि । दृढमुष्टौ ॥ इतिमहा भारतेनोलकण्ठ: ॥

जितकाशी । चि । जित: इवे । जयिनि ॥ जितेनजयेन काशते प्रकाशते । काशदीप्तौ । शीले णिनि: ॥

जितक्रोध: । पुं । शिवे ॥ विष्णौ ॥ जित: क्रोधो येन ॥ जितक्रोध: कथं त र्हिसुरारीन् हन्ति माधव: । वेदमा र्गस्थापनार्थं नतु कोपवशात् प्रभु: ॥ भृगुपादघातेनापिक्रोधानुत्पत्ते: ॥ चि । जितामर्षे ॥

जितनेमि: । पुं । आश्वत्थे । अश्वत्थनि र्मिते दण्डे ॥ चि । जितनेमिके ॥

जितशत्रु: । पुं । दृत्तार्हत्पितरि ॥ चि । कृतशत्रुपराजये ॥

जितसङ्गदोष: । चि । प्रियाप्रियसन्नि धावपि रागद्वेषविवर्जिते ॥ जिता: सङ्गजनिता दोषा येन ॥

जितात्मा । चि । जितेन्द्रिये ॥ जितआ त्मायेन ॥

जितामित्र: । पुं । हरौ ॥ जिता अमित्रा बाह्या आभ्यन्तराश्च येन ॥ चि ॥ कृतशत्रुपराजये ॥

जितारि: । पुं । बुद्धे ॥ वृत्तार्हत्पितरि ॥ त्रि । जितशत्रौ ॥ जिता अरयोयेन ॥

जिताष्टमी । स्त्री । जीमूताष्टम्याम् ॥

जिताहव: । पुं । जितकाशिनि ॥

जितुम: । पुं । मिथुनराशौ ॥

जितेन्द्रिय: । चि । स्ववशीकृतसर्वबाह्ये न्द्रिये । शान्ते ॥ यथा । श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नर: । न हृष्यति ग्लायतिवा सविज्ञेयो जितेन्द्रिय: ॥ जितानि वशीकृतानि इन्द्रियाणि श्रोत्रादीनियेन ॥ दान्ते ॥ पुं । कामवृक्षाख्ये क्षुपविशेषे ॥

जितेन्द्रियाह्व: । पुं । कामवृद्धिवृक्षे ॥

जित्तम: । चि । जयशीलानांमध्ये उ त्तमे ॥

जित्य: । पुं । हलौ । दृहद्धले । कृष्टस मीकरणार्थं स्थूलकाष्ठे ॥ विपूयवि नीयजित्या मुञ्जकल्कहलिषु इति निपातनात् क्यप् ॥

जित्वा । पुं । जयिनि ॥ जयति । जि० । शीङ्क्रुशीत्यादिनाक्वनिप् ॥

जित्वर: । त्रि । जेतरि ॥ जयशील: । इण्नशजिसर्त्तिभ्य:क्वरप् ॥

जित्वरी । स्त्री । काशिकापुर्याम् ॥ टि ड्ढेतिङीप् ॥ जयशीलायाम् ॥

जिन: । पुं । अर्हति ॥ बुद्धे ॥ विष्णौ ॥

अतिवृद्धे ॥ विश्वाकृत्रिमवादिनि मुनि विशेषे ॥ त्रि । जित्वरे ॥ जयति । जि० । इग्भृविश्जिदीशुघ्नविभ्यो नक् ॥

जिनसद्म । न । जिनगृहे । चैत्ये । विहारे ॥

जिनसुतः । पुं । बुद्धे ॥ बुद्धोनाम्नाजिनसुतः कीकटेषु भविष्यति । इति श्रीभागवतम् ॥

जिनेन्द्रः । पुं । बुद्धे ॥ जिनानामिन्द्रः॥

जिविः । पुं । काले । समये ॥ पक्षिविशे॥ जीर्यति जीर्यते वा । शृष्० । जीर्यतेः क्रिन्रश्चवः इति क्रिन्प्रत्ययो रेफस्यवादेशः । बाहुलकाद् लिचे जिदीर्घोन ॥

जिष्णुः । पुं । वासवे ॥ अर्जुने ॥ विष्णौ ॥ अर्के ॥ वसुषु ॥ त्रि । जित्वरे ॥ जयति । जयनशीलोवा । जिजयेऽभिभवेवा । ग्लाजिस्थश्चेतिग्स्नुः ॥

जिहीर्षा । स्त्री । हर्तुमिच्छायाम् ॥ हृञ्० अप्रत्ययादित्यः ॥

जिह्मः । त्रि । कुटिले ॥ मन्दे ॥ न । तगरपादपे ॥ जहाति हीयतेवा । ओहाक्० । जहातेःसन्वदालोपश्चेतिमन् ॥

जिह्मगः । पुं । सर्पे ॥ मदने ॥ त्रि । मन्दगे ॥ जिह्मंकुटिलंगच्छति । गम्लृ० । अन्येभ्योपीतिडः ॥

जिह्मता । स्त्री । शाठ्ये ॥

जिह्मप्रायः । त्रि । कपटबहुले ॥

जिह्ममेहनः । पुं । भेके ॥

जिह्मशल्यः । पुं । खदिरे ॥

जिह्मितः । त्रि । घूर्णित ॥

जिह्मः । पुं । न । तगरमूले ॥

जिह्वलः । त्रि । लुब्धे । लोलुपे ॥ यथा । आकण्ठतृप्ता परअन्ने भुञ्जते ये च जिह्वलाः । पतन्ति नरके घोरे सुमर्यादो दकक्रियाः ॥

जिह्वा । स्त्री । रसनायाम् । रसज्ञाने न्द्रिये ॥ अस्याः परीक्षा यथा । शाकपत्रप्रभारूक्षा स्फुटिता रसनाऽनिलात् । रक्ता श्यामा भवेत् पित्ता लिप्ता र्द्री धवला कफात् ॥ परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके । सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणेति भावमिश्रः ॥ लेढि लिहन्त्यनयावा । लिह० । शेवयह्व जिह्वेतिसाधुः ॥

जिह्वानिर्लेखनम् । न । जिह्वामार्जने । जीभी करनी इति भाषा ॥ जिह्वामार्जनद्रव्ये । जीभी इति भाषा ॥ तत्तु दशाङ्गुलं कोमलं कुर्यं स्वर्णरूप्यताम्र लोहनिर्मितं जिह्वामलापकर्षणे प्रशस्तम् । तस्यगुणाः । वक्त्रवैरस्यजिह्वाश्रितमलनाशित्वम् । आ

रोग्यकचिकारित्त्वच्चेतिराजवल्लभः॥

जिह्वापः। पुं। शुनि॥ मार्जारे॥ व्याघ्रे॥ द्वीपिनि। चित्रव्याघ्रे॥ भल्लूके॥ सिंहे॥ जिह्वयापिबति। पा०। कः॥

जिह्वामलम्। न। कुसुके॥

जिह्वामूलीयः। पुं। कखाभ्यां प्रागर्द्ध विसर्गसदृशे (ᳵ) विसर्गप्रभेदे॥ जिह्वामूलेभवः। जिह्वामूलाङ्गुलेश्छः॥

जिह्वारदः। पुं। खगे॥

जिह्वालिट्। पुं। कुक्कुरे॥ मार्जारे॥ जिह्वयालेढि। लिह०। क्विप्॥

जिह्वाशल्यः। पुं। खदिरवृक्षे॥

जिह्वास्वादः। पुं। लेहने॥ आस्वदनम्। स्वद०। घञ्। जिह्वयास्वादः॥

जीनः। त्रि। वृद्धे॥ जिनातिस्म। ज्या०। गत्यर्थेति क्तः। ग्रहिज्येतिसम्प्रसारणम्॥ हलइतिदीर्घः। ल्वादिभ्यश्चेतिनत्वम्॥ चर्मपुटे॥

जीमूतः। पुं। अद्रौ॥ धृतिकरेइति मेदिनी॥ भृतिकरेइतिहेमः॥ देवताडे॥ जीमूतइव॥ पयोधरे॥ वासवे घोषके॥ मुस्तके॥ जयति नभः जीयतेऽनिलेनवा। जि०। जेर्मूट्चोदात्तइतिक्तः। जेर्दीर्घश्च॥ जीवस्योदकस्यमूतःपटवन्धोयस्येति वा। पृ०॥ जीवनं जलं मूतं वद्धमनेन। मूङ् वन्धने। कर्मणि क्तः। पृषोदरादित्वात् वनशब्दलोपः॥ ज्यामंजी। ज्या०। सं० क्विप्। जियावयोहान्यामूतोव द्धइति वा॥ जीवनं मुञ्चति वा। पृ०॥

जीमूतकः। पुं। देवदाल्याम्॥

जीमूतकूटः। पुं। पर्वते॥

जीमूतमूलम्। न। शठ्याम्॥

जीमूतवाहनः। पुं। इन्द्रे॥ जीमूतावाहनमस्य॥ धर्मरत्ननामकस्मृतिसङ्ग्रहकर्त्तरि॥

जीमूतवाही। पुं। धूमे॥

जीमूताष्टमी। स्त्री। गौणाश्विनकृष्णाष्टम्याम्॥

जीरः। पुं। जीरके॥ खड्गे॥ अणौ॥ जवति। जुःसौत्रः। जोरीचेतिरक्॥ जिनाति वा। ज्या०। ज्यश्चेतिरग्वा॥

जीरकः। पुं। अजाज्याम्। जीराइति भाषा॥ जीराः संज्ञायामितिकन्॥ अस्यगुणायथा। जीरकत्रितयं-रूक्षं कटूष्णंदीपनं लघु। सङ्ग्राहि पित्तलंमेध्यं गर्भाशयविशुद्धिकृत्॥ ज्वरघ्नं पाचनं वल्यं वृष्यं रुच्यं कफापहम्। चक्षुष्यं पवनाध्मानगुल्म-च्छर्द्यतिसारहृदिति भावप्रकाशः॥

जीरणः। पुं। जीरके॥

जीरिका। स्त्री। वंशपत्रीतृणे॥

जीर्णः। पुं। जीरके॥ न। शैलजे॥ त्रि।

हृद्धे । जरति ॥ पुरातने॥ परिपक्वे॥

जीर्य्यतिस्म । जृष्० । गत्यर्थेति क्तः । ऋतइत् । निष्ठानत्वम् ॥

जीर्णज्वरः । पुं । पुरातनज्वरे ॥ अस्य सामान्यलक्षणं यथा । योद्वादशभ्यो दिवसेभ्य ऊर्द्धं दोषत्रय स्तद्दिगुणो भ्यजर्द्धम् । न्नृणां तनौ तिष्ठति मन्द वेगो भिषग्भिरुक्तोज्वर एष जीर्ण-इति ॥

जीर्णदारु । न । विधारा इति प्रसिद्धे वृद्धदारकभेदे । सुपुष्पिकायाम् ॥

जीर्णपत्रः । पुं । पट्टिकालोध्रे ॥

जीर्णपत्रिका । स्त्री । वंशपत्रीतृणे ॥

जीर्णपर्णः । पुं । कदम्बे ॥ न । पुरातन पत्रे ॥ त्रि । तद्वति ॥

जीर्णफञ्जी । स्त्री । जीर्णदारुणि ॥

जीर्णवज्रम् । न । वैक्रान्तमणौ ॥

जीर्णवस्त्रम् । न । पटच्चरे । मलवस्त्रे॥ जीर्णञ्च तद्वस्त्रञ्च ॥ त्रि । तद्युक्ते ॥

जीर्णबुध्नः । पुं । पट्टिकालोध्रे ॥ कैवर्त्तीमुस्तके ॥

जीर्णवृध्नकम् । न । परिपेले ॥

जीर्णा । स्त्री । स्थूलजीरके ॥

जीर्णास्थिमृत्तिका । स्त्री । अर्कोद्यर्थं कृत्रिममृद्विशेषे ॥ यथा । अथवक्ष्ये तुजीर्णास्थिमृत्तिकाकरणं प्रिये । शि वाजतुस्थले कुर्याद्दीर्घं गर्त्तं म नोहरम् ॥ निःक्षिपेत् तत्रनानास्थि सञ्चयं विचतुष्पदाम् । सर्जिक्षारं म शाक्षारं मलक्षारं यवक्षारनिच ॥ ग न्धकोष्णजलं चैव्यं नानामूत्राणि स चच । एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम् ॥ कल्लास्यूर्द्धं स दृष्ट्वंन्तु कुर्य्यादिष्टीष्टकां शुभाम् । त्रि वर्षाज्जायते सर्वमेकीभूतं द्रवत्स मम् ॥ ततोनिष्काश्य तच्चूर्णं कृत्वा पात्राणि निर्म्मेमेत् । प्रशस्तं भोजनं तत्र सर्वये द्रवदूषणम् ॥ महावि षस्य संयोगात् तस्य भङ्गः प्रजायते । दूषीविषादिसंयोगात् पात्रे स्फो टाभवन्तिहि ॥ तत्रविसं चक्रविषं पात्रं कृष्णं प्रजायते । एवंज्ञात्वा त त्र दद्यान्नकदाचिद्विषादिकमितिरा वणः ॥

जीर्णिः । स्त्री । ज्यानौ । जीर्णत्वे ॥ ज रणम् । जृष्वयोहानौ । क्तिन् । ऋ ल्वादिभ्यःक्तिन्निष्ठावत् । रदाभ्यामि तिनत्वम् ॥

जीर्णोद्धारः । पुं । भग्नमन्दिरादेः सं स्कारे ॥

जीर्य्यन् । त्रि । वयोहानिंप्राप्नुवति ॥

जीर्व्विः । पुं । कुठारे । परशौ ॥ जृष्० । जृशस्तृ जागृभ्यः क्विन् ॥

जीवः । पुं । प्राणिनि ॥ वृहस्पतौ ॥ वृक्ष

भेदे ॥ बृहस्पतौ ॥ असुधारणे ॥ कर्णे ॥ मनुष्यादिकीटपर्य्यन्ते प्राणिमात्रे । कार्य्यकरणसङ्घाते ॥ अनेकान्तवादिनां जीवास्तिकायसंज्ञया परिभाषिते जीवपदार्थे ॥ त्रिविधश्चासौ अनादिसिद्धमुक्तबद्धभेदात् । अनादिसिद्धोऽर्हन् जीवास्तिकायाख्यः । अपेतमोहादिबन्धो मुक्तः । मोहाद्यावृतस्तु बद्ध इति ॥ * ॥ उपाधिप्रविष्टे ब्रह्मणि । वाङ्मनःप्राणकरणग्रामानुप्रविष्टे । घटावच्छिन्नाकाशवत् शरीरचितयावच्छिन्ने चैतन्ये ॥ दर्पणस्थमुखप्रतिबिम्बवत् बुद्धिस्थचैतन्यप्रतिबिम्बे ॥ साभासाहङ्कारे । चित्प्रतिबिम्बे ॥ प्राणादिकलापस्य धारयितरि ॥ प्राणान् चेतनरूपेण धारयन् जीव उच्यते ॥ लिङ्गदेहे ॥ एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते ॥ इति श्रीभागवतम् ॥ पञ्चविधं पञ्चतन्मात्रात्मकम् । त्रिवृत् त्रिगुणम् । षोडशविकारात्मना विस्तृतमित्यर्थः ॥ * ॥ विज्ञानमयकोषावच्छिन्नश्चिदात्मा कर्तृत्वभोक्तृत्वाद्यभिमानित्वेन इहलोकपरलोकगामी व्यावहारिको जीव उच्यते ॥ वालाग्रशतभागस्य शत-



धा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ * ॥ जीवो नाम देहादिव्यतिरिक्तस्तत्साक्षी त्वम्पदार्थो योऽयं विज्ञानमयः योऽयं संसरति योऽयं संसारी न तु देहादिर्जीवः तस्य दृश्यस्य द्रष्टृत्वानुपपत्तेः ॥ * ॥ अस्ति देवि परब्रह्मस्वरूपी निष्कलः शिवः । सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलोऽव्ययः ॥ स्वयंज्योतिरनाद्यन्तो निर्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥ अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः । देहाद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः ॥ सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः । तत्तज्जातियुतं देहमायुर्भोगञ्च कर्मजम् ॥ प्रतिजन्म प्रपद्यन्ते तेषामप्यपरं पुनः । सूक्ष्मं लिङ्गशरीरं तदामोक्षादक्षयं प्रिये ॥ इति कुलार्णवे १ उल्लासः ॥ पुं । न । जीविते ॥ जीवनम् । जीव० । हलश्चेति घञ् ॥ जीवति वा । इगुपधलक्षणः कः ॥ जीवयति वा । अच् । अमृतसञ्जीवनमन्त्रज्ञत्वात् ॥

जीवकः । पुं । प्राणके द्रुमे ॥ पीतसाले । विजयसार इति ख्याते ॥ कृपणे ॥ क्षपणे ॥ अष्टवर्गान्तर्गतौषधविशेष-

। कूर्चशीर्षे । ह्रस्वाङ्गे ॥ अस्यस्वरूप पर्यायगुणाः । यथा । जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥ जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत् ॥ जीवको मधुरः शृङ्गो ह्रस्वाङ्गः कूर्चशीर्षकः । ऋषभो वृषभो धीरो विषाणी न्द्राक्ष इत्यपि ॥ जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । मधुरौ पित्तदाहघ्नौ कार्श्यवातक्षयापहौ विति ॥ त्रि । सेवके । सेविनि ॥ वृद्ध्याजिविनि ॥ जीविनि ॥ आहितुण्डिके ॥ जीवयति । जीव० । ण्वुल् ॥ जीवतात् आशिषिचेतिवुन् ॥

जीवघनः । पुं । हिरण्यगर्भे ॥ घनोमूर्त्तिः । जीवलक्षणो घनः जीवघनः सैन्धवखिल्यवत् ॥

जीवजीवः । पुं । चकोरे ॥

जीवञ्जीवः । पुं । चकोरे ॥ जीवंजीवयति । तद्दर्शनेनविषनाशात् । कृत्यल्युटो बहुलमिति वाहुलकात् खच् ॥ खगान्तरे ॥ द्रुमप्रभेदे ॥

जीवत्तोका । स्त्री । जीवद्वत्सायाम् । जीवत्स्वाम् ॥ इतिहेमः ॥

जीवत्त्वम् । न । कूटस्थादीनां चतुर्णां समूहे ॥ तथाहि । कूटस्थंब्रह्म अन्तः करणम् अन्तःकरणाश्रयाऽविद्या चिदाभासश्चेति चतुष्टयमिलितंसज्जीवत्त्वमितिनीलकण्ठश्चैव ॥

जीवत्पतिः । स्त्री । सधवायाम् ॥

जीवत्पितृकः । त्रि । विद्यमानपितृके ॥ यथा । अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् नजीवत्पितृकः कुर्यात् कृतेपि पितृहा भवे दितिरघुनन्दनः ॥

जीवथः । पुं । कूर्मे ॥ प्राणे ॥ मयूरे ॥ मेघे ॥ त्रि । चिरायुषि ॥ धार्मिके ॥ जीवति । जीव० । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥

जीवदः । पुं । वैद्ये ॥ विद्विषि । रिपौ ॥ ग्रन्थिपर्णे ॥ त्रि । जीवनदातरि ॥ जीवं ददाति । डुदाञ्० । कः ॥

जीवदात्री । स्त्री । ऋद्धिनामौषधौ ॥

जीवधनम् । न । गवादिपशुषु ॥

जीवनम् । न । वर्त्तने । जीविकायाम् ॥ जीवन्त्यनेन । जीव० । ल्युट् ॥ नीरे । जले ॥ प्राणधारणे । आयुषि । जन्ममृत्योर्मध्यकाले ॥ हीनजीवना द जीवनं वरम् ॥ मज्जनि ॥ हैयङ्गवीने ॥ पुं । पुत्रे । जीवन्तौषधे ॥ वाते ॥ क्षुद्रफलकवृक्षे ॥ जीव्यतेऽनेन । जीव० । करणाऽधिकरणयोश्चेतिकरणे ल्युट् ॥

जीवनकम् । न । अन्ने ॥

जीवनयोनिः । स्त्री । यत्नविशेषे ॥ स-तु । अतीन्द्रियः शरीरे प्राणसञ्चार कारणम् । इतिभाषापरिच्छेदः ॥

जीवनहेतुः । पुं । वर्त्तनोपाये ॥ विद्या शिल्पंभृतिःसेवागोरक्ष्यं विपणिःकृषिः । वृत्तिर्भैक्ष्यंकुसीदञ्च दशजीवनहेतवः ॥

जीवना । स्त्री । मेदैाषधे ॥

जीवनाघातम् । न । विषे ॥

जीवनावासः । पुं । वरुणे ॥ जीवन मावासो यस्य ॥

जीवनिका । स्त्री । हरीतक्याम् ॥

जीवनी । स्त्री । गुर्जरदेशे डोडो इति प्रसिद्धायां जीवन्त्याम् । मधुस्रवायाम् । काकोल्याम् ॥ डोड्याम् ॥ मेदायाम् ॥ महामेदायाम् ॥ यूथ्याम् ॥ जीव्यतेऽनया । जीव० करणेल्युट् ॥

जीवनीयकम् । न । } जले । वारि-
जीवनीयकम् । न । } णि ॥ जीवनाय हितम् । छः ॥ जीवनीयगणे ॥

जीवनीयगणः । पुं । औषधविशेषे ॥ यथा । अष्टवर्गः सयष्टीको जीवन्ती मुद्गपर्णिका । माषपर्णी गणोऽयन्तु जीवनीय इतिस्मृतः ॥ जीवनो मधुरश्चापि नाम्ना सपरिकीर्त्तितः ॥ जीवनीयगणः प्रोक्तः शुक्रकृद्दृंहणो हिमः ॥ गुरुर्गर्भप्रदः स्तन्यः कफकृत् पित्तरक्तहृत् । तृष्णां शोषं ज्वरंदाहं भ्रमं मूर्च्छां व्यपोहति ॥ अपिच । अष्टवर्गश्च पर्ण्यौ जीवन्ती मधुक स्तथा । जीवनीयगणः प्रोक्तो जीवन स्तु पुन स्तथेतिवैद्यक परिभाषा ॥

जीवनीया । स्त्री । जीवन्त्याम् । गुर्जरे डोडी इति प्रसिद्धायाम् ॥ जीवनाय हिता । तस्मै हितमिति छः ॥

जीवनेत्री । स्त्री । सैंहल्याम् ॥

जीवनैाषधम् । न । जीवातै । मृतस ञ्जीवनैाषधे ॥ येनम्रियमाणो जीवति । जीवनस्य औषधम् ॥

जीवन्तः । पुं । प्राणे ॥ औषधे ॥ जीवशाके ॥ त्रि । आयुष्मति ॥ जीव्यात् । जीव० । तृहिनन्दि जीविप्राणिभ्यःषि दाशिषीतिझच् । झोन्तः ॥

जीवन्तिका । स्त्री । गुडूच्याम् ॥ जीवाख्यशाके ॥ वन्दायाम् ॥ हरीतक्याम् । जीवति । जीव० । तृहिनन्दीति झचःषित्त्वान् ङीष् । कन् ॥

जीवन्ती । स्त्री । जीवन्त्याम् । मधुस्रवायाम् ॥ जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा ॥ रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः ॥ शाकमकारस्तु जीवन्त्याः कोमलं

पचं स्विन्नं तक्रसुभर्जितम् । हिङ्गुना संयुते तैले तक्रं चिप्त्वा प्रलेपयेत् ॥ डोडी इति गुर्जरेऽस्याःप्रसिद्धिः॥ शम्याम् ॥ गुडूच्याम् ॥ वन्ध्यायाम् ॥ डोड्याम् ॥ हरीतक्याम् ॥ जीवन्ती स्वर्णवर्णिनीति लक्षणम् ॥ जीवति जीवयति वा । जीव० । झटःशतुर्गित्वात् ङीप् ॥

जीवन्मुक्तः । त्रि । आत्मविदि । जीवन्नेव मुक्तसंसारे ॥ जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीना मपिबाधितत्वा दखिलबन्धरहितो-ब्रह्मनिष्ठ इति ॥*॥ ननुजीवन्मुक्तो व्यवहरति न वा । आद्ये तस्य बद्धान्विलक्षणता । द्वितीये देहस्यानुपयोगात् सद्यः पातप्रसङ्ग इत्यतआह । अयन्तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादि भाजनेन शरीरेणान्ध्यमान्द्यपटुत्वादि भाजनेनेन्द्रियग्रामेण अशनायापिपासाशोकमोहादिभाजनेनचान्तःकरणेन पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमाननि ज्ञानाविरुद्धान्यारब्धफलानिच पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यतीति । दृष्टान्तेनोक्तमर्थं स्पष्टयति । यथेन्द्रजालमिति ज्ञानवान् तदिदमिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति । उक्तञ्च । सुषुप्तिवज्जाग्रति यो न पश्यति द्वयन्तु पश्यन्नपिचाऽद्वयत्वतः । तथाच कुर्वन्नपि निष्क्रियश्च यः स आत्मवि न्नान्य इतीह निश्चयः इति ॥ वेदविशारदं ज्ञानं देशिकस्य मुखात् स्वयम् । गृहीत्वाष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः । प्रारब्धक्षयपर्यन्तं जीवन्मुक्ताभवन्तिते ॥ अष्टोत्तरशत मुपनिषदाम् ॥ कौलिके ॥ यथा । धन्या माहेश्वराः स्वार्थप्रत्यभिज्ञानशालिनः । स्वपरिज्ञानमात्रेण जीवन्मुक्ता भवन्तिहि ॥ महामन्त्रप्रभावेण कुलाचारप्रभावतः । स्वेच्छाचारा निर्विकल्पा जीवन्मुक्ताहि कौलिकाः ॥ योन्तर्वोमवदच्छः स जीवन्मुक्त उच्यते ॥ जीवन्नेव मुक्तः ॥

जीवन्मुक्तिः । स्त्री । जीवतो बन्धनिवृत्तौ ॥ जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति तन्निवृत्तिस्वरूपाजीवन्मुक्तिः ॥

जीवन्मुक्त्युपायः । पुं । कुलमार्गे ॥ जी

न्मुक्ते कषायस्तु कुशमार्गेष्टिनापर इतिसदाशिवोक्तेः ॥

जीवपुत्रः । पुं ।
जीवपुत्रकः । पुं । } जीयापोताइति प्रसिद्धे पुत्रजीव द्रुमे ॥

जीवपुष्पा । स्त्री । दृहज्जीवन्त्याम् ॥

जीवप्रिया । स्त्री । हरीतक्याम् ॥

जीवभद्रा । स्त्री । जीवन्तीलतायाम् ॥ दृद्धिनामौषधे ॥

जीवभूतः । त्रि । प्राणधारणोपाधिना कर्त्ता भोक्ता संसारीति मपेव प्रसिद्धिमुपगते ॥

जीवमन्दिरम् । न । शरीरे ॥

जीवला । स्त्री । सैंहल्याम् ॥

जीवलोकः । पुं । संसारे ॥ यथा । माता पिता गुरुजनः स्वजनो ममेति मायोपमे जगति कस्य भवेत् प्रतिज्ञा । एको यतो व्रजति कर्मपुरः सरोऽयं विश्रामहृक्षसदृशः खलु जीवलोकः ॥ सायंसायं वासहृक्षं समेताः प्रातः प्रातस्तेनतेन प्रयान्ति । त्यक्त्वान्योन्यं तञ्च वृक्षं विहङ्गा यद्वत् तद्वज् ज्ञातयोऽज्ञातयश्चेति ॥ जीवानांलोकः ॥

जीववल्ली । स्त्री । चीरकाकोल्याम् ॥

जीवशाकः । पुं । मालवप्रसिद्धे शाकविशेषे । जीवन्ते । रक्तनाले । तामपत्रे ॥

जीवशुक्ला । स्त्री । चीरकाकोल्याम् ॥

जीवश्रेष्ठा । स्त्री । ऋद्धिनामौषधे ॥

जीवसञ्ज्ञः । पुं । कामवृद्धिवृक्षे ॥

जीवसाधनम् । न । धान्ये ॥

जीवसूः । स्त्री । जीवद्वत्सायाम् । जीवत्तोकायाम् ॥

जीवस्थानम् । न । मर्मणि ॥

जीवा । स्त्री । जीवन्तिकायाम् । मधुस्रवायाम् । डोडी इति गुर्जरभाषा ॥ मौर्व्याम् । धनुषोगुणे ॥ वचायाम् ॥ शिञ्जिते ॥ भूमौ ॥ हस्तौ ॥ जीवति । जीव० । पचाद्यच् । टाप् ॥

जीवातुः । पुं । न । अन्ने । भक्ते ॥ जीविते ॥ जीवनौषधे । मृतसञ्जीवनौषधे ॥ जीवयति जीवत्यनेन वा । जीव० । जीवेरातुः ॥

जीवात्मा । पुं । देहिनि । जीवे । पुनर्भविनि ॥

जीवाधारः । पुं । चेचे ॥ हृदये ॥

जीवान्तकः । पुं । जीवनार्थं पक्ष्यादीनां घातके । शाकुनिके ॥ त्रि । जीवनाशके ॥ जीवानां अन्तकः ॥

जीवाला । स्त्री । सैंहल्याम् ॥

जीवास्तिकायः । पुं । अनेकान्तवादिनां जीवपदार्थे ॥

जीविका । स्त्री । आजीवे । जीवनो-

पाये ॥ जीवन्त्याम् ॥ जीव्यते ऽन या । जीव० । गुरोश्चहलइत्यः । सं ज्ञायांकन् । कृत्वा ॥

जीवितम् । न । प्राणने । जीवने ॥ त्रि । जीवनान्विते ॥ ब्रह्मादीनामपिजीवितं स्वल्पमेव ॥ यथा । ये समर्था जगत्यस्मिन् सृष्टिस्थित्यन्तकारिणः । तेपि काले प्रलीयन्ते कालोहिबलवत्तर इतिस्मृतेः ॥

जीवितकालः । पुं । जीवनावच्छिन्नकाले । आयुषि ॥ जीवितस्यकालः ॥

जीवितज्ञा । स्त्री । नाड्याम् ॥ इ०रा० ॥

जीविताशा । स्त्री । जीवनलोभे ॥ जीर्यंति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । जीविताशा धनाशाच जीर्यतो ऽपिनजीर्यति ॥

जीवितेशः । पुं । यमे । पितृपतौ ॥ प्राणनाथे ॥ चन्द्रे ॥ सूर्ये ॥ त्रि । जीवितेश्वरे ॥ प्रिये ॥ जीवितस्वामिनि ॥ जीवातौ ॥

जीवी । पुं । प्राणिनि ॥ जीविनां दारुणो रोगः कर्मभोगः शुभाशुभः । भक्तो वैद्यस्तं निहन्ति कृष्णभक्तिरसायनात् ॥

जीवेष्ठिः । स्त्री । इहस्पतिसवे ॥

जीवोत्पत्तिवादः । पुं । पाञ्चरात्राणां वादे ॥ सयथा । ब्रह्मणोवासुदेवात्स्याज्जीवः सङ्कर्षणाभिधः । जायते च मन स्तस्मात प्रद्युम्नाख्यं ततः पुनः ॥ अहङ्कारो ऽनिरुद्धाख्य स्त्वस्यारो विश्वरूपकाः । वासुदेवाराधनाद्यैर्जायतेवन्धमोचनमिति ॥

जीवोपाधिः । पुं । सुषुप्त्यादिषु ॥ त्रयो जीवोपाधयः । तथाहि । सुषुप्तौ बुद्धादिसंस्कारोपरञ्जित मज्ञानमात्र मुपाधिः । स्वप्ने जाग्रद्वासनामयं लिङ्गशरीर मुपाधिः । जाग्रदवस्थायाम्तु सूक्ष्मशरीरसंसृष्टंस्थूलशरीरमुपाधिरिति ॥

जीव्या । स्त्री । गोक्षुरदुग्धायाम् ॥ जीवन्त्याम् ॥ हरीतक्याम् ॥

जुः । स्त्री । त्वरागमने ॥ सामान्यगमने ॥

जुगुप्सनम् । न । निन्दने ॥ त्रि । जुगुप्साशीले ॥ जुगुप्सते तच्छीलः । गुपेरनुदात्तेतश्चेतियुच् ॥

जुगुप्सा । स्त्री । निन्दायाम् ॥ घृणायाम् । घिन् इतिभाषा ॥ जुगुप्सनम् । गुपगोपनकुत्सनयोः । गुपेर्निन्दायांसन् । अप्रत्ययादिति भावेस्त्रियामः । टाप् ॥

जुगुप्सितः । त्रि । निन्द्ये ॥

जुङ्गः । पुं । वृद्धदारके ॥ जुङ्गति । जुगिवर्जने । अच् ॥ जुङ्ग्यते वा । घञ् ॥

जुङ्गकः । पुं । वृद्धदारकवृक्षे ॥ स्वार्थे

कम् ॥

जुटकम् । न । जटायाम् ॥ इति शब्दरत्नावली ॥

जुटिका । स्त्री । शिखायाम् । चोटी-इति भाषा ॥ संहतकेशेषु ॥ जूडा जूटी इति भाषा ॥

जुषन् । त्रि । सेवमाने ॥

जुषमाणः । त्रि । प्रीयमाणे ॥ सेवमाने ॥

जुष्ककः । पुं । मुद्गयूषे ॥

जुष्टम् । न । उच्छिष्टे । झूठ झंठ इतिच भाषा ॥ त्रि । सेविते ॥ प्रीते । जुष्यते स्म । जुषीप्रीतिसेवनयोः । क्तः ॥

जुष्यः । त्रि । सेव्ये ॥

जुहुराणः । त्रि । कुटिले ॥ चन्द्रे ॥ जुहूर्षति । हुर्च्छाकौटिल्ये । हुर्च्छेः सनोलुक् छलोपश्चेत्यानच् ॥ जुहुराणं कौटिल्यकारि इतिभाष्यम् ॥

जुहुवान् । पुं । अनले ॥

जुहुवाणः । पुं । अध्वर्यौ ॥ जातवेदसि ॥ चन्द्रे ॥

जुहूः । स्त्री । स्रुग्भेदे । पलाशकाष्ठनिर्मिते ऽर्द्धचन्द्राकृतिरूपे यज्ञपात्रे ॥ पर्णमये यज्ञपात्रविशेषे ॥ जुहोति अनया वा । हुदानादनयोः । द्युतिगमि जुहोतीनां द्वेचेति क्विप् जुहोतेर्दीर्घश्च ॥ चैलोक्यात्मनः कोषस्य प्राग्भागे ॥ जुह्वाच्यस्यांदिशिकर्मिणः प्राङ्मुखाः सन्तः इति ॥

जूः । स्त्री । आकाशे ॥ सरस्वत्याम् ॥ पिशाच्याम् ॥ जवने ॥ जुःसौत्रोगतौ । भ्राज भासेतिक्विप् दीर्घश्च । जूः जुवौ जुवः ॥ क्विब्वचिप्रच्छीत्यादिना क्विब्दीर्घौ वा ॥

जूटः । पुं । जटायाम् । जूडा इतिभाषा ॥ वन्धे ॥

जूटकः । पुं । न । केशवन्धे । जटायाम् ॥

जूतिः । स्त्री । जवने । वेगे ॥ जुःसौत्रो वेगे । क्तिन् । ऊतियूतीत्यादिना निपातनाद्दीर्घः ॥

जूतिका । स्त्री । कर्पूरविशेषे ॥

जूर्णः । पुं । उलपे ॥

जूर्णाख्यः । पुं । उलू इति गौडप्रसिद्धे तृणविशेषे । खरच्छदे । सूच्यग्रे ॥

जूर्णाह्वयः । पुं । देवधान्ये । जुवार इति भाषा ॥ इति हेमचन्द्रः ॥

जूर्णिः । स्त्री । वेगे ॥ आदित्ये ॥ ज्वरति । ज्वररोगे । वीज्याज्वरिभ्योनिः ॥

जूर्त्तिः । स्त्री । ज्वरे ॥ ज्वरणम् । ज्वर० । क्तिन् । ज्वरत्वरेत्यूठ् ॥

जूषः । पुं । न । यूषे ॥

जूषणम् । न । धातुपुष्प्याम् । धाइका फूल इतिभाषा ॥

जृम्भः । त्रि । मुखादिविकाशे । जृम्भायाम् ॥ जृम्भात्यर्थं समीरणात् ॥

पीत्वैकं श्वास मनिलः पुन स्त्यजति वेगवान् । आलस्यनिद्रायुक्तश्च स जृम्भ इतिकथ्यते ॥ अस्यचिकित्सा । यथा । शुण्ठी पिप्पल्यूषणं दीप्यक श्च सिन्धूद्भूतं चेति सर्वं पृथग्वा द्रूपं वा सूक्ष्मचूर्णीकृतं वा जृम्भाभ ङ्ग स्सत्कृतःस्यात्तदैव ॥ जृम्भावेगे समुत्पन्ने शोभनेशयनेनरम् । स्वाप येत् तेन नियमाज्जृम्भावेगःप्रशाम्य ति ॥ जृम्भावेगः चयं याति कटुतै लेन मर्द्दनात् । भोजनात् स्वादुभो ज्यानां तथा ताम्बूलभक्षणादिति ॥ जृम्भणम् । जृभि० घञ् ॥

जृम्भणम् । न । जृम्भे ॥ जृभिगात्रवि-नामे ॥ भावेल्युट् ॥

जृम्भमाणः । त्रि । जृम्भांकुर्वाणे ॥ वि-वर्द्धमाने ॥

जृम्भा । स्त्री । विकाशे ॥ मुखविदारणे । जृम्भे ॥ जृभि० । गुरोश्चेत्यः । टाप् ॥

जृम्भिका । स्त्री । जृम्भे ॥

जृम्भितम् । न । स्त्रीणां करणे ॥ ईहा याम् । विचेष्टिते ॥ प्रवृद्धे ॥ जृम्भे ॥ स्फुटिते । प्राप्तविकाशे ॥ जृम्भः स-ञ्जातोऽस्य । तारकादित्वादितच् ॥

जृम्भिणी । स्त्री । एलापर्णाम् ॥

जेतुम् । अ । वशीकर्त्तुमित्यर्थे ॥

जेता । त्रि । जित्वरे । जैषे ॥ जयनशी ल: । तृन् । तृच्वा ॥ विजितोत्कर्षो ज्जेतृत्कर्षो भवति ॥ पुं । मधुच्छ न्दसःपुत्रे ऋषिविशेषे ॥

जेन्ताकः । पुं । चरकोक्ते स्वेदविशेषे ।

जेमनम् । न । भोजने । जीमना इतिभा षा ॥ जमुअदने । ल्युट् ॥

जेयः । त्रि । जेतव्यमात्रके ॥ जेतुंयो ग्यः । अर्हेकृत्यतृचश्चेति योग्यता यामचोयत् ॥

जैत्रः । पुं । पारदे ॥ न । औषधे ॥ त्रि । जेतरि ॥ जेतैव । प्र० अण् । जैत्रस्तु जेतायोगच्छत्यलं विद्विषतःप्रति ॥

जैत्ररथः । त्रि । जयशीले ॥ इतिहला युधः ॥

जैत्री । स्त्री । जयन्तीवृक्षे ॥

जैनः । पुं । जिनमतावलम्बिनि । बौ-द्धे ॥ जिनस्यायम् । अण् ॥

जैपालः । पुं । जयपालवृक्षे ॥

जैमिनिः । पुं । पूर्वमीमांसाचार्ये ऋ षिविशेषे ॥ अयं सामवेदधरो वेदव्या सशिष्योभञ्जवारकः ॥ यथा । मुनेःक ल्याणमित्रस्य जैमिनेश्चापि कीर्त्तना त् । विद्युदग्निभयं नास्ति पठितेच गृहोदरेइति ॥

जैवम् । त्रि । जीवसम्बन्धिनि ॥ जीवस्ये दम् । अण् ॥

जैवलिः । पुं । प्रवाहणे ॥ जीवलस्या

जोऽपत्यम् । इञ् ॥

जैवातृकः । पुं । ग्लावि । सोमे ॥ भेषजे ॥ कर्पूरे ॥ त्रि । आयुष्मति । दीर्घायुषि ॥ कृशे ॥ जीवति जीवयति वा । जीव० । जीवेरिथ्यनु वृत्तौ आतृकन् वृद्धिश्चेतिसाधुः ॥

जैह्माशिनेयः । पुं । जिह्माशिनोऽपत्ये ॥ शुभ्रादित्वाड्ढक् । दाण्डिनायने तिटिलोपाभावः ॥

जैह्म्यम् । न । कुटिलत्वे ॥

जोङ्गकम् । न । अगुरुणि ॥ जुङ्गति जुङ्ग्यते वा । जुगिवर्जने । क्वुन् । पृषोदरादिः ॥

जोङ्गटः । पुं । गर्भिण्यभिलाषे । दोहदे ॥ इति हारावली ॥

जोटिङ्गः । पुं । महादेवे ॥ महाव्रतिनि ॥

जोडः । पुं । जोडने ॥ जोडनम् । जुड बन्धने । घञ् ॥

जोडनम् । न । बन्धने ॥

जोन्नालः । पुं । } देवधान्ये ॥
जोन्नाला । स्त्री । }

जोषणम् । न । सेवने ॥

जोषम् । अ । सुखे ॥ प्रशंसायाम् ॥ तूष्णीमर्थे ॥ लङ्घने ॥ जुषते । जुषेरसौ । बाहुलकादम् ॥

जोषा । स्त्री । योषिति ॥ जुषते जुष्यते वा । जुषी प्रीतिसेवनयोः । अच् टाप् ॥

जोषिका । स्त्री ॥ कलिकायाम् ॥

जोषित् । स्त्री । योषिति ॥ हृसृरुहियुषिभ्य इतिपाठे जुषेरितिः ॥

जोषिता । स्त्री । स्त्रियाम् ॥ जोष्यते स्म । णिजन्तात्कर्मणि क्तः ॥

जोष्यः । त्रि । प्रियेविषये ॥ जोष्यान् हि जुषतः कामः संप्राप्तोऽभिकाङ्क्षतोमम ॥

जोहलम् । न । } पञ्चमात्रस्यवितीये (ऽ।ऽ) पर्याये ॥
जोहलकम् । न । }

ज्ञः । पुं । ब्रह्मणि । स्वप्रकाशे ॥ चान्द्रमसायने । बुधग्रहे ॥ विचक्षणे । विदुषि ॥ पद्मासने । चतुरानने ॥ भौमे ॥ जानाति । ज्ञा अवबोधने । इगुपधेतिकः । आतोलोपइटिचेत्या लोपः ॥

ज्ञपितः । त्रि । ज्ञप्ते ॥ ज्ञप्यतेस्म । ज्ञा मारणादौमित् । णयन्तःक्तः । वादान्तशान्तेतिसाधुः ॥

ज्ञप्तः । त्रि । ज्ञपिते ॥ ज्ञप्यतेस्म । ज्ञा अवबोधने मारणादौचवर्त्तते । मारणादौमित् । णयन्तः । क्तः । वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः इतिसाधुः ॥

ज्ञप्तिः । स्त्री । बुद्धौ । मनीषायाम् ॥

ज्ञापयति । ज्ञपमिच्च । अयं ज्ञाने ज्ञापने मारणतोषणनिशामनेषु च वर्त्तते । चुरादिः । तत्र ज्ञानार्थकात् अपेर्थकत्वात् प्राप्तं युचं बाधित्वा बाहुलकात् क्तिन् ॥ ज्ञाने ॥ ज्ञप्तेस्तु कारणं राम शिष्यप्रश्नैवकेवला ॥

ज्ञातः । त्रि । ज्ञानेन विषयीकृते । प्रतीते । बुद्धे । प्रमिते ॥ ज्ञा० । क्तः ॥

ज्ञातनन्दनः । पुं । वर्द्धमानार्हद्विशेषे ॥

ज्ञातव्यः । त्रि । अवगन्तव्ये । बोध्ये ॥ मन्तव्ये ॥

ज्ञातसिद्धान्तः । पुं । तान्त्रिके । शास्त्रतत्त्वज्ञे । तत्त्वार्थज्ञातरि ॥ ज्ञाताः सिद्धान्ता येन ॥ आगमभाषया सर्वसिद्धान्तोपरि विराजमाने कौले ॥ यथा । सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् । वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥ दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् । सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हीति ॥

ज्ञातिः । पुं । ताते । पितरि ॥ पितृव्यादिपितृपक्षे । सगोत्रे । सपिण्डसहोदरादौ । स्वजने ॥ स चतुर्विधः । सप्तमपुरुषपर्य्यन्तं सपिण्डः । ततस्त्रिपुरुषपर्यंतं सकुल्यः । ततश्चतुर्थपुरुषपर्य्यन्तं समानोदकः । जन्मनामस्मृतिपर्य्यन्तमपि समानोदकाः । ततः परं गोत्रजः ॥ ज्ञातिद्रोहे दोषो यथा । यानि कानि च पापानि ब्रह्महत्यादिकानि च । ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम् ॥ जानाति । ज्ञा० । क्तिच् ॥ ज्ञायते वा । क्तिन् ॥

ज्ञाता । त्रि । ज्ञानशीले । विदुरे । ज्ञानिनि ॥ ज्ञानाश्रये । अहङ्कारादिप्रकाशकत्वेन चेतने ॥ जानाति । ज्ञा० । तृन् ॥ वृत्तिद्वारा विषयज्ञानवति ॥

ज्ञातेयम् । न । ज्ञातित्वे ॥ ज्ञातेर्भावः कर्म वा । कपिज्ञात्योर्ढक् ॥

ज्ञानः । पुं । जीवे ॥ जश्चासावनश्च । विषयान् जानाति प्राणिति चेत्यर्थः ॥

ज्ञानम् । न । विशेषेण सामान्येन चावबोधे ॥ पदार्थग्राहिकायां वृत्तौ ॥ यथा । ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् । सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा ॥ सङ्कल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः । ऊहोऽनध्यवसायश्च तथान्येऽनुभवा अपि ॥ वृत्त्यादिभेदेनानेकविधाभवन्तीत्यर्थः ॥ सम्यगवबोधे ॥ न्यायमते । अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते । तच्छून्ये तन्मतिर्यास्यादप्रमा सा निरूपिता ॥ तत् प्र

पञ्चो विपर्यासः संशयोपि प्रकीर्त्ति
तः । आद्योदेहआत्मबुद्धिः शङ्खादौ
पीततामतिः ॥ भवेन्निश्चयरूपासा
संशयोथ प्रदर्श्यते । किंस्विन्नरोवा
स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ॥ तद
भावा ऽप्रकाराधी स्तत् प्रकारातुनि
श्चयः ॥ ससंशयो भवेद्याधीरेकत्रा-
भावभावयोः । साधारणादिधर्मस्य
ज्ञानं संशयकारणम् ॥ दोषोऽप्रमा
याजनकः प्रमायास्तुगुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषोनानावि
धोमतः ॥ गुणःस्याद्भ्रमभिन्नन्तु ज्ञा
नमत्रोच्यते प्रमा । अथवातत् प्रका
रंयज्ज्ञानं तद्वत् विशेष्यकम् ॥ ज्ञा
नंयन्निर्विकल्पाख्यं तदतीन्द्रियमिष्य
ते । तत् प्रमा नाऽप्रमा नापिज्ञानंय
न्निर्विकल्पकम् ॥ प्रकारत्वादिशून्यं
हिसम्बन्धानवगाहमात् ॥ इतिभाषा
परिच्छेदः ॥ * ॥ योगेतु । एकत्वं वुद्धि
मनसो रिन्द्रियाणाञ्च सर्वशः । आ
त्मनोव्यापिन स्तात ज्ञानमेतदनुत्त
मम् ॥ इति मोक्षधर्मः ॥ एकत्वं वु
द्धिमाचेणावस्थानम् वुद्धिवृत्तिनिरो
ध इतियावत् ॥ देवताध्यानादौ ॥
विवेकविज्ञाने । शास्त्राचार्योपदेश
जे परमात्मविषये साक्षान्मोक्षफले
आत्मनिश्चये ॥ तत्त्वज्ञाने ॥ शास्त्रे ॥



मोक्षफलिकायांधियि ॥ जीवेश्वरज
गद्भेदभ्रमाधिष्ठानभूते नित्यस्वप्रका
शे सच्चिदानन्दरूपाद्वितीये परमा
र्थसत्ये ॥ आत्मानात्मसर्वपदार्थावबो
धे ॥ विवेकसामर्थ्ये ॥ अध्यात्मोपास
ने ॥ शब्दयुक्तिभ्यामात्मनिश्चये ॥ अ
मानित्व मदम्भित्वमहिंसा क्षान्ति
रार्जवम् । आचार्योपासनं शौचं स्थै
र्य मात्मविनिग्रहः ॥ इन्द्रियार्थेषु वै
राग्य मनहङ्कारएवच । जन्ममृत्यु
जराव्याधिदुःखदोषानुदर्शनम् ॥-
असक्ति रनभिष्वङ्गः पुत्रदारगृहादि
षु । नित्यञ्च समचित्तत्व मिष्टानि
ष्टोपपत्तिषु ॥ मयिचानन्ययोगेन
भक्तिरव्यभिचारिणी । विविक्तदेश
सेवित्व मरति र्जनसंसदि ॥ अध्या
त्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शन
म् । एतज्ज्ञानमिति प्रोक्त मज्ञानं
यदतोन्यथा ॥ सात्त्विकादिभेदात् त
त् त्रिविधम् । यथा । सर्वभूतेषु ये
नैकं भाव मव्यय मीक्षते । अविभ
क्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्वि
कम् ॥ सात्त्विकं सर्वसंसारोच्छित्ति
कारणम् ॥ पृथक्त्वेनतु यज्ज्ञानं
नानाभावान् पृथग्विधान् । वेत्ति स
र्वेषुभूतेषु तज्ज्ञानं विद्धिराजसम्
॥ यत्तुकृत्स्नवदेकस्मिन् कार्ये स-

ज्ञानहेतुकम् । अतस्त्वार्थवदत्यन्त त
त्त्वाभ्यास मुदाहृतम् ॥ राजसं ताम
सञ्च संसारकारणम् ॥ आत्मनः श्र
वणमननाभ्यां परिनिष्पन्ने ॥ प्रमा-
णजन्यचेतोवृत्त्यभिव्यक्तसच्चिद्रूपे ॥
परमात्मज्ञानसाधने ॥ शास्त्राद्यात्मत-
त्त्वावगमे ॥ आत्मसाक्षात्कारे ॥ सा
क्षाद्वेदतदर्थविषयेऽवबोधे ॥ ब्रह्मात्मै
क्यसाक्षात्कारे ॥ * ॥ गुणपुरुषान्यता
ख्यातौ ॥ अध्यवसाये ॥ * ॥ महा-
वाक्यजन्याखण्डाकारायां वृत्तौ ॥ स्व
स्वरूपस्फुरणे ॥ ब्रह्मैवाहं समः शा-
न्तः सच्चिदानन्दलक्षणः । नाहं देहो
ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥
निर्विकारो निराकारो निरवद्यो
ऽहमव्ययः । नाहं० ॥ निरामयो नि
राभासो निर्विकल्पोऽहमाततः । ना
हं० ॥ निर्गुणो निष्क्रियो नित्यो नि
त्यमुक्तोऽहमच्युतः । नाहं० ॥ नि
र्मलो निश्चलोऽनन्तः शुद्धोऽहमजरा
मरः । नाहं० ॥ लोकवासनया जन्तोः
शास्त्रवासनयापि च । देहवासनया
ज्ञानं यथावन्नैव जायते ॥ * ॥ ज्ञा
नमुत्पद्यते पुंसां क्षयात् पापस्य कर्म
णः । यथा दर्शतलप्रख्ये पश्यत्या-
त्मानमात्मनि ॥ वेदे ॥ ज्ञायते ऽने
न । ज्ञा० । करणे ल्युट् ॥ अन्वयव्यति
रेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु । य
देकं केवलं ज्ञानं तदेवास्मि परं ह
हृत् ॥ ज्ञानाज्ञानविलासोऽयं ज्ञान-
ज्ञानेन शाम्यति । ज्ञानात् ज्ञानं परि
त्यज्य ज्ञानमेवावशिष्यते ॥

ज्ञानगम्यम् । न । ज्ञेये ब्रह्मणि ॥ ज्ञा
नेन अमानित्वादिना साधनकलापेन
ज्ञानहेतुतया ज्ञानशब्दितेन गम्यं
प्राप्यं ज्ञेयं ब्रह्म न तु तद्विना ॥ ज्ञानेन
गम्यते । गम्लृ० । पोरदुपधादितियत् ॥
त्रि । परमेश्वरे । परमात्मनि ॥ नक
र्मणा न ज्ञानकर्मभ्यां गम्यते किन्तु-
ज्ञानेनैवगम्यते इति सहस्रनामभा
ष्यम् । विवृतञ्चैतत् तारकब्रह्मज्ञान
सरस्वतीयतिना ॥ यथा । ज्ञानेनै
व गम्योऽज्ञानगम्यः । सर्वं वाक्यं साव
धारणमितिन्यायात् ज्ञानेनैवेत्यव
धारणलाभ इत्यभिप्रेत्याह । नकर्म
णेति । अनेन केवलकर्मणां साक्षा
न्मोक्षसाधनत्वं व्यावर्त्यते । नज्ञान
कर्मभ्यामित्यनेन समुच्चयो वार्यत
इति ॥

ज्ञानतपाः । पुं । विदुषि । आत्मविदि
॥ ज्ञानमेवतपः सर्वकर्मक्षयहेतुर्यस्य
सः । नहिज्ञानेन सदृशं पवित्रमिह
विद्यते ॥

ज्ञानदग्धशरीरः । त्रि । सर्वसङ्गनिवृ-

न्नेभिक्षौ ॥ ज्ञानदग्धशरीरस्य पुन र्दाहो नास्ती त्यथशौनकः । सर्वस ङ्गनिवृत्तस्य ध्यानयोगरतस्यच । न तस्य दहनं कार्यं नैवपिण्डोदकक्रि या ॥ निदध्यात् प्रणवेनैव बिले भि क्षोः कलेवरम् । प्रोक्षणं खननञ्चा पि सर्वं तेनैवकारयेत ॥

ज्ञानदर्पणः। पुं।पूर्वजिने। मञ्जुघोषे॥

ज्ञानदा। स्त्री। शारदायाम् ॥ ज्ञानं ददाति । डुदाञ्० । आतदतिकः ॥ त्रि । ज्ञानप्रदातरि ॥

ज्ञानदाता।पुं।ब्रह्मोपदेष्टरि श्रीगुरौ ॥ पितुर्दशगुणा माता गौरवेणेति निश्चितम् । मातुः शतगुणः पूज्यो ज्ञानदाता गुरुः प्रभो ॥ ज्ञानप्र- दाता ॥

ज्ञानदीपः । पुं । दीपसदृशेज्ञाने ॥ स्वप्रकाशचैतन्यानन्दाद्वितीयलक्षण- आत्मा सएव मद्विषयान्तःकरणपरि णामरूपोदीपउच्यते ॥ ज्ञानं दी- पइव ॥

ज्ञानदीपितः । त्रि । ज्ञानेनप्रकाशिते ॥श्रवणपूर्वकसमाधौ॥ ज्ञानं वेदान्तश्र वणजन्यो ब्रह्मात्मैक्यसाक्षात्कारः तेन अविद्यातत्कार्यनाशद्वारादीपितः प्र - ज्वलितः ॥

ज्ञाननिर्धूतकल्मषः । त्रि । अवधूते।प रमहंसे ॥ ज्ञानेन निर्धूतं समुन्मू लितं पुनर्देहसम्बन्धकारणं कल्मषं पुण्यपापात्मकं कर्म यस्य ॥

ज्ञाननिष्ठः । त्रि । ज्ञानिनि ॥ ज्ञाने नि ष्ठाऽस्य ॥

ज्ञानपः । पुं । ज्ञानपोते ॥

ज्ञानमयः । पुं । शिवे ॥ त्रि । अखण्ड ब्रह्माकारे प्रकाशस्वरूपे ॥ ज्ञानं तत्त्वतः समस्तपदार्थावबोधस्तदा- त्मकः ॥

ज्ञानयज्ञः । पुं । न्यायेन वेदार्थनिश्चय परे ॥ ब्रह्मार्पणा अपरे यज्ञं यज्ञेनैवो पजुह्वति । ब्रह्माग्नौ सत्यज्ञानान न्तानन्दरूपं निरस्तसमस्तविशेषं ब्र- ह्म तत्पदार्थः तस्मिन्नग्नौ यज्ञं प्र- त्यगात्मानं त्वं पदार्थम् यज्ञेनैव य ज्ञशब्दःआत्मनामसु यास्कनपठितः इत्थम्भूतलक्षणे तृतीया एवकारो भे दाभेदव्यावृत्त्यर्थः त्वंपदार्थाभेदेनै वोपजुह्वति तत्स्वरूपतया पश्यन्ती त्यर्थः । अपरे पूर्वस्मात् कर्मयोगि नो विलक्षणास्तत्त्वदर्शननिष्ठाःसन्या सिनइत्यर्थः ॥ * ॥ महापापवतां नृणां ज्ञानयज्ञो न रोचते । प्रस्तुत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वतः ॥ भोगसारस्वविभ्रान्त्या ज्ञाने भोगी घृणातिनि । अद्वेषोऽसुदुर्ज्ञानस्य

मद्यापापवतोभवेत् ॥

ज्ञानयोगः । पुं । निष्ठाविशेषे । ज्ञानमेव ब्रह्मणा युज्यते इति ज्ञानयोगनिष्ठायाम् ॥ ब्रह्मज्ञानप्राप्त्युपाये

ज्ञानयोगव्यवस्थितिः । स्त्री । जीवन्मुक्तौ ॥ आत्मसाक्षात्कारमनोनाशवासनाक्षयानुकूलपुरुष प्रयत्नाभ्यां विशिष्टासंसारविलक्षणावस्थितिः ॥

ज्ञानलक्षणा । स्त्री । त्रिविधालौकिकसन्निकर्षान्तर्गतसन्निकर्षे ॥ तल्लक्षणं यथा । विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणेति । अस्यार्थः । तद्विषयज्ञापकतद्विषयज्ञानम् । यथा पूर्वं घटादिज्ञाने सति पश्चात् घटादिज्ञानम् ॥

ज्ञानवान् । त्रि । ज्ञानिनि ॥ ब्रह्मविदि ॥ ज्ञानमस्त्यस्य । मतुप् ॥

ज्ञानवापी । स्त्री । काश्यन्तर्गततीर्थविशेषे । ज्ञानोदतीर्थे ॥

ज्ञानसाधनम् । न । इन्द्रिये ॥

ज्ञानसिद्धिः । स्त्री । ब्रह्मात्मैक्यबोधे ॥

ज्ञानस्कन्धः । पुं । निर्विकल्पके ॥

ज्ञानस्वरूपः । पुं । जीवे ॥ ज्ञानसाधनस्य । विषयान् जानाति प्राप्नोतिच । तादृशस्वरूपो जीवः ॥

ज्ञानाग्निदग्धकर्म्मा । त्रि । पण्डिते ॥ कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्नि स्तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य सः ॥

ज्ञानापोहः । पुं । विस्मरणे ॥

ज्ञानाभ्यासः । पुं । अवणाद्यावृत्तौ ॥ तच्चिन्तनं तत्कथन मन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वञ्च ज्ञानाभ्या संविदुर्बुधाः ॥ सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत् सदा । इदं जगदहञ्चेति बोधाभ्यासं विदुः परम् ॥

ज्ञानावस्थितचेताः । पुं । स्थितप्रज्ञे ॥ निर्विकल्पकब्रह्मात्मैक्यबोध एवाऽवस्थितं चेतो यस्य सः ॥

ज्ञानासिः । पुं । आत्मविषयकनिश्चयखड्गे ॥

ज्ञानी । त्रि । पदवाक्यन्यायादिमाननिपुणे । तत्वदर्शिनि । कृतसाक्षात्कारे ॥ परोक्षज्ञानवति ॥ स्वतोऽपरोक्षं ज्ञान मसम्भावनादिप्रतिबन्धेन फलमजनयत् परोक्षमित्युपचर्यते ॥ भगवत् तत्वसाक्षात्कारो ज्ञानं तेन नित्ययुक्ते ॥ तीर्णमाये । निवृत्तसर्वकामे । निष्कामभक्ते । तत्वज्ञानवति ॥ ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरीति देवीगीता ॥ पुं । दैवज्ञे ॥ ज्ञानमस्यास्ति । अतइनिठनाविति इनिः ॥

ज्ञानेन्द्रियम् । न । धीन्द्रियेषु । श्रोत्र

त्वक्चक्षुर्जिह्वाघ्राणाख्येषु ॥ एता न्याकाशादीनां सात्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पन्नानि॥ यथोक्तं देवीभागवते। पञ्चभूतस्थसत्वांशैः श्रोत्रादीनां समुद्भवः। ज्ञानेन्द्रियाणां राजेन्द्र प्रत्येकमिति ॥ ज्ञानसाधनमिन्द्रियम् ज्ञानार्थमिन्द्रियं-वा॥ क्रमशो दिग्वातार्कप्रचेतोऽश्विनौ ज्ञानेन्द्रियाणां देवताः ॥ शब्दस्पर्शरूपरसगन्धाश्च क्रमशो ज्ञानेन्द्रियाणां विषयाः ॥

ज्ञापकम् ॥ त्रि। गमके। बोधके ॥ निदर्शने ॥ ज्ञापयति। ज्ञा०। ण्वुल् ॥

ज्ञापनम्। न। बोधने। जनावना इति भाषा ॥

ज्ञापिका। स्त्री। बोधिकायाम् ॥

ज्ञापितः। त्रि। लक्षिते ॥ सूचिते ॥ प्रबोधिते ॥

ज्ञीप्स्यमानः। त्रि। बोधयितुमिष्टेर्थे॥

ज्ञेयम्। त्रि। वेदितव्ये। ज्ञानविषये। ज्ञानकर्मणि॥ अज्ञातत्वात् ज्ञातुमर्हे ब्रह्मणि॥ जडस्याज्ञानत्वाभावेन ज्ञातमनर्हत्वात्॥ * ॥ ज्ञेयं यत्तत् प्रवक्ष्यामि यद् ज्ञात्वाऽमृतमश्नुते। अनादिमत् परंब्रह्म नसत्तन्नासदुच्यते ॥ सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम्। सर्वतः श्रु



तिमल्लोके सर्वमावृत्य तिष्ठति ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्। असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृच ॥ बहि रन्तश्च भूतानामचरं चरमेवच। सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिकेच तत् ॥ अविभक्तं विभक्तेषु विभक्त मिव चस्थितम्। भूतभर्तृच तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ ज्योतिषा मपि तज्ज्योति स्तमसः पर मुच्यते। ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्याधिष्ठितम् ॥ ज्ञातुं योग्यम्। ज्ञा०। अचोयत्। ईद्यति। गुणः॥

ज्या। स्त्री। मातरि ॥ वसुधायाम् ॥ मौर्व्याम्। धनुर्गुणे ॥ जिनाति। ज्यावयोहानौ। अघ्न्यादित्वात् यगन्तो निपातितः॥ अन्येभ्योपीति ङो-वा। टाप्॥

ज्याघातवारणम्। न। गोधायाम्। तले ॥ जायाः शिञ्जिन्या गुणस्य आघात स्तस्य वारणम् ॥

ज्यानिः। स्त्री। जीर्णे ॥ हानौ ॥ तटिन्याम् ॥ ज्यानम्। ज्या०। ग्लाज्याहाभ्योनिः॥ यद्वा। जिनाति। ज्या०। वीज्याज्व रिभ्योनिः ॥

ज्यायान्। त्रि। अतिवृद्धे। वर्षीयसि ॥ अति प्रशस्ते ॥ अयमनयो रतिश

येन वृद्धः प्रशस्यो वा । ज्य च वृद्धस्य च । द्विवचनेतीयसुनि वृद्धप्रशस्ययो ज्यादेशः। ज्यादादीयस इत्यात्वम्॥

ज्यायसी । स्त्री । अतिप्रशस्तायाम् ॥ वृद्धायाम् ॥ ज्येष्ठायाम् ॥ ङीप् ॥

ज्येष्ठः । पुं । शुक्रे । ग्रीष्मर्त्तोः प्रथमे-मासि ॥ ज्येष्ठी पूर्णमास्य ऽस्मिन् । साऽस्मिन् पौर्णमासीत्यण् । संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः ॥ त्रि । अतिवृद्धे ॥ श्रेष्ठे ॥ अयमेषामतिशयेन वृद्धः प्रशस्यो वा। अतिशायने तमबिष्ठनाविति इष्ठनि वृद्धस्य च ज्य चे त्यनेनच वृद्धप्रशस्ययोर्ज्यादेशः ॥ अग्रजे ॥

ज्येष्ठतातः । पुं । पितुरग्रजे ॥ तातस्य ज्येष्ठः । राज० ज्येष्ठस्यपूर्वनिपातः ॥

ज्येष्ठवर्णः । पुं । ब्राह्मणे ॥ वर्णानां ज्येष्ठः । राज० ॥ कर्मधारयो वा ॥ त्रि । श्रेष्ठवर्णे ॥

ज्येष्ठवला । स्त्री । सहदेव्याम् ॥

ज्येष्ठश्वश्रूः । स्त्री । कुल्याम् । पत्न्या ज्येष्ठभगिन्याम् । बडीसाली इति जेठसास इतिचभाषा ॥

ज्येष्ठसामगः । पुं । ज्येष्ठसाम्नांगातरि ॥ तानिच आरण्यके गीयन्ते ॥

ज्येष्ठसाम । न । सामप्रभेदे । आरण्यके गीयमाने सामनि ॥ तद्धयातना

कुर्वते ॥

ज्येष्ठस्थानम् । न । तीर्थविशेषे ॥ अत्र महादेवस्तिष्ठति ॥

ज्येष्ठा । स्त्री । अश्विन्यादिष्वष्टादशे नक्षत्रे ॥ सत्कीर्त्तिपुत्रैर्विविधैः समेतो वित्तान्वितोऽत्यन्तलसत्प्रतापः । श्रेष्ठप्रतिष्ठो विकलस्वभावो ज्येष्ठा भवेद्यस्यचजन्मकाले ॥ गृहगोधायाम् ॥ मध्यमाङ्गुलौ ॥ गङ्गायाम् ॥ अलक्ष्म्याम् ॥ नायिकाभेदे । परिणीतत्वेसति भर्त्तुरधिकस्नेहायाम् ॥ प्रथमजायाम् ॥ ज्येष्ठस्त्रियाम् ॥ ज्येष्ठस्त्री । पुंयोगलक्षणङीषंबाधित्वाअजादित्वाट्टाप् ॥

ज्येष्ठामूलीयः । पुं । ज्येष्ठे ॥ ज्येष्ठामूलीय मित्युक्ते मास स्याषाढपूर्वकम् ॥

ज्येष्ठाम्बु । न । तण्डुलाम्बुनि । मण्डे ॥

ज्येष्ठाश्रमः । पुं । गृहिणि ॥ यस्मात्-त्रयोप्याश्रमिणो ज्ञानेनान्नेनचाऽ-न्वहम् । गृहस्थेनैव धार्यन्ते तस्माज् ज्येष्ठाश्रमो गृही ॥ ज्येष्ठ आश्रमोयस्य । कर्मधारयो वा ॥

ज्येष्ठाश्रमी । पुं । गृहस्थे । गृहस्थो ब्र-ह्मचारीच वानप्रस्थोथभिक्षुकः । चत्वार आश्रमाः प्रोक्ताः सर्वेगार्हस्थ्यमूलकाः ॥ ज्येष्ठश्चा सावाश्र-मीच ॥

ज्येष्ठी । स्त्री । गृहगोधायाम् । छिपकली इति भाषा ॥

ज्येष्ठः । पुं । ज्येष्ठे मासे । शुक्रे ॥ विदेशवृत्तिः पुरुषः सुतीव्रः धनान्वितः स्यात् खलु दीर्घसूत्रः । विचित्रबुद्धिर्विदुषां वरिष्ठो ज्येष्ठाभिधाने जननं हि यस्य ॥ ज्यैष्ठीपूर्णमास्यस्मिन् । साऽस्मिन् पौर्णमासीत्यण् ॥

ज्यैष्ठिनेयः । पुं । ज्येष्ठाया अपत्ये ॥ कल्याण्यादित्वात् ढक् इनङादेशश्च ॥

ज्यैष्ठी । स्त्री । ज्येष्ठपूर्णिमायाम् ॥ ज्येष्ठया युक्ता पौर्णमासी । नक्षत्रेण युक्तः काल इत्यण् । ततो ङीप् ॥ गृहगोधायाम् ॥

ज्यैष्ठ्यम् । न । ज्येष्ठत्वे ॥ यथा । विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः । वैश्यानां धान्यधनतः शूद्राणामेव जन्मत इति मनुः ॥

ज्योक् । अ । कालभूयस्त्वे ॥ प्रश्ने ॥ शीघ्रार्थे ॥ सम्प्रत्यर्थे ॥

ज्योतिरिङ्गः । पुं । खद्योते ॥

ज्योतिरिङ्गणः । पुं । तमोमणौ । खद्योते ॥ ज्योतिर्नक्षत्रं तद्वदिङ्गति । इगि गतौ । बहुलग्रहणार्थादिति युच् ॥

ज्योतिर्मोचह्रदः । पुं । तीर्थविशेषे ॥

ज्योतिर्व्वित् । पुं । कालपरमार्थवादिनि ॥

ज्योतिर्व्वीजम् । न । खद्योते ॥



ज्योतिश्चक्रम् । न । चन्द्रसूर्य्यादिग्रहनक्षत्रमण्डले । राशिचक्रे ॥ सप्तविंशतिभे ज्योतिश्चक्रं स्तिमितवायुगम् । तदष्टांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः ॥

ज्योतिःशास्त्रम् । न । ग्रहनक्षत्रादीनां तत्त्वनिर्णायके शास्त्रे ॥ सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् । वेदस्य निर्म्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम् ॥ विनैतदखिलं श्रौतस्मार्त्तं कर्म्म न सिद्ध्यति । तस्माज्जगद्धितायेदं ब्रह्मणा निर्म्मितं पुरा ॥ अतएव द्विजैरेतदध्येतव्यं प्रयत्नतः ॥

ज्योतिषम् । न । वेदाङ्गविशेषे ॥ ग्रहणादिगणनशास्त्रे । पञ्चस्कन्धमिदं शास्त्रं होरागणितसंहिताः । केरलिः शकुनञ्चेति ज्योतिःशास्त्रमुदीरितम् ॥ वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्व्या विहिताश्च यज्ञाः । तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥ यथा शिखा मयूराणां नागानां मणयो यथा । तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्द्धनि स्थितम् ॥ केवलाल्लोभाच्च मोहाच्च यो विप्रोऽज्ञानतोऽपि वा । शूद्राणामुपदेशन्तु दद्यात् स नरकं व्रजेत् ॥ ज्योतिर्व्वेदपाठाधिकृतास्त्रयो वर्णाः । सूतेष

ज्यो इत्यस्य। संज्ञापूर्वकत्वादवृद्धिः॥

ज्योतिषी। स्त्री। तारायाम्॥

ज्योतिष्कः। पुं। चित्रकवृक्षे॥ मेथिका बीजे॥ गणिकारिकावृक्षे॥ पुंभूम्नि। ज्योतिष्काः। चन्द्रार्कग्रहनक्षत्र तारकासु॥ न। मेरोः शृङ्गान्तरे॥ तदीशभागे तस्याद्रेः शृङ्गमादित्य सन्निभम्। यत्तज्ज्योतिष्कमित्याहुः सदा पशुपतेः प्रियम्॥ तस्याः ब्रह्म पुर्याः ईशानभागे॥

ज्योतिष्टोमः। पुं। षोडशर्त्विक्साध्ये यज्ञविशेषे॥ अचदादयस्तत्र स्तोमाश्चि त्ताभवन्ति॥ ज्योतींषि स्तोमा यस्य यज्ञस्य सोऽयं ज्योतिष्टोमः। ज्योतिरायुषः स्तोम इतिषत्वम्। सलोपः॥

ज्योतिष्मान्। पुं। सूर्ये॥ प्लक्षद्वीपस्थेऽद्रिविशेषे॥ त्रि। दीप्तियुक्ते॥ ज्योतिरस्यास्ति। मतुप्॥

ज्योतिष्मती। स्त्री। पारावताङ्घ्र्याम्। कटभ्याम्। मालकांगणी इतिभाषा॥ ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित्। अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा॥ रात्रौ॥ उगित्वान् ङीप्॥

ज्योतिस्। अग्नौ॥ दिवाकरे॥ मेथिकायाम्॥ न। दृष्टौ। नेत्रकनीनिकामध्ये॥ नक्षत्रे॥ प्रकाशे॥ सर्वाभा



सके ब्रह्मणि चैतन्ये। आदित्यादीनां बुद्ध्यादीनां च बाह्यानामान्तराणामपि जडज्योतिषां चैतन्यज्योतिषोऽवभासकत्वोपपत्तेः॥ विज्ञाने॥ द्योतते द्योतयं वाऽनेनवा। द्युत॰। द्युतेरिसिन्नादेश्च जः॥

ज्योतीरथः। पुं। ध्रुवे। औत्तानपादौ॥

ज्योत्स्ना। स्त्री। चन्द्रातपे॥ ज्योतिस्संयुक्तनिशि॥ कौमुद्याम्॥ श्वेतघोषायाम्॥ ज्योतिरस्त्यस्याः। ज्योत्स्नातमिस्रेत्यादिना ज्योतिषउपधालोपो नप्रत्ययश्च निपात्यते॥

ज्योत्स्नाप्रियः। पुं। चकोरे॥

ज्योत्स्नावृक्षः। पुं। दीपाधारविशेषे॥

ज्योत्स्नी। स्त्री। पटोलिकायाम्। चचेंडा इति प्रसिद्धे दीर्घफले॥ चन्द्रिकायुक्तायां रात्रौ। चांदनीरात इति भाषा॥ रेणुकानामगन्धद्रव्ये॥ ज्योत्स्नाऽस्त्यस्याः। ज्योत्स्नादिभ्यउपसंख्यानमित्यण्। संज्ञापूर्वकत्वादवृद्ध्यभावः। ङीप्॥

ज्योतिषिकः। पुं। देवज्ञे। कालपरमार्थवादिनि॥ ज्योतिषमधीते वेदवा। क्रतूक्थादीति ठक्॥

ज्यौत्स्नः। पुं। शुक्लपक्षे॥ ज्योत्स्नाऽस्मिन्नस्ति। ज्योत्स्नादिभ्यादण्॥ त्रि। दीप्ते। ज्योत्स्नायुक्ते॥

ज्यौत्स्निका । स्त्री । चन्द्रिकायुक्तायां रात्रौ ॥ पटोल्याम् ॥

ज्यौत्स्नी । स्त्री । ज्योत्स्नया युक्तायां रात्रौ ॥ ज्योत्स्न्याम् ॥ भवान्तत्वान्ङीप् ॥

ज्वरः । पुं । स्वनाम्ना प्रसिद्धे रोगे । जूर्त्तौ । रोगपृष्ठ । मन्दागदे ॥ तस्योत्पत्तिः संख्याचोक्ता भिषग्भिः । दक्षाध्वमानसंक्रुद्धरुद्रनिश्वाससम्भवः । ज्वरोऽष्टधा पृथग्द्वन्द्व संघातागन्तुजःस्मृतइति ॥ तथाहि । वातिकःपैत्तिकश्चैव कफजो वातपित्तजः । वातश्लेष्मप्रभूतश्च पित्तश्लेष्मोद्भवस्तथा ॥ संघातागन्तुजा वेवं ज्वरोऽष्टविधउच्यत इति ॥ अपिच । जनकःसर्वरोगाणां दुर्वारो दारुणो ज्वरः । शिवभक्तश्च योगीच सएव विकृताकृतिः ॥ भीमस्त्रिपादस्त्रिशिराःषड्भुजोनवलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥ मन्दाग्निस्तस्यजनको मान्द्यंजनकास्त्रयः । पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥ इत्यादि वैद्यशास्त्रतो विशेषोऽवगन्तव्यः ॥ ज्वरणम् । ज्वररोगे । घञ् । संज्ञापूर्वकत्वात् वृद्ध्यभावः ॥ ज्वरति । अज् वा ॥ सन्तापहेतुत्वाच्छोके ॥ ज्वरमुक्तस्य लक्षणं यथा ।-स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्यच । क्षवथुश्चान्नलिप्साच ज्वरमुक्तस्य लक्षणम् ॥

ज्वरघ्नः । पुं । गुडूच्याम् ॥ वास्तूके ॥ त्रि । ज्वरनाशके ॥

ज्वरघ्नी । स्त्री । } मञ्जिष्ठायाम् ॥
ज्वरहन्त्री । स्त्री । }

ज्वराग्निः । पुं । आधिमन्यवे । ज्वररूपाग्नौ ॥

ज्वराङ्गी । स्त्री । भद्रदन्तिकायाम् ॥

ज्वरान्तकः । पुं । नेपालनिम्बे ॥ आरग्वधे ॥ औषधविशेषे ॥ त्रि । ज्वरनाशके ॥

ज्वरापहा । स्त्री । बिल्वशुण्ठ्याम् । बिल्वपत्र्याम् ॥ त्रि । ज्वरनाशके ॥

ज्वरारिः । पुं । ज्वरघ्नौषधविशेषे ॥

ज्वरितः । त्रि । ज्वरिणि ॥ ज्वरः सञ्जातोऽस्य । तारकादित्वादितच् ॥

ज्वरी । त्रि । ज्वरयुक्त ॥ गुर्वभिष्यन्दकाले वा ज्वरीनाद्यात् कथञ्चन ॥

ज्वलः । पुं । ज्वाले । दीप्तौ ॥ त्रि । दीप्तिविशिष्ट ॥ ज्वलति । ज्वलदीप्तौ । अच् ॥

ज्वलका । स्त्री । अग्निशिखायाम् ॥ इतिहेमचन्द्रः ॥

ज्वलत् । त्रि । दीप्तिमति ॥

ज्वलनः । पुं । अग्नौ ॥ चित्रकवृक्षे ॥ म । दहने ॥ ज्वलति । ज्वल० । ज्व

उत्कम्पयदत्रम्पयद्दग्भर्षिज्वलमुचजपप-
तपदः इति ताच्छील्यादिषुयुच् ॥

ज्वलनाश्मा । पुं । सूर्यकान्तमणौ ॥

ज्वलितः । त्रि । दग्धे ॥ उज्ज्वले ॥ भा-
स्करे ॥ उज्ज्वलिते ॥ ज्वल० । क्तः ॥

ज्वलिनी । स्त्री । मूर्वालतायाम् ॥

ज्वालः । पुं । अग्निशिखायाम् ॥ त्रि ।
दीप्तिविशिष्टे ॥ ज्वलति । ज्वल० ।
ज्वलितकसन्तेभ्योणः ॥

ज्वाला । स्त्री । अग्निशिखायाम् ॥ टाप् ॥

ज्वालागर्दभकः । पुं । जालगर्दभरोगे ॥

ज्वालाजिह्वः । पुं । अग्नौ ॥

ज्वालामरिचम् । न । रक्तमरिचे । पि
पली लालमरिच इत्यादि भाषा ॥

ज्वालामुखी । स्त्री । जालन्धरपीठान्त-
र्गतपीठस्थानविशेषे ॥ तत्र भगवत्या
जिह्वापतिता । तत्राम्बिकादेवी ।
उन्मत्तनामको भैरवश्च ॥ तथाहि ।
ज्वालामुख्यां महाजिह्वा देव उन्म-
त्तभैरवः । अम्बिका सिद्धिदानाम्नी
स्तनं जालन्धरे ममेति तन्त्रचूडाम
णिः ॥ देव्यन्तरे ॥ ज्वालामुखंयस्याः ॥

ज्वालिका । स्त्री । ज्वालायाम् । जाल
इतिभाषा ॥

झः

झः । पुं । झञ्झानिले ॥ सुरगुरौ ॥ दै-
त्यराजे ॥ ध्वनौ ॥ झञ्झावाते ।
झंखड इतिख्याते । प्रचण्डानिले ॥
वृष्टौ ॥ त्रि । नष्टवस्तुनि ॥

झगझगायमानः । त्रि । चाकचिक्य
युक्ते ॥

झगिति । अ । शैघ्र्ये ॥

झङ्कारः । पुं । भ्रमरादिसमूहशब्दे ॥

झङ्कृतिः । पुं । कांस्यतालादिध्वनौ ॥

झञ्झा । स्त्री । वाते ॥ तारवायौ ॥
नष्टे ॥ ध्वनिविशेषे ॥ अम्बुकणवर्षे ॥

झञ्झानिलः । पुं । प्रावृषिकवायौ ॥

झञ्झावातः । पुं । झञ्झानिले ॥

झटा । स्त्री । भूम्यामलक्याम् । क्षिमु-
ग्नकौषधौ ॥ जप्यते । झटसङ्घाते ।
घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥

झटिः । पुं । क्षुद्रवृक्षे ॥ झट० । इन् ॥

झटिति । अ । शीघ्रार्थे । तत्क्षणार्थे
॥ झट० । सम्पदादित्वात् क्विप् । झट
मेति । इण० । क्तिच् ॥

झणत्कारः । पुं । } कङ्कणादिध्वने र-
झनत्कारः । पुं । } नुकरणशब्दे ॥

झम्पः । पुं । सम्पातपतने । लम्फे ॥ स्वे
च्छाधीनपतने ॥

झम्पारुः । पुं । वानरे ॥

झम्पाशी । पुं । मत्स्यरङ्कविहङ्गमे ॥

झंम्पी । पुं । वानरे ॥

जरः । पुं । निर्जरे । उत्सानिर्गते नि रिजादि प्रशाहे ॥ जरणम् । जॄष्व योहानौ । कर्त्तरि ॥

जरा । स्त्री । जरे । निर्जरे ॥ षिच्चा दङ् ॥

जरिः । स्त्री । जरे ॥ जरणम् । जॄष्० । अपह: ॥

जरी । स्त्री । गिरिवारिप्रवाहे ॥ कृ दिकारादितिङीष् ॥

जर्जरः । पुं । कलियुगे ॥ वाद्यभाण्ड विशेषे । वघीजांज इतिभाषा ॥ गौ डास्तु चर्मपुटाच्छादितकाष्ठस्थाने इति वरड इतिख्यातेच । डिण्डि मोऽझ्झरी प्रोक्तो जर्जरः पटहः स्मृ तः । इति तत्पर्यायाः । झल्लकी झ ल्ली झल्लरी जर्जरी इतिशब्दरत्नाव लीच्याहुः ॥

नेपालभाषया झ्यालीति प्रसिद्धे कां स्यवाद्ये ॥ मर्दविशेषे ॥ झञ्झर इ ति प्रसिद्धे जलपात्र विशेषे ॥ झरणा झन्नी इतिच ख्याते पाकसाधने लौ हद्रव्ये ॥ जर्ज इति शब्दं राति । आ तोनुपेतिकः ॥ यद्वा । जर्जति । जर्ज परिभाषणभर्त्सनयोः । वाहुलका दरः ॥

जर्जरकः । पुं । कलियुगे ॥ स्वार्थ योधकेऽपि जर्जरशब्दार्थेषु ॥ कः ॥

जर्जरा । स्त्री । वेश्यायाम् ॥

जर्जरिका । स्त्री । रोटिकाविशेषे ॥ यथा । धूमसीरचिता रोटी प्रोक्ता जर्जरिकाबुधैः । जर्जरी कफपित्तघ्नी किञ्चिद्दाहकरीस्मृतेति ॥

जर्जरी । स्त्री । जर्जरवाद्ये ॥ जजरी इ ति ख्याते स्वल्पेशरिवाद्ये ॥ धूमसी रोटिकायाम् ॥

जर्जरीकः । पुं । न । शरीरे ॥ जर्जति । जर्जपरिभाषणभर्त्सनयोः । पर्फरी कादित्वात् साधुः ॥

झलझला । स्त्री । हस्तिकर्णास्फालने ॥

झल्लरी । स्त्री । हुडुक्के । जर्जरवाद्ये ॥ वालकुन्तले । केशचक्रे ॥

झषा । स्त्री । नागबलौषधौ ॥ कन्यायाम् ॥

झल्लः । पुं । व्रात्यात् क्षत्रियात् सवर्णा यामुत्पन्नेवर्णसङ्करजातिविशेषे ॥ क रणे । मल्ले ॥ भाँड इति प्रख्याते प्रहासके ॥

झल्लकम् । न । कांस्यनिष्पन्ने करता ले ॥ यथा । शिवागारे झल्लकञ्च सू र्यागारेच शङ्खकम् । दुर्गागारे वंशि वाद्यं मधुरीञ्च न वादयेत् ॥

झल्लकण्ठः । पुं । कपोते ॥

झल्लरी । स्त्री । हुडुक्कवाद्ये ॥ वक्रके शेषु ॥ जर्जते । जर्ज० । वाहुलकाद रन् । पृषोदरादिः । गौरादित्वात्

झाष् ॥ युद्धे ॥ भ्रंशे ॥

जल्लिका । स्त्री । उद्वर्त्तनमले । जिल्ली इति भाषा ॥ चोते ॥ दीप्तौ । आतपश्चैा ॥

जल्ली । स्त्री । जर्जरवाद्ये ॥

जल्लोषः । पुं । तर्कुलासके । चरखा इति भाषा ॥

जषः । पुं । मत्स्ये । मीने ॥ मीनराशौ ॥ तापे ॥ अटव्याम् ॥ न । खिले ॥ जषति । जषहिंसार्थः । पचाद्यच् ॥ यद्वा । जष्यते । खनोघचे-तिघः ॥

जषकेतनः । पुं । } कामदेवे । मदने ॥ जषोमकरः
जषकेतुः । पुं । }
केतनङ्केतुर्वा यस्य ॥

जषा । स्त्री । नागबलायाम् ॥ टाप् ॥

जषाङ्कः । पुं । अनिरुद्धे । कन्दर्पे ॥

जषाशनः । पुं । शिशुमारे ॥ त्रि । मत्स्यादे ॥

जषोदरी । स्त्री । व्यासमातरि ॥

जाङ्किसम् । न । चरणालङ्कारविशेषे ॥

जाटः । पुं । निकुञ्जे ॥ कान्तारे ॥ व्रणादीनांमार्जने ॥ न । सङ्घाते ॥ जटनम् । जट० । घञ् ॥

जाटलः । पुं । घण्टापाटलौ । लोध्रविशेषे ॥ जाटं सङ्घातं लाति । ला० । आतोमुपेतिकः ॥

जाटलिः । पुं । स्त्री । घाटलिवृक्षे ॥

जाटा । स्त्री । भूम्यामलक्याम् ॥ यूथीवृक्षे ॥ जट्यते । जटसङ्घाते । घञ् ॥

जाटामला । स्त्री । } भूम्यामलक्याम् ॥
जाटिका । स्त्री । }
जाटी । स्त्री । }

जामकम् । न । दुग्धेष्टकाविशेषे । जामा इति जांवा इतिच भाषा ॥

जामरः । पुं । तर्कुभाग्रे । तर्कुवेकीसाख इतिभाषा ॥

जार्झरः । त्रि । जार्झरिके । जर्जरवाद्य कर्त्तरि ॥ जर्जरवादनं शिल्प मस्य । मडुकजर्जराद्वान्यतरस्यामित्यण् ॥

जार्झरिकः । त्रि । जार्झरे ॥ जर्जरवादनं शिल्प मस्य । पद्येठक् ॥

जालिः । स्त्री । पानकविशेषे ॥ यथा । आम्रमामफलं पिष्टं राजिकालवणान्वितम् । भृष्टहिङ्गुयुतं पूतं घोलितं जालिरुच्यते ॥ जालि र्हरतिजिह्वायाः कुण्ठत्वं कण्ठशोधिनी । मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी ॥

जावुः । पुं । जाउ इतिख्याते पिचुलवृक्षे ॥ जामितिशब्दं वेति गच्छति । वी मध्यादिषु । मित०डुः ॥

जावुकः । पुं । पिचुले । जाउ इतिभाषा ॥ संज्ञायांकन् ॥

जिङ्गाकम् । न । फलविशेषे ॥

जिङ्गिनी । स्त्री । उल्कायाम् ॥ जिङ्गिनीदृचे ॥

जिङ्गी । स्त्री । जिङ्गिनीदृचे ॥

जिञ्जिमः । पुं । दावाग्नौ ॥

जिञ्जिरिष्टा । स्त्री । जिञ्भिरी इति गौडप्रसिद्धे चुपविशेषे । पीतपुष्पायाम् । रोमाञ्चफलायाम् ॥

जिञ्जी । स्त्री । जिह्वायाम् ॥ यथा । जिञ्जा वाऽथमधुरा कूजन्तीव सुराकृतिरित्यागमः ॥

जिरिटका । स्त्री । भिरव्याम् ॥ कन् ॥

जिरटी । स्त्री । सैरीयके ॥ भिमिति रटति । रट० । अच् । पृषोदरादिः । गौरादित्वान्ङीष् ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । दन्तामयशूलवातकफशोफकासत्वग्दोषनाशित्वञ्चेति राजनिर्घण्टः ॥ कुब्जरच्ये ॥

जिरिका । स्त्री । ⎫ जिह्वाम् । भींगुर इ० भींगर इतिच भाषा ॥
जिरी । स्त्री । ⎬
जिरीका । स्त्री । ⎭

जिल्लिः । स्त्री । वाद्यविशेषे ॥ यथा । घण्टा शङ्खस्तथा भेरीमृदङ्गो भिल्लिरेव च । पञ्चानां शस्यते वाद्यं देवताराधनेष्विति गूढार्थदीपिका ॥

जिल्लिका । स्त्री । जिल्लीकायाम् । चीर्याम् ॥ उद्वर्त्तनांशुके ॥ आतपरुचै ॥ विलेपनशकले ॥ स्वार्थे कन् ॥

जिल्ली । स्त्री । कीटविशेषे । भींगर इति भाषाप्रसिद्धे । भिरिकायाम् । चीर्याम् ॥ आतपरुचि ॥ वर्त्त्याम् ॥ उद्वर्त्तनांशुके ॥ स्थालीदग्धान्ने ॥ भिल्लति । भिल्ल संचलने । अच् । पृषोदरादित्वात् साधुः । गौरादित्वात् ङीष् ॥

जिल्लीकण्ठः । पुं । गृहकपोते ॥

जिल्लीका । स्त्री । जिल्लिकार्थेषु ॥

जीरुका । स्त्री । जिह्वाम् । भींगुर इति भाषा । भीतिरौति । बाहुलकात् कक् ॥

जुण्टः । पुं । अप्रकाण्डद्रुमे । स्तम्बे । गुल्मे । भुण्ड इति भाषा ॥

जुमरिः । स्त्री । रागिणीविशेषे ॥ यथा । प्रायःशृङ्गार बहुला माध्वीकमधुरा मृदुः । एकैव भुमरिर्लोके वर्णादिनियमोज्भिता ॥ अतो लक्षणमेतस्या नोदाहारि विशेषकम् । इदं हि शालगं सूचं प्रसिद्धं स्वपरञ्जनम् ॥ इति सङ्गीतदामोदरः ॥

जूषिः । स्त्री । क्रमुकभेदे ॥ दुष्टदैवश्रुतौ ॥

जोड़ः । पुं । गुवाकवृक्षे ॥ इतिभूरिप्रयोगः ॥

टङ्कना | टङ्कक

अः

अः । पुं । अकारे ॥ वलीवर्द्दे ॥ शुक्रे ॥ वामभतौ ॥ गायने ॥ घर्घरध्वनौ ॥

*॥*॥ इत्यादिगौडकुलोत्पन्नाडीचवालप्रधानोपनामतुलारामभिश्रात्मजश्रीधनपतिभिश्रापरनाम्ना तथाश्रीसद्गुरुकुलावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्रह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ चवर्गः समाप्तिङ्गतः ॥ १ ॥

तत् सत्

टः

टः । पुं । टकारे ॥ वामने ॥ पादे ॥ निस्वने ॥ न । करङ्के ॥ टङ्कारे ॥ टगणे ॥

टक्कदेशीयः । पुं । वास्तूकशाके ॥ इति त्रिकाण्डशेषः ॥

टक्कनामानः । पुंभूम्नि । देशविशेषे । वाहीकेषु ॥ वाहीकाष्टक्कनामान-

इति हेमचन्द्रः ॥

टगणः । पुं । त्रयोदशभेदभिन्नेषाण्मात्रिके । यथा । (ऽऽऽ शिवः १ ) (॥ऽऽ शशिः २) (।ऽ।ऽ दिनपतिः ३) (ऽ॥ऽ सुरपतिः ४) (॥॥ऽ शेषः ५) (।ऽऽ। अहिः ६) (ऽ।ऽ। सरोजम् ७) (॥ऽ। धाता ८) (ऽऽ॥ कलिः ९) (॥ऽ॥ चन्द्रः १०) (।ऽ॥। ध्रुवः ११) (ऽ॥॥ धर्मः १२ ) (॥॥॥ शालिकरः १३) इति षण्मात्रे त्रयोदशभेदाः ॥

टगरः । पुं । टङ्काचारे ॥ हेलाविभ्रमगोचरे ॥ त्रि । केकराक्षे ॥

टङ्कः । पुं । कोपे ॥ असिकोशे ॥ खड्गे ॥ ग्रावदारणे । टाँकी इति भाषा ॥ चतुर्माषकस्वरूपेमाने । चतुर्विंशतिरक्तिकारूपे वा ॥ दर्पे ॥ शरभे ॥ राजाम्रे ॥ पुं । न । नीलकपित्थे ॥ खनित्रे ॥ टङ्कने ॥ टङ्कयति । टकि बन्धे । चुरादिः । अच् ॥ टम् इति शब्दं कायति वा । कै० । आतो ऽनुपेतिकः सुपीति वा ॥

टङ्ककः । पुं । रजतमुद्रायाम् । रूप्या इति भाषा इत्यमरटीकासारसुन्दरी ॥

टङ्कपतिः । पुं । रूप्याध्यक्षे ॥

टङ्कशाला । स्त्री । रजतमुद्रागृहे । टकशाल इति भाषा ॥ इत्यमरटीकासारसुन्दरी ॥

टङ्कटीक: । पुं । शिवे ॥ इतित्रिकाण्डशेष: ॥

टङ्कण: । पुं । न । रसशोधने । मालतीतीरजे । लोहद्दाविणि । सुहागा इति प्रसिद्धे क्षारे ॥ टङ्कणं वह्निकृ द्रूक्षं कफघ्न वातपित्तकृत् ॥ टङ्कयते ल्युट् । पृषोदरादि: ॥

टङ्कनम् । न । टङ्कणे ॥

टङ्का । स्त्री । जङ्घायाम् । टाँग इति भाषा इतिमेदिनी ॥

टङ्कानक: । पुं । अम्लादावृक्षे ॥

टङ्कार: । पुं । विस्मये ॥ प्रसिद्धौ ॥ शिञ्जिनीध्वनौ ॥ टमितिशब्दं करोति । कृ० । अण् ॥

टङ्कारी । स्त्री । टेकारी इति गौड प्रसिद्धे क्षुपविशेषे ॥ टङ्कारी वातजित् तिक्ता श्लेष्मघ्नी दीपनी लघु: । शोथोदरव्यथाहन्त्री शिता पीठ विसर्पिणाम ॥

टङ्क: । पुं । न । खनित्रे ॥ खड्ग विशेषे । असौ ॥ जङ्घायाम् । टांगइतिभाषा ॥

टङ्कश: । पुं । न । } टङ्कणे ॥ इति
टङ्कन: । पुं । न । } राजवल्लभ: ॥

टङ्किनी । स्त्री । पाठायाम् । अम्बष्ठायाम् । आकनादी इति गौ डभाषा ॥

टङ्कनी । स्त्री । ज्येष्ठ्याम् । छिपुकली इतिविस्तुय्या इतिचभाषा ॥

टट्टरी । स्त्री । अनृताख्याने । मृषावादे । टरटर इति भाषा ॥ लम्पावाद्ये ॥ पटहवाद्ये ॥

टट्टर: । पुं । भेरीरावे ॥

टलनम् । न । विक्लवे ॥

टवर्ग: । पुं । टादिपञ्चवर्णेषु ॥

टवर्गीय: । पुं । टवर्गभवेवर्णे । वर्गान्ता च्छेतिच्छ: ॥

टा । स्त्री । पृथिव्याम् ॥

टाङ्कम् । न । मद्यप्रभेदे ॥

टाङ्कर: । पुं । नागवीटे ॥

टार: । पुं । रङ्गे ॥ तुरङ्गे ॥ खङ्गे ॥

टिटिभ: । पुं । } टिट्टिभे ॥
टिटिभक: । पुं । }

टिट्टिभ: । पुं । टटीहरी इति भाषा प्रसिद्धे कोयष्टिखगे । टीठि इति गौड भाषा ॥ टिट्टि शब्दं भाषते । टिट्टि शब्देन भाति वा । अन्येष्वपीतिड: ॥ दानवविशेषे ॥

टिट्टिभक: । पुं । कोयष्टिके । टिट्टिभे ॥ स्वार्थे कन् ॥

टिण्टिणिका । स्त्री । अम्लशिरीषिकायाम ॥

टिण्डिश: । पुं । डिंडसी इतिटिण्डाइति चभाषाप्रसिद्धे फलशाकविशेषे । मुनिनिर्मिते । रोमशफले । डिण्डिशे ॥

टिप्पनी । स्त्री । टीकायाम् ॥

टीका । स्त्री । विषमपदव्याख्यायाम् ॥ वृत्तौ ॥ व्याख्यामात्रे ॥ टीक्यते गम्यतेऽर्थोऽनया । टीकृगतौ । गुरोश्च हलइत्यः । टाप् ॥

टुण्टुक: । पुं । श्योनाकवृक्षे ॥ कृष्णखदिरवृक्षे ॥ टुनटुनि इति गौडप्रसिद्धे पक्षिविशेषे ॥ श्योनाकप्रभेदे ॥ त्रि । अल्पे ॥ टुण्टु इति कायति । कै० । आत इतिक: ॥

टुनाका । स्त्री । तालमूल्याम् ॥

टेर: । त्रि । वक्रचक्षुषि । टेरके ॥

टेरक: । त्रि । वलिरे । केकरे । वक्रचक्षुषि । भेंगा इति भेंडा इतिचभाषा ॥

## ठ:

ठ: । पुं । ठकारे ॥ मण्डले ॥ चन्द्रबिम्बे ॥ शून्ये ॥ लोकगोचरे ॥ महेश्वरे ॥ ध्वनौ ॥ ठगणे ॥ पुं । न । अनुकरणशब्दे ॥

ठक्कुर: । पुं । विष्णुप्रतिमायाम् । ठाकुर इतिभाषा ॥ द्विजोपाधिविशेषे ॥ यथा । नृसिंहठक्कुर: ॥ रुद्रपालठक्कुर इति ॥

ठगण: । पुं । अष्टभेदभिन्ने पञ्चमात्रिके ॥ यथा (।ऽऽ इन्द्रासनम् १) (ऽ।ऽ सूर: २) (॥।ऽ चाप: ३) (ऽऽ । हीर: ४ ) (॥ ऽ । शेखरम् ५ ) (ऽ॥ कुसुमम् ६) [ऽ॥ अहिगण: ७ ] ॥॥ पापगण: ८] इति ॥

ठठम् । अ । } अनुकरणशब्दे । ठठठम् । अ । } न ठन् इति ठनम् ठनम् इतिचभाषा ॥ यथा । रामाभिषेके मदविह्वलाया: कक्षाच्च्युतो हेमघट स्तरुण्या: । सोपान मासाद्य चकार शब्दं ठठं ठठं ठं ठठठं ठठं ठ: ॥ इतिमहानाटकम् ॥

## ड:

ड: । पुं । डकारे ॥ वाडवाग्नौ ॥ शिवे ॥ शब्दे ॥ त्रासे ॥ डगणे ॥

डगण: । पुं । पञ्चभेदभिन्ने चतुर्मात्रिके ॥ यथा [ऽऽ गज: १] [॥ऽ रथ: २ ] [।ऽ। तुरङ्गम: ३] [ ऽ ॥ पदाति: ४] (॥॥ पत्ति: ५] इति ॥

डङ्गर: । पुं । डिङ्गरे ॥

डङ्गरी । स्त्री । गजदन्तफलायाम् । दीर्घर्वारुम् । ककडी इति तरा इतिच भाषा ॥

डङ्गारी । स्त्री । डङ्गरीफले ॥

डण्डः । पुं । डंडारीतिख्याते मत्स्ये ॥ डण्डमत्स्यो रसे तिक्तः पित्तं रक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्लो बलवर्द्धनः ॥

डमः । पुं । चाण्डाल्यां लेटाज्जाते डोम इति प्रसिद्धे ऽन्त्यजे ॥

डमरः । पुं । श्मशानकलहे ॥ विप्लवे । धाकडलुटनादौ । डाका इतिधाडा इतिचभाषा ॥ परचक्रादिभये ॥ न । भीत्यापलायने । शृगालिकायाम् ॥ डम इतिशब्दस्य रानम् । रा० । वा हुलकात् घञर्थेकः ॥

डमरुः । पुं । वाद्यप्रभेदे । कापालिकयोगिवाद्य ॥ चमत्कारे ॥ डमिति शब्द मियर्त्ति । मृगय्वादित्वादर्त्तेः कुः । गणपाठादेवगुणः ॥

डयनम् । न । पुरुषस्कन्धवाह्ये यानविशेषे । कर्णीरथे । चौडोल इतिख्याते ॥ डीयते ऽनेन । डीङ् विहायसागतौ । ल्युट् ॥ नभोगतौ ॥

डल्लकम् । न । वंशादिरचितेपात्र विशेषे । डगरा डाला छवडा छावी इतिभाषा ॥ त्रिशतञ्च षष्ठ्यधिकं डल्लकं वस्त्रसंयुतम् । सभोज्यं सोपवीतञ्च सोपचारं मनोहर मितिब्रह्मवैवर्त्तेप्रकृतिखण्डम् ॥

डवित्थः । पुं । काष्ठमये मृगे ॥ डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगइति सुपद्मव्याकरणोक्तेः ॥

डहुः । पुं । लकुचे । लिकुचे । वडहल इतिप्रसिद्धेवृक्षे ॥ दहति तोदति वा । दहभस्मीकरणे । तुहिर् अर्दने वा । मृगय्वादिषु निपातितः ॥

डा । स्त्री । डाकिन्याम् ॥

डाकिनी । स्त्री । कालीगणविशेषे ॥ डाकानांसमूहे ॥ खलादित्वादिनिः ॥

डाङ्गरी । स्त्री । डङ्गरीफले ॥

डामरः । पुं । चमत्कारे ॥ शिवोक्त षड्विधे शास्त्रविशेषे ॥ तेषांनामानि श्लोकसङ्ख्याश्चोक्तावाराहीतन्त्रे । यथा । डामरः षड्विधोज्ञेयः प्रथमो योगडामरः । श्लोकास्तत्रत्रयस्त्रिंशत् तथापञ्चशतानिच । त्रिविंशतिसहस्राणि श्लोकानिचेहसङ्ख्यया ॥ १ ॥ एकादशसहस्राणि सङ्ख्याताः शिवडामरे । श्लोकाः सप्तैवनिश्चित्य ईश्वरेणैवभाषिताः ॥ २ ॥ तावच्छ्लोकसहस्राणि पञ्चश्लोकशतानि च । गुणोत्तराणि दुर्गायाडामरे कथितानिच ॥ ३ ॥ नवश्लोकसहस्राणि नवश्लोकशतानिच । सारस्वते तथा श्लोकाः पञ्चैवपरिकीर्त्तिताः ॥ ४ ॥ स्वरसङ्ख्यासहस्राणि श्लोका

नां ब्रह्मडामरे । पञ्चोत्तरशता न्य सङ्ख्यातानिशिवेनतु ॥ ५ ॥ षष्टिः श्लोकसहस्राणि गान्धर्वडामरोत्त- मे । श्लोकाश्च षष्टिसङ्ख्याता ब्रह्म णाव्यक्तयोनिनेति ॥ तथाहि । यो गडामरः २३५३३ । शिवडामरः- ११००७ । दुर्गाडामरः ११५०३ । सा रस्वतडामरः ९९०५ । ब्रह्मडामरः ७१०५ । गन्धर्वडामरः ६००६० ॥ इति ॥ भूतडामरादयो ऽन्येपिसन्ति । भूतानांडामरश्चमत्कारो ऽत्रेतिनि वन्धकारः ॥ डमरे ॥

डाहलः । पुं । चैद्य । चेदिदेशे ॥

डाहुकः । पुं । दात्यूहखगे ॥

डिङ्करी । स्त्री । दिङ्कर्याम् ॥

डिङ्गरः । पुं । ठक्करे ॥ क्षेपे ॥ खले ॥ धूर्ते ॥ सेवके ॥

डिण्डिमभाण्डम् । न । वादित्रविशेषे ॥ पटहमृदङ्गकरटाः समेता यत्र वाद्य न्ते तानि डिण्डिमभाण्डानीतिव्याख्या नात् ॥

डिण्डिमः । पुं । डौंडी इतिख्याते वा द्यभेदे ॥ यथा । श्लोकार्द्धेनच यत्- प्रोक्तं तदुक्तं ग्रन्थकोटिभिः ॥ ब्रह्म सत्यं जगन्मिथ्येत्येषवेदान्तडिण्डि मः ॥ गजघण्टानादे ॥ यथा । मतिरेव बला द्गरीयसी तदभावे करिणामि यं दशा । इतिघोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ पा णीयामलके ॥ डिण्डि इतिशब्दं- मिनोति प्रकाशयति । डुमिञ्० । डः ॥

डिण्डिरः । पुं । समुद्रफेने ॥

डिण्डिशः । पुं । डिंडसी ढेंढस टिण्डा इत्यादि भाषाप्रसिद्धे मुनिनिर्मि- ते । रोमशफले ॥ डिण्डिशो रुचि कृद्भेदी पित्तश्लेष्मापहः स्मृतः । सु शीतो वातलो रूक्षो मूत्रलश्चाश्म रीहरः ॥ * ॥ निशोषवीजं स्वतिवृ त्तखण्डं सहिङ्गुकं प्रोज्झितचण्डश ब्दम् । स्नेहेप्रतप्तं चलद्दर्विदण्डं क चिप्रदं डिण्डिशकं सपिण्डम् ॥

डिण्डीरः । पुं । अब्धिकफे । समुद्रफे- ने ॥ डिण्डि इतिशब्दम् ईरयति । ई रगतौ कम्पनेच । अच् अथवा ॥

डिण्डीरमोदकम् । न । गृञ्जने ॥

डित्थः । पुं । काष्ठमये गजे ॥ डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृ गइतिसुपद्मव्याकरणोक्तेः ॥ विशेष लक्षणयुक्ते पुरुषे ॥ यथा । श्यामरू पोयुवाविद्वान् सुन्दरः प्रियदर्शनः । सर्वशास्त्रार्थवेत्ताच डित्थइत्यभिधी- यतइति कलापटीका ॥

डिमः । पुं । नाटकस्य रूपकविशेषे ॥

डिम्बः । पुं । भयध्वनौ ॥ अण्डे ॥ पु-

प्लुते ॥ प्रीडनि ॥ विप्लवे । डमरे । अशस्त्रकलहे ॥ एरण्डे ॥ भये ॥ डिम्बनम् । डिविनोदे । घञ् ॥

डिम्बाहवः । पुं । भूभृतामन्ये युद्धे ॥

डिम्बिका । स्त्री । जलविम्बे ॥ शोणक वृक्षे ॥ कामुकस्त्रियाम् ॥

डिम्भः । त्रि । बालिशे । वैधेये ॥ बाले । शिशौ ॥ डिम्भयति । डिभिसङ्घाते । चुरादिः । पचाद्यच् ॥ डिंभ्यते वा घञ् ॥ अस्य रूपान्तरं डिम्बो पीतिविश्वप्रकाशः ॥

डिम्भकः । पुं । डिम्भे ॥ स्वार्थे कः ॥

डिम्भचक्रम् । न । स्वरोदयोक्ते नराणां शुभाशुभनिर्णायके चक्र वि० ॥ यथा । डिम्भचक्रे न्यसेङ्गानि भानुभादित्रिमस्तके । मुखे चाक्षि दयस्कन्धे चैकैकं बाहुहस्तयोः ॥ हृदिपञ्च नाभिगुह्ये चैकैकं षट्चजानुनोः । चरणाभ्यां तथैकैकं जन्मर्क्षपतनात् फलम् ॥ शीर्षस्थे छत्रलाभः स्यात् वक्रे मिष्टान्नभोजनम् । स्कन्धे धनी च बाहुभ्यां स्थानभ्रष्टो भवेन्नरः ॥ पाणिभ्यां तस्करो लक्ष्मीर्हृद्यल्पायुश्च नाभितः । गुह्ये कामी भ्रमो जान्वोरल्पजीवी चपादयोरितिस्वरोदयः ॥

डिम्भा । स्त्री । स्तनपायाम् ॥ टाप् ॥

डीनम् । न । पक्षिगतिप्रभेदे पतनमाषे ॥ कर्णपर्वणि विशेषोऽस्य द्रष्टव्यः ॥ आगमशास्त्रविशेषे यथा । डामरं डमरं डीनं श्रुतं काशीविलासकम् । सप्तकोटि महाग्रन्था मम वक्त्राद्विनिर्गताः ॥ इति मुण्डमालातन्त्रम् ॥ डयनम् । डीङ् विहायसागतौ । नपुंसके भावे क्तः । स्वादय ओदितः । ओदितश्चेति निष्ठातस्य नः ॥

डीनडीनकम् । न । खगानां गतिक्रिया विशेषे ॥ तेषां पतनं निर्विशेषणाद् कुत्सितञ्च डीनडीनकपदवाच्यम् ॥

डीनावडीनम् । न । पक्षिणां गतिविशेषे ॥ तत्तु एकस्यां गतौ गत्यन्तरमिश्रणम् ॥ अधःकुत्सितगमनञ्च ॥

डीयमानः । त्रि । आकाशं प्रत्युद्गच्छति ॥

डुण्डुः । पुं । डुण्डुभसर्पे ॥

डुण्डुभः । पुं । राजिलेसर्पे ॥ डुण्डु इत्यनुकरणशब्दः । तम् भणति तेन भातीति वा । अन्येभ्योपीतिडः ॥ यद्वा । लडते । आलिङउत्क्षेपे । घञ् । डलयोरेकत्वम् । उभति । उभपूरणे । इगुपधेतिकः । डुण्डुश्चासावुभश्च । पृषोदरादिः ॥ द्विमुखो डुण्डुभः स्मृतः ॥

डुण्डुलः । पुं । क्षुद्रोलूके । पिङ्गले । हद्राविणि ॥

डुलिः । स्त्री । कमठ्याम् ॥ डोलयति । डुलउत्क्षेपे । इगुपधादितिकिः ॥

डुलिका । स्त्री । खञ्जनाकृतिपक्षिविशेषे ॥

डुली । स्त्री । चिल्लीशाके ॥

डोडिका । स्त्री । सुमुष्ठ्याम् । करेचा इति प्रसिद्धे फलशाकविशेषे ॥ डोडिकापुष्टिदा वृष्या रुच्या वह्निप्रदा लघुः । हन्ति पित्तकफार्शांसि कृमिगुल्मविषामयान् ॥ * ॥ वार्त्तं डोडीफल मविकलं स्विन्नमीषच्च तोये स्नेहे हिङ्गुप्रणयिनि ततो वेसवारेण सिद्धम् । गव्यं तक्रं क्वथित निहिते साधितं रामठेन खादन् खा दन् निभृत ममृतं निन्दितंभोक्तृभिः कैः ॥ * ॥ सन्धूज्यशुष्कं तरणेःप्रतापात् प्रतप्त माज्ये नवडोडिशाकम् । ससैन्धवं रामठदत्तवासं खादन्नरो निन्दति व्यञ्जनानि ॥ डोडिका वातला रूक्षा शीता गुर्वी विषापहा । सुस्विन्ना रोचनी रुच्या अस्विन्ना कण्ठकर्त्तरी ॥

डोडी । स्त्री । डोडिकायाम् ॥ क्षुप विशेषे । जीवन्त्याम् । सुखालुकायाम् ॥

डोमः । पुं । स्वनामख्याते ऽस्पृश्यजातौ ॥ यथा । चण्डालश्चैव डोमश्च श्वानकश्च तथा इति । दण्डीरश्चैव भण्डीरो भूषुण्डश्च इत्यास्त्रमी ॥ इ यामुण्डी लिङ्गधारीसमाप्तते यश्चि स्थिनि । स्पृष्टा प्रमादतः स्नात्वा गाय त्र्यष्टशतं जपेदिति मत्स्यसूक्ततन्त्रे ३९ पटलः ॥

डोरम् । न । } हस्तादिवन्धनसूत्रे ॥
डोरकम् । न । }

डोरडी । स्त्री । वृहत्याम् ॥ इतिराज निर्घण्टः ॥

---

ढः

---

ढः । पुं । ढकारे ॥ ढक्कायाम् ॥ शुनि ॥ श्वलाङ्गूले ॥ निर्गुणे ॥ ध्वनौ ॥ ढगणे ॥

ढक्का । स्त्री । यशःपटहे ॥ ढगितिकायति । कैशब्दे । आतइतिकः ॥

ढक्कारी । स्त्री । तारिणीदेव्याम् ॥

ढगणः । पुं । भेदत्रयविशिष्टे त्रिमात्रिके ॥ यथा । ( ।ऽ ध्वजः १ ) ( ऽ। तालः २ ) ( ॥। ताण्डवम् ३ ) इति ॥

ढालम् । न फलके ॥

ढाली । त्रि । चर्म्मिणि ॥

ढामरा । स्त्री । हंस्याम् ॥

ढुण्ढिः । पुं । श्रीगणेशविशेषे ॥ यथा । अन्वेषणे ढुण्ढिरयंप्रथितो ऽस्तिधातुः

ढक्कः

सर्वार्थढुण्ढिततया भवढुण्ढिनामा । काशीप्रवेशमपि कोऽलभते ऽत्र देही तोषं विना तव विनायक ढुण्ढिराज ॥ इति काशीखण्डगणेशं प्रति शिववाक्यम् ॥

ढोलः । पुं । स्वनामख्याते वाद्यविशेषे ॥

णः

—

णः । पुं । णकारे ॥ बुद्धदेवताविशेषे । विन्दुदेवे ॥ भूषणे ॥ गुणवर्जिते ॥ पानीयनिलये ॥ निर्णये ॥ ज्ञाने ॥

ण्यः । पुं । ब्रह्मलोकस्थे समुद्रोपमे सरोविशेषे ॥

* ॥ * ॥ इत्यादिगौडकुलोत्पन्नाढीचवालप्रधानोपनामतुलारामनिश्रात्मजश्रीधनपतिमिश्रापरनाम्ना सन्यास्रीसद्गुरुकृष्णावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्रह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ टवर्गःसमाप्तः ॥ १ ॥ * ॥ * ॥ * ॥ * ॥ * ॥

तक्रम्

तत् सत्

तः

तः । पुं । तकारः ॥ चौरे ॥ अन्ते ॥ पुच्छे ॥ क्रोडे ॥ म्लेच्छे ॥ रत्ने ॥ सुगते ॥ योधे ॥ गौरविवर्जितपुच्छे ॥ क्रोष्टुपुच्छे ॥ स्त्री । न । तरणे ॥ पुण्ये ॥ तटति । तटउच्छ्राये । डः ॥

तक्किलः । त्रि । धूर्त्ते ॥

तक्किला । स्त्री । औषधे ॥

तक्रम् । न । चतुर्थांशजलसंयुक्ते दधिनि । गोरसजे । दण्डाहते । कालसेये ॥ तत्पञ्चविधम् । यथा । ससरं निर्जलं घोलं मथितन्त्वसरोदकम् । तक्रं पादजलं प्रोक्तं मुदश्विच्चार्द्धवारिकम् ॥ उच्छिकासरहीनास्याद्दच्छाप्रचुरवारिका॥ *॥ तुर्यांशेन जलेन संयुतमतिस्थूलं सदम्लं दधिप्रायो माहिषमंशुकेन विमले सद्भाजने गालयेत् । भृष्टं हिङ्गु च जीरकञ्च लवणं राजी च किञ्चिन्मितां पिष्टा तच्चयिमिश्रयेद्भवतितत् तक्रं नकस्य-प्रियम् ॥ अस्य गुणा यथा । तक्रं वचिकरं वह्निदीपनं पाचनं परम् । उदरेये गदास्तेषां नाशनं तृप्तिकारकम् ॥ अपिच । तक्रं ग्राहि कषायाम्लं स्वादु

पाकरसं लघु । वीर्य्योष्णं दीपनं हृद्यं प्रीणनं कफनाशनम् ॥ प्रायशस्त्विमतं पथ्यं भवेत् तक्रं हि लाघवात् ॥ * ॥ किञ्च स्वादुविपाकित्वान्न च पित्तप्रकोपणम् । कषायोष्णविकाशित्वाद्रौक्ष्याच्चापि कफापहम् ॥ न तक्रसेवी व्यथते कदाचित् न तक्रदग्धाः प्रभवन्ति रोगाः । यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः ॥ समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफापहम् ॥ अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥ * ॥ वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् । पित्ते स्वादु सिताढ्यं तत् सव्योषं शस्यते कफे ॥ * ॥ हिङ्गुजीरयुतं घोलं सैन्धवेन सुसंयुतम् । भवेदतीव वातघ्नमर्शोऽतीसारहृत् परम् ॥ रुचिष्यं पुष्टिदं बल्यं वस्तिशूलविनाशनम् । मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् ॥ शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च । अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् ॥ तत्तु हन्ति गरच्छर्द्दिप्रसेकविषमज्वरान् । पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् ॥ मेहं गुल्मं अतीसारं शूलप्लीहोदरारुचीः । श्वित्रकोठघृतव्याधीन् कुष्ठशोथतृषाकृमीन् ॥ नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ * ॥ यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् ॥ अथापि च सतक्रगुणाः । तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥ तञ्चति सङ्कोचे वा । तञ्चु गतौ । स्फायितञ्चीति रक् । न्यङ्क्वादिः ॥

तक्रकूर्च्चिका । स्त्री । छाना इति गौडभाषाप्रसिद्धे दुग्धविकृतौ ॥ उष्णदुग्धे तक्रयोगाज्जाता स्यात् तक्रकूर्च्चिका ॥ तक्रेण सह पक्वे क्षीरे ॥ तक्रेणपक्वं यत् क्षीरं सा भवेत् तक्रकूर्च्चिकेति ॥

तक्रपिण्डः । पुं । क्षीरविकृतौ ॥ दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा । द्रवभागेन हीनं यत् तक्रपिण्डः स उच्यते ॥

तक्रमांसम् । क्ली । मांसप्रकारविशेषे ॥ यथा । पाकपात्रे घृतं दत्त्वा हरिद्रां हिङ्गु भर्ज्जयेत् । छागादेः सकलास्थि पिष्टकान्यष्टौ च भर्ज्जयेत् ॥ सिद्धे तोयं जलं दत्त्वा पचेन्मृदुतरं यथा । राजिकाढ्ये युते तक्रे मांसखण्डानि धारयेत् ॥ तक्रमांसकं नाम च

सुखच्यं नवप्रदम् । कफघ्नं पित्तलं किञ्चित् सर्वाहारस्य पाचनम् ॥

तक्रमांसम: । पुं । मारके ॥

तक्राटः । पुं । मन्थानदण्डे ॥ तक्रे अटति । अट० । अच् ॥

तक्षः । पुं । भरतात्मजे । तक्षशिलाधीशे ॥ न । चित्रानक्षत्रे ॥

तक्षकः । पुं । पातालस्थाष्टनागान्तर्गत नागराजविशेषे । कश्यपात्कद्रुगर्भे जाते इन्द्रसखे ॥ वर्द्धकौ । तक्षि ॥ वृक्षविशेषे ॥ विश्वकर्मणि ॥ तक्षति । तनूतनूकरणे । ण्वुल् ॥

तक्षणम् । न । कृशकरणे । तक्षू० । ल्युट् ॥

तक्षणी । स्त्री । वासाम् । बस्ला इति भाषा ॥ गौरादिः ॥

तक्षा । पुं । त्वष्टरि । वर्द्धकौ ॥ काष्ठं तक्ष्णोति तक्षति वा । तक्षू० । कनिन् युवृषि तक्षीति कनिन् ॥

तक्षशिला । स्त्री । देशविशेषे ॥ नगरी विशेषे । सिन्धुदेशे भरतात्मजस्य तक्षस्य राजधान्याम् ॥

तगणः । पुं । अन्त(ऽऽ।)लघौ ॥ तसंज्ञको गणः ॥

तगरः । पुं । चांदनी इति देशभाषा प्रसिद्धे पुष्पवृक्षविशेषे । सितपुष्पे । नन्द्यावर्ते । कालपर्णे । टगर इति



गौडभाषा ॥ मदनवृक्षे ॥ न । नन्द्यावर्त्तवृक्षे । पिण्डतगर इति गौडभाषा । तगरमूल इति गौडभाषा ॥ तन्मूले तत्पुष्पे च ॥ तगरद्वयमुष्णंस्यात् स्वादु स्निग्धं लघु स्मृतम् । विषाऽपस्मारमूर्द्धाक्षिरोगदोषत्रयापहम् ॥ आहुल्यवृक्षे ॥

तगरपादिकम् । न । तगरे । नन्द्यावर्त्ते ॥

तगरपादी । स्त्री । मते । तगरे ॥

तङ्कः । पुं । दुःखेन जीवने ॥

तङ्कनम् । न । दुःखेनजीवने ॥ तकि० । ल्युट् ॥

तङ्गः । पुं । जनपदविशेषे ॥

तङ्गणः । पुं । नीवृद्विशेषे ॥

तच्छीलः । त्रि । तत्स्वभावे ॥ यःस्वभावतः फलनिरपेक्ष्यस्तत्प्रवर्त्तते स तच्छीलः ॥

तज्जः । त्रि । सांदृष्टिकार्थे ॥ तज्जाते ॥

तज्ज्ञः । त्रि । तदभिज्ञे ॥ तत् जानाति । इगुपधेतिकः ॥

तञ्ची । स्त्री । त्रिपुपत्न्याम् ॥

तटः । त्रि । प्रतीरे । कूले । रोधसि । तटति । तटउच्छ्राये । अच् ॥ न । क्षेत्रे ॥

तटस्थः । त्रि । तीरस्थे ॥ तटे तिष्ठति । स्था० । कः ॥ न । तद्भिन्नत्वेसति त

 

दोधकवृत्तमितिकंचयथाचिते स्वकृ पेतरखचवे ॥ स्वकृपा ऽ मन्दयिते सति विशेषमनन्तरं संकृत्येतरथावर्त कमलकृपे वसवे ॥

तटाकः । पुं । तडागे । पद्माकरे ॥ तटमकति । अकुटिलायांगतौ । कर्मण्यण् ॥

तटागः । पुं । तडागे ॥ तटमगति । अगकुटिलायांगतौ । कर्मण्यण् ॥

तटिनी । स्त्री । नद्याम् ॥ तटमस्त्यस्याः । अतइनिठनाविति़निः । पुष्कराद्दिभ्योदेशेइति इनिर्वा । ऋन्नेभ्यइति ङीप् ॥

तटी । स्त्री । तीरे । कूले ॥ तटति । तट॰ । अच् । जातित्वात् ङीष् ॥

तडाकः । पुं । तडागे ॥ तड्यते । तड आघाते । पिनाकादयश्चेतिसाधुः ॥

तडागः । पुं । जलाधारविशेषे । पद्माकरे ॥ प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशय स्तडागः स्यादित्याहुःशास्त्रकोविदाः ॥ * ॥ पञ्चशतधनुः परिमिते जलाशये ॥ यथा । धनुर्विंशाङ्गुलोहस्तो धनुस्तस्तुबन्तरः । शतधन्वन्तरञ्चैव तावत् पुष्करिणीशुभा । एतत् पञ्चगुणः प्रोक्तस्तडागइतिनिर्णयः ॥ इतिमत्स्य-वर्द्धमानधृतोवशिष्ठः ॥ वन्यकूटके ॥

तड्यते । तड॰ आघाते । तडागादयश्चेति निपातितः ॥

तडाघातः । पुं । ऊर्द्ध्वीकृत्यहस्तिशुण्डाघाते ॥ यथा । उच्चैःकरिकराघे तडाघातं विदुर्बुधाःइति ॥

तडित् । स्त्री । विद्युति ॥ ताडयत्यभ्रम् । तड॰ । ताडेर्णिलुक्चेतीति प्रत्ययः ॥ चञ्चले ॥

तडित्वान् । पुं । वारिदे । मेघे ॥ तडितःसन्त्यस्मिन् । मतुप् ॥ मुस्तके ॥

तण्डकः । पुं । न । खञ्जने ॥ फेने ॥ समासमाये । समस्तपदजातके ॥ गृहदारुणि ॥ तरुस्कन्धे ॥ त्रि । मायाबहुले ॥ तण्डते । तडिताडने । ण्वुल् ॥ उपघातके ॥

तण्डः । पुं । शिवद्वारपालविशेषे ॥

तण्डरीणः । पुं । कीटभेदे ॥ न । तण्डुलोदके ॥ त्रि । बर्बरे ॥ इतिहेमचन्द्रः ॥

तण्डुलः । पुं । धान्यादिनिकरे । धान्यादिसारे । चाउर इतिभाषा इतिचभाषा ॥ तण्डुलो मेघजम्भः सनवस्त्वतिदुर्ज्जरः ॥ ताड्यते । तड आघाते । सानसिवर्णसिपर्णसितण्डुलाङ्कुशे-त्यादिना निपातनादुलच् प्रत्ययो नुमागमश्च ॥ यद्वा । व्रियन्तेतुण्ड्यन्ते ताड्यंते वा इति तण्डुलाः ।

र्थे ॥ कदाचनार्थे ॥ हेतौ ॥ परम्य र्थे ॥ तस्मात् । पश्चम्यास्तसिल् । त्यदादयस्तम् ॥

ततस्त्यः । त्रि । ततोभवे ॥ ततसम्बन्धिनि ॥ अव्ययात् त्यप् ॥

ततिः । स्त्री । श्रेण्याम् ॥

तत्कालः । पुं । तदात्वे । वर्त्तमानकाले ॥ सचासौ कालश्च ॥

तत्कालधीः । त्रि । प्रत्युत्पन्नमतौ । उपस्थितबुद्धौ ॥ तत्कालेधीर्यस्य ॥

तत्क्रियः । त्रि । कर्मकारे । वेतनं विनाकर्मकारके ॥

तत्क्षणः । पुं । सद्योर्थे ॥ सचासौ क्षणश्च । सएवक्षणो वा ॥

तत्त्वम् । न । याथार्थ्ये । स्वरूपे । अनारोपितस्वरूपे ॥ परमात्मनि । ब्रह्मणि ॥ ब्रह्मभावे ॥ तदितिसर्वनाम सर्वञ्च ब्रह्म तस्यनाम तदिति । तद्भाव स्तत्त्वं ब्रह्मणो याथात्म्यं तत्त्वमिति पूज्यपादानां व्याख्यानम् ॥ आदिमध्यावसानेषु दुःखं सर्वमिदं यतः । तस्मात सर्वं परित्यज्य तत्त्वनिष्ठो भवानघेत्युपदेशः ॥ अथाहुर्गौडपादाचार्याः । तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः । तत्त्वीभूतस्तदारामस्तत्त्वाद प्रच्युतोभवेदिति ॥ तत्त्वं चागमसंसिद्ध मित्या हुर्वेद वादिनः ॥ विलम्बितनृत्यगीते ॥ ततनंतत । तनु० क्विप् । अन्येषामपीतिदः । रत्यादृत्युपलक्षणंगीतवाद्ययोः ॥ वाद्यप्रभेदे ॥ चेतसि ॥ वस्तुनि ॥ अद्वयज्ञाने ॥ पारमार्थिके । धर्मिस्वरूपे ॥ मूलप्रकृत्यादिचतुर्विंशतिषु ॥ मूलप्रकृतिरविकृति र्महदाद्याःप्रकृतिविकृतयः सप्त । षोडशकस्तुविकारो नप्रकृति र्न विकृतिः पुरुषः ॥ तस्यभावः । त्वः ॥ * ॥ वेदान्ता बहुतर्ककर्कशमतिग्रस्ताःपरं मायया भाट्टाः कर्मकलाकुला हतधियो द्वैतेहि वैशेषिकाः । अन्ये भेदरता विवादकलहा स्ते तत्त्वतो वञ्चिता स्तस्मात् सिद्धमतं स्वभावकमयं धीरः परंसंश्रयेत् ॥ सत्त्वरजस्तमश्च ॥ तत्त्वम् नानामुनिभिर्नानाविधमुक्तम् । विस्तरभिया तन्न सङ्गृहीतम् ॥ * ॥ सर्वस्मिन् दृश्येवाध्यमाने ऽपि तद्बाधाधिष्ठानत्वे न स्वयमवाध्यमान मनारोपितं स्वरूपं तत्वमितिविवरणकाराः । अस्यपर्यायाः अमृतं सत्यं परमार्थं सतत्वमित्येते एकार्थवाचिनः परमार्थतो ब्रह्मणोवाचकाः शब्दाइतिभाष्यकाराः ॥

तत्त्वज्ञानम् । न । ब्रह्मज्ञाने ॥ वस्तुगुणविशेषे ॥ यथा । प्रमाणप्रमेयसंशय

प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः। इतिगोतमः॥ अनारोपितवस्तुप्रत्यये॥ इदंसर्वं द्वैतजातमद्वितीये चिदानन्दात्मनिमाययाकल्पिततत्त्वान्मृषैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दोऽद्वयोऽहमस्मीतिपरिज्ञाने॥ तत्त्वस्य ज्ञानम्॥

तत्त्वज्ञानार्थदर्शनम्। न। तत्त्वज्ञानार्थस्यालोचने॥ तत्त्वज्ञानस्याहम्ब्रह्मास्मीतिसाक्षात्कारस्य वेदान्तवाक्यकरणकस्यामानित्वादिसर्वसाधनपरिपाकफलस्य अर्थः प्रयोजनमविद्यातत्कार्यात्मकनिखिलदुःखनिवृत्तिरूपः परमानन्दावाप्तिरूपश्च मोक्षः-तस्यदर्शनम् आलोचनम्। तत्त्वज्ञानफलालोचनेहि तत्साधनेप्रवृत्तिः-स्यात्॥

तत्त्वतः। अ। यथावदर्थे॥

तत्त्वदर्शी। त्रि। वस्तुयाथात्म्यदर्शनशीले ब्रह्मविदि कृतसाक्षात्कारे॥ तत्त्वंवस्तुनोयाथात्म्यम् तद्द्रष्टुंशीलं यस्य। णिनिः॥

तत्त्वभावः। पुं। नेतिनेतीत्यादिश्रुतिनिर्दिष्टे विदिताविदिताभ्यामन्यस्मिन्नद्वयस्वभावे॥

तत्त्वविचारः। पुं। भूतार्थचिन्तायाम्॥

तत्त्ववित्-द्। त्रि। स्वरूपविदि। याथात्म्यविदि। ब्रह्मविदि॥ शैवे॥ शैवोहि आत्मविद्याशिवा इति सङ्क्षेपतस्त्रीणितत्त्वानि सर्वजगत्प्रवर्त्तकानीतिमन्यते॥ तत्त्वंस्वरूपंसकलसंसारधर्मविलक्षणंसच्चित्सुखरूपंब्रह्माहमस्मीतिवेत्तिजानातीतितत्त्ववित्॥

तत्पत्नी। स्त्री। छिङ्गुतरुपत्न्याम्॥

तत्पदलक्ष्यार्थः। त्रि। अज्ञानादिसमष्ट्युपाध्युपहिताधारभूतेऽनुपहितचैतन्ये। चिदेकरसरूपिणि॥

तत्पदवाच्यः। त्रि। तत्पदाभिधे॥

तत्पदवाच्यार्थः। त्रि। अज्ञानादिसमष्टिःएतदुपहितसर्वज्ञत्वादिविशिष्टचैतन्यम् एतदनुपहितचैतन्यञ्चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवतीतिव्युत्पादितेर्थे॥

तत्पदाभिधः। त्रि। तत्पदवाच्ये॥ मायोपाधिर्जगद्योनिःसर्वज्ञत्वादिलक्षणः। पारोक्ष्यशवलः सत्याद्यात्मकस्तत्पदाभिधइत्याहुः॥

तत्पदार्थः। पुं। जगत्कारणे परमात्मनि॥ यज्जगत्कारणं तत्त्वं तत्पदार्थः स उच्यते॥ तदिति पदस्यार्थः॥

तत्परः। त्रि। तद्गते॥ आसक्ते॥ तत्

परमुत्तमं यस्य । तेनपूर्यते वा । पृ पालनपूरणयोः । ऋदोरप् ॥

तत्परायणः । वि । तदासक्ते ॥

तत्पुरुषः । पुं । प्रायउत्तरपदार्थप्रधाने समासविशेषे ॥ सच षेधा।व्यधिकरणपदः समानाधिकरणपदः सङ्ख्या पूर्वपदश्चेति ॥

तत्फलः । पुं । कुवलये ॥ कुष्ठाख्यैाषधौ ॥ चोरनामसुगन्धिद्रव्ये ॥

तत्र । अ । तस्मिन् । सप्तम्यर्थे ॥ सप्तम्यास्त्रल् ॥ तस्यामवस्थायाम् ॥

तत्रस्थः । त्रि । तत्रभवे ॥ अव्ययात्त्यप् ॥

तत्रभवान् । त्रि । श्लाघ्ये । पूज्ये ॥ इतराभ्योपिदृश्यन्त इतिप्राग्दीव्यतीयः प्रथमार्थेत्रल् । सुप्सुपेतिसमासः ॥

तथा । अ । साम्ये ॥ अभ्युपगमे ॥ पृष्टप्रतिवाक्ये॥ समुच्चये ॥ निश्चये ॥ तेन प्रकारेण । प्रकारवचनेथाल् । विभक्तित्वात् त्यदाद्यत्त्वम् ॥

तथागतः । पुं । बुद्धमुनौ । सुगते ॥ तथा सत्यं गतं ज्ञानं यस्य यथापुनरावृत्तिर्नभवति तथा तेनप्रकारेण गत इति तथागतः । सुप्सुपेतिसमासः । तथाच सुगतिसाधकतास्योक्ता भवति । तदुक्तंबौद्धागमे । यथागतास्ते मुनयः शिवांगतिं तथागतः सोपि ततस्तथागतइति ॥ त्रि । प्रक्रान्तगतिशालिनि ॥ तथाभूते ॥

तथाच । अ । पूर्वोक्तार्थदृढीकरणे ॥

तथाहि । अ । निदर्शने ॥ प्रसिद्धमेवेत्यर्थे ॥ तथाच हिच ॥

तथैव । अ । तद्वदेवेत्यर्थे ॥

तथ्यम् । न । सत्ये । ऋते ॥ त्रि । तदिति ॥ तथा साधुः । तत्रसाधुरितियत् ॥

सः । वि । पूर्वोक्ते । बुद्धिस्थस्य परामर्शे । सो० इतिभाषा ॥ तद्देशकालावस्थादैा दृष्टः स इति कथ्यते ॥ विप्रकृष्टविषये ॥ स्त्री । सा ॥ न । तत् तद् । सत्यज्ञानादिलक्षणलक्षितस्य तत्त्वमस्यादिश्रुतिप्रसिद्धस्य ब्रह्मणोनाम्नि ॥ यथा । तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः । दानक्रियाश्चविविधाः क्रियन्तेमोक्षकाङ्क्षिभिरिति॥ तदिति ब्रह्माभिधानमुच्चार्य अनभिसन्धायचकर्मणः फलमित्यर्थः ॥ तनोति । तनु० । त्यजितनियजिभ्यो डिदित्यदिः ॥

तदनन्यत्त्वम् । न । तदभिन्नत्वे ॥ तस्मात् अनन्यत्वं नाम पृथक्सत्ताराहित्यम् ॥

तदन्यबाधितार्थप्रसङ्गः । पुं । दोषविशेषे ॥ यथा । धूमो यदि वह्निव्यभि

चारी स्यात्तद्वह्निजन्यो न स्यादि-
त्यादिः ॥

तदर्पणम् । न । वस्तुनःप्रत्यर्पणे । प्रति
दाने । स्वामिने निक्षेपार्पणे ॥ त-
स्य अर्पणम् ॥

तदा । अ । तस्मिन् काले ॥ तदेदाच
॥ सर्वैकान्येति था दा ॥

तदात्मा । पुं । तत्स्वरूपे ॥ तस्यात्मा ॥

तदात्वम् । न । वर्त्तमानकाले ॥ त-
देत्यस्यभावः । तस्यभावस्त्वतलौ ॥

तदादिः । त्रि । तदाप्रभृतौ ॥ सकालः
आदिर्यस्य यस्मिन्वा ॥

तदानीम् । अ । तस्मिन्काले । तदार्थे
॥ तदेदाच । दानीम्च ॥

तदामुखम् । न । आरम्भे ॥

तदेषः । त्रि । सहोक्त्या प्रत्यक्षमेवे
त्यर्थे ॥

तत्परः । त्रि । तत्परे ॥

तन्नतमानसः । त्रि । एकाग्रचित्ततये
ष्टगतान्तःकरणे ॥

तद्गुणः । पुं । काव्यालङ्कारप्रभेदे ॥
स्वमुत्सृज्य गुणं योगादत्युज्ज्वल
गुणस्य यत् । वस्तु तद्गुणतामेति भ
ण्यतेसतु तद्गुणः ॥ वस्तुतिरस्कृत
निजरूपंकेनापिसमीपगतेनप्रगुणत
या स्वगुणसम्पदा परक्तं तत्प्रतिभा
समेवं गत् समासादयति स तद्गुणः

। तस्याऽप्रकृतस्य गुणोऽत्रास्तीति ।
उदाहरणम् । विभिन्नवर्णा गरुडा
ग्रजेन सूर्यस्य रथ्याः परितः स्फुर
न्त्या । रत्नैः पुनर्यत्र रुचा रुचं स्वा
मानन्यिरे वंशकरीरनीलैः ॥ अत्र
रवितुरगापेक्षया गरुडाग्रजस्य तदपे
क्षयाच हरिन्मणीनां प्रगुणवर्णता ॥

तद्ग्रहः । त्रि । तदभिनिवेशे ॥ तस्मिन्
ग्रहस्तद्ग्रहः ॥

तद्दिनम् । अ । दिनमध्ये ॥ प्रतिदिने
इतिहेमचन्द्रः ॥ न । पूर्वोक्तदिने ॥

तद्धनः । त्रि । कृपणे ॥ इतिहेमः

तद्धर्मा । पुं । विनापिशीलेन स्वधर्मो
यमिति यः प्रवर्त्तते सतद्धर्मा ॥

तद्धितः । पुं । प्रत्ययविशेषे । तद्धिताद्
त्यधिकारविहितप्रत्ययेषु ॥ तेचद्वि
विधाः । प्रकृत्यर्थभिन्नार्थाः स्वार्थिका
श्च ॥ तेभ्यःप्रयोगेभ्योहितः ॥

तद्वत् । त्रि । पूर्वोक्तवति ॥ सयथास्ति
। मतुप् ॥ तत्सदृशे ॥ तेनतुल्ये ॥
तुल्यार्थे वतिः ॥

तद्वला । स्त्री । वाणविशेषे ॥ इतिहेम
चन्द्रः ॥

तद्बुद्धिः । स्त्री । परमात्मसाक्षात्कार
परार्थावुद्धौ ॥ त्रि । सर्वदा निर्वीज
समाधिभाजिकृतसाक्षात्कारे ॥ त
स्मिन् ज्ञानप्रकाशिते परमात्मतत्त्वे

सच्चिदानन्दघने एव वाह्यसर्व्वविष
यपरित्यागेन साधनपरिपाकात्-
पर्य्यवसिता बुद्धिरन्तःकरणवृत्तिः सा
साक्षात्कारलक्षणायस्य स तथा ॥

तनयः । त्रि । पुत्रे ॥ तनोति कुलम्
तन्यते वा । तनु० । वचिमनिलितनि
भ्यःकयन् ॥

तनया । स्त्री । दुहितरि । पुत्र्याम् ॥
टाप् ॥ चक्रकुल्यायां लतायाम् ॥
घृतकुमार्य्याम् ॥

तनिका । स्त्री । तनी इति भाषाप्रसि
द्धे बन्धनरज्जौ ॥ यथा । वितानत
निका ॥

तनिमा । पुं । तनुत्वे । तानवे ॥ तनो
र्भावः । पृथ्वादित्वात् इमनिच् ॥

तनिष्ठः । त्रि । क्षुद्रे ॥ अयमेषा मतिश
येनतनुः । अतिशायने इष्ठन् ॥

तनीयान् । त्रि । अल्पे ॥ अयमनयोर
तिशयेन तनुः । द्विवचनविभज्येती
यसुन् ॥

तनुः । स्त्री । काये । शरीरे ॥ त्वचि ॥
स्त्रियाम् ॥ तन्व्याम् ॥ वोतोगुणवच
नादिति पाक्षिकोङीषभावः ॥ त्रि ।
अल्पे ॥ विरले ॥ कृशे ॥ तनोति
तन्यतेवा । तनु० । भृमृशीत्युः ॥
सूक्ष्मे ॥

तनुकम् । न । सूत्रे ॥ तनुसूत्र इति
यावादिषु पाठात्कन् ॥

तनुक्षीरः । पुं । आम्रातके ॥

तनुच्छदः । पुं । वर्म्मणि ॥ तनुश्छाद्य
ते ऽनेन । छद० । पुंसिसंज्ञायामि
तिघः ॥

तनुच्छायः । पुं । जालवर्बुरकवृक्षे ॥
॥ स्त्री । न । शरीरच्छायायाम् ॥
तनोश्छाया । विभाषासेनेति वा क्ली
बत्वम् ॥

तनुजः । पुं । पुत्रे ॥ तनोर्जातः । डः ॥

तनुजा । स्त्री । पुत्र्याम् ॥ टाप् ॥

तनुत्रम् । न । वर्म्मणि । सन्नाहे ॥ तनुं
त्रायते । त्रैङ्० । आतोनुपेतिकः ॥

तनुत्राणम् । न । कवचे । तनुत्रे ॥ शरी
ररक्षणे ॥

तनुत्वचा । स्त्री । क्षुद्राग्निमन्थे ॥

तनुपत्रः । पुं । इङ्गुदीवृक्षे ॥

तनुभस्त्रा । स्त्री । नासिकायाम् ॥ तनो
र्भस्त्रेव ॥ तन्वांचर्म्मप्रसेविकायाम्
। छोटी भाथी इति छोटीमसक
इतिच भाषा ॥

तनुभृत् । पुं । जीवे ॥

तनुमध्या । स्त्री । गायत्रीछन्दः प्रभेदे ॥
त्यौचेत्तनुमध्या । य० । मूर्त्तिर्मुरश
त्रोरत्यद्भुतरूपा । आस्तां ममचि
त्ते नित्यं तनुमध्या ॥

तनुरसः । पुं । घर्म्मे । स्वेदजले ॥ अल्प

रसे ॥ त्रि । तद्विशिष्टे ॥

तनुरुट् । न । रोमणि ॥

तनुरुहम् । न । तनुरुहे ॥ त्रि । तनौ रूढे ॥

तनुवातः । पुं । नरकविशेषे ॥

तनुत्रारम् । न । वर्मणि । सन्नाहे ॥ तनुं त्रायते आवृणोति आच्छादयति । वृष० । कर्मण्यण् ॥

तनुबीजः । पुं । राजबदरे ॥

तनुव्रणः । पुं । वल्मीकरोगे ॥

तनुः । न । शरीरे ॥ तनोति तन्यते वा । तनु० । अर्त्तिपृवपियजितनिधनितपिभ्योनिदित्युसिप्रत्ययः । तनुषी तनूंषि ॥

तनुसञ्चारिणी । स्त्री । बालिकायाम् ॥

तनुसरः । स्वेदे ॥ तनोःसरति । सृ० । अच् ॥

तनूः । स्त्री । काये । शरीरे ॥ तनोति तन्यते वा । तनु० । भृमृशीत्युः । प्राणिजातेरित्यूङ् ॥ कृषिचमितनिधनीत्यूर्वा ॥

तनूकृतः । त्रि । तष्टे । सूक्ष्मीकृते ॥ अतनुस्तनुरकारि । कृञ् । क्तः ॥

तनूजः । पुं । पुत्रे ॥ त्रि । शरीरजे ॥ तन्वाःजातः । पञ्चम्यामितिडः ।

तनूजनिः । पुं । पुत्रे ॥ तन्वाःजनिर्यस्य ॥

तनूजा । स्त्री । पुत्रिकायाम् ॥ टाप् ॥

तनूनपम् । न । आज्ये । घृते ॥ तन्वा जनंकृशं पाति । पा० । कः ॥

तनूनपात् । पुं । अग्नौ । पावके ॥ तनूं शरीरं न पातयति । नभ्राण्नपादिति निपातितः । तनूनपातौ । तनूनपातः ॥ तनूं स्वस्वरूपं न पाति नरक्षति । आशुविनाशित्वात् इति तनूनपाच्छन्दसः । उगिदचामितिनुमित नूनपान् तनूनपान्तौ तनूनपान्त इतिवा ॥ तन्वा जनं कृशं पाति । तनूनपं घृतादि तत् अस्ति । अतो ऽन्यत्र इतिविट् । तनूनपात् तनूनपादौ तनूनपादइतिवा ॥ चित्रके ॥

तनूरुहम् । न । रोम्णि ॥ पक्षिपक्षे । पतत्रे ॥ पुत्रे ॥ तन्वां रोहति । रुह० । इगुपधेतिकः । मू०कोवा ॥

तनूह्रदः । पुं । पायौ । गुदे ॥

तन्तिः । स्त्री । प्रसारितरज्ज्वाम् ॥ दामन्याम् ॥

तन्तुः । पुं । सूत्रे ॥ ग्राहे ॥ अपत्ये ॥ सन्ततौ ॥ तनोति तन्यते वा । तनु० । सितनीतितुन् ॥

तन्तुकाष्ठम् । न । तूल्याम् । तांतकाकाठ इति भाषा ॥

तन्तुकी । स्त्री । नाड्याम् ॥

तन्तुकीटः । पुं । कोषकारे । गुटिपोका इतिगौड भाषा । रेसमकाकीडा

इति भाषा ॥

तन्तुणः । पुं । ग्राहे । हाँगर इतिगौडभाषा ॥

तन्तुनागः । पुं । ग्राहे ॥

तन्तुनाभः । पुं । लूतायाम् ॥

तन्तुनिर्य्यासः । पुं । तालवृक्षे ॥

तन्तुपर्व्व । न । परमेश्वरोपवीतदानतिथौ । श्रावण्यां पूर्णिमायाम् ॥

तन्तुभः । पुं । सर्षपे ॥ तन्तुना भाति । भा० । सुपीतिकः ॥ वत्से ॥

तन्तुरम् । न । ⎫
तन्तुलम् । न । ⎭ मृणाले ॥

तन्तुकी । स्त्री । सितापाके । चासनी इतिभाषा ॥

तन्तुवापः । पुं । तन्त्रवाये । कुविन्दे ॥ तन्तून् वपति । टुवप्० । कर्म्मण्यण् ॥

तन्तुवायः । पुं । लूतायाम् ॥ तन्तून् वयति । वेञ्० । कर्म्मण्यण् ॥ तन्त्रवाये । कुविन्दे । कोली इतितांती इतिचभाषा ॥

तन्तुविग्रहा । स्त्री । कदल्याम् ॥

तन्तुशाला । स्त्री । गर्त्तिकायाम् । तन्तुवयनगृहे ॥ तन्तूनां शाला ॥

तन्तुसन्ततम् । न । ऊते । स्यूते । वुना कपड़ा इतिभाषा ॥

तन्तुसारः । पुं । गुवाकवृक्षे ॥

तन्त्रम् । न । कुटुम्बकृत्ये ॥ सिद्धान्ते ॥



उत्तमौषधे ॥ प्रधाने ॥ तन्तुवाये ॥ परिच्छदे ॥ हेतौ ॥ उभयार्थप्रयोजके । उभयोर्द्देशेनसकृत्प्रवृत्तौ ॥ इतिकर्त्तव्यतायाम् ॥ राष्ट्रे ॥ परच्छन्दे ॥ करणे ॥ अर्थसाधके ॥ तन्तौ ॥ स्वराष्ट्रचिन्तायाम् ॥ परिजने ॥ वापसाधने । तन्तुवायशलाकायाम् ॥ तन्त्यन्ते तन्यते ऽस्मिन् । तन् ॥ प्रबन्धे ॥ शपथे ॥ धने ॥ गृहे ॥ वयनसाधने ॥ कुले ॥ श्रुतिशाखाविशेषे ॥ शास्त्रविशेषे ॥ तस्यलक्षणं यथा । सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णयएवच । देवतानाञ्च संस्थानं तीर्थानां चैव वर्णनम् ॥ तथैवाश्रमधर्मश्चविप्रसंस्थानमेवच । संस्थानञ्चैवभूतानां यन्त्राणाञ्चैवनिर्णयः ॥ उत्पत्तिर्विवुधानाञ्च तरूणांकल्पसंज्ञितम् । संस्थानं ज्योतिषां चैव पुराणाख्यानमेवच ॥ कोषस्य कथनञ्चैव व्रतानां परिभाषणम् । शौचाशौचस्यचाख्यानं नरकाणाञ्चवर्णनम् ॥ हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैवलक्षणम् । राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥ व्यवहारः कथ्यते च तथाचाध्यात्मवर्णनम् । इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ * ॥ च तत्स्य भाषाक्रमम् । विष्णुर्वरिष्ठोदेवानां ह

दानामुदधिस्तथा । नदीनाञ्चयथा गङ्गा पर्वतानांहिमालयः॥ अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रोयथावरः । देवीनाञ्चयथादुर्गा वर्णानां ब्राह्मणोयथा ॥ तथासमस्तशास्त्राणां तन्त्रशास्त्र मनुत्तमम् । सर्वकामप्रदं पुण्यं तन्त्रं वैवेदसम्मितम् ॥ कीर्त्तनंदेवदेवस्य हरस्यमतमेवच । पावनं श्रद्दधानानामिहलोकेपरत्रचेति ॥ तच्च चतुःषष्टिसंख्यकम् । यथा । सिद्धीश्वरं महातन्त्रं कालीतन्त्रंकुलार्णवम् । ज्ञानार्णवंनीलतन्त्रं फेत्कारी तन्त्रमुत्तमम् ॥ देव्यागममुत्तराख्यं श्रीक्रमं सिद्धियामलम् । मत्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं तथा ॥ वाराहीतन्त्रं देवेशि योगिनीतन्त्रमुत्तमम् । गणेशविमर्षिणी तन्त्रं नित्यातन्त्रं शिवागमम् ॥ चामुण्डाख्यं महेशानि मुण्डमालाख्यतन्त्रकम् । हंसमाहेश्वरं तन्त्रं निरुत्तरमनुत्तमम् ॥ कुलप्रकाशकं देविकल्पं गान्धर्वकंशिवे । क्रियासारं निबन्धाख्यं स्वतन्त्रतन्त्रमुत्तमम् ॥ सम्मोहनं तन्त्रराजं ललिताख्यं तथाशिवे । राधाख्यं मालिनी तन्त्रं रुद्रयामलमुत्तमम् ॥ बृहच्छ्रीक्रमतन्त्रञ्च गवाक्षं सुकुमुदिनी । विशु-



द्धेश्वरतन्त्रञ्च मालिनीविजयं तथा ॥ समयाचारतन्त्रञ्च भैरवीतन्त्रमुत्तमम् । योगिनी हृदयं तन्त्रं भैरवं परमेश्वरि ॥ सनत्कुमारकं तन्त्रंयोनितन्त्रं प्रकीर्त्तितम् । तन्त्रान्तरञ्च देवेशिनवरत्नेश्वरंतथा ॥ कुलचूडामणितन्त्रं भावचूडामणीयकम् । मन्त्रदेवप्रकाशञ्च कामाख्यानामकं तथा ॥ कामधेनुः कुमारीच भूतडामरसंज्ञकम् । मालिनीविजयं तन्त्रं यामलं ब्रह्मयामलम् ॥ विश्वसारं महातन्त्रं महाकालं कुलामृतम् । कुलोड्डीशं कुब्जिकाख्यं यन्त्रचिन्तामणीयकम् ॥ एतानितन्त्ररत्नानि सफलानियुगेयुगे । कालीविलासकादीनि तन्त्राणि परमेश्वरि ॥ कालकल्पे सुसिद्धानि अश्वक्रान्तासु भूमिषु । महाचीनादितन्त्राणि अविकल्पे महेश्वरि ॥ सुसिद्धानि वरारोहे रथक्रान्तासु भूमिषु । इति सिद्धिसारस्वतम् ॥ *॥ अपिच । चतुःषष्टिश्च तन्त्राणि यामलादीनि पार्वति । सफलानीह वाराहे विष्णुक्रान्तासु भूमिषु ॥ कल्पभेदेन तन्त्राणि कथितानिच यानिच । पाषण्डमोहनायैव विफलानीह सुन्दरीति ॥ महाविश्वसारतन्त्रम् ॥ वि। आयत्ते

॥ साङ्ख्यादिशास्त्रविशेषे ॥ तन्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति व्युत्पत्तेः ॥ तननम् । तन्यतेऽनेन वा । तनु० । ष्ट्रन् ॥ यद्वा । तन्त्रणम् । तन्त्र्यते वा । तन्त्रि कुटुम्बधारणे । घञ् ॥

तन्त्रकम् । न । अनाहते । नवीनवस्त्रे ॥ तन्त्रादचिरापहृते इतिसाधु ॥

तन्त्रकाष्ठम् । न । तन्त्रवायस्य तुर्याम् ॥

तन्त्रता । स्त्री । अनेकमुद्दिश्य सकृत्प्रवृत्तौ ॥ यथा । आग्नेयाष्टकपालैन्द्रदध्यैन्द्रपयोयागानां त्रयाणां माग्नेयाष्टाकपालोपांशुयागाग्नीषोमीयैकादशकपालयागानां त्रयाणां सकृत्-सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिद्ध्यति । तथा नानाब्रह्मवधसत्त्वे सर्वोद्देशेन सकृत् प्रायश्चित्तेकृते ब्रह्मवधजन्यपापनाशः । तन्त्रता-बाहुल्यञ्च । अदृष्टार्थैकजातीयकर्मणः कालदेशकर्त्रादीनां प्रयोगानुवन्धैघ हेतुभूतानामभेदे उद्देश्यविशेषाग्रह इति । एवञ्च स्नातोऽधिकारीभवति दैवेपैत्रे च कर्मणि । पवित्राणां तथाजाप्ये दानेचविधिदर्शिते इतिविष्णूक्तम् । अस्नात्वानाचरेत्कर्मजपहोमादि किञ्चनेति दक्षोक्तञ्च क्रियाङ्गस्नानं कर्तृसंस्कारद्वारैव तद्दिनकर्त्तव्याशेषकर्मार्थमेकमेव नतु



प्रतिकर्मकर्त्तव्यम् । इतिप्रायश्चित्ततत्त्वम् ॥

तन्त्रवापः । पुं । तन्त्रवाये ॥ तन्तवोवितन्यन्ते यत्र तत् तन्त्रम् । तद्वपति । टुवप० । कर्मण्यण् ॥

तन्त्रवायः । पुं । कुविन्दे ॥ वर्णसङ्करजातिरयम् ॥ अस्योत्पत्तिर्यथा । ताम्रकुट्टाच्छुक्लकार्यां मणिकारश्चजायते । मणिकारात् ताम्रकुट्ट्यां मणिवन्धो व्यजायत ॥ मणिवन्धान्मणिकार्यां तन्त्रवायाश्च जज्ञिरे । इति पराशरपद्धतिः ॥ तन्तवो वितन्यन्ते यस्मिन् । तत् तन्त्रम् । तद्वयति । वेञ्० । ह्वावामश्चेतिकापवादोऽण्॥

तन्त्रिका । स्त्री । गुडूच्याम् ॥ तन्त्रयते । तन्त्रि० । ण्वुल् ॥ तन्त्र्येव वा । कन् । ह्रस्वः ॥

तन्त्रिपालकः । पुं । जयद्रथन्नृपे ॥

तन्त्रीः । स्त्री । वीणागुणे ॥ अमृतायाम् । गुडूच्याम् ॥ देहशिरायाम् ॥ नाड्याम् ॥ रज्ज्वाम् ॥ नदीविशेषे ॥ युवतीप्रभेदे ॥ वीणाप्रभेदे । तन्त्रयते । तन्त्रि० । अवितृस्तृतन्त्रिभ्यईः॥

तन्द्रा । स्त्री । निद्रायाम् ॥ आलस्ये । प्रमीलायाम् ॥ तस्या निदानं लक्षणञ्च । यथा । तमोवातकफात् तन्द्रेति ॥ इन्द्रियार्थेष्वसंवित्ति गौर

 

यं जृम्भणं क्लमः। निद्रार्त्तस्येव यस्ये हा तस्य तन्द्रां विनिर्दिशेदिति ॥ निद्रायां प्रबुद्धस्य क्लमाभावः। तन्द्रायान्तु प्रबोधितस्यापि क्लम इत्यनयोर्भेदः ॥ तत् रात्ति। तत्पूर्वाद्रातेरातोनुपेतिकः। टाप् ॥ तत् द्राति वा। द्रा कुत्सायां गतौ। स्पृहिगृहीत्यादिना तद्रेनान्तत्वं निपात्यते ॥ निद्रातन्द्रेति वा निपात्यते ॥ तन्द्रा च सुखस्य भार्या निद्रायाः कन्या प्रीतेर्भगिनी। यथा। निद्राकन्या च तन्द्रा सा प्रीतिरन्या सुखप्रिये। वाभ्यां व्याप्तं जगत् सर्वं विधिपुत्रविधेर्विधाविति ॥

तन्द्रालुः। त्रि। निद्रालौ ॥ तत् द्राति। द्रा०। स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुजिति तत्त्वात् शीलादिषु आलुच्। तच्छब्दस्य नान्तत्वं समासश्च निपात्यते ॥

तन्द्रिः। स्त्री। आलस्ये ॥ निद्रायाम् ॥ तन्द्रायाः करणम्। तत्करोतीति णिच्। अदिश्च ॥ यद्वा। तर्दिः सौत्रो धातुः ॥ तस्मात् वह्न्यादयश्चेत्यौणादिकः क्रिन् ॥

तन्द्रिका। स्त्री। तन्द्रयाम् ॥

तन्द्रितः। त्रि। अलसे ॥ तन्द्रा सञ्जाता अस्य। ता० इतच् ॥

तन्द्री। स्त्री। अत्यन्तश्रमादिना सव-क्रियासामर्थ्ये। प्रमीलायाम् ॥ तन्द्रयाः कृदिकारादिति ङीष् ॥ तत् राति वा। आतोनुपेतिकः। गौ० ङीष् ॥ तत् द्राति वा। द्रा०। निद्रातन्द्रेति तद्रेनान्तत्वं निपात्यते ॥

तन्निष्ठः। त्रि। सर्वकर्मसन्न्यासेन ब्रह्मैक्यविचारपरे ॥ तस्मिन्नेव ब्रह्मणि सर्वकर्मानुष्ठानविक्षेपनिवृत्त्या स्थितिर्यस्य स्थर्यः ॥ तस्मिन् स्थिते ॥

तन्मयः। त्रि। तद्भावभाविते ॥ अभेदे ॥

तन्मात्रम्। न। शब्दादीनां सूक्ष्मेषु। शब्दतन्मात्राणि स्पर्शतन्मात्राणीत्यादिपदवाच्येषु ॥ तत्तेषां शान्तादिविशेषोऽस्ति। यथोक्तं विष्णुपुराणे। तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता। तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥ न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिण इति ॥ सा मात्रा यस्मिन् तत्। त्रि। तावन्मात्रे ॥

तन्यतुः। पुं। वायौ ॥ निशि ॥ तनोतीति। तनु०। कृतन्यज्जीत्यादिना यतुच् ॥ तन्यतुर्गर्जितमिति तन्यतुरशनिरिति च वेदभाष्यम् ॥

तन्ववस्था। स्त्री। अभिव्यक्तस्यापि सत्कार्येऽलाभात् कार्योऽजनने ॥

तन्वि:। स्त्री। पृश्निपर्ण्याम् ॥

 

तन्वी । स्त्री । कूष्माण्ड्याम् ॥ वोतो गु णवचनादिति ङीष् । तनुशब्दस्तनु त्वं गुणमुक्त्वा तद्द्रव्यमभिधत्त इति गु णवचनः ॥ शालपर्ण्याम् ॥ सङ्कृति संज्ञके चतुर्विंशत्यक्षरात्मके वृत्ते ॥ भूतमुनीनै र्यतिरिह भतना स्भौ भ नयाश्च यदि भवति तन्वी ॥ यथा । माधवमुग्धे मधुकरविरुतैः कोकि- लकूजितमलयसमीरैः । कम्पमुपे ता मलयजसलिलैः प्लावनतोप्यऽवि गततनुदाहा ॥ पद्मपलाशैर्विरचित शयने देहजसञ्ज्वरभरपरिदूनेे । निश्वसती सा मुहुरतिपरुषं ध्यानस्थि तेत्व निवसति तन्वी ॥ इति ॥

तपः । पुं । ग्रीष्मे । ज्येष्ठाषाढयोः ॥ त पति । तपसन्तापे । पचाद्यच् ॥

तपःकरः । पुं । तपस्वीमत्स्ये ॥ त्रि । त पस्याकारके ॥

तपःक्लेशसहः । त्रि । दान्ते ॥ तपसां क्लेशः । सहते । षह० । अच् । तपःक्लेशस्य सहः ॥

तपःस्थः । त्रि । तपसिस्थिते ॥ सुपिस्थ इति कः ॥

तपःस्थली । स्त्री । काश्याम् ॥

तपती । स्त्री । छायानामसूर्यकन्या म् ॥ सूर्यसुतायाम् ॥ नदीविशेषे ॥

तपनः । पुं । सूर्ये ॥ भल्लातके । भ ल्लातवृक्षे ॥ निरयान्तरे ॥ ग्रीष्मे ॥ अर्कवृक्षे ॥ क्षुद्राग्निमन्थवृक्षे ॥ सू र्यकान्तमणौ ॥ तापे ॥ तपति । तप० । ल्युः ॥

तपनच्छदः । पुं । आदित्यपत्रवृक्षे ॥

तपनतनया । स्त्री । यमुनायाम् ॥ तप नस्य तनया ॥ शमीवृक्षे ॥

तपनमणिः । पुं । सूर्यकान्तमणौ ॥

तपनात्मजा । स्त्री । गोदावरीनद्याम् ॥ यमुनायाम् ॥ तपनस्य आत्मजा ॥

तपनी । स्त्री । गोदावर्याम् ॥

तपनीयम् । न । स्वर्णे ॥ तप्यतेऽनेन । तप० । कृत्यल्युटइत्यनीयर् ॥

तपनीयकम् । न । सुवर्णे ॥

तपनेष्टम् । न । ताम्रे ॥

तपाः । पुं । माघमासे ॥ शिशिरे ॥ त पन्त्यस्मिन् । तप० । असुन् ॥

तपस् । न । जनलोकोपरिवर्त्तिनि लो कविशेषे ॥ यथा । तपोऽर्ककोटि यत्रास्ते महायोगी सनन्दनः । ऋ भुः सनत्कुमारश्च सनकश्च महा तपाः इति ॥ स्नानादिलक्षणेब्रह्म णि ॥ कन्यामित्रां द्वारा गृहाट्टष्टवा त- पस्यास्तापयती स्युक्तः ॥ आलो- चने ॥ ध्याने ॥ स्वधर्मे । स्वाश्रम- विहितकर्मणि ॥ वैधक्लेशजनकेक र्मणि ॥ नवमभवने ॥ चान्द्रायण-

ने ॥ तपोनानशनात्परम् ॥ क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहने ॥ चित्तप्रसादहेतुभूते व्रतनियमोपासनादिकर्मणि ॥ काष्ठमौनाकारमौनादिव्रते ॥ कायेन्द्रियमनसांसमाधाने ॥ शास्त्रीयमार्गेण कायेन्द्रियमनसांशोषणे ॥ कृच्छ्रचान्द्रायणप्राजापत्यादिरूपे प्रायश्चित्ते ॥ अग्नाववशिष्टितप्तशिलारोहणादौ ॥ वानप्रस्थस्यासाधारणधर्मे ॥ तच्च शारीरादिभेदात्त्रिविधम् । यथा । देवद्विजगुरुप्राज्ञपूजनं शौच मार्जवम् । ब्रह्मचर्यमहिंसाच शारीरं तप उच्यते ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्चयत् । स्वाध्यायाभ्यसनंचैववाङ्मयं तप उच्यते ॥ मनःप्रसादः सौम्यत्वं मौन मात्मविनिग्रहः । भावसंशुद्धिरित्येतत् तपोमानसमुच्यते ॥ तदपि सात्त्विकादिभेदात् त्रिविधं यथा । श्रद्धया परयातप्तं तपस्तत् त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ सत्कारमानपूजार्थं तपोदम्भेनचैवयत् । क्रियते तदिहप्रोक्तं राजसं चलमध्रुवम् ॥ मूढग्राहेणात्मनो यत् पीडया क्रियते तपः । परस्योत्सादनार्थंवा तत्तामसमुदाहृतम् ॥

ति ॥ मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यंपरमन्तपः ॥ ब्राह्मणस्यतपोज्ञानं तपःक्षत्रस्यरक्षणम् । वैश्यस्यतुतपो वार्त्ता तपः शूद्रस्यसेवनम् ॥ तपनम् तप्यतेऽनेनवा । तप० । तपति ऐश्वर्येवा । असुन् ॥

तपसः । पुं । चन्द्रे ॥ तपति । तप० । अत्यविचमितमिनमीत्यादिना ऽसच् ॥ पक्षिणि ॥

तपस्तक्षः । पुं । इन्द्रे ॥ इतिहेमचन्द्रः ॥

तपस्थः । त्रि । तपसिस्थिते ॥ सुपिस्थ इति कः । खर्परेशरीतिपाक्षिकोविसर्गलोपः ॥

तपस्यः । पि । फाल्गुनेमासि ॥ अर्जुने ॥ तपसिसाधुः । तत्रसाधुरितियत् ॥ न । कुन्दपुष्पद्रुमे ॥

तपस्या । स्त्री । नियमस्थितौ । व्रतचर्यायाम् । तपश्चर्यायाम् ॥ तपश्चरति तपस्यति । कर्मणोरोमन्थतपोभ्यांवर्त्तिचरोरितिक्यङ् । तपस्यति इति तपस्या । अप्रत्ययादितिस्त्रिया मप्रत्ययः । टाप् ॥

तपस्वी । त्रि । तापसे । पारिकाङ्क्षिणि ॥ कृच्छ्रचान्द्रायणादितपःप्रधाने । वानप्रस्थादौ ॥ अनुकम्प्ये । दीने ॥ प्रशस्तपसि ॥ तपोऽस्यास्ति । तपस्सहस्राभ्यामितिविनिः ॥ पुं । ना

रदे ॥ घृतकरञ्जे ॥ तप्यारः॥ इति गौडभाषा प्रसिद्धे मत्स्ये। चेट्के ॥ इतिराजनिर्घण्टः॥

तपस्विनी । स्त्री । तपोयुक्तायाम् ॥ जटामांस्याम् ॥ कटुरोहिण्याम् ॥ महाश्रावणिकायाम् ॥ सन्तापवत्याम् ॥ कन्नेभ्यइतिङीप् ॥

तपस्विपत्रः । पुं । दमनकवृक्षे ॥

तपात्ययः । पुं । वर्षाकाले ॥ तपस्यात्ययो यस्मिन् ॥

तपितः । त्रि । तप्ते । तपा इतिभाषा॥

तपिनी । स्त्री नद्यन्तरे ॥

तपुः । न । सूर्ये ॥ अग्नौ ॥ शत्रौ ॥ तपति । तप० । अर्त्तिपृवपियजितनिधनितपिभ्योनिद्दिस्युसिः। तपुषी तपूंषि ॥

तपोधनः । पुं । तापसे । तपस्विनि ॥ दमनकवृक्षे ॥ तपोधनंयस्य ॥

तपोधना । स्त्री । मुण्डीर्याम् ॥

तपोनिष्ठः । पुं । सदाध्ययननिष्ठे तापसविशेषे ॥

तपोयज्ञः । पुं । तपस्विनि ॥ कृच्छ्रचान्द्रायणादितपएवयज्ञोऽस्य ॥

तपोवटः । पुं । ब्रह्मावर्त्तदेशे ॥

तपोवनम् । न । गुह्यकलोकवसफलके तीर्थविशेषे॥

तप्तः । त्रि । प्रज्वलिते ॥ तप्यतेस्म । तप० । क्तः ॥ तापयुक्ते । सन्तापिते॥

तप्तकम् । न । तवा इति लोकप्रसिद्धे पोलिकादिसाधने ॥

तप्तकुम्भः । पुं । नरकविशेषे ॥

तप्तकृच्छ्रः । पुं । व्रतविशेषे ॥ यथा । तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितःइति ॥ अथ पराशरोक्तो विशेषः॥ यथा। षट्पलन्तु पिबेदम्भ स्त्रिपलन्तु पयःपिबेत्। पलमेकंपिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते। इति ॥ पयोघृतमुदकं वायुत संप्रतित्र्यहंपिबेत् सतप्तकृच्छ्रः। इति गौतमः॥

तप्तपाषाणकुण्डम् । न । नरक विशेषे॥

तप्तबालुकः । पुं । नरकविशेषे ॥

तप्तमासकम् । न । पुण्यपापयोःपरीक्षाविशेषे ॥

तप्तमुद्रा । स्त्री । शरीरधार्याग्नितप्तधातुमयभगवदायुधचिह्ने ॥ यथा । आषाढशुक्लद्वादश्यां हरौशिशयिषौसति । वैष्णवःपारणं कृत्वा तप्तमुद्राश्च धारयेत् ॥ ब्राह्मणःक्षत्रियेवैश्यःशूद्रश्चैकान्तितद्वये । कुर्वन्नात्मार्पणं तप्तमुद्राभिर्देह मङ्कयेत् ॥ * ॥ तप्तमुद्राधारणनिन्द्यतोक्ता वायुपुराणे । अग्निनैवचसन्तप्तं चक्र

मादाय वैष्णवः । धारयेत् सर्ववर्णानां हरिसालोक्यसिद्धये ॥ ब्रह्माण्डे । कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम् । चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः ॥ नारदीयपञ्चरात्रे । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । हरेः सुदर्शनं तप्तं धारयेत् तद्विचक्षणः ॥ सौपर्णे च श्रीभगवद्गरुडसंवादे तप्तमुद्राप्रकरणे । गरुत्मन्नविशेषेण सर्ववर्णेष्वयं विधिः । विप्रो वा क्षत्त्रियो वापि वैश्यः शूद्रस्तथैव च ॥ पाद्मे । अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥ किञ्च तत्रैवोत्तरखण्डे श्रीशिवोमासंवादे । शङ्खचक्राङ्कनं कुर्याद्ब्राह्मणो बाहुमूलयोः । हुताग्निनैव सन्तप्य सर्वपापनुत्तये ॥ चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा । धारयित्वैव विधिवद् ब्रह्मकर्म समारभेत् ॥ * ॥ किञ्च तत्प्रसङ्ग एव । अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् । किञ्च । न तस्य किञ्चिद्दश्नीयादपि क्रतुसहस्रिणः । सर्ववेदविदो वापि सर्वशास्त्रविशारदः । अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् ॥ किञ्च । तप्तेनैवाङ्कनं कुर्याद्ब्राह्मणस्य विधानतः । श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥ हरेः पूजाधिकारार्थं चक्रं धार्यं विधानतः । वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः ॥ किञ्च । उपवीतादिवद्धार्याः शङ्खचक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥ * ॥ अथ । यो हवै सुश्लोकमौलेर्धर्मानतनुतिष्ठमानोऽग्निनाचक्रं धत्ते । अग्निर्वै सहस्रारः सहस्रारो नेमिर्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीत्याद्याः श्रुतयो बह्व्य उदाहृताः सन्ति वेङ्कटाचार्य्यादिभिः । तद्भिन्नानि पुराणवचनानि चैतानि गौरवभिया न लिखितानि । मन्वादिस्मृतिषु रामायणभारतादिष्वदृष्टत्वात् मन्वर्थविपरीतायाः स्मृतेरप्रशस्तत्वाच्च ॥

तप्तरूपकम् । न । रौप्ये ॥

तप्तसुराकुण्डम् । न । नरकान्तरे ॥

तप्तसूर्म्मिकुण्डम् । न । नरकविशेषे ॥

तप्ताङ्गारः । पुं । महानरकान्तरे ॥

तमः । पुं । तमोगुणे ॥ तमालवृक्षे ॥ स्वर्भानौ ॥ न । पादाग्रे ॥ अन्धकारे ॥ ताम्यति । तमु ग्लानौ । पचाद्यच् ॥ तमनम् । भावे घञ् । नोदात्तोपदेशस्येति न वृद्धिः ॥

तमःपतिः । पुं । क्रियादक्षनिरोद्धरिवा

मदेवनाथे ॥

तमःप्रधानः । पुं । तमोगुणप्रधानमायोपाधिके परमात्मनि ॥ त्रि । तमोगुणप्रधाने ॥

तमःप्रभः । पुं । नरकविशेषे ॥

तमःप्रभा । स्त्री । नरकभूमिभेदे ॥

तमकः । पुं । श्वासरोगप्रभेदे ॥

तमङ्गकः । पुं । इन्द्रकोषे । मञ्चके ॥

तमतः । त्रि । तृषिते । तृष्णापरे ॥ ताम्यति । तमुकाङ्क्षायाम् । भृमदृशियजीत्यादिना ऽतच् ॥

तमप्रभः । पुं । नरकविशेषे ॥

तमरम् । न । वङ्गे ॥ इति हेमः ॥

तमस् । न । चक्षुर्दर्शननिरोधके शार्वरादिध्वान्ते ॥ शोके ॥ पापे ॥ कार्याकार्याविवेके ॥ अविद्यायाम् ॥ मन्दान्धकारे ॥ मोहान्धकारे ॥ विशेषदर्शनविरोधिदोषे ॥ सर्वदेहिनां मोहनेप्रकृतेर्गुणविशेषे ॥ प्रमादालस्यनिद्राभिस्तन्निबध्नाति ॥ गुरुवरणकमेवतमइष्टं साङ्ख्याचार्यैः । तमस्त्वयमविक्रियम् । तन्मोहहेतु स्तन्मोहात्मकं तमः । भेदस्तमसोऽष्टविधः । तमसोऽविद्याया अष्टविधोभेदः । अष्टसु अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तम स्तस्याष्टविधविषयत्वा दष्टविधत्वम् ॥ मले ॥ ताम्यति तम्यते ऽनेनवा । तमुग्लानौ । असुन् ॥ पुं । न । विधुन्तुदे ॥

तमसम् । न । अन्धकारे ॥ ताम्यति ग्लानिं प्राप्नोत्यनेनास्मिन्वा । तमु० । अत्यविचमितमीत्यादिना ऽसच् ॥

तमसा । स्त्री । नदीविशेषे ॥

तमस्ततिः । स्त्री । ध्वान्ते । अन्धकारसमूहे ॥ तमस स्ततिः ॥

तमस्विनी । स्त्री । क्षपायाम् । रात्रौ ॥ तमो ऽस्त्यस्याम् । अस्मायामेधेतिविनिः ॥ हरिद्रायाम् ॥

तमा । स्त्री । रजन्याम् ॥ तमालद्रुमे ॥ ताम्यंत्यस्याम् । तमु० । अच् । टाप् ॥

तमालः । पुं । तिलके । पुण्ड्रे ॥ खड्गे । असौ ॥ वरुणद्रुमे ॥ तापिञ्छे । कालस्कन्धे ॥ तमालः शालवदेशो दाहविस्फोटहृत्पुनः ॥ कृष्णखदिरे ॥ ताम्यति । तमु० । तमिविशिविडीतिकालन् ॥ न । पत्रके । तेजपात इतिभाषा ॥

तमालकम् । न । सुनिषण्णशाके ॥ पत्रके ॥ पुं । न । तमालद्रुमे ॥

तमालपत्रम् । न । तापिञ्छ । कालस्कन्धे ॥ तिलके ॥ पत्रके । तेजपात इतिभाषा ॥ तमालस्य पत्रमिव तदा

कृतित्वात् ॥

तमाखिका । स्त्री । ताम्रवल्ल्याम् ॥ भूम्यामलक्याम् ॥ तामलिप्तदेशे ॥

तमाखी । स्त्री । ताम्रवल्ल्याम् ॥ वरुणवृक्षे ॥

तमिः । स्त्री । रात्रौ ॥

तमिस्रम् । न । कोपे ॥ तिमिरे । अन्धकारे ॥ तमोऽस्त्यत्र । भावप्रधानो निर्देशः । ज्योत्स्नातमिस्रेतिसाधु ॥ तमिस्राख्याश्रयत्वेनास्येतिवा । अर्श आद्यच् ॥

तमिस्रपक्षः । पुं । कृष्णपक्षे ॥

तमिस्रा । स्त्री । कृष्णपक्षनिशायाम् ॥ भूतरात्रौ ॥ दर्शयामिन्याम् ॥ तमस्ततौ । तमसांसमूहे ॥ तत्रत्यवयवभूतानि तमांसि विद्यन्ते । तमोवहुत्वमस्त्यस्याम् । ज्योत्स्नातमिस्रेति तमसउपधायाइत्वं रप्रत्ययश्चनिपातितः । टाप् ॥

तमी । स्त्री । यामिन्याम् । रात्र्याम् ॥ ताम्यन्त्यस्याम् । तमु० । इन् । कृदिकारादितिङीष् ॥ हरिद्रायाम् ॥

तमोगुणः । पुं । विषादात्मके । विषादेमोहस्वरूपे ॥

तमोघ्नः । पुं । सूर्ये ॥ वह्नौ ॥ इन्दौ ॥ बुद्धे ॥ शङ्करे ॥ विष्णौ ॥ तमोहन्ति । हन० । कमनुष्यकर्तृकेचेतिटक् ॥

तमोज्योतिः । पुं । खद्योते ॥ तमसि ज्योतिरस्य ॥

तमोनुत्-द् । पुं । चन्द्रे ॥ सूर्ये ॥ अग्नौ ॥ दीपे ॥ तमोनुदति । णुद० । क्विप् ॥

तमोनुदः । पुं । प्रकृतेः प्रेरके स्वयम्भुवि ॥ आदित्ये ॥

तमोपहः । पुं । सहस्रांशौ ॥ मृगाङ्के ॥ वह्नौ ॥ तमोऽपहन्तीति विग्रहे अपेक्लेशतमसोरित्यनेन अपपूर्वाद्धन्ते स्तमसिकर्मोपपदे कर्त्तरिडः ॥ जिने ॥

तमोभित्-द् । पुं । तमोनुदर्थे ॥ खद्योते ॥ तमोभिनत्ति । भिदिर्० । क्विप्तुकौ ॥

तमोमणिः । पुं । खद्योते ॥ तमसोमणिरिव ॥ गोमेदकमणौ ॥

तमोलिप्ती । स्त्री । तमोलुक इतिनाम्ना प्रसिद्धे देशे । तामलिप्ते । वेलाकूले ॥

तमोविकारः । पुं । रोगे ॥

तमोविशालः । पुं । मूलतःसर्गे पश्वादिस्थावरान्ते ॥ मूलतः सर्गोपिमोहमयत्वात्तमोवहुलः ॥

तमोहरः । पुं । चन्द्रे ॥ न । ज्योतिषि ॥ निर्गुणंधामभागेच सप्तभागेऽद्भुताभिजा । मध्येनाथः स्वयंज्योतिस्तज्ज्यो

तिर्मेतमोचरम् ॥ च्चि । तमसो चर यकर्त्तरि ॥ हरति । हृञ् । अच् । तमसोचरः ॥

तम्पा । स्त्री । ⎫ गवि । सैारभेय्याम् ॥
तम्बा । स्त्री । ⎭ इतिहेमचन्द्रः ॥

तम्बिका । स्त्री । तम्ब्याम् ॥

तम्बी । स्त्री । तयी इति भाषाप्रसिद्धे कान्स्यविकृभाण्डे ॥

तयः । पुं । रचके ॥ तयति । तयरच- णे गतैाच । अच् ॥

तरः । पुं । तरणे ॥ न । लोभे ॥ तरति । तॄ० । अप् । तरणं वा । कर्त्तरप् ॥

तरचः । पुं । तरख इति प्रसिद्धे तरचौ ॥

तरचुः । पुं । मगादने । तेंदुवावाघ इ तितरख इत्यादिनाम्नाख्याते चघु व्याघ्रे ॥ तरंगतिं मार्गं वा चिणोति । चिणुहिंसायाम् । मित० डुः ॥

तरचुकः । पुं । तरचौ ॥ संज्ञायांकन् ॥

तरङ्गः । पुं । वायुना नद्यादिजलस्य ति र्यगूर्द्ध्वप्लवने । भङ्गे । ऊर्म्याम् । लह र छेउ इत्यादि भाषा ॥ तरति । तॄ प्लवनसन्तरणयोः । तरत्यादिभ्यश्चे त्यङ्गच् ॥ अस्वादिसमुत्काले ॥

तरङ्गिणी । स्त्री । नद्याम् । तटिन्या- म् ॥ तरङ्गाः सन्त्यस्याम् । अतइनिः । पुष्करादिभ्य इतिनिर्वा । ऋन्नेभ्यो ङीप् ॥

तरङ्गितः । त्रि । भङ्गिमति । सञ्जात- तरङ्गे ॥ तरङ्गाः सञ्जाता अस्य । ता० इतच् ॥ यद्वा । तरङ्गवत्कृतः अस्य स्मात् तत्करोतीतिणिचि कर्त्तरिक्तः । णाविष्टवद्भावान्मतुपोलुक् ॥

तरणः । पुं । भेलके । उडुपे । डैांगा इति भाषा ॥ स्वर्गे ॥ न । पारगमने । सन्त रणे ॥ प्लवनपूर्वकदेशान्तरगमने ॥

तरणिः । पुं । द्युमणैा । सूर्ये ॥ भेलके ॥ अंशैा । किरणे ॥ ताम्रे ॥ स्त्री । नैाकायाम् ॥ घृतकुमार्याम् ॥ तर- न्त्यनेनसंसारम् । तरन्त्यनयावा । तॄ० । अर्त्तिसृधृधमीत्यादिनातर- तेरनिः ॥

तरणिपेटकः । पुं । काष्ठाम्बुवाहिन्याम् ॥

तरणिरत्नम् । न । माणिक्ये ॥

तरणी । स्त्री । नावि ॥ घृतकुमार्याम् ॥ पद्मचारिण्याम् ॥ कृदिकारादि तिङीष् ॥

तरण्डः । पुं । न । वडिशीसूत्रबन्धन काष्ठे । छड इतिडगन इतिचभाषा ॥ प्लवे ॥ नैाकायाम् ॥ कुम्भतुम्बीरम्भा दिजप्लवे ॥ पुं । देशविशेषे ॥ तर- ति । तॄ० । वाहुलकाद्दण्डन् ॥

तरण्डपादा । स्त्री । ⎫ नावि ॥ इ-
तरण्डा । स्त्री । ⎬ तिशब्दर-
तरण्डी । स्त्री । ⎭ त्नावली ॥

तरसम: । अ । न्यूनाधिकभावेनेत्यर्थे ॥

तरस्-स् । स्त्री । भेलके । प्लवे ॥ प्रथमा के ॥ बारयद्धविहङ्गमे ॥

तरडी । स्त्री । काष्ठकिंटकविशेषे । तीव्रायाम् । रक्तबीजकायाम् ॥

तरङ्गटी । स्त्री । पक्वान्नविशेषे ॥ यथा । घृतेन मर्दितां दध्ना कनिक्कां फेनयेत् ततः । विधायवटिका स्तस्या न्नसे मन्दाग्निना पचेत् ॥ प्रक्षिप्ताः खण्डपाकेन कर्पूरेण विमिश्रयेत् । ततएताः समरिचा स्तरङ्ग्यस्तु ताः स्मृताः ॥ वल्या पुष्टिकरी हृद्या वृष्या पित्तानिलापहा । सुस्निग्धा कफदा चार्थं किञ्चित्सन्धानकृद्दिता ॥

तरन्त: । पुं । समुद्रे ॥ भेके ॥ आसारे । राक्षसे ॥ तीर्यते । तॄ० । तॄभूवहि वसी भ्यादिनाउच् सचषित् ॥

तरन्ती । स्त्री । नौकायाम् ॥ तरति तीर्यतेऽनयावा । उच: षित्त्वान् ङीष् ॥

तरपण्यम् । न । आतरे । नद्यादिसन्तारशुल्के ॥ तरणम् । तॄ० । ऋदोरप् । तरस्य पण्यम् ॥

तरम्बुजम् । न । तरबूज इति प्रसिद्धे फले ॥ यथा । ज्येष्ठमासि मङ्गलानि पौर्णमास्यां निशाईके । तृष्णाकरा महाकाली भ्रमन्ती पिशाचिका । इ० मधुमाच्चात्रवाणा तदाहेतं इत्थं तरम्बुजम् ॥ तत्कालमनलात् तृषावरदासिहरप्रिया ॥ यो भेदया त् फलं रम्यंसुचिरायुस्तनुर्युगभिच्यु त्तरकामाख्यातन्त्रम् ॥

तरल: । पुं । हारमध्यमणौ ॥ हारे ॥ तले ॥ त्रि । चञ्चले ॥ कामुके । षिङ्गे ॥ भास्वरे ॥ मध्यशून्यद्रव्ये ॥ द्रवीभूते ॥ तरति । तॄ० । अलच् ॥ तरंलातिवा । आतदूतिक: ॥ इत्यादिस्वाद्वा कल: ॥

तरलनयना । स्त्री । चञ्चलनेत्रायांवनितायाम् ॥ तरलेलोलेनयनेयस्या: ॥

तरलनयनि: । पुं । वर्णवृत्तविशेषे ॥ द्विजवरगणयुग मुपनय सकुसुमकणमिहरचय । सुदतिविमलमति फणिपतिनिगदितमरलनयनिरिति ॥ यथा । अपहरपुरहर ममदर मभिमतकलियुगभयहर । हिमगिरिविहितसयनवर सुकृतसुलभमघमधरेति ॥

तरललोचना । स्त्री । चञ्चललोचनायाम् ॥ तरले लोचने यस्या: ॥

तरला । स्त्री । यवाग्याम् ॥ सुरायाम् ॥ मधुमक्षिकायाम् ॥ तरं लाति । ला० । क: । टाप् ॥

तरलायित: । पुं । चञ्चलाचरिते ॥

तरलित: । त्रि । आन्दोलिते । प्रेङ्खोलिते ॥

ते। कम्पिते। धूते। प्रेङ्खिते। नर्ति ते। त॰ इतच्॥

तरवारिः। पुं। तरवार इतिप्रसिद्धे खड्गे॥ इतिहेमचन्द्रः॥ चतुरङ्गा रिपोः सेनाश्छिन्दन्ती तरवारिभिरि॰न न्नराजस्य॥ विश्वेपद्मस्यान्यत्र खड्ग परीक्षायांयुक्तिकल्पतरौचद्रष्टव्यः॥

तरस्। न। बले॥ रोगे॥ जवे। वेगे॥ सवेगगतिवचने ऽस्यप्रयोगः॥ तीरे॥ कपौ। प्लवगे॥ वेगाख्यगुणे॥ तरन्त्यनेन। तॄ॰। असुन्॥

तरसम्। न। मांसे॥ तरोबलमस्मिन्। अर्शआद्यच्॥

तरसा। अ। झटित्यर्थे। शीघ्रे॥

तरस्थानम्। न। घट्टे॥ तरस्यस्थानम्॥

तरस्वी। पुं। गरुडे॥ वायौ॥ त्रि। शूरे॥ वेगिनि॥ तरोबलं जवोवाऽस्यास्ति। अस्मायामेधास्रजोविनिः॥

तराभुः। पुं। नौविशेषे। हेडे। यज्ञे॥

तरालुः। पुं। नौकाविशेषे॥

तरिः। स्त्री। नौकायाम्॥ वस्त्रादीनांपेटके॥ दशायाम्॥ तरन्त्यनया। तॄ॰। अ घ्रः॥

तरिकः। पुं। प्लवे। भेलके॥

तरिका। स्त्री। नावि॥

तरिणी। स्त्री। नौकायाम्॥

तरिता। स्त्री। तर्जन्याम्॥ गाँजा इतिभाषाप्रसिद्धमद्यर्थाम्॥ यथा। संविदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरम्। अहिफेनं खर्जुरसं सारिका तरिता तथेतितन्त्रम्॥

तरिषः। पुं। अरित्रे॥ इतिधारावली॥

तरी। स्त्री। वस्त्रादिपेटके॥ द्रोण्याम्॥ वेडायाम्। नावि॥ गदायाम्॥ धूमे॥ दशायाम्॥ तरन्त्यनया। तॄ। अच्इः। कृदिकारादिति ङीष्॥ पचादौतरडितिपाठान् ङीप् वा॥

तरीः। स्त्री। नावि॥ तरन्त्यनया। तॄ॰। अवितॄस्तृतन्त्रिभ्यईः॥

तरीषः। पुं। स्वर्गे॥ महोदधौ॥ शोभनाकारे॥ भेले॥ व्यवसाये॥ समर्थे॥ वोधे॥ तरन्ति येन। तॄ॰। ऋतॄभ्यामीषन्॥

तरीषी। स्त्री। शक्रकन्यायाम्॥

तरुः। पुं। अगमे। द्रुमे॥ तरन्ति नरकमनेन रोपकाः। तॄ॰। भृमृशीतृचरीति उप्रत्ययः॥

तरुकुणिः। पुं। पक्षिविशेषे। वाम्गुदे। वागुड इतिभाषा॥

तरुखण्डः। पुं। तरूणां समूहे॥ इक्षादिभ्यःखण्डः॥

तरुजीवनम्‌ । न । द्रुममूले ॥

तरुणः । पुं । एरण्डे ॥ स्थूलजीरके ॥ न । कुब्जपुष्पे ॥ चि । यूनि । जाततारुण्ये ॥ नूतने ॥ तरति । तॄ॰ । चोरस्य लोवेत्युनन्‌ ॥

तरुणज्वरः । पुं । सप्ताहावधिज्वरे ॥ यथा । आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥

तरुणदधि । न । पञ्चदिनातीतदधिनि ॥

तरुणी । स्त्री । युवत्याम्‌ । द्वितीयवयःप्राप्तायांनार्याम्‌ ॥ आषोडशाद्भवेद्बाला तरुणी त्रिंशता मतेत्युक्तः ॥ तरति । तॄ॰ । चोरस्य लोवेत्युनन्‌ । वयसि चरमइतिङीप्‌ । नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति वा ॥ गौरादिङीष्‌ वा । स्वरेविशेषः ॥ घृतकुमार्याम्‌ । सहायाम्‌ ॥ दन्तीवृक्षे ॥ चीडानामगन्धद्रव्ये ॥ सेवती इतिभाषाप्रसिद्धे पुष्पे । सहायाम्‌ । गन्धाद्यायाम्‌ ॥

तरुणीकटाक्षमालः । पुं । तिलकवृक्षे ॥

तरुतूलिका । स्त्री । } वातुल्याम्‌ । वा
तरुटूलिका । स्त्री । } दुड पक्षीइतिभाषा ॥

तरुनखः । पुं । कण्टके ॥

तरुभुक्‌ । पुं । वन्दाके ॥

तरुमृगः । पुं । वानरे ॥

तरुरागः । पुं । नवीनपल्लवे । किसलये ॥

तरुराजः । पुं । तालद्रुमे ॥

तरुरुहा । स्त्री । } वन्दाके ॥
तरुरोहिणी । स्त्री । }

तरुवल्ली । स्त्री । जतुकालतायाम्‌ ॥

तरुविलासिनी । स्त्री । नवमल्लिकायाम्‌ । सप्तलालतायाम्‌ ॥ तरोर्विलासिनी ॥

तरुशायी । पुं । खगे । पक्षिणि ॥

तरुसारः । पुं । कर्पूरे ॥ इतिशारावल्ली ॥

तरुस्था । स्त्री । वन्दाके ॥

तरूटः । पुं । उत्पलकन्दे ॥

तर्कः । पुं । काङ्क्षायाम्‌ ॥ वितर्के । व्यभिचारशङ्कानिवर्त्तके ॥ सचपञ्चविधः । यथा । आत्माश्रयः १ । अन्योन्याश्रयः २ । चक्रकः ३ । अनवस्था ४ । प्रमाणबाधितार्थकः ५ इति ॥ ऊहे । अविज्ञाततत्त्वेर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थं ऊहे ॥ अनुमाने ॥ व्याप्यारोपेण व्यापकारोपे । व्याप्यारोपात्‌ व्यापकप्रसञ्जने । यथा । वह्निर्नस्यात्‌ तर्हि धूमोपि न स्यात्‌ ॥ मीमांसादितर्कशास्त्रे । आगमाविरोधिन्यायेन आगमार्थपरीक्षणे । विचारे ॥ बुद्धिसाध्ये । स्वबुद्ध्यध्याहृत्य भाषे ॥ हेतुदृष्टान्तात्मनि ॥ तर्कणम्‌ ।

तर्क्कभाषार्थश्चुरादौ पटपुटेत्यादिगणके पठितः । भावे घञ् ॥ तर्क्कोऽर्थवाद इति कर्क्कोपाध्यायः । यथा । अक्ताः शर्करा उपदधातीति विधिः श्रूयते । तत्राञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते । अतस्तर्क्कोऽर्थवादः ॥ तर्क्कोमीमांसेति कल्पतरुकारः ॥ * ॥ अचिन्त्याः खलु ये भावा न तांस्तर्क्केण योजयेत् । नाऽप्रतिष्ठिततर्क्केण गम्भीरार्थस्य निश्चयः ॥

तर्क्ककः । पुं । याचके ॥ तर्क्ककारके ॥

तर्क्कयन् । त्रि । उत्प्रेक्षमाणे ॥

तर्क्कविद्या । स्त्री । आन्वीक्षिक्याम् ॥ तर्क्कस्य न्यायस्य विद्या ॥ तथाहि । चतुर्विधेभ्यः पृथिव्यादिपरमाणुभ्यो विश्वमुत्पद्यते त एवोपादानभूता नान्यत् । निमित्तकारणमीशः कर्त्तृत्वात् कुलालवदिति तर्क्कविद्यायाः प्रमेयम् ॥ * ॥ अहो दुर्मतयः सर्वाः पुरुषस्य निरूपणे । तर्क्कविद्या न जानन्ति अमेयं पुरुषोत्तमम् ॥ अमेयम् अभिन्ननिमित्तोपादानत्वात् । यत एतदपि न जानन्ति सर्वं प्रमेयजातं घटादिवत् कार्यमिति परमाणूपादानकारणमप्यपेक्षणीयमेवेति । परमाणूनां प्रमेयत्वहेतुना कार्यत्वसिद्धौ तदुपादानमपेक्षणीयम् । एवं तत्तत्त्वापीत्यनवस्था स्यात् । अतोऽप्रमेयः परमात्मैवोपादानं नान्यदन्यकल्पितम् अनपेक्षणात् । तथाहि । अम्भः शीतकरान्तरीक्षनगरस्वप्नेन्द्रजालादिवत् कार्यं मेयमसत्यमेतद् दुदयध्वंसादियुक्तं जगत् । शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरौ यस्मिन् प्रभवत्ययास्तमयते तत्त्वावबोधोदयादिति प्रबोधचन्द्रोदयः ॥

तर्क्कारी । स्त्री । जयाद्रुमे । अरणी इति भाषा । आणी इति कश्चित् । तर्कमृच्छति । ऋ गतौ । कर्मण्यण् । ङीप् । गौरादित्वात् ङीष् वा ॥

तर्क्किणः । पुं । } दद्रुमे ॥ इति रत्न-
तर्क्किलः । पुं । } माला ॥

तर्क्की । त्रि । तर्क्कविशिष्टे । मीमांसके ॥ यथा । त्रैविद्यो हेतुकस्तर्क्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरेति मनुः ॥

तर्क्कुः । पुं । कपालनालिकायाम् । तर्कुल्याम् ॥ कृत्यते नेन । कृती वेष्टने । कृतेराद्यन्तविपर्ययश्चेत्युः । ककारतकारयोर्विनिमयः । तकुआ इति भाषा ॥

तर्कुटम्। न। कर्त्तने। कातना इति भाषा॥ इतित्रिकाण्डशेषः॥
तर्कुटी। स्त्री। तर्कुः॥ इतिहारावली॥
तर्कुपिण्डः। पुं। तर्कुस्थितमृत्पिण्डे। वर्त्तुलायाम्॥ इतिहारावली॥
तर्कुपीठी। स्त्री। तर्कुपिण्डे॥ इति हारावली॥
तर्कुलासकः। पुं। तर्कुभ्रमणयन्त्रे। जल्लोले। चरखा इतिभाषा॥ इ०हा०॥
तर्कुशाणः। पुं। तर्कुघर्षणपाषाणे। जामरे। सामके॥ इतित्रिकाण्डशेषः॥
तर्क्षुः। पुं। तरक्षुके॥ इतिशब्द०॥
तर्क्ष्यः। पुं। यवक्षारे॥
तर्ज्जनम्। न। भर्त्सने॥ भयजनने॥ तर्ज्ज०। ल्युट्॥
तर्ज्जनी। स्त्री। प्रदेशिन्याम्। अङ्गुष्ठनिकटाङ्गुल्यौ॥ तर्ज्ज्यते ऽनया। तर्ज्जभर्त्सने। करणे ल्युट्॥
तर्ज्जिकः। पुं। देशविशेषे। तायिके॥
तर्ज्जितः। त्रि। भर्त्सिते॥ तर्ज्ज्यतेस्म। तर्ज्जभर्त्सने। क्तः॥
तर्णः। पुं। वत्से॥ तृणोति तर्णोति वा। तृणु अदने। अच्॥
तर्णकः। पुं। गोपुत्रे। वत्से। बच्छा इतिभाषा॥ सद्योजातस्तु तर्णकः॥ तृणोति तर्णोति वा। तृणु०। वुल्॥

तर्णिः। पुं। सूर्ये॥ प्लवे॥ इतिशब्दा०॥
तर्त्तरीकम्। न। वहित्रे। पोते। जहाज इतियवनभाषा॥ त्रि। पारगे॥
तर्द्दः। त्रि। हिंसके॥ तर्द्दहिंसायाम्। अच्॥
तर्द्दूः। पुं। दारुनिर्म्मितदर्व्याम्। दारुहस्तके। डोइ इतिभाषा॥ अन्नतरणोपकरणे॥ तरति०। तॄ०। बोदुद्दूचेत्यू दूडागमश्च॥ तर्द्दति। तृणत्ति वा। तर्द्द०। उतृदिर्हिंसानादरयोर्वा। बाहुलकात् ऊः॥
तर्पणम्। न। तृप्तौ॥ प्रीणने॥ यज्ञकाष्ठे॥ महायज्ञविशेषे। पितृयज्ञे। पितृद्देश्याम्बुदाने। पितॄणां कव्यवाडादीनाञ्च विधिना जलाञ्जदाने न तृप्तिसम्पादने॥ तद्विविधम्। प्रधानमङ्गञ्च॥ तत्राद्यं यथा। तर्पणञ्च शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्॥ विधवामधिकृत्य। तर्पणं प्रत्यहं कार्यं भर्त्तुः कुशतिलोदकैः। तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकमिति॥ *॥ द्वितीयं यथा। नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते। तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्॥ तर्पणाकरणे दोषो यथा। नास्ति-

ब्रभावा यश्चापि न तर्पयति मैथु नः । पिबन्ति लेहनैःस्वावं पितरो वै जलार्थिन इति ॥ जीवत्पितृकस्य तन्निषेधो यथा । इर्श्वस्नानं गया श्राद्धं तिलैस्तर्पण मेवच । न कुर्य्यात् पितृको भूप कुर्यात् कृत्वाघमामुयादिति ॥ तृपप्रीणने । भावेल्युट् ॥

तर्प्पणी । स्त्री । गुरुस्कन्धद्रुमे ॥

तर्प्पणेच्छुः । पुं । भीष्मे ॥ त्रि । तर्पणाकाङ्क्षे ॥

तर्प्पिणी । स्त्री । चारट्याम् । पद्मचारिण्यामोषधौ ॥

तर्म्म । न । यूपाग्रे ॥ तरति । तृ० । सर्वधातुभ्योमनिन् ॥

तर्द्दटः । पुं । वत्सरे ॥ चक्रमर्द्दे ॥

तर्षः । पुं । लिप्सायाम् ॥ उदन्यायाम् ॥ भेलके ॥ तर्षणम् । ञितृषपिपासायाम् । घञ् ॥ तरन्त्यनेन । तृ० । वृतृवदीतिसोदा ॥

तर्षणम् । न । तृषि । पिपासायाम् ॥ ञितृष० । ल्युट् ॥

तर्षितः । त्रि । सतृष्णे । तृषिते । तिसाया इति भाषा ॥

तर्हि । अ । विशेषे ॥ तदार्थे ॥ तस्मिन् काले । अनद्यतनेर्हिलन्यतरस्याम् ॥

तलः । पुं । तालमहीरुहे ॥ चपेटे ॥ त्सरौ ॥ सव्येन पाणिना तन्त्रीघाते ॥ आधारे ॥ स्वभावे ॥ पुं । न । अधोभागे । अमरः ॥ तलेइतिनीचे इतिच भाषा ॥ स्वरूपे ॥ यथा । महीतलम् ॥ न । कानने । वने ॥ कार्यबीजे ॥ आलवाले । गर्ते ॥ पादतलस्य मध्ये ॥ स्त्री । न । । ज्याघातवारणे ॥ तलति । तलप्रतिष्ठाम् । पचाद्यच् ॥

तलकम् । न । पुष्करिण्याम् । तलाव इतिहिंदू भाषा ॥ इतिहारावली ॥

तलप्रहारः । पुं । चपेटे । चर्वणि । तलाघाते ॥

तलसारकम् । न । अश्वस्य वक्षस्थलबन्धनरज्जौ । वक्रपट्टे । तङ्गइतिभाषा ॥

तलहृदयम् । न । पादतलस्यमध्ये ॥

तला । स्त्री । गोधायाम् । ज्याघातवारणे ॥

तलाची । स्त्री । नलनिर्मितेकटे ॥

तलातलम् । न । अतलादिषु पञ्चमेऽधोभुवने ॥

तलिका । स्त्री । वक्रपट्टे । तलसारके ॥

तलित् । स्त्री । विद्युति । तडिति ॥ डलयोरैक्यस्मरणात् वर्णविपर्ययः ॥

तलितः त्रि । आज्यादिभृष्टमांसादौ ॥

तलितमांसम् । न । एकमांसप्रभेदे । भृष्टमांसे ॥ यथा । शूद्रमांसविधाने न मांसं सम्यक् प्रसाधितम् । पुनस्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बु-

 

धेः ॥ तलितं बलमेधाग्निमांसौजः शुक्रवृद्धिकृत् । तर्पणं लघु सुस्निग्धं रोचनं दृढताकरम् ॥

तलिनः । त्रि । विरले ॥ स्तोके ॥ स्वच्छे ॥ दुर्बले ॥ न । शय्यायाम् ॥ तलति तल्यते वा । तल० । तलिपुलिभ्यामिनन् ॥

तलिमम् । न । कुट्टिमे ॥ तल्पे ॥ चन्द्रहासे ॥ विताने ॥

तलुनः । पुं । पवने ॥ यूनि ॥ तरति । तॄ० । तॄरश्चलोवे त्युनन् ॥

तलुनी । स्त्री । युवत्याम् । तरुण्याम् ॥ वयस्यचरम इति नञ्स्त्रियति वा ङीप् । गौ० ङीप् वा ॥

तलेक्षणः । पुं । शूकरे ॥ इतिशब्दा० ॥

तलोदरी । स्त्री । भार्यायाम् ॥

तलोदा । स्त्री । नद्याम् ॥

तल्कम् । न । वने ॥ इतित्रिकाण्डशेषः ॥

तल्पम् । न । अट्टे ॥ कलत्रे । दारेषु ॥ शय्यायाम् ॥ तल्यतेऽस्मिन् । तल० । खष्पशिल्पशष्पेतिसाधु ॥

तल्पकीटः । पुं । मत्कुणे ॥

तल्पनम् । न । करिपृष्ठे ॥ पृष्ठवंशस्य मांसे ॥

तल्लः । पुं । जलाधारविशेषे । तलाव इति हिन्दूभाषा ॥ न । बिले । आल वाले ॥ त्रि । तस्मिन् लीने ॥

तल्लजः । पुं । मतल्लिकायाम् । प्रशस्ते ॥ लजति । लजकान्तौ । पचाद्यच् । तत्तल्लजः । अयमजहल्लिङ्गः समासे उत्तरपदे भवति । यथा । प्रशस्ताकुमारी कुमारीतल्लजः । तल्लजस्य रूढिशब्दत्वात् प्रशंसावचनैश्चेतिसमासः ॥

तल्लिका । स्त्री । कुञ्चिकायाम् । कूर्चिकायाम् । कूंची ताली इत्यादि भाषा ॥

तल्ली । स्त्री । तरुण्याम् ॥

तवक्षीरम् । न । पयःक्षीरे । यवजे । तीखुर इतिभाषा ॥ तवक्षीरन्तु मधुरं शिशिरं दाहपित्तहृत् । क्षयकासकफश्वासास्रदोषं हन्तिच सेवनात् ॥

तवक्षीरी । स्त्री । गन्धपत्रायाम् ॥

तवराजः । पुं । यवासशर्करायाम् ॥

तवराजोद्भवखण्डः । पुं । यवासशर्करा भवखण्डे । सिद्धमोदके ॥

तवर्गः । पुं । तादिपञ्चवर्णेषु ॥

तवर्गीयः । पुं । तवर्गभवेवर्णे ॥ वर्गान्ताच्चेति ठक् ॥

तविषः । पुं । स्वर्गे ॥ महोदधौ ॥ तवेतिसौत्रोधातुः । तवेर्णिद्वेतिटिषच् ॥ सुवर्णे ॥ शोभनाकृतौ ॥ व्यवसाये ॥ भेले ॥

तविषी । स्त्री । शक्रकन्यायाम् । धरि ण्याम् ॥ नद्याम् ॥ वैदिकनिघण्टौ तु बलेपि ॥ टित्त्वान् ङीप् ॥

तष्टः । त्रि । तनूकृते ॥ तक्ष्यतेस्म । तक्षू० । क्तः । स्तोरितिकले पेट्‌त्वम् ॥

तष्टिः । स्त्री । काष्ठतक्षणे ॥

तसरः । पुं । वस्त्रजात्यन्तरे । टसर इति भाषा ॥ सूत्रवेष्टने । तासनी इति गौडभाषाप्रसिद्धे तन्त्रवायो पकरणे ॥ तनोति । तनु० । तनूपृषि भ्यांक्सरन् । अनुदात्तोपदेशेत्यादि नानुनासिकलोपः ॥

तस्करः । पुं । चोरे ॥ द्विविधांस्तस्क रान् विद्यात् परद्रव्यापहारकान् । प्र काशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ प्रकाशवञ्चकास्तेषां नानाप ण्योपजीविनः । प्रच्छन्नवञ्चकास्त्वेते येस्तेनाटविकादयः ॥ तत्करोति । दि वाविभेत्यत्र किंयत्तद्बहुष्विति ष्टः ॥ तद्बृहतोः करपत्योरितिसुट्तलो पौ ॥ दमनवृक्षे ॥ पृक्काशाके ॥

तस्करस्नायुः । पुं । काकनासालतायाम् ॥

तस्करी । स्त्री । कोपनायां नार्य्याम् ॥

तस्थिवान् । त्रि । स्थितिमति । स्थिते ॥ ष्ठा० । छन्दसिलिट् । द्विर्वादिका र्यम् । लिटः कानजादेशः ॥ क्वसु- श्चेतिक्वसुप्रत्ययो वा ॥

तस्थूः । पुं । स्थावरे ॥

ताच्छील्यम् । न । नियततत्स्वभावता याम् ॥ भावेष्यञ् ॥

ताटङ्कः । पुं । तालपत्रे । कर्णिकायाम् । ताडङ्के ॥ गुर्वक्षरेऽ ॥

ताटस्थ्यम् । न । उदासीनत्वे ॥ निक टस्थत्वे ॥

ताडः । पुं । ताडने ॥ घोषे । शब्दे ॥ मुष्टिमेयतृणादिषु ॥ अद्रौ ॥

ताडका । स्त्री । राक्षसीविशेषे ॥

ताडकान्तकः । पुं । श्रीरामे ॥

ताडकाफलम् । न । बृहदेलायाम् ॥

ताडकेयः । पुं । मारीचराक्षसे ॥ ता डकाया अपत्यम् । स्त्रीभ्योढक् ॥

ताडङ्कः । पुं । कर्णभूषायाम् । कर्णदर्प णे । कानतडक्का इतिभाषा ॥

ताडनम् । न । आघाते ॥ यथा । शता पराधे वनितां पुष्पेणापि न ताडयेत् । दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेदितिमान्त्रिकाः ॥ लालने बहवो दोषास्ताडने बहवो गुणाः । तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्नतु लालयेत् ॥

ताडनी । स्त्री । अश्वताडनयष्ट्याम् । कशायाम् ॥ ताड्यतेऽनया । तडआ घाते । ण्यन्तः । ल्युट् । ङीप् ॥

ताण्डपथम् । न । ताडङ्के ॥

ताडागम् । न । तडागोदके ॥ यथा । प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशय स्तडागः स्यात्ताडागंतज्जलं स्मृतम् ॥ ताडागमुदकं स्वादु कषायं कटुपाकि च । वातलं बहुविशमूत्र मस्तृक्पित्तकफापहम् ॥ तडागस्येदम् । अण् ॥

ताडिः । स्त्री । तालीद्रुमे । ताडियात इतिगौड भाषाप्रसिद्धे ॥

ताडी । स्त्री । पत्रद्रुमे । तालियात-इति गौडभाषा ॥ आभरण विशेष इतिदुर्गसिंहः ॥

ताड्यमानः । त्रि । पटहादिवाद्ये ॥ त्रि । तत्कालताडिते । हन्यमाने । ताडनयुक्ते ॥

ताण्डः । पुं । मुन्यन्तरे ॥

ताण्डवः । पुं । न । लास्ये । नृत्ये ॥ पुं नृत्यं ताण्डवंप्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥ तण्डुना प्रोक्तम् । तेनप्रोक्तमित्यण् ॥ तृणान्तरे ॥ उद्धतनृत्ये ॥ चित्रघुनि (।।।) ॥

ताण्डवतालिकः । पुं । नन्दिनि । शिवद्वारिणि ॥

ताण्डवप्रियः । पुं । शिवे ॥ त्रि । नृत्यप्रिये ॥ ताण्डवं प्रियं यस्य ॥

ताण्डवितम् । न । नर्त्तिते ॥

ताण्डि । न । नृत्यशास्त्रे ॥

ताण्डी । पुं । साम्नः शाखाविशेषा ऽध्यायिनि ॥

तातः । पुं । जनके । पितरि ॥ अनुकम्प्ये ॥ त्रि । पूज्ये ॥ चतुष्कले (ऽ॥) आदिगुरौ ॥ तनोति । तनु० । हुतमिभ्यांदीर्घश्चेति क्तः । अनुदात्तेति नलोपः ॥

तातगुः । पुं । क्षुद्रताते । काका चाचा इतिभाषा ॥ त्रि । जनकस्थिते ॥

तातजनयित्र्यौ । स्त्री । मातापित्रोः ॥ द्विवचनान्तोयम् ॥

ताततुल्यः । त्रि । पितृसमे । मनोजवसे ॥ तातेन तुल्यः ॥

तातनः । पुं । खञ्जने ॥

तातलः । पुं । व्याधि । रोगे ॥ पाके ॥ लोहकूटे ॥ मनोजवे । ताततुल्ये ॥ त्रि । तत्समाप्ते ॥

तातिः । पुं । पुत्रे ॥ इतिजटाधरः ॥

तात्कालिकः । पुं । तत्कालभवे ॥

तात्कालिकविकारः । पुं । विलासाख्येभावे ॥ तात्कालिकविकारः स्यादिलासो ऽङ्गक्रियादिषु ॥

तात्पर्य्यम् । न । तत्परतायाम् ॥ वक्तुरिच्छायाम् ॥ अभिप्राये ॥ तत्परस्य भावः । ष्यञ् ॥

तादर्थ्यम् । न । तदर्थत्वे । तस्मैइदम्

तदर्थम् । तस्य भावः । ब्राह्मणादि-
त्वात् ष्यञ् ॥

तादात्म्यम् । न । तत्स्वरूपे ॥ अभेद
सम्बन्धे ॥ तस्य आत्मा तदात्मा । त
दात्मनो भावः । ब्रा० ष्यञ् ॥

तादृक्षः । त्रि । तादृशि ॥ सइवदृश्यते ।
तमिव पश्यति वा । दृशिर् प्रेक्षणे
। त्यदादिष्विव्यस्य क्सोपिवाच्य इति
क्सः । आसर्वनाम्नः इत्यत्र दृक्षेचे
तिवार्त्तिकेनात्वम्

तादृक्-ग् । त्रि । तथाविधे । उपमान
गोचरे । तादृक्षे ॥ तमिवेमंपश्यन्ति
सइवायं पश्यति दृश्यतेवा । त्यदादि
षु दृशइतिक्विन् । आसर्वनाम्नइत्या
त्वम् । ब्रश्चेतिषः । जश्त्वेनडः । कु
त्वेनगः । चर्त्वपक्षेकः ॥

तादृशः । पुं । तादृशि ॥ सइवदृश्यते
तमिवपश्यतिवा । त्यदादिर्ष्विति
कञ् ॥

तानः । पुं । गानाङ्गविशेषे ॥ यथा । वि
स्तार्यन्ते प्रयोगा यैर्मूर्च्छनाशेषसं
श्रयाः । तानास्तेप्यूनपञ्चाशत् सप्त
स्वरसमुद्भवाः ॥ तेभ्य एव भवन्त्यन्ये
कूटतानाः पृथक् पृथक् । तस्युःपञ्च
सहस्राणि त्रयस्त्रिंशच्छतानिच ॥ न ।
विस्तारे ॥ ज्ञानविशेषे ॥

तानवम् । न । तनुत्वे ॥ गात्रेतनुता
याम् ॥ यथा । तानवं तनुतागात्रे
दौर्बल्यभ्रमणादिकृत् ॥ तनोर्भावः
। इगन्ताच्चेत्यण् ॥

तानूरः । पुं । आवर्त्ते । पयसाम्भ्रमे ॥

तान्तः । त्रि । ग्लाने ॥ क्लान्ते । श्रान्ते ॥

तान्तवः । त्रि । प्रावरणान्तरे ॥ तन्तूनां
विकारः । अोरञ् ॥

तान्त्रिकः । त्रि । ज्ञातसिद्धान्ते । शास्त्र
तत्त्वज्ञे । ब्रह्मवादिनि कौलिके ॥ य
थानदेषु तन्त्रज्ञाः सरितां जाह्नवी
यथा । यथाऽहं त्रिदिवेशानामागमा
नामिदंतथा ॥ तन्त्रं सिद्धान्तमधीते
वेदवा । उक्थादित्वाट्ठक् ॥ त-
न्त्रसम्बन्धिनि ॥

ताम्दूरम् । न । मांसव्यञ्जनप्रभेदे ॥
यथा । अङ्गारपूर्णगर्त्ते यद्दत्वा म
वलम्बितम् । संस्कृतं पिहितं मांसं
पक्वं ताम्दूर मुच्यते ॥ सुस्वादुताम्दूर
म् । पचेत्कन्दरीमध्ये त्वभिसम्भा
रसम्भृतम् । चतुर्दिक्कुण्डलाकारे
पार्श्वप्रज्वलितानले । विपक्वं सुरभि
स्वादु ताम्दूरमिति कीर्त्तितम् ॥ क
न्यच्च । कोद्रिकायां सुसम्भार मल-
म्ब मवलम्बितम् । मांसं पिधाय वा
ह्याग्निज्वालया स्वेदितं वरम् ॥ ता-
म्दूरं रुचिदं बल्यं मृदु पथ्यतमं स्मृ
तम् । सद्योहतं नवं स्थूल·मन्यथा-

द्दोषशारकमिति ॥

तापः । पुं । सन्तापे ॥ कृच्छ्रे ॥ तपनम् । तपसन्तापे । घञ् ॥

तापकः । पुं । ज्वरे ॥ त्रि । तापकृति ॥ तापयति । तप० । ण्वुल् ॥

तापस्यः । पुं । अर्जुने ॥ इति पु० ॥

तापत्रयम् । न । आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रये ॥ आध्यात्मिकादिभैदेय त्वात्त्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यःप्राप्नोत्यात्यन्तिकं फलम् ॥ तापानां त्रयम् ॥

तापनः । पुं । सूर्ये ॥ कामवाणे ॥ असुरविशेषे ॥ सूर्यकान्तमणौ । त्रि । तापके । तापयितरि ॥ तापयति । तप० । कर्त्तरि ल्युः ॥

तापनीयः । पुं । निष्कपरिमिते सुवर्णे ॥ तपनीयस्य विकारःपरिमाणः । जातरूपेभ्यःपरिमाणे इत्यण् ॥

तापसः । पुं । दमनकवृक्षे ॥ वकपक्षिणि ॥ न । तमालपत्रे । तेजपात इतिभाषा ॥ त्रि । तपस्विनि ॥ वानप्रस्थे ॥ तपोऽस्यास्ति । अणुचेत्यण् ॥ यद्वा । तपःशीलमस्य । छत्रादिभ्योणः ॥

तापसतरुः । पुं । }
तापसद्रुमः । पुं । } इङ्गुदीवृक्षे । इंगुआ इतिभाषा ॥ तापसोपयुक्तस्तरुः ॥

तापसद्रुमसन्निभा । स्त्री । गर्भदात्री

क्षुपे ॥

तापसप्रियः । पुं । पियालद्रुमे ॥

तापसप्रिया । स्त्री । द्राक्षायाम् ॥

तापसेष्टः । पुं । पियाले । चारे ॥

तापहरी । स्त्री । ताहरी इति प्रसिद्धे व्यञ्जनपदार्थे ॥ यथा । घृते हरिद्रासंयुक्ते माषाणां भर्जयेद्वटीः । तण्डुलांश्चाऽपिनिर्द्दोताम् सहैवपरिभर्जयेत् ॥ सिद्धियोग्यं जलं तत्रप्रक्षिप्य कुशलः पचेत् । लवणार्द्रकहिङ्गूनि मात्रया तत्रनिःक्षिपेत् ॥ एषासिद्धिं समायाता प्रोक्ता तापहरीबुधैः ॥ भवेत्तापहरीबल्या वृष्या श्लेष्मापमाचरेत् । इंडरीसमैवीवध्यागुर्वी तच गुणाःस्मृताः ॥

तापिच्छः । पुं । तमालवृक्षे ॥ तापिनं छादयति । छद० । कर्मण्यण् । पृषोदरादिः ॥ न । तमालपुष्पे ॥ तापिच्छस्यपुष्पम् । फलेलुगितिलद्धितस्यलुक् । द्विहीनं प्रसवे सर्वमिति क्लीवता ॥

तापिञ्जम् । न । धातुमाक्षिके ॥ इति राजनिर्घण्टः ॥

तापितः । त्रि । पीडिते ॥ जातसन्तापे ॥ । तपगया इति भाषा ॥ तापःसञ्जातोस्य । ता० इतच् ॥

तापी । पुं । बुद्धे ॥ त्रि । तापवति ॥

तापोस्या ऽस्ति । अतइनिठनाव-तीनिः ॥

तापी । स्त्री । विन्ध्याद्रिप्रसिद्धायां पश्चिमवाहिन्यां सरिति ॥ यमुनायाम् ॥

तापीजम् । न । स्वर्णमाक्षिके ॥

ताप्यः । पुं । न । धातुमाक्षिके ॥

ताप्यकम् । न । माक्षिके ॥

तामः । पुं । भीषणे ॥ दोषे ॥

तामरम् । न । जले ॥ घृते ॥इ० रुद्रः॥

तामरसम् । न । पद्मे ॥ ताम्रे ॥ काञ्चने ॥ तामरे जले सस्ति । घसस्वमे । अन्येभ्योपीतिडः ॥ यद्वा । त-म्यते । तम० । घञ् । नोदात्तोपदेशस्येतिनिषेधस्यानित्यत्वान्न वृद्धिनिषेधः । रस्यते । रसआस्वादे । चु० । अदन्तः । एरच् । तामञ्चतद्रसञ्च ॥ जगतीछन्दःप्रभेदे । यथा । इह वद तामरसं ननजाय: ॥ स्फुटसुषमामकरन्दमनोज्ञं व्रजललना नयनालिनिपीतम् । तवमुखतामरसं मुरशत्रो हृदयतडागविकाशिममास्तु ॥

तामलकी । स्त्री । भूम्यामलक्याम् ॥ तामस्या सा ऽामलकीच । पृषोदरादिः ॥

तामलिप्तम् । न । ⎫ तमोलुकइति
तामलिप्ती । स्त्री । ⎭ प्रसिद्धे दामलिप्ते देशे । विष्णुगृहे ॥

तामसः । पुं । भुजगे ॥ खले ॥ उलूके ॥ भूताद्यहङ्कारे ॥ अधर्माज्ञानावैराग्यानैश्वर्याभिधानेषु चतुर्षु बुद्धिधर्मेषु ॥ चतुर्थमनौ ॥ न । कृष्णधने ॥ यथा । पार्श्वकद्यूतचौर्यार्त्तिप्रतिरूपकसाहसैः । व्याजेनोपार्जितं यत्तु तत् कृष्णं समुदाहृतम् ॥ पार्श्वकः अपात्रःसन्पात्रतया योऽर्जयति । आर्त्यापरपीडया । प्रतिरूपकेण कृत्रिमरत्नादिना । साहसेन समुद्रयानगिर्यारोहणादिना । व्याजेनब्राह्मणवेशेनशूद्रादिना । कृष्णं तामसम् । त्रि । तमसायुक्ते ॥ तमोवृत्तौ ॥

तामसकीलकः । पुं । राहुसुतेषु केतुष ॥ यथा । तामसकीलकसञ्ज्ञा राहुसुताः केतव स्त्रयस्त्रिंशत् । वर्णस्थानाकारैस्तान् दृष्ट्वार्के फलं ब्रूयात् ॥ तेचार्कमण्डलगताः पापफला श्चन्द्रमण्डले सौम्याः । ध्वाङ्क्षकबन्धप्रहरणरूपाः पापाः शशाङ्केऽपि ॥ तेषामुदये रूपाण्यम्भः कलुषं रजोहतं व्योम । नमतरुशिखरामर्द्दः सशर्करो वातिमारुतश्चण्डः ॥ ऋतुविपरीतास्तरवोदीप्ता मृगपक्षिणोदिशांदाहाः । निर्घातमहीकम्पादयो भवन्त्यत्रचोत्पाताः ॥ अम्भःकलुषादीनामुक्तानां नि

फलत्वमाह । न पृथक् फलानि-तेषां शिखिकीलकराहुदर्शनानि यदि । तदुदयकारण मेषां केत्वादीनां फलं क्रमाद् ब्रूयात् ॥*॥ तामसकीलानां दर्शनवशात् फलमाह । यस्मिन् यस्मिन् देशे दर्शन मायान्ति सूर्यविम्बस्थाः । तस्मिंस्तस्मिन् व्यसनं महीपतीनां परिज्ञेयम् ॥ ॥ क्षुत्प्रम्लानशरीरा मुनयोप्युत्सृष्टधर्मसच्चरिताः । निर्मांसबालहस्ताः कृच्छ्रेणायान्ति परदेशम् ॥ तस्करविलुप्तवित्ताः प्रदीर्घनिःश्वासमुकुलित।क्षिपुटाः । सन्तः सन्नशरीराः शोकोद्भववाष्पसद्धदृशः ॥ क्षामा जुगुप्समानाः स्वनृपतिपरचक्रपीडिताःमनुजाः।स्वनृपतिचरितं कर्मच पुराकृतं प्रामुवन्त्यन्ये ॥ गर्भेष्वपिनिष्पन्ना वारिमुचो न प्रभूतवारिमुचः। सरितो यान्ति तनुत्वं क्वचित् क्वचिज्जायते सस्यम्॥*॥ तेषामाकृतिवशेनफलमाह ।दण्डेनरेन्द्रमृत्युर्व्याधिभयं स्यात्कवन्धसंस्थाने।ध्वाङ्क्षेचतस्करभयं दुर्भिक्षं कीलकेऽर्कस्थे॥ राजोपकरणरूपैश्छत्रध्वजचामरादिभिर्विद्धः। राजान्यत्वकृदर्कः स्फुलिङ्गधूमादिभिर्जनहा॥ एको दुर्भिक्षकरो द्वाद्याःस्युर्नरपतेर्वि-

माशाय। सितरक्तपीतकृष्णैस्तैर्विद्धेऽर्कोनुवर्णघ्नः॥*॥ विशेषफलान्याह। दृश्यन्तेच यत स्तेरविविम्बस्योत्थितामसोत्पाताः। आगच्छतिलोकानां तेनैवभयं प्रदेशेनेति वाराहीसंहिता॥

तामसयज्ञः । पुं । यज्ञविशेषे ॥ यथा । विधिहीन मसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ तामसानां यज्ञः ॥

तामसाहारः । पुं । तामसप्रकृतीनामाहारे ॥ यातयामं गतरसं पूतिपर्युषितञ्चयत् । उच्छिष्ट मपिचामेध्यं भोजनं तामसप्रियम् ॥

तामसिकः । त्रि । तामसे । तमोगुणकार्ये ॥

तामसी । स्त्री । निशायाम् ॥ दुर्गायाम् ॥ तमोन्वितायाम् ॥ जटामांस्याम् ॥

तामिस्त्रः । पुं । विपर्ययविशेषे ॥ सचाष्टादशधा । यथा । शब्दादयोदशविषया रञ्जनीयाः स्वरूपतः । ऐश्वर्यञ्चाणिमादिकं नस्वरूपतोरञ्जनीयम् । किन्तुरञ्जनीयशब्दाद्युपायः । ते चशब्दादय उपस्थिताः परेणोपभुज्यमाना स्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति श-

ब्धादिभिर्दशभिः सहाविमाऽष्टक-महादशेति। तद्विषयोऽदेषत्वामिनो ऽष्टादशविषयत्वादष्टादशमेति साङ्ख्याः॥ भोमेच्छाप्रतिघाते सति क्रोधे॥ राक्षसे। तमिस्त्रायारि णि॥ न। अन्धकारमये नरके॥ परवित्तापत्यकलत्रापहर्त्ता यमदूतैर्यत्र निपात्यते॥ तमिस्त्र मस्मिन् अस्त्या ऽस्मिवा। ज्योत्स्ना तमिस्त्र-स्यच॥

ताम्बूलम्। न। क्रमुके। गुवाके॥ नागवल्लीदले। पानइति प्रसिद्ध॥ ताम्यति। तम्। पिच्छादित्वात् ऊलच् धातोर्बुक् दीर्घत्वञ्च॥ ताम्बूलं कटु तिक्त मुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धनिर्नाशनम्। वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेपि ते दुर्लभाः॥ अपिचाहुः। ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम्। वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु॥ बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्॥ *॥ अनिधाय मुखे पर्णं पूगं स्वादयते नरः। मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरते हरिम॥ *॥ पर्णमूले वसेद्व्याधिः पर्णाग्रे पापसञ्चयः। चूर्णपर्णं हरेदायुः शिरावुद्धिविनाशिनी॥ मायुरग्र विपंमूले मध्य ऽलक्ष्मी र्व्यवस्थिता। तस्मादग्रञ्च मूलञ्च मध्यं पर्णस्य वर्जयेत्॥ चूर्णाधिकं हरति गन्धमथाधिपूगं रागं तथाधिकदलञ्च सुगन्धिकारि। ताम्बूलमुत्तममिदं रसमाशभिन्नपर्णं निशास्वधिकमत्र दिवस पर्णमह्नि॥ ताम्बूलं न हितं प्रोक्तं शरीरे रूक्षदुर्बले। ज्वरास्यशोषपित्तास्रमदमूर्च्छादिरोगिषु॥ ताम्बूलात्युपयोगात् स्याच्छोषः पित्तानिलास्रता। देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः॥ *॥ विना पर्णं मुखे दत्त्वा गुवाकं भक्षयेद्यदि। तावद्भवति चाण्डालो यावद्गङ्गां नगच्छति॥ *॥ ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। तपस्विनाञ्च विप्रेन्द्र गोमांससदृशं ध्रुवम्॥ इति ब्रह्मवैवर्त्तपुराणम्॥

ताम्बूलकरङ्कः। पुं। पानवट्टा इति प्रसिद्धे ताम्बूलपात्रे। स्वग्याम्॥

ताम्बूलदः। त्रि। वागुलिके। ताम्बूलदातरि॥ इति त्रिकाण्डशेषः॥ ताम्बूलं ददाति। डुदाञ्। आतइतिकः॥

ताम्बूलपत्रः। पुं। पिण्डालौ॥

ताम्बूलरागः। पुं। मसूरे॥ ताम्बूल

रञ्जे ॥

ताम्बूलवल्लिका । स्त्री । ताम्बूल्याम् ॥

ताम्बूलवल्ली । स्त्री । ताम्बूल्याम् ॥ ताम्यति । तमु० । क्विप् । अनुनासिकस्येतिदीर्घः । बेलति । वुलमज्जने । चुरादीनांणिज्वा । इगुपधेतिकः । ताम् चासौवुलश्च । पृषोदरादिः । ताम्बूलाख्यावल्ली । शाकपार्थिवादिः ॥

ताम्बूलिकः । पुं । ताम्बूलिनि ॥

ताम्बूली । त्रि । राज्ञां ताम्बूलाधिकृते । तंबोली इति प्रसिद्धे जात्यन्तरे ॥

ताम्बूली । स्त्री । ताम्बूलवल्ल्याम् ॥ ताम्बूलात् गौरादित्वान्ङीष् ॥

ताम्रम् । न । तांबा इतिप्रसिद्धे तैजसधातुविशेषे । शुल्वे । म्लेच्छमुखे । नैपालिके ॥ अस्योत्पत्त्यादयो यथा । शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले । तस्मात् ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥ जपाकुसुमसङ्काशं स्निग्धं मृदुघनचमम् । लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥ कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापिघनासहम् । लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम् ॥ ताम्रं कषायं मधुरं सतिक्तमम्लञ्च पाके कटु

सारकञ्च । पित्तापहं श्लेष्महरं च शीतं तद्रोपणं स्याल्लघु लेखनञ्च ॥ पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनस मम्लपित्तम् । शोथं कृमिं शूल मपाकरोति प्राहुः परे बृंहण मल्पमेतत् ॥ एकोदोषो विष ताम्रेष्वसम्यक्मारिते ऽष्टते । दाहःस्वेदोरुचिर्मूर्च्छा क्लेदोरेकोवमिर्भ्रमः ॥ तस्यशोधनविधिर्यथा । पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे चकुलत्थानां कषायेच त्रिधात्रिधा । एवं ताम्रस्य पत्राणां विशुद्धिः सम्प्रजायते ॥ तस्य मारणविधि र्यथा । सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः । वासरत्रयमम्लेन ततःखल्ले विनिः क्षिपेत् ॥ पादांशं सूतकं दत्त्वा याममम्लेनमर्दयेत् । तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेनच ॥ गन्धकेनाम्लपृष्टेन तस्य कुर्याच्च गोलकम् । ततः पिष्ट्वाचमीनाक्षीं चाङ्गेरीं सपुनर्नवाम् ॥ तत्कल्केन वहिर्गोलं लेपयेद् ह्यङ्गुलोन्मितम् । धृत्वातद्गोलकं भाण्डशरावेणाचरोधयेत् ॥ वालुकाभिः प्रपूर्याथ विभूतिलवणाम्बुभिः । दत्त्वाभाण्डमुखेमुद्रांततश्चुल्ल्यां विपा

चयेत् ॥ क्रमवृद्धाग्निना सम्यक् याव यामचतुष्टयम् । स्वाङ्गशीतं समुद्धृत्य मर्दयेच्छूरणद्रवैः ॥ यामैकं गोलकं तच्च निःक्षिपेच्छूरणोदरे । मृदालेपस्तु कर्त्तव्यः सर्वते अङ्गुष्ठमात्रकः ॥ पाच्यं गजपुटे क्षिप्तं मृतं भवतिनिश्चितम् । वमनञ्च विरेकञ्च भ्रमं क्लममथाक्षिपम् ॥ विदाहं स्वेदमुत्क्लेदं न करोति कदाचनेति ॥ अरुणे । गुल्वनिभे ॥ पुं । कुष्ठरोगप्रभेदे ॥ त्रि । अरुणवर्णवति ॥ ताम्यति तम्यतेवा । तमु० । अमितम्योर्दीर्घश्चेति रक्दीर्घो ॥

ताम्रकम् । न । ताम्रे ॥ स्वार्थेकः ॥

ताम्रकर्णी । स्त्री । अञ्जननामपश्चिमदिग्हस्तिकरिण्याम् ॥ ताम्रौ कर्णौयस्याः । पाककर्णेति नासिकेति वाङीष् ॥

ताम्रकारः । पुं । ताम्रकुट्टके । गोल्विके । कसेरा इति भाषा प्रसिद्धे वर्णसङ्करजातौ ॥ उणादिः कर्मण्यणि कर्त्तरि वा । ताम्रं करोति । डुकृञ् । कर्मण्यण् ॥

ताम्रकुट्टकः । पुं । कांस्यकारे ॥ ताम्रं कुट्टयति । पुं । कुट्टच्छेदे । कर्मण्यण् । स्वार्थेकः ॥

ताम्रकूटः । तमाखु इति प्रसिद्धे क्षुपे ॥ यथा । संविदाकालकूटश्च ताम्रकूटश्च धुस्तुरम् । अहिफेनं खर्जूरसस्तारिकातरिता तथा ॥ इत्यष्टौसिद्धिद्रव्याणि यथा सूर्याष्टकं प्रिये इति कुलार्णवतन्त्रम् ॥

ताम्रकृमिः । पुं । इन्द्रगोपकीटे ॥

ताम्रगर्भम् । न । तुत्थे ॥

ताम्रचूडः । पुं । कुक्कुटे ॥ ताम्रा चूडाऽस्य ॥ कुकुरद्रुमे ॥

ताम्रत्रपुजम् । न । कांस्ये ॥

ताम्रदुग्धा । स्त्री । गोरक्षदुग्धायाम् ॥

ताम्रपट्टम् । न । ताम्रनिर्मितेलेख्यपत्रे ॥ यथा । दत्वा भूमिंनिबन्धंवाकृत्वालेख्यन्तुकारयेत् । आगामिभद्रनृपतेः परिज्ञानाय पार्थिवः ॥ पटेवा ताम्रपट्टेवा समुद्रोपरिचिह्नितमिति मिताक्षरा ॥

ताम्रपत्रः । पुं । जीवशाके ॥ न । ताम्रनिर्मितपत्रे ॥

ताम्रपर्णः । पुं । भारतवर्षीयोपद्वीपे ॥

ताम्रपर्णी । स्त्री । चोलदेशवर्त्तिन्यां सरिद्वारायाम् ॥

ताम्रपल्लवः । पुं । अशोकतरौ ॥

ताम्रपाकी । पुं । गर्दभाण्डवृक्षे ॥

ताम्रपादी । स्त्री । हंसपद्याम् ॥

ताम्रपुष्पः । पुं । भूमिचम्पके । भूंचांपा इति भाषा ॥ कोविदारे । रक्तकाञ्चने ॥

ताम्रपुष्पिका । स्त्री । जयाकुसुमे ॥ रक्तत्रिवृति ॥

ताम्रपुष्पी । स्त्री । धातक्याम् ॥ पाटलावृक्षे ॥ जपायाम् ॥

ताम्रफलः । पुं । अङ्कोठवृक्षे ॥

ताम्रमूला । स्त्री । दुरालभायाम् ॥ लज्जालौ ॥ कच्छुरायाम् । खिराइ इति गौडभाषा ॥

ताम्रवर्णः । पुं । पद्मिनीबाहुल्ये ॥

ताम्रवर्णा । स्त्री । जवायाम् ॥

ताम्रवल्ली । स्त्री । चित्रकूटादिदेशप्रसिद्धायां मामायां लतायाम् । ताल्याम् । तमाल्याम् ॥ मञ्जिष्ठायाम् ॥

ताम्रबीजः । पुं । कुलत्थे ॥

ताम्रवृक्षः । पुं । कुलत्थे ॥ रक्तचन्दने ॥

ताम्रवृन्तः । पुं । कुलत्थे ॥

ताम्रवृन्ता । स्त्री । कुलत्थिकायाम् ॥

ताम्रशिखी । पुं । कुक्कुटे ॥

ताम्रसारम् । न । रक्तचन्दने ॥ इति रत्नमाला ॥

ताम्रसारकम् । न । रक्तचन्दने ॥ पुं । रक्तखदिरे ॥ इति राजनिर्घण्टः ॥

ताम्रा । स्त्री । ताम्रवल्ल्याम् ॥ सैंहल्याम् ॥ ताम्रवर्णायाम् ॥

ताम्राङ्कुः । पुं । उपद्वीपभेदे ॥

ताम्राक्षः । पुं । कोकिले ॥ ताम्रे अक्षिणी यस्य ॥ त्रि । ताम्रनयने ॥

ताम्राभम् । न । रक्तचन्दने ॥

ताम्रावती । स्त्री । तीर्थविशेषे ॥

ताम्रार्धम् । न । कांस्ये ॥

ताम्राश्मा । पुं । पद्मरागमणौ ॥

ताम्रिकः । पुं । कांस्यकारे ॥ त्रि । ताम्रसम्बन्धे ॥ ताम्रस्यायम् । अध्यात्मादित्वात् ठञ् ॥ ताम्रघटनं शिल्पमस्य वा शिल्पमिति ठक् ॥

ताम्रिका । स्त्री । गुञ्जायाम् ॥ मानरन्ध्राख्ये ॥

ताम्री । स्त्री । वाद्यविशेषे । मानरन्ध्रायाम् ॥ विकारिकायाम् ॥

तायनम् । न । स्फीततायाम् । समृद्धौ ॥ तायृ सन्तानपालनयोः । ल्युट् ॥

तायिकः । पुं । तर्जिकाभिधदेशे ॥

तारः । पुं । वानरविशेषे ॥ मुक्ताविशुद्धौ ॥ शुद्धमौक्तिके ॥ देवीप्रणवे ॥ यथा । काश्यां विश्वेश्वराङ्कं गिरितिलमया संयुता वामभागे शुण्डातर्पेण दृष्टे त्रिपथगतटिनीतीरगुह्ये शुभागे । मायाबीजञ्च कर्णे सुरमुनिसहितो ध्यानयुक्तं वदामि प्रीत्या लोकस्य तस्मात् सुरमुनिगणकैरुच्यते तारनामेति ॥ प्रणवे ॥ गर्भजन्मजरामृत्युलक्षणाद्भयात्तारयतीति तारः ॥ तरके ॥ शिरोमध्वनौ ॥ स्त्री । न । नक्षत्रे ॥ नेत्र

मध्ये । कनीनिकायाम् ॥ न । रूप्ये ॥ अध्ययनरूपायांसिद्धौ ॥ चि । स्फुरितदीधितौ ॥ अत्युच्चनादे ॥ निर्मले ॥ अत्युच्चैः ॥ तारयति अतिक्रामति अन्यान् शब्दान् । तॄ० । बहुलमेतन्निदर्शनमितिचुरादिगणाद्बाध्ः स्वार्थेणिच् । पचाद्यच् ॥ यद्वा । तार्यते ऽनेनवा । घञ् घोश्च ॥

तारकः । पुं । दैत्यविशेषे ॥ कर्णधारे ॥ भेलके ॥ न । दृशि ॥ स्त्री । कनीनिकायाम् ॥ ऋक्षे ॥ त्रि । त्रातरि ॥ संसारसमुद्रस्य तरणकारणे तारयितरि ॥ अतिजगतीप्रभेदे वृत्तविशेषे । यथा । यदि तोटकवृत्तपदे गुरुरन्त्यम् भवतीह तदा किलतारकवृत्तम् । फणिनायकपिङ्गलवर्णित मेतदिह पण्डितमण्डलिकाकृतचित्तम् ॥ यथा । अतिभारतरं हृदि चन्दनपङ्कं मनुते सरसीपवनं विषशङ्कम् । तवदुस्तरतारवियोगपयोधे र्नहि पारमसौ भविता परमाप्नेः ॥ तारयति । तॄ० । ण्वुल् ॥

तारकजित् । पुं । कार्त्तिकेये । षडानने ॥ तारकं जयति । जि० । क्विप् । तुक् ॥

तारकराजः । पुं । चन्द्रे ॥

तारका । स्त्री । न । नेत्रकनीनिकाया म् ॥ ऋक्षे । नक्षत्रे ॥ तारकाज्योतिषीत्यमरस्यांन ॥ स्त्री । इन्द्रवारुण्याम् ॥

तारकारिः । पुं । कार्त्तिकेये । महासेने ॥ तारकस्य दैत्यविशेषस्य अरिः ॥

तारकिणी । स्त्री । निशायाम् ॥

तारकितम् । न । नभसि ॥ तारकाः सञ्जाता अस्य । तदस्यसञ्जातंतारकादिभ्यइतच् ॥

तारणः । पुं । भेलके ॥ अष्टादशेवत्सरे ॥ अतिवृष्टिश्च जायेत धान्यस्याप्यप्रपीडनम् । यस्यांभवति सामान्यं तारणे सुरवन्दिते ॥ त्रि । तरणकारयितरि ॥ तारयति । तॄ० । ल्युः ॥ सन्तारणे ॥

तारणिः । स्त्री । नावि ॥

तारतण्डुलः । पुं । धवलयावनाले ॥

तारतम्यम् । न । तरतमयोर्भावे । न्यूनाधिक्ये ॥ यथा । निर्धनं निधनमेतयोर्द्वयोस्तारतम्यविधिमुग्धचेतसाम् ॥ बोधनाय विधिना विनिर्मितो रेफएवजयवैजयन्तिका ॥

तारतारम् । न । आगमाविरोधिना न्यायेन आगमार्थपरीक्षणरूपे ऊहे । तृतीयायांसिद्धौ ॥

तारदी । स्त्री । तरदीवृक्षे ॥

तारपुष्पः । पुं । कुन्दवृक्षे ॥

तारमाक्षिकम् । न । रूप्यमाक्षिके । रजतो पधातौ ॥ तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम् । किञ्चिद्रजतसाहित्यात् तारमाक्षिकमीरितम् ॥ अनुकल्पतया तस्य ततोहीनगुणाः स्मृताः । न केवलं रूप्यगुणा वर्त्तन्ते तारमाक्षिके ॥ द्रव्यान्तरस्य संसर्गात् सन्त्यन्येपि गुणा यतः ॥ स्यात् तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं बस्तिरुक्कुष्ठपाण्डुमेहविषोदरम् ॥ अर्शः शोथं क्षयं कण्डुं त्रिदोष मपिनाशयेत् ॥ मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान् । तथैव मालां व्रणपूर्विकाञ्च करोत्यशुद्धं रजताख्यमाक्षिकम् ॥ शोधनन्तु । कर्कोटीमेषशृङ्ग्युत्थै र्द्रवैर्जम्बीरजैर्दिनम् । भावये दातपे तीव्रे विमला शुद्ध्यतिध्रुवम् ॥ विमला तारमाक्षिकम् । कर्कोटी खखसा । मारणन्तु कुलत्थस्य कषायेण घृष्टा तैलेन वापुटेत् । तैलेन वाजमूत्रेण म्रियते तारमाक्षिकम् ॥

तारलः । पुं । विटे ॥ इतिभूरिप्रयोगः ॥

तारवायुः । पुं । अत्युच्चशब्दवतिपवने ॥

तारविमला । स्त्री । तारमाक्षिके ॥

तारशुद्धिकरम् । न । सीसके ॥

तारा । स्त्री । बुद्धदेवताभेदे ॥ पञ्चकन्यान्तर्गतकन्यायाम् । वालिसुग्रीवयोर्योषायाम् ॥ सुरगुरोर्भार्यायाम् ॥ कनीनिकायाम् ॥ नक्षत्रे ॥ यथा । एकतारं नभोदृष्ट्वा सर्वज्ञो नारदो मुनिः । तावद्भवति चण्डालो यावदन्यं न पश्यति ॥ तत्रलिङ्गानुशासनं यथा । हस्ता स्वाती श्रवणाश्लेषा मृगशिरा नपुंसि स्यात् । पुंसि पुनर्वसुपुष्यौ मूलस्त्वन्यौ स्त्रियां शेषाः ॥ शेषाः ताराइतिसम्बन्धः ॥ चीडायाम् ॥ मुक्तायाम् ॥ शिवगोहल्याम् ॥ द्वितीयायां महाविद्यायाम् ॥ यथा । लीलया वाक्प्रदा यस्मात् तेनलीलसरस्वती । तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी ॥ उग्रापत्तारिणी यस्मा दुग्रतारा प्रकीर्त्तितेति ॥ तंरत्यनया । तॄ० । भि० अङ् । ऋदृशोङीतिगुणः । निपातनाद्दीर्घः । अदन्तलक्षणष्टाप् ॥

ताराकूटम् । न । तृतीयेयोटके । तारामैत्र्याम् ॥ यथा । वरस्योद्भपिकन्यर्क्षं कन्यर्क्षादरभावधि । पृथगङ्कं हृतेशेषं विपञ्चसप्तमनुत्तसदिति ॥

तारापतिः । पुं । शिवे ॥ चन्द्रे ॥ बृहस्पतौ ॥ वालिनि ॥ सुग्रीवे ॥

तारापथः । पुं । आकाशे ॥

तारापीडः । पुं । निशाकरे । चन्द्रे ॥

ताराभूषा । स्त्री । रात्र्याम् ॥

ताराभ्रः । पुं । कर्पूरे ॥

तारामण्डलः । पुं । ईश्वरगृहविशेषे ॥

तारामार्गः । पुं । आकाशे ॥

तारारात्रिः । स्त्री । आगमोक्ते पर्वविशेषे ॥ यथा । भाद्रे मासि कृष्णपक्षे भौमवारे कुजर्क्षगे । अर्द्धरात्रौ सङ्क्रमश्च सा तारा रात्रिरीरितेति ॥

तारारिः । पुं । विटमाक्षिके ॥

तारावती । स्त्री । कालिकापुराणप्रसिद्धायां चन्द्रशेखरभूपपत्न्याम् ॥

तारिकम् । न । तरमूल्ये ॥

तारिका । स्त्री । ताडीतिख्याते तालरसे ॥

तारिणी । स्त्री । बुद्धदेव्यन्तरे । लोकेश्वरात्मजायाम् ॥ * ॥ शिवपत्न्याम् । द्वितीयायां महाविद्यायाम् ॥

तारुण्यम् । न । यौवने ॥ तरुणस्य भावः । ब्राह्मणादित्वात् ष्यञ् ॥

तारेयः । पुं । वालिवानरपुत्रे । अङ्गदे ॥ ताराया अपत्यम् । ढक् ॥

तार्क्षवम् । न । तर्क्षोर्विकारे ॥ तदवयवे ॥ कोपधाच्चेत्यण् ॥

तार्किकः । त्रि । तर्कतत्परे । तर्कशास्त्रविदि ॥ तर्कमधीते । ठक् ॥ स च षड्विधो यथा । स्याद्वादवाद्यार्हतः स्याच्छून्यवादी तु सौगतः १ । नैयायिकस्त्वक्षपादो २ । योगः साङ्ख्यस्तु कापिलः ३ । वैशेषिकः स्यादौलूक्यो ४ । बार्हस्पत्यस्तु नास्तिकः ५ । चार्वाकोलौकायतिकश्चैव ६ ते षड पितार्किकाः ॥ आत्मनोऽचिद्रूपवादिनोऽनात्मवा ह्येते स्वबुद्धिपरिकल्पितं यदिच्छन्ति तद्वदन्ति ॥

तार्क्षः । पुं । कश्यपे ॥

तार्क्षी । स्त्री । पातालगरुडीलतायाम् ॥

तार्क्ष्यः । पुं । अश्वे ॥ सर्पे ॥ गरुडाग्रजे ॥ गरुडे ॥ तार्क्षस्य कश्यपस्यापत्यम् । गर्गादित्वात् यञ् । बहुत्वे तार्क्षाः ॥ एकस्मिन् कल्पे तृक्षस्य मुनेरपत्यत्वात् तार्क्ष्यो गरुडः । गर्गादित्वात् यञ् । बहुत्वे यञञोश्चेति लुकि तृक्षा इत्यन्ये ॥ सुवर्णे ॥ स्यन्दने ॥ अश्वकर्णाख्यतरौ ॥ न । रसाञ्जने ॥

तार्क्ष्यजम् । न । रसाञ्जने ॥

तार्क्ष्यध्वजः । पुं । हरौ । विष्णौ ॥ इति हेमचन्द्रः ॥

तार्क्ष्यनायकः । पुं । गरुडे ॥ इति राजनिर्घण्टः ॥

तार्क्ष्यप्रसवः । पुं । अश्वकर्णवृक्षे ॥

तार्क्ष्यशैलम् । न । सतुत्थया दार्व्या कृताञ्जने । रसगर्भे । रसाञ्जने ॥ तार्क्ष्य

शैले भवम् । अण् ॥

तालकम् । त्रि । तृणनिर्मिते ॥

तालीयीक: । त्रि । तृतीये ॥ तीया दीकक् स्वार्थे वा वाच्य: ॥

ताल: । पुं । करतले ॥ अङ्गुष्ठमध्यमाभ्यां संमिते । विस्तृताभ्यामङ्गुष्ठमध्यमाभ्यां सम्मिते दीर्घपरिमाणविशेषे ॥ तलस्यच । तल० । इत्यस्येतिघञ् ॥ करास्फाले । करास्फोटे ॥ कांस्यमयवाद्यभाण्डे ॥ त्सरौ ॥ तालद्रुमे । दीर्घपादपे । लेख्यपत्रे ॥ पक्वं तालफलं पित्तरक्तश्लेष्मविवर्द्धनम् । दुर्जरं बहुमूत्रञ्च तन्द्राऽभिष्यन्दशुक्रदम् ॥ तालमज्जातुतरुण: किञ्चिन्मदकरो लघु: । श्लेष्मलो वातपित्तघ्न: सस्नेहोमधुर: सर: ॥ तालमज्जा तालफलबीजमज्जा । तालजं तरुणं तोय मतीवमदकृन्मतम् । अम्लीभूतं तदा तत् स्यात् पित्तकृद्वातदोषहृत् ॥ * ॥ मानविशेषे ॥ यथा । तालो द्वादशभिर्जानुपरिणाहपरिभ्रमैरिति । हस्तेन जानुमण्डलपरिभ्रमणं यावच्छ्या कालमात्रया क्रियते तावतीभिर्द्वादशभिस्ताभिस्ताल: कालांशोज्ञेय: ॥ * ॥ गीतकालक्रियामाने । अयंस्वर इयत् कालंगेय: इयत्कालं विलम्बितम् इयत्कालंद्रुतम् इयत्कालं मध्यमिति बोधयितुम् ईट्टशैर्हस्तैरङ्गुल्याकुञ्चनप्रसारणादिक्रियाभिर्मितव्यं गातव्यञ्चेत्येवंरूपेकालक्रियये मनि ॥ कालस्य एकद्वित्रिमात्रायुच्चारण नियमितस्य क्रियाया: परिस्पन्दात्मिकाया: परिच्छेदहेतुस्ताल: ॥ * ॥ तस्योत्पत्तिर्यथा । गौरीहरयोर्नृत्येन तालो बभूव । तत्प्रकारणम् । क्रिया कालस्य । ईश्वरनृत्यस्य ताण्डवम् गौर्यानृत्यस्य लास्यमितिसंज्ञा । अर्थात् पुरुषनृत्यस्य ताण्डवम् नार्यानृत्यस्य लास्यमितिनाम । ताण्डवलास्ययो राद्यक्षरयोर्मेलनेनतालइतिसंज्ञा ॥ * ॥ आदिगुरुत्रिकले (ऽ।) ॥ तालयतितल्यते वा । चु० । पचाद्यच् । घञ् वा ॥ न । हरिताले ॥ तालीशपत्रे ॥ दुर्गासिंहासने ॥ तालफले ॥ धर्नाप ॥ तालस्यविकार: । तालादिभ्योण् । तालाद्धनुषि । अन्यत्तालमयम् ॥

तालकम् । न । द्वारपिधानसाधनयन्त्रे । ताला इतिभाषा ॥ हरिताले ॥ तुवरिकायाम्

तालकाभ: । पुं । हरितवर्णे ॥ वि । त इति ॥

तालक्षीरकम् । न । तालसम्भवतवक्षीरे ॥

तालकी । स्त्री । तालजसुरायाम् ।
तालती । स्त्री । ताडी इति भाषा ।
तालध्वजः । पुं । बलदेवे ॥ तालो लेख्यपत्रो ध्वजो ऽस्य ॥
तालनवमी । स्त्री । भाद्रशुक्लनवम्याम् ॥
तालध्वजा । स्त्री । पुरीविशेषे ॥
तालपत्रम् । न । ताडङ्के । कर्णाभरणविशेषे । कर्णिकायाम् ॥ तालस्य पत्रम् । स्वर्णरचितस्या पीदमेवनाम ॥ तालतरोः पर्णे ॥
तालपत्रिका । स्त्री । तालमूल्याम् ॥
तालपत्री । स्त्री । मूषिकपर्ण्याम् । रण्डायाम् ॥ मधुरौषधौ ॥
तालपर्णम् । न । मुरानामगन्धद्रव्ये ॥
तालपर्णी । स्त्री । मुरानामनिगन्धवस्तुनि । गन्धिन्याम् ॥ तालःपर्णमस्याः । तालशब्दः तालपर्णसदृशे लाक्षणिकः । पाककर्णेतिङीष् ॥ मधुरिकायाम् ॥
तालपुष्पम् । न । प्रपौण्डरीके ॥ तालद्रुकुसुमे ॥
तालभृत् । पुं । बलदेवे ॥
तालप्रलम्बम् । न । तालजटायाम् ॥
तालमूलिका । स्त्री । तालमूल्याम् । मुसल्याम् ॥ तालोमूलमस्याः । तालशब्दस्तालमूलसदृशे लाक्षणिकः । पाककर्णेतिङीष् । स्वार्थे कन् ॥

तालमूली । स्त्री । तालमूलिकायाम् । दीर्घकन्दायाम् । मुसल्याम् ॥ तालमूलीतु विद्वद्भि र्मुसलीति निगद्यते । मुसली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः । तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा ॥ ॥
ताललक्ष्मा । पुं । बलदेवे ॥
तालवृन्तम् । न । तालपत्रनिर्मिते व्यजने ॥ यथा । परे ब्रह्मणिविज्ञाते समस्तैर्नियमैरलम् । तालवृन्तेन किङ्कार्यं लब्धे मलयमारुते ॥ अस्य वायोर्गुणा यथा । त्रिदोषशमनोवायुर्लघुरस्य प्रकीर्त्तितइति ॥
तालवृन्तकम् । न । व्यजने ॥ तालस्येव वृन्तमस्य । तालेकरतले वृन्तमिववन्धनमस्यवा ॥
तालव्यम् । त्रि । तालुजाते ॥ शरीरावयवत्त्वात् यत् ॥
तालाख्या । स्त्री । मुरायाम् ॥
तालाङ्कः । पुं । बलभद्रे । प्रलम्बघ्ने ॥ तालोवृक्षविशेषोऽङ्कोध्वजो ऽस्य ॥ करपत्रे ॥ शाकभेदे ॥ महालक्षणसम्पूर्णपुरुषे ॥ पुस्तके ॥ हरे ॥
तालावचरः । पुं । नटे ॥ द्वि०त्रि० ॥
तालिः । स्त्री । भूम्यामलक्याम् ॥
तालिकः । पुं । प्रसारिताङ्गुलिपाणौ । चपेटे । प्रतले ॥ लिखितस्य निवन्ध-

ने। काचनक्याम् ॥

तालिका। स्त्री। चपेटे ॥ तालमूल्याम् ॥ ताम्रवल्ल्याम् ॥

तालितम्। न। वाद्यभाण्डे ॥ तुलितपटे ॥ गुणे ॥

तालिशः। पुं। शैले। पर्वते ॥

ताली। स्त्री। जटायाम्। वितुन्नकौषधौ। भुंञआवला इतिभाषा॥ तालद्रुमे॥ आढक्याम्। तुवरिकायाम्। अरहरइतिभाषा ॥ द्वारोद्‌घाटनयन्त्रे ॥ तालमूल्याम् । ताम्रवल्ल्याम् ॥ तालजातसुरायाम् । ताडी इति भाषा॥*॥ मध्याख्यच्छन्दोभेदे ॥ यथा। ताली सा निर्दिष्टा। उद्दिष्टौ मो यत्र ॥ यथा। ज्ञानी ते जानीते। सासारूप्यं वैरूप्यम् ॥ अश्वनारीत्यपिसंज्ञोक्ताछन्दोमञ्जर्याम् । मेनारी ॥ तालयति । तल॰। घञन्तादच् । गौरादित्वाज्जातित्वाद्वाङीष् ॥

तालीपत्रम्। न। तालीशे ॥

तालीशम् । न । तालीशपत्रे॥ तालीशंलघु तिक्तोष्णं श्वासकासकफाऽनिलान् । निहन्त्यरुचिगुल्मामवह्निमान्द्यक्षयामयान् ॥ भूम्यामलक्याम् ॥

तालीशपत्रम् । न । तालीशख्याते वृक्षविशेषे । धात्रीपत्रे । शुकोदरे ॥ भूम्यामलक्याम् ॥

तालु । न। काकुदे। जिह्वेन्द्रियाधिष्ठाने स्वनाम्नैव प्रसिद्धे ॥ तरन्त्यनेन वर्णाः । तॄ॰ । त्रोरश्च ल इति ञुण् ॥ तालयति । तल॰। ञुण्। मृगय्वादित्वात् कुर्वा ॥

तालुकम् । न । तालुनि ॥ स्वार्थे यावादित्वात् कन् ॥

तालुजिह्वः । पुं । कुम्भीरे ॥

तालूरः । पुं । आवर्त्ते ॥

तावकः । त्रि । त्वदीये ॥ तवायम् । त॰ स्यादमित्यण् । तवकममकावेकवचने इति तवकादेशः । स्त्रियां तावकी ॥

तावकीनः । त्रि । त्वदीये ॥ तवायम् । युष्मदस्मदो रन्यतरस्यांखञ्चेति खञ् । पश्चात्तवकादेशः ॥

तावत् । अ । माने ॥ अनुक्रमे ॥ अवधारणे ॥ सम्भ्रमे ॥ परिच्छेदे ॥ कार्त्स्न्ये॥ अधिकारे॥ अवधौ॥ तत् परिमाणमस्य । तद्धिता इति बहुवचने नान्येऽनुक्ताअपि तद्धिता ज्ञापिताः। तेन डावतुप्रत्ययः ॥ तदाद्यर्थे ॥ यथा। भर्त्तापितावत् क्रथकैशिकानामितिरघुः ॥

तावान् । त्रि । तत्परिमाणविशिष्टे ॥ तत् परिमाणमस्य । यत्तदेतेभ्यः

परिमाणे इति वतुप्। आसर्वनाम्न इत्यात्वम् ॥

तावतिथः। त्रि। तावताम् पूरणे ॥ डट्। वतोरियुक् ॥

तावरम्। न। चापगुणे ॥ इतिभूरि० ॥

ताविषः। पुं। स्वर्गे ॥ महोदधौ ॥ काञ्चने ॥ तवेति वौचोधातुः। तवेर्णिद्वेतिटिषच् ॥

ताविषी। स्त्री। चन्द्रकन्यायाम् ॥ भूमौ ॥ नद्याम् ॥ देवकन्यायाम् ॥ टित्त्वान्ङीप् ॥

तावुरिः। पुं। वृषराशौ ॥ इतिशब्द० ॥

ताम्रनः। पुं। यमे ॥

तिक्तः। पुं। तीता इतिप्रसिद्धे रसे ॥ तिक्तः शीत तृषामूर्च्छाज्वरपित्तकफान् जयेत्। स्वयमरोचिष्णुः कण्ठस्तन्यास्यशोधनः ॥ सुगन्धे ॥ वत्सकद्रुमे ॥ कुटजे ॥ न। पर्पटौषधौ ॥ त्रि। तिक्तरसान्विते ॥ तेजयति। तिज०। सामान्यापेक्षज्ञापका सुरादीनांणिजभावे गत्यर्थाकर्मके तिक्तः ॥

तिक्तकः। पुं। पटोले ॥ भूमिनिम्बे। चिरतिक्ते। चिरायता इतिभाषा ॥ कृष्णखदिरे ॥ निम्बे ॥ इङ्गुदीवृक्षे ॥ तिक्तार्थे ॥ तिक्तएव। स्वार्थे कन् ॥

तिक्तकन्दिका। स्त्री। गन्धपत्रायाम् ॥

तिक्तकर्कोटकी। स्त्री। वन्ध्याकर्कोटिकायाम्। नागदन्त्याम्। बाँजककोड़ा इतिभाषा ॥

तिक्तका। स्त्री। तिक्ताख्यायाम्। कटुतुम्ब्याम् ॥

तिक्तगन्धिका। स्त्री। वराहक्रान्तायाम् ॥

तिक्तगुञ्जा। स्त्री। करञ्जे। क्षुद्ररसायाम् ॥

तिक्ततण्डुला। स्त्री। पिप्पल्याम् ॥

तिक्ततण्डी। स्त्री। कटुतण्डीलतायाम् ॥

तिक्ततुम्बी। स्त्री। कटुतुम्ब्याम् ॥ तिक्ताचासौतुम्बीच ॥

तिक्तदुग्धा। स्त्री। अजशृङ्ग्याम् ॥ क्षीरिण्याम् ॥

तिक्तद्रुमः। पुं। पञ्चतिक्ते ॥

तिक्तधातुः। पुं। पित्ते ॥

तिक्तपत्रः। पुं। कर्कोटके ॥ तिक्तानि पत्राणि यस्य ॥

तिक्तपर्व्वा। स्त्री। हिलमोच्याम् ॥ गुडूच्याम् ॥ मधुयष्ट्याम् ॥ दूर्वायाम् ॥

तिक्तपुष्पा। स्त्री। पाठायाम् ॥

तिक्तफलः। पुं। कतकवृक्षे ॥

तिक्तफला। स्त्री। यवतिक्तायांलतायाम् ॥ वार्त्ताक्याम् ॥ पशुभुञ्जायाम् ॥

इति राजनिर्घण्टः ॥

तिक्तभद्रः । पुं । पटोले ॥

तिक्तमरिचः । पुं । कतकवृक्षे ॥

तिक्तरोहिणिका । स्त्री । } कटुका-
तिक्तरोहिणी । स्त्री । } याम् । क
टुम्ब्याम् ॥ तिक्ताचासौरोहिणीच ॥

तिक्तवल्ली । स्त्री । मूर्वालतायाम् ॥

तिक्तवीजा । स्त्री । कटुतुम्ब्याम् ॥

तिक्तशाकः । पुं । खदिरवृक्षे ॥ वरुण
द्रुमे ॥ तिक्तःशाकोऽस्यपत्रशाखाम् ।
वरुणस्य शाकमध्ये पाठात् ॥ पत्रसु
न्दरवृक्षे ॥

तिक्तसारः । पुं । खदिरे ॥ तिक्तःसारो
स्य ॥ न । दीर्घरोहिषकतृणे ॥

तिक्ता । स्त्री । कटुक्याम् ॥ पाठायाम्
॥ यवतिक्तायां लतायाम् ॥ यवभु
जायाम् ॥ छिक्कन्याम् ॥ टाप् ॥

तिक्ताख्या । स्त्री । कटुतुम्ब्याम् ॥

तिक्ताङ्गा । स्त्री । पातालगरुडीलता
याम् ॥

तिग्मम् । न । तीक्ष्णे । पैना इतिभाषा
॥ त्रि । तद्वति ॥ तेजयति । तिज० ।
युजिरुचितिजां कुश्चेतिमक् कवर्ग
श्चान्तादेशः ॥

तिग्मरश्मिः । पुं । सूर्ये ॥ तिग्मारश्म
योयस्य ॥

तिग्मांशुः । पुं । सूर्ये ॥ तिग्माःखराः
अंशवोऽस्य ॥

तिजिलः । पुं । चन्द्रे ॥ तेजते । तिज० ।
गुपादिभ्यःकिदितीलच् ॥

तिण्टी । स्त्री । त्रिवृति ॥ सतीलायाम् ॥

तितउः । पुं । चालन्याम् ॥ तनोति
तन्यते वा । तनु० । तनोतेर्डउः स
न्वच्च । सन्वद्भावाद्द्वित्वमभ्यासस्ये
त्वञ्च । चुट्चिद्रसमोपेतं चालनं
तितउस्मृतमित्युक्तेःक्लीवत्वमपि ॥

तितिक्षा । स्त्री । क्षान्तौ । क्षमायाम्
। परापराधसहने ॥ सर्वज्ञः सहन
मे । शीतोष्णमानापमानलाभाला
भशोकहर्षादिद्वन्द्वसहिष्णुतायाम् ॥
अहोतितिक्षामाहात्म्यमज्ञोदानफ
लं महत् । यदागतोहरिस्त्यक्त्वोम
हेन्द्रस्यसलोकताम् ॥ तिजेः क्षमा
यां सन्नन्तादप्रत्ययेटाप् ॥

तितिक्षितः । त्रि । क्षान्ते । सोढे ॥ ति
तिक्षासञ्जाताऽस्य । तारकादित्वा
त् इतच् ॥

तितिक्षुः । त्रि । क्षमान्विते । क्षान्ते ।
सहिष्णौ । जीवनविच्छेदव्यतिरि
क्तशीतादिद्वन्द्वसहिष्णावितिभाष्यका
रः ॥ तितिक्षते । तिजेः क्षमाया
म् । गुप्तिज्किद्भ्यःसन् । तितिक्षणशी
लः । सनाशंसेत्युः ॥

तितिभः । पुं । इन्द्रगोपकीटे ॥ इ० ॥

तितीर्षुः । त्रि । तरितुमिच्छुः ॥ तर तेः सन्नन्तादुप्रत्ययः ॥

तित्तिडीकः । पुं । वृक्षविशेषे ॥ ओषधिविशेषे ॥ तिम्यति । तिमआर्द्रीभावे । पर्फरीकादयश्चेति तिमेर्मकारस्य डकारो ऽभ्यासस्य तुक् ईकन्प्रत्ययश्च । मिन्तिडीचिञ्चाम्लिकेत्यमरेतु शब्दान्तरम् । तथाच । तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रियेति वाचस्पतिः ॥

तित्तिरः । पुं । तित्तिरिपक्षिणि । तीतर इतिभाषा ॥ तित्ति इतिशब्दं राति । रा० । आतोनुपेतिकः ॥

तित्तिरिः । पुं । तित्तिरे ॥ तित्तिरिः कृष्णवर्णः स्यात् सतु गौरः कपिञ्जलः ॥ तित्तिरिर्विशेषेण ग्राही हिक्का दोषत्रयापहः । श्वासकासज्वरहरस्तस्माद्गौरो ऽधिको गुणैः ॥ तित्ति इति शब्दं रौति । रु० । बाहुलकात् किः ॥ मुनिविशेषे ॥ यजुःशाखाविशेषे ॥

तिथः । पुं । कामे ॥ काले ॥ अनले ॥ तेजयति । तिज० । तिथपृष्ठगूथयूथप्रोथाइतिथक् तिजेर्जलोपश्चनिपातनात् ॥

तिथिः । स्त्री । पुं । प्रतिपदादिपञ्चदशसु । चन्द्रकलाक्रियारूपायाम् । चन्द्रकलाक्रियोपलक्षिते वा काले ॥ अतति । अत० । अतन्यकीत्यतेरिथिन् । पृषोदरादित्वात् अलोपः ॥ यद्वा । तनोतिविस्तारयति चन्द्रकलां यः कालविशेषः सा तिथिः ॥ चन्द्रकलया तन्यते इति वा ॥ उक्तञ्च । तन्यन्ते कलया यस्मात् तस्मात् तास्तिथयः स्मृताइति ॥ अमादिपौर्णमास्यन्ता याएव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैववरानने ॥ तत्रप्रथमकलाक्रियारूपा प्रतिपत् । एवंद्वितीयादिकलाक्रियारूपाद्वितीयादिः । साचवृद्धिरूपाचेत् शुक्ला ह्रासरूपाचेत् कृष्णा । यथा । तत्रपक्षावुभौ मासे शुक्लकृष्णौ क्रमेणहि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पक्षद्वयात्मकास्तु तिथयः क्रमात् पञ्चदश स्मृताः । दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥ * ॥ गोभिलोक्तामावास्या घटकञपर्वघोभावापन्नसमसूत्रपातन्यायेन राश्येकांशच्छेदेन सहावस्थानयुक्तार्कमण्डला चन्द्रमण्डलस्य राशिद्वादशांशद्वादशांशभोगात्मकनिर्गमरूपवियोगेन शुक्लाद्याः प्रतिपदादितत्तत्तिथेरुत्पत्तिः । एवंगोभिलोक्तपौर्णमासीघटकस-

समराश्यवस्थानरूपपरमनियोगा-नन्तरमर्कमण्डलप्रवेशाय चन्द्रम-ण्डलस्य राशिद्वादशांशद्वादशांशभो गात्मकप्रवेशरूपस्त्रिकर्षेण कृष्णा या स्तत्तिथेश्चोत्पत्तिरिति। यथा। अर्कादिनिःसृतः प्राचीं यद्यात्यर्करहः शशी। भागैर्द्वादशभिस्तत् स्यात् तिथिश्चान्द्रमसं दिनम्॥ त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते। आदित्याद्विप्रकृष्टस्तु भागंद्वादशकं यदा॥ चन्द्रमाः स्यात् तदा-रामतिथिरित्यभिधीयते॥ *॥ सा दैवकृत्ये पूर्वाह्णयुताग्राह्या। एकादश्युपवासातिरिक्तस्थले सर्वत्रविसन्ध्यव्यापिनीग्राह्या॥ *॥ पञ्चदश-सङ्ख्यायाम्॥ पञ्चदशाङ्के॥

तिथिक्षयः। पुं। अमावास्यायाम्॥ इ-तिशब्दार्थकल्पतरुः॥ तिथेःक्षये॥

तिथिप्रणीः। पुं। निशाकरे। चन्द्रे॥

तिथी। स्त्री। प्रतिपदादिर्तिथिषु॥

तिमाशकः। पुं। तिनिशवृक्षे॥

तिनिशः। पुं। स्यन्दनद्रुमे। अतिमुक्तके। वकुले। तिनास इतिसाद्गन इतिच प्रसिद्धे वृक्षे॥ तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित्। तुवरः श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत्॥ अतिशयेन नेशति। णिशसमा-धौ। इगुपधेतिकः॥ यद्वा। अति-क्रान्तोनिशाः। अत्यादय इतिसमासः। पृषोदरादिः॥

तिन्तिडः। पुं। दैत्यविशेषे॥ चिञ्चायाम्॥ वृक्षाम्ले॥

तिन्तिडिका। स्त्री। चिञ्चायाम्॥ वृक्षाम्ले॥

तिन्तिडी। स्त्री। चिञ्चायाम्। अम्लिकायाम्। अम्ली इति इम्ली इतिचभाषा॥ अम्लिकायाःफलं पक्वं मर्दितं वारिणा दृढम्। शर्करामरिचोन्मिश्रं लवङ्गेन्दुसुवासितम्॥ अम्लिकाफलसम्भूतं पानकं वातनाशनम्। पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधकम्॥ वृक्षाम्ले॥ चुक्रे॥ तिम्यति। तिमआर्द्रीभावे। अनीकादयश्चेतिनिपातितः॥

तिन्तिडीकम्। न। वृक्षाम्ले। चुक्रे॥ तिम्यति। तिम०। अनीकादयश्चेति साधु॥ वस्त्वन्तरे॥ तिन्तिड्याम्॥

तिन्तिडीका। स्त्री। चिञ्चायाम्॥

तिन्तिडीद्यूतम्। न। चुञ्चुर्याम्। तिन्तिडी वीजैर्विहितेद्यूते। आकरीवाकरी इतिभाषा॥

तिन्तिला। स्त्री।
तिन्तिलिका। स्त्री। } चिञ्चायाम्।
तिन्तिली। स्त्री। } तिन्तिड्याम्॥
तिन्तिलीका। स्त्री।

तिन्दिशः । पुं । तिन्दिशे ॥

तिन्दुः । पुं । तिन्दुके । तेंदू इतिभाषा ॥ तिम्यति । तिम० । मृगय्वादित्वात् कुः ॥

तिन्दुकः । पुं । स्फूर्जके । कालस्कन्धे । शितिसारके । तिन्दौ । तेंदू इति भाषा ॥ स्यादामं तिन्दुकं ग्राहि वातलं शीतलं लघु । पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु ॥ तत्सारं चिररोगजित् ॥ विश्वतिन्दुकमप्येवं विशेषात् ग्राहिशीतलम् ॥ न । कर्षपरिमाणे । इति वैद्यकपरिभाषा ॥ तिन्दोःसंज्ञायां कन् ॥

तिन्दुकिः । स्त्री । तिन्दुके ॥

तिन्दुकिनी । स्त्री । आवर्त्तक्याम् ॥

तिन्दुकी । स्त्री । तिन्दुके ॥ तिम्यति । तिम० । बाहुलकात् दुकष् गुणाभावश्च । ङीष् ॥

तिन्दुलः । पुं । तिन्दुकवृक्षे ॥

तिमिः । पुं । समुद्रे ॥ महाकाये सामुद्रे मत्स्यविशेषे ॥ अस्तिमत्स्य स्तिमिर्नाम शतयोजनविस्तर इतिदर्शनात् । अध्यात्मरामायणे रामवाक्यम् । अस्तिमत्स्यस्तिमिर्नाम तथाचास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोप्यस्ति तद्गिलोप्यस्ति लक्षणेति ॥ ताम्यति । तमु काङ्क्षायाम् । क्रमितमिशतिस्तम्भामत इच्चेति इन् ॥

तिमिकोषः । पुं । अब्धौ ॥

तिमिङ्गिलः । पुं । मत्स्यविशेषे ॥ तिमिं गिरति । गृ निगरणे । मू० कः । अचिविभाषेति लत्वम् । गिलेऽगिलस्येति मुम् ॥

तिमिङ्गिलगिलः । पुं । महामत्स्यविशेषे ॥ गिरति । गृ० । मूलविभुजादित्वात् कः । लत्वम् । गिलङ्गिलतीति गिलगिलः । तिमीनां गिलगिलः । गिलेगिलेचेति मुम् ॥

तिमितः । त्रि । निश्चले ॥ क्लिन्ने ॥ तिम्यतिस्म । तिम० । अकर्मकत्वात् कर्त्तरि क्तः ॥

तिमिरम् । न । अन्धकारे । ध्वान्ते ॥ नेत्रामयान्तरे ॥ तल्लक्षणं । यथा । तिमिराख्यः सवैदोषश्चतुर्थं पटलङ्गतः । रुणद्धि सर्वतोदृष्टिं लिङ्गनाशमतः परम् ॥ * ॥ भुक्त्वा पाणितलंघृष्ट्वा चक्षुषोर्यदि दीयते । अचिरेणैवतद्वारि तिमिराणि व्यपोहति ॥ तिम्यति । तिम० । इषिमदीतिकिरच् ॥

तिमिरच्छित् । पुं । }
तिमिररिपुः । पुं । } सूर्ये ॥
तिमिरशासनः । पुं । }

तिमिषः । पुं । शाकभक्ष्याम् ॥ इति-

त्रिकाण्डशेष: ॥ नाटाम्रे ॥

तिमी । स्त्री । तिमिमत्स्ये ॥ इ०वि० ॥

तिरश्ची । स्त्री । पशोःपक्षिणश्चस्त्रियाम् ॥

तिरश्चीन: । त्रि । तिर्यग्भूते ॥ विभाषाञ्चेरदिक्स्त्रियामिति स्वार्थेखः ॥

तिरस् । अ । अन्तर्द्धौ ॥ तिर्यगर्थे ॥ अवज्ञायाम् । तिरस्कारे ॥ तरति । तॄ० । असुन् । क्वचिदपवादविषये ऽप्युत्सर्गोऽभिनिविशते इति गुणविषये इर् ॥

तिरस्करिणी । स्त्री । जवनिकायाम् । अवधानपव्याम् । कमात चिक सिर् की इत्यादिभाषा ॥ तिरस्करोति तिरस्क्रियते ऽनया वा । ग्रह्यादित्वाण्णिनि: । निपातनाद् वृद्ध्यभाव: । संज्ञापूर्वकत्वाद्वा ॥ देवीविशेषे ॥

तिरस्कार: । पुं । अधिक्षेपे । अनादरे ॥

तिरस्कृत: । त्रि । अनादृते ॥

तिरस्कृति: । स्त्री । दोषप्रस्तुत्याधिक्कारे । उपेक्षायाम् । अनादरे ॥

तिरस्क्रिया । स्त्री । अनादरे ॥ तिरस्करणम् । कृञ:शचेति भावे श: । तिरसोऽन्यतरस्यामिति सत्वम् ॥

तिरिटि: । पुं । इक्षुग्रन्थौ ॥

तिरिभ: । पुं । शालिविशेषे ॥

तिरिब: । पुं । शालिप्रभेदे ॥



तिरीट: । पुं । लोध्रे ॥ न । स्वर्णे ॥ किरीटे ॥ तीर्यते गमनेन । तॄ० । कृतॄकृपिभ्य: कीटन् । इत्वरपरत्वे ॥

तिरीटक: । पुं । रक्तलोध्रे ॥ स्वार्थे क: ॥

तिरोधानम् । न । अन्तर्द्धाने । व्यवधायाम् । अपिधाने ॥ तिर: पूर्वाद्दुधाञो ल्युट् । तिरोऽन्तर्द्धाविति गतिस्त्वेकुगतीतिसमास: ॥

तिरोभाव: । पुं । पिधाने ॥ प्रलये ॥

तिरोभूत: । त्रि । अन्तर्हिते ॥

तिरोहित: । त्रि । अन्तर्हिते ॥ छन्ने ॥ नष्टे ॥ तिरोधीयतेस्म छिन्नोतिस्मवा । डुधाञ् धारणपोषणयो: क्तिगतौ वा । गत्यर्थेति कर्त्तरिक्त: । धाञस्तु कर्मणिक्त: । भावक्तान्ताभ्यामर्शआद्यच्वा ॥

तिर्य्यक्प्रासी । त्रि । साचिविप्रसारिणि । कुटिलदृष्टौ ॥

तिर्य्यक्स्रोता: । पुं । पशुपक्ष्यादौ ॥ सच ब्रह्मणोऽष्टम:सर्ग: । यथा । तिरश्चामष्टम: सर्ग: सोष्टाविंशद्विधोमत: ॥ तेषांलक्षणं यथा । अविदो भूरितमसो घाणज्ञा हृद्यवेदिन इति । अविद:श्वस्तनादिज्ञानशून्या: । भूरितमस: आहारादिमात्रनिष्ठा: । घाणज्ञा घाणेनैवेष्टमर्थं जानन्ति । हृदि अवेदिन: दीर्घानुसन्धानशून्या:-

॥ अष्टाविंशतिभेदा यथा । गौ-रजोमहिषः कृष्णः शूकरो गवयो-रुरुः । द्विशफाः पशवश्चेमे अवि-रुष्ट्रश्चसप्तम ॥ खरो श्वोऽश्वतरो-गौरः शरभश्चमरीतथा । एते चैकशफाःश्रृणुपञ्चनखान् पशू न् ॥ श्वामृगालोवृकोव्याघ्रोमार्जारः शशशल्यकौ । सिंहः कपिर्गजःकूर्मो गोधाच मकरादयः ॥ कङ्कगृध्रवकश्ये नभासभल्लूकवर्हिणः । हंससारसच क्राह्वकाकोलूकादयः खगाः ॥ इति श्री भागवतम् ॥ गवादयउष्ट्रान्ताद्वि शफाद्विखुरामव । खरादयश्चमर्यन्ता एकशफाः षट् । श्वादयोगोधान्ताः पञ्चनखाद्श । एतेभूचराःसप्तविंश तिः । मकरादयोजलचराः कङ्काद यःखगाः अभूचरत्वेनैकीकृत्यगृही ताः । एवमष्टाविंशतिभेदान् वदन्ति । अन्येषामपितिर्यक्प्राणिनांयथाय थमेतेष्वन्तर्भावः । इतिश्रीधरस्वा-मिनः ॥

तिर्य्यगीनम् । न । पश्चिमास्तिर्यग्गम-मने ॥

तिर्य्यग्यानः । पुं । कर्कटे । कुलीरे ॥

तिर्य्यङ्मुखः । पुं । नक्षत्रविशेषेषु ॥ अश्वि-नी रेवती हस्ताचित्रे स्वातिपुनर्वसू । ज्येष्ठाश्च मा मृगाश्च नव तिर्य्यङ्मु

खाःस्मृताः ॥

तिर्य्यक् । अ । वक्रे । साचि ॥ तिरश्चा-र्थे ॥ तिरोर्थे ॥

तिर्य्यञ्च् । त्रि । विहङ्गमे । पशौ ॥ वक्रगामिनि ॥ तिर्य्यगञ्चति । तिरस स्तिर्य्यलोपइति तिरिः ॥ स्त्रियां ति रश्ची ॥

तिर्य्यक् । पुं । पशौ ॥ खगादौ ॥

तिलः । पुं । स्वनामप्रसिद्धे होमधान्ये । पापघ्ने । पितृतर्पणे ॥ तिलः कृष्णः सितो रक्तः सवर्ण्योन्यस्तिलः स्मृतः ॥ तिलो रसेकटु स्तिक्तो मधुर स्तु वरो गुरुः । विपाके कटुकः स्वादुः-स्निग्धोष्णः कफपित्तकृत् ॥ बल्यः के श्यो हिमस्पर्शस्त्वच्यः स्तन्योव्रणेहि-तः । दन्त्यो ऽल्पमूत्रकृद् ग्राही वात घ्नोऽग्निमतिप्रदः ॥ कृष्णःश्रेष्ठतम-स्तेषु शुक्लो मध्यमःसितः । अन्य हीनतराः प्रोक्तास्तज्ज्ञै रक्तादय-म [illegible] ॥ तिलस्यफलम् तिलः । अ वयवेषप्रत्ययलुप् । तस्यफलपाके तिलुप् युक्तवद्भावः ॥ तिलकालके ॥

तिलकः । पुं । पुष्पवृक्षविशेषे । क्षुरके । श्रीरपुष्प्याम् । छिन्नरुहे । सत-जीवे । वासन्तसुन्दरे ॥ तिलकः क टुकःपाके रसेचोष्णो रसायनः । क ··· फकुष्ठकृमीन् वलिमुखरुग्गदान्-

हरेत् ॥ तिलति । तिलस्नेहने । कु न् श्लिष्विसंश्रयोः । तिलश्वेति वा । कन् ॥ तेलति । तिलगतैा वा । इगुपधेति ८ ० स्वार्थेकन् वा ॥ अश्व विशेषे ॥ रोगविशेषे ॥ तिलकालके ॥ भ्रुवकप्रभेदे ॥ यथा । पञ्चविंशति वर्णाङ्घ्रिस्तिलकोभ्रुवको भवेत् । इ ष्टम्बुतपुटे तालेरसेवीरे ऽद्भुते पिबेति ॥ मरुवके ॥ न । सैावर्चले ॥ क्लोम्नि ॥ रुचके । मातुलुङ्गे ॥ पुं । न । स्वनामाप्रसिद्धे विशेषके । चन्दनादिना ललाटादिद्वादशाङ्गेषु कृते चिह्नविशेषे । तमालपत्रके ॥ शिवागमेदीक्षितैस्तु धार्यंतिर्यक्त्रिपुण्ड्रकम् । विष्णवागमेदीक्षितस्तु ऊर्द्ध्वपुण्ड्रंविधारयेत् ॥ ऊर्द्ध्वपुण्ड्रंद्विजः कुर्यात् क्षत्रियाणांतथैवच । वैश्यानांतुतथाविप्र शूद्रादेर्मण्डलाकृतम् ॥ अच्छिद्रमूर्द्ध्वपुण्ड्रन्तु ये कुर्वन्ति-नराधमाः । तेषांललाटेऽधिकृतं-शुनःपादो न संशयः ॥ हृष्टाभाले-द्विजातीनामच्छिद्रमूर्द्ध्वपुण्ड्रकम् । कार्यः कृष्णस्मृतिंकृत्वावक्त्रेणाच्छाद येन्मुखम् ॥ ललाटे दक्षिणे ब्रह्मा व सेद्वामे महेश्वरः । मध्येविष्णुर्वसे न्नित्यं तस्मान्मध्यं न लेपयेत् ॥ * ॥ काम्यं नैमित्तिकं नित्यं यत्किञ्चि त्कर्मनारद । वर्णाश्रमाणां तत्ना-स्ति स्नानान्ते तिलकं विना ॥ त्रि । प्रधाने ॥

तिलकटम् । न । तिलानांरजसि ॥ अ त्रामूतिलोमाभ्याम्योरजस्युपसंख्यानमितिकटच् ॥

तिलकल्कः । पुं । पिण्याके । खल इति भाषा ॥

तिलका । स्त्री । हारप्रभेदे ॥ गायत्री छन्दोभेदे । सगणद्वितयं भवतीयदा । रसवर्णपदातिलकेतितदा ॥ यथा । वनमालिकया सकलालिकया । पुमरेतिकयं मम दृष्टिपथम् ॥

तिलकालकः । पुं । गात्रस्थतिले ॥ तिलवकालकः ॥ रोगविशेषे । कृष्णानितिलमात्राणि नीरुजानिसमानि च । वातपित्तकफोद्रेकात् तान्विद्या त्तिलकालकान् ॥

तिलकाश्रयः । पुं । ललाटे ॥

तिलकिट्टम् । न । पिण्याके । खल इति खली इतिच भाषा ॥

तिलकी । स्त्री । सतिलके । तिलकयुक्ते ॥ शिखीतिलकी कर्मकुर्य्यादिति स्मृतिः ॥

तिलचित्रपत्रकः । पुं । तैलकन्दे ॥

तिलचूर्णम् । न । चूर्णीकृततिलेषु । तिलकल्के । पललै । तिलकुट इति

भाषा ॥

तिलतण्डुलकम् । न । आलिङ्गने ॥ तिलमिश्रिततण्डुलेषु ॥

तिलतैलम् । न । तिलानां स्नेहे ॥ स्नेहे तैलम् ॥ पथ्याद्यगुणाः स्नेहे ॥

तिलधेनुः । स्त्री । दानाय तिलनिर्मितायां धेनौ ॥

तिलपर्णः । पुं । श्रीवेष्टे ॥ न । चन्दने ॥ तिलतरुपर्णे ॥

तिलपर्णिका । स्त्री । रक्तचन्दने ॥

तिलपर्णी । स्त्री । रक्तचन्दने ॥ श्रीवासे ॥ सिल्हके ॥ मलयजे ॥ इति हेमचन्द्रः ॥ तिलस्येवपर्णान्यस्याः । पाककर्णेतिङीष् ॥ यद्वा । तिलपर्णीनदी आकारोऽस्याः ॥

तिलपिञ्जः । पुं । निष्फलतिलवृक्षे । तिलपेजे ॥ निष्फलस्तिलः । तिलान्निष्फलात्पिञ्जपेजौ ॥

तिलपेजः । पुं । तिलपिञ्जे ॥ निष्फलस्तिलः । पेजः ॥

तिलमयूरः । पुं । मयूरविशेषे । गुरुपटके ॥

तिलरसः । पुं । } तिलतैले ॥
तिलस्नेहः । पुं । }

तिला[illegible]कः । पुं । तैलकन्दे ॥

तिलापत्त्रा । स्त्री । कृष्णजीरके ॥

तिलित्सः । पुं । सर्पविशेषे । गोनसे ॥

तिलगतौभ्वादिः । तिलस्नेहने तुदादिः । तेलनम् तिल् । सं० क्विप् । तिलमेति । इण्० । क्विप् तुक् । तिलित् तिलितं स्नाति । घोन्तकर्मणि । कः ॥ यद्वा । तेलनम् तिलिः । कृष्यादिस्वादिक् । तिलिं त्सरति । त्सरच्छद्मगतौ । अन्येभ्योपीतिडः ॥

तिलोत्तमा । स्त्री । स्वर्वेश्यायाम् ॥ अस्याः नामकारणं महाभारते । तिलंतिलं समानीय रत्नानां यद्विनिर्मिता । तिलोत्तमेति तत् तस्यानामचक्रे पितामहः ॥

तिलोदनम् । न । कृशरे ॥

तिल्यम् । न । तैलीने । तिलक्षेत्रे ॥ तिलानामन्नवनङ्क्षेत्रम् । विभाषा तिलमाषोमाभङ्गाणुभ्य इतिपक्षेयत् ॥ तिलेभ्योहितं वा । खलयवमाषतिलवृषब्रह्मणश्चेति यत् ॥

तिल्वः । पुं । लोध्रे ॥ तिलत्यनेनाङ्गम् । तिलस्नेहने । उल्वादयश्चेतिसाधुः ॥ श्वेतरक्तलोध्रयोः ॥

तिल्वकः । पुं । लोध्रे ॥ स्वार्थे कः ॥

तिष्ठद्गु । अ । दोहनकाले ॥ तिष्ठन्तिगावो यस्मिन् काले । तिष्ठद्गुप्रभृतीनिचेत्यव्ययीभावोनिपातनाच्छत्रादेशः प्रथमासमानाधिकरणे शतादेशश्चासम्भवात् ॥

तिष्यः । पुं । पुष्यनक्षत्रे ॥ तुष्यन्त्य ऽ स्मिन् । तुष । कूर्दतिष्येतिनिपातनम् तक्प्रत्यय उपधायाश्चत्व ॥ त्वेषति वा । त्विषदीप्तौ । अघ्न्यादित्वात् यक् ॥ कलियुगे ॥ यथा । स तु सम्प्रदायप्रवर्त्तनाय तिष्ये शिष्यैश्चतुर्भिः सहयोवतीर्णः । उक्तो वृहत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्यगुरुं तमीडेऽस्मि ॥ त्रि । तिष्ये जाते ॥ अवोलुक् ॥

तिष्यकः । पुं । पौषमासे ॥

तिष्यपुष्या । स्त्री । आमलक्याम् ॥

तिष्यफला । स्त्री । धात्र्याम् । आमलक्याम् ॥ निरुत्यमामलकेलक्ष्मीरितिप्रवादात् तिष्यं मङ्गल्यं फलमस्याः । अजादित्वात् टाप् ॥ तिष्ये कलियुगे फलमस्याः सेवयेतिवा ॥

तिष्या । स्त्री । आमलक्याम् ॥

तीक्ष्णः । पुं । यवाग्रजे । यवक्षारे ॥ श्वेतकुशे ॥ कुन्दुरुके ॥ न । सामुद्रलवणे ॥ विषे ॥ लौहे ॥ आजौ । युद्धे ॥ मरणे ॥ खरे । तिग्मे ॥ चव्यके ॥ शस्त्रे ॥ शीघ्रे ॥ मुष्कके ॥ नवविशेषाणां गणे ॥ मङ्क्षाहिशिवमूलाश्च मचाश्च तीक्ष्णा दारुणे ॥ त्रि । तिग्मे मुखिनि ॥ आत्मत्यागिनि ॥ निरालस्ये ॥ सुमुक्षौ ॥ योगिनि॥ तेजयति । तेज्यते अनेनवा । तिज० । तिजेर्दीर्घश्चेति क्स्नप्रत्ययो दीर्घश्च ॥ क्रूरहृदये ॥

तीक्ष्णकः । पुं । गौरसर्षपे ॥ मुष्कके ॥

तीक्ष्णकण्टकः । पुं । कितवद्रुमे । धत्तूरे ॥ इङ्गुद्याम् ॥ करीरे ॥ वर्बुरे ॥

तीक्ष्णकण्टका । स्त्री । कन्थारीवृक्षे ॥

तीक्ष्णकन्दः । पुं । पलाण्डौ ॥

तीक्ष्णकर्म्मा । त्रि । तीक्ष्णचेष्टे । आयःशूलिके ॥

तीक्ष्णकल्कः । पुं । तुम्बुरुवृक्षे ॥

तीक्ष्णकान्ता । स्त्री । मङ्गलचण्डिकाप्रभेदे ॥

तीक्ष्णगन्धः । पुं । शोभाञ्जने ॥ कुन्दुरौ ॥ रक्ततुलस्याम् ॥ तीक्ष्णोगन्धो ऽस्य ॥ गन्धके ॥

तीक्ष्णगन्धकः । पुं । शोभाञ्जने ॥ तीक्ष्णोगन्धो ऽस्य । शेषाद्विभाषेति कप् ॥

तीक्ष्णगन्धा । स्त्री । वचायाम् ॥ राजिकायाम् ॥ श्वेतवचायाम् ॥ कन्थार्याम् ॥ सूक्ष्मैलायाम् ॥ जीवन्त्याम् ॥ तीक्ष्णोगन्धोयस्याः ॥

तीक्ष्णतण्डुला । स्त्री । पिप्पल्याम् ॥ तीक्ष्णास्तण्डुला यस्याः ॥

तीक्ष्णतैलम् । न । सुरायाम् ॥ स्नुहीक्षीरे ॥ सर्ज्जरसे ॥

तीक्ष्णत्वम् । न । आशुकारित्वे । तीक्ष्णतायाम् ॥ भावेक्तः ॥

तीक्ष्णदंष्ट्रः । व्याघ्रे ॥ भैरवे ॥ त्रि । तीक्ष्णदंष्ट्रावति ॥

तीक्ष्णपत्रः । पुं । तुम्बुरुवृक्षे ॥

तीक्ष्णपुष्पम् । न । लवङ्गे ॥

तीक्ष्णपुष्पा । स्त्री । केतक्याम् ॥

तीक्ष्णफलः । पुं । तुम्बुरुवृक्षे ॥

तीक्ष्णमूलः । पुं । कुलञ्जने ॥ शिग्रौ ॥

तीक्ष्णरसः । पुं । यवक्षारे ॥ तीक्ष्णो रसोऽस्य ॥

तीक्ष्णशूकः । पुं । यवे ॥ तीक्ष्णाः शूकोऽस्य ॥

तीक्ष्णसारा । स्त्री । शिंशपायाम् ॥

तीक्ष्णा । स्त्री । वचायाम् ॥ सर्पकङ्कालिकौषधौ ॥ कपिकच्छाम् ॥ महाज्योतिष्मत्याम् । अत्यम्लपर्ण्याम् ॥

तीक्ष्णायसम् । न । तीखा इति गौड प्रसिद्धे लोहविशेषे । शस्त्रायसे ॥

तीरः । पुं । त्रपुणि । सीसके ॥ न । कूले । रोधसि ॥ गङ्गातीरे ॥ यथा । सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते ॥ भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् । तावद्गर्भं विजानीयात् तदूर्द्ध्वं तीरमुच्यते ॥ शरविशेषे । सायके ॥ तीरयति । पारतीरकर्म समाप्तौ । पचाद्यच् ॥

तीरभुक्तिः । पुं । तिरहुत इति प्रसिद्धे विदेहदेशे ॥ तीरे भुक्तिरस्य ॥

तीरितः । त्रि । शास्त्रव्यवस्थानिर्णीते ॥ न । कर्मणः समाप्तौ ॥ तीर० । भावेक्तः ॥

तीर्णः । त्रि । अभिभूते ॥ प्लुते ॥ उत्तीर्णे ॥ यथा । तीर्णाः पूर्णाः कति न सरितो लङ्घिताः के न शैलाः नाक्रान्ता वा कति वनभुवः क्रूरसञ्चारघोराः । पापैरेतैः किमिव दुरितं कारितो नास्मि कष्टं यद्दृष्टवा स्तेधनमदमसीज्ञानवक्त्रादुरीशाः ॥ एतैः परिग्रहैः ॥ तरतेः कर्त्तरि क्तः ॥

तीर्णपदी । स्त्री । तालमूल्याम् ॥

तीर्णा । स्त्री । प्रतिष्ठाख्यवृत्तविशेषे ॥ यथा । यस्मिन्वृत्ते कर्णः कर्णः वै दैवर्णः सा स्यात्तीर्णा ॥ यथा । वंशीवादैर्दत्तोन्मादैः । कृष्णश्चेतः क्रान्तो यातः ॥ अस्याः कन्येत्यपि संज्ञा । मगौ चेत् कन्येति लक्षणात् ॥

तीर्थम् । न । शास्त्रे ॥ शास्त्रानुष्ठानविषये ॥ अध्वरे । यज्ञे ॥ क्षेत्रे । पुण्यक्षेत्रे ॥ उपाये ॥ नारीरजसि ॥ अवतारे । जलावतारे ॥ ऋषिजुष्टाम्बुनि ॥ पात्रे ॥ विद्यायाः पात्रे ॥ यथा । ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः । विद्यया विद्यां यः प्राह ता-

नितीर्थानि षण्मुमेति विश्वावचनम् ॥ उपाध्याये ॥ गुरौ ॥ मन्त्रिणि ॥ इतिमेदिनिकरः ॥ सचिवे ॥ इति हेमचन्द्रः ॥ योनौ ॥ दर्शने ॥ निपाने । नद्यवतारप्रदेशे । घट्टे ॥ उपङ्गुपजलाशये ॥ मन्त्रे ॥ विप्रे ॥ तीर्य्यते ऽनेन वा तरन्त्यनेन वा । तॄ० । पातॄ तुदिवचिरिचिसिचिभ्यस्थक् ॥ हस्तगततीर्थानि यथा । अङ्गुल्यग्रे दैवं तीर्थं स्वल्पाङ्गुल्यो र्मूले कायम् । मध्येऽङ्गुष्ठाङ्गुल्योः पैत्रं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥ तीर्थं त्रिविधम् । जङ्गम मानसस्थावरभेदात् । तथाहि । ब्राह्मणा जङ्गमंतीर्थं निर्म्मलं सार्वकामिकम् । येषांवाक्योदकेनैव शुद्ध्यन्तिमलिनोजनाः ॥ * ॥ अगस्त्यवाच । शृणु तीर्थानि गदतो मानसानिममानघे । येषु सम्यङ् नरःस्नात्वा प्रयाति परमाङ्गतिम् ॥ सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदयातीर्थं सर्वत्रार्जवमेवच ॥ दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थञ्चप्रियवादिता ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यंतीर्थं मुदाहृतम् । तीर्थानामपितत् तीर्थं विशुद्धिर्मनसः परा ॥ एतत्तेकथितं देविमानसंतीर्थं लक्षणम् ॥ * ॥ भौमानामपि-तीर्थानां पुण्यत्वेकारणं शृणु ॥ यथा शरीरस्योद्देशाः केचिन्मेध्यतमाःस्मृताः । तथापृथिव्या मुद्देशाः केचित् पुण्यतमाः स्मृताः ॥ प्रभावादद्भुताद्भूमेः सलिलस्यचतेजसा । परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यतास्मृता ॥ तस्माद्भौमेषुतीर्थेषु मानसेषुच निष्यशः । उभयोरपि यः स्नाति स याति परमांगतिम् ॥ * ॥ तीर्थागमनेदोषो यथा । अनुपोष्य चिरात्रापि तीर्थान्य नभिगम्यच । अदत्त्वा काञ्चनं गाञ्च दरिद्रोनाम जायते ॥ * ॥ गमने फलं यथा । अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत्फलमवाप्नोति तीर्थाभिगमने न यत् ॥ तीर्थान्यनुस्मरन्धीरः श्रद्दधानः समाहितः । कृतपापोविशुद्ध्येत किंपुनः शुद्धकर्मकृत् ॥ तिर्य्यग्योनिं नवै गच्छेत् कुदेशेनच जायते । न दुःखीस्यात् स्वर्गभाक्चमोक्षोपायञ्चविन्दति ॥ * ॥ तीर्थफलभागिनोयथा । यस्यहस्तौचपादौ च मनश्चैव सुसंयतम् । विद्यातपश्च कीर्त्तिश्चस तीर्थफलमश्नुते ॥ प्रतिग्रहादुपावृत्तः सन्तुष्टो येनकेनचित् । अहङ्कारविमुक्तश्च सती० ॥

. ग्रहाम्भिको निराहारो ब्रह्मचारी जितेन्द्रियः । विमुक्तः सर्वसङ्गेभ्यः स तीर्थ० ॥ अक्रोधनो ऽमलमतिः सत्यवादी दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थ० ॥ अश्रद्दधानः पापात्मा नास्तिको ऽच्छिन्नसंशयः । हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥ इति काशीखण्डम् ॥ कृते तु पुष्करं तीर्थं त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥

तीर्थकरः । पुं । जिने ॥ करोति इति करः । तीर्थस्य करः ॥ कपिलकणभुगादिशास्त्रकारेषु ॥

तीर्थकृत् । पुं । } जिने ॥
तीर्थङ्करः । पुं । }

तीर्थराजिः । स्त्री । } अविमुक्ते । काश्याम् ॥
तीर्थराजी । स्त्री । }

तीर्थवाकः । पुं । केशे ॥ इति हेमचन्द्रः ॥

तीर्थसेवी । पुं । बकपक्षिणि ॥ इति राजनिर्घण्टः ॥ त्रि । तीर्थवासिनि ॥

तीवरः । पुं । अम्बुधौ ॥ व्याधे ॥ तेओर इति गौडप्रसिद्धे वर्णसङ्करजातिविशेषे ॥ स तु राजपुत्रस्त्रियां क्षत्रियाज्जातः इति ब्रह्मवैवर्तपुराणम् ॥ शूद्रीकभार्यायां पुण्ड्रकाज्जात इति पराशरपद्धतिः ॥ तरति तीर्यते वा । तॄ० । छित्वरच्छत्वरेत्यादिना ष्वरजन्तो निपातितः ॥

तीवरी । स्त्री । तीवरस्त्रियाम् ॥ षित्त्वान् ङीष् ॥

तीव्रः । पुं । शिवे ॥ न । लोहे ॥ तीरे ॥ त्रपुणि । सीसके ॥ तीक्ष्णे ॥ त्रि । दुःसहे ॥ अत्युष्णे ॥ नितान्ते । अतिशये ॥ अद्रव्यवर्त्तमानःक्लीबे । द्रव्यगामिनु वाच्यलिङ्गः । यथा । तीव्रं भुङ्क्ते । तीव्रो नरः । कटौ । कटुरसादौ ॥ तीक्ष्णे ॥ तीवति । तीवस्थौल्ये । वाहुलकात् रक् । यद्वा । तेजति । तिज निशाने । वाहुलकाद् रन् दीर्घो जस्य च वः ॥

तीव्रकण्ठः । पुं । शूरणे ॥

तीव्रगन्धा । स्त्री । यवान्याम् ॥

तीव्रज्वाला । स्त्री । धातक्याम् ॥

तीव्रवन्धः । पुं । तामसहर्त्तौ ॥

तीव्रवेदना । स्त्री । यातनायाम् ॥ तीव्रा चासौ वेदना च ॥

तीव्रा । स्त्री । कटुरोहिण्याम् ॥ राजिकायाम् ॥ गण्डदूर्वायाम् ॥ नदीविशेषे ॥ महाज्योतिष्मत्याम् ॥ तरदीवृक्षे ॥ तुलस्याम् ॥

तु । अ । पादपूरणे ॥ भेदे ॥ समुच्चये ॥ अवधारणे ॥ पक्षान्तरे ॥ नियोगे ॥ प्रशंसायाम् ॥ विनिग्रहे ॥ उत्साहक्षानिहत्यर्थे ॥ तुदति । तुद

व्यथने। मितद्वादित्वात् डुः ॥

तुकाक्षीरी। स्त्री। वंशरोचनायाम्॥

तुगा। स्त्री। वंशरोचनायाम्॥

तुगाक्षीरी। स्त्री। वंशरोचनायाम्॥ तङ्क्षेदेपीतिकश्चित्॥

तुङ्गः। पुं। पुन्नागद्रुमे॥ पर्वते॥ बुधग्रहे॥ नारिकेले॥ गण्डके॥ योगविशेषे॥ यथा। अजवृषभमृगाङ्गनाकुलीरा झषवणिजौच दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेस्तनीचाः॥ अपिच। स्वर्याश्रयान् क्रियवृषमृगस्त्रीकुलीरान्त्ययूके दिगवङ्गीन्द्रद्वयतिथिशरान् सप्तविंशांश्च विंशान्। अंशानेतान् वदति यवन श्चान्यतुङ्गान् सुतुङ्गांस्तानेवांशान् मदनभवनेष्वाह नीचान् सुनीचानिति॥ न। किञ्जल्के॥ त्रि। उन्नते॥ उग्रे॥ प्रधाने॥ तुञ्ज्यते। तुजिहिंसायाम्। घञ्। न्यङ्क्वादिः॥

तुङ्गकः। पुं। पुन्नागवृक्षे॥

तुङ्गारण्यम्। न। तीर्थविशेषे॥

तुङ्गभद्रः। पुं। मदोत्कटे॥

तुङ्गभद्रा। स्त्री। दक्षिणदेशप्रसिद्धे सरिद्विशेषे॥ अस्याजलगुणा यथा। तज्जलं निर्मलं स्निग्धं स्वादुप्रोक्तं तथा गुरु। कफपित्तास्रदं प्रायः सात्म्यं मेधाकरं मतमिति॥

तुङ्गशेखरः। पुं। पर्वते॥

तुङ्गा। स्त्री। वंशलोचनायाम्॥ शम्याम्॥ अनुष्टुप्छन्दोभेदे॥ द्विगुणनगणकर्णैः सुललितवसुवर्णैः। रसिकविदितरङ्गा भवतिकिलतुङ्गा॥ यथा। विहरसि ममचित्ते मदनविशिखकृत्ते। न नयनविषयत्वं व्रजसि सदपिमेत्वम्॥

तुङ्गी। पुं। उच्चस्थानस्थिते ग्रहे॥

तुङ्गिनी। स्त्री। महाशतावर्याम्॥

तुङ्गी। स्त्री। हरिद्रायाम्॥ शाकभेदे॥ वर्बरायाम्॥ तुञ्जति। तुजि०। अच्। न्यङ्क्वादिः। गौरादि ङीष्॥ निशायाम्॥

तुङ्गीपतिः। पुं। चन्द्रे॥ इ० त्रि०॥

तुङ्गीशः। पुं। शिवे॥ कृष्णे॥ सूर्ये॥

तुच्छः। त्रि। शून्ये॥ अल्पे॥ हीने॥ न। तुषाकजे। भुसइतिभूसा इतिच भाषा॥ तोदनं तुद्। संपदादित्वाद्भावे क्विप्। तुदाव्ययया छ्यति। छोच्छेदने। मूलविभुजादित्वात् कः॥ तुदं द्यति वा। आतइतिकः॥

तुच्छद्रुः। पुं। एरण्डवृक्षे॥

तुच्छधान्यकम्। न। पुलाके॥

तुच्छा। स्त्री। तुत्थायाम्। नीलीवृक्षे॥

तुञ्जः। पुं। दैत्ये॥ तुञ्जते। तुजिहिं

सायाम् । पचाद्यच् ॥

तुण्टेट् । पुं । दैत्येभ्योपिशक्ते ॥ ईश० । क्विप् । तुण्डेभ्यः ईट् ॥

तुटुमः । पुं । रन्ध्रबभ्रौ । उन्दुरौ ॥ इति त्रिकाण्डशेषः ॥

तुडिः । स्त्री । तोडने ॥ तोडति । तुडृ तोडने । सर्व्वधातुभ्य इन् ॥

तुणिः । पुं । नन्दिवृक्षे । तूणी इतिभाषा ॥ तूणयति । तूणसङ्कोचे । अच इः । पृषोदरादिः ॥ तूणीवृक्षः कटुः पाके कषायो मधुरो लघुः । तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तजित् ॥

तुण्डम् । न । आनने । वक्त्रे ॥ तुण्डति । तुडि तोडने । पचाद्यच् ॥

तुण्डकेरिका । स्त्री । कार्पास्याम् ॥

तुण्डकेरी । स्त्री । विम्बिकायाम् । कुन्दुरु इतिकंदूरी इतिचख्यातौषधौ । तेलाकुचा इतिगौडभाषा ॥ प्रशस्तं तुण्डम् । प्रशंसायां कन् । तुण्डकमीर्त्ते । कर्मण्यण् ॥

तुण्डिः । पुं । मुखे ॥ चञ्चौ ॥ तुम्बकूप्याम् ॥ स्त्री । नाभौ ॥ तुण्डेरिन् ॥

तुण्डिः । स्त्री । विम्बफलायाम् ॥ दत्तायां माभौ । टूंडी इतिसूंडी इतिचभाषा ॥ तुण्डते । तुडि० । सर्व्वधातुभ्य इन् ॥

तुण्डिका । स्त्री । विम्बिकायाम् ॥ माभौ । तुम्बकूप्याम् । टूंडी इतिसूंडी इतिचभाषा ॥

तुण्डिकेरी । स्त्री । कर्पास्याम् । समुद्रान्तायाम् । कपास इतिभाषा ॥ विम्बिकायाम् ॥ तुण्डंचञ्चुरस्तियस्याः । अतइतिठन् । तुण्डिकान् शरीराणि ईरयति । ईर० । कर्मण्यण् ॥

तुण्डिकेशी । स्त्री । विम्बिकायाम् ॥

तुण्डिभः । त्रि । वृद्धनाभौ ॥ अतिशयिता तुण्डि वृद्धानाभिरस्य । तुन्दिवलिवटेर्भ इतिसूत्रे मूर्द्धन्योपधोयंतुण्डिरिति माधवः ॥

तुण्डिलः । त्रि । वृद्धनाभौ ॥ तुण्ड्यते । तुडि० । सर्व्वधातुभ्य इन् । ततः सिध्मादित्वाल्लच् ॥ मुखरे ॥ तुण्ड्यते । तुडि० । सलिकलीति इलच् ॥

तुत्थः । पुं । अग्नौ ॥ न । अञ्जनभेदे । मयूरके । शिखिग्रीवे ॥ तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणञ्च तत् ॥ तुत्थकं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् ॥ विषाश्मकुष्ठकण्डूघ्नं खर्परञ्चापि तद्गुणम् । अस्य शोधनम् । विष्ठया मर्दयेत् तुत्थं मार्जारककपोतयोः । दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे ततः ॥ पुटंद

आपुटं चाद्रे ईयं तुत्थविमुद्दये ॥

तुत्थति । तुदव्यथने । पाहतुदीति थक् ॥ तुत्थयतिवा । तुत्थ आवरणे । अच् ॥ कर्परीतुत्थे ॥

तुत्थकम् । न । तुत्थे ॥

तुत्था । स्त्री । नील्याम् ॥ सूक्ष्मैलायाम् ॥ महानील्याम् ॥

तुत्थाञ्जनम् । न । अञ्जनप्रभेदे । शिखिग्रीवे । वितुन्नके ॥ तुत्थयति तुत्थरतेवा । तुत्थ० । अच् एरच्वा । तुत्थञ्च तदञ्जनञ्च ॥

तुन्तुभः । पुं । सर्षपे ॥ तुदति । तुद० । बाहुलकादुभच् । पृषोदरादिः ॥

तुन्दम् । न । उदरे । कुक्षौ ॥ तुदति । तुद० । इगुपधेतिकः । आच्छीनद्योरित्यत्र नुमिति योगविभागान्नुम् ॥ यद्वा । तर्णोत्ययम् । तृणु अदने । अव्दादयश्चेतिसाधु ॥ त्रि । तुन्दिले ॥ तुन्दमस्त्यस्य । अर्शआदिभ्योच् ॥

तुन्दकूपिका । स्त्री । } नाभौ ॥
तुन्दकूपी । स्त्री । }

तुन्दपरिमृजः । त्रि । अलसे । मन्दे ॥ तुन्दमुदरं परिमार्ष्टि । मृजूशुद्धौ । तुन्दशोकयोः परिमृजापनुदोरिति कः ॥

तुन्दवान् । त्रि । तुन्दिले ॥ अतिशयितं तुन्दमुदरमस्य । तुन्दादिभ्यइलच्चेति चान्मतुप् ॥

तुन्दिः । पुं । गन्धर्वविशेषे ॥ न । उदरे ॥ स्त्री । नाभौ ॥

तुन्दिकः । त्रि । बृहत्कुक्षौ । तुन्दिले ॥ अतिशयितंतुन्दमुदरमस्य । तुन्दादिभ्य इलच्चेतिचकाराट्ठन् ॥

तुन्दिका । स्त्री । नाभौ ॥

तुन्दी । त्रि । पीनकुक्षौ । पिचण्डिले । तुन्दिले ॥ अतिशयितं तुन्दमस्यास्य । तुन्दादिभ्यइलच्चेति चकारादिनिः ॥

तुन्दिभः । त्रि । तुण्डिभे ॥ तुन्दिर्वृद्धा नाभिरस्त्यस्य । तुन्दिवलिवटेर्भः ॥

तुन्दिलः । त्रि । दृहत्कुक्षौ । पिचिण्डिले ॥ अतिशयितं तुन्दमस्त्यस्य । तुन्दादिभ्यइलच्चेति इलच् ॥

तुन्दिलफला । स्त्री । त्रपुष्याम् ॥

तुन्नः । पुं । नन्दीवृक्षे ॥ तुद्यते । तुद० । क्तः ॥ त्रि । छिन्ने । द्विधाकृते ॥ व्यथिते ॥

तुन्नकः । पुं । तुन्ने ॥

तुन्नवत् । त्रि । बहुच्छिद्रे ॥

तुन्नवायः । पुं । सौचिके । सूजी इति भाषाप्रसिद्धे ॥ तुन्नंच्छिन्नं वयति । वेञ्तन्तुसन्ताने । ह्वावामश्चेत्यण् ॥

तुभः । पुं । छागे ॥ तोभते । तुभहिंसायाम् । इगुपधेतिकः ॥

तुमुलः । पुं । कलिद्रुमे ॥ व्याकुले त्रि ॥ न । रणसङ्कुले ॥ तवनम् तौति वा । तुःसौत्रः । बाहुलकान्मुलक ॥ सङ्कीर्णे । सङ्कुले ॥

तुम्बः । पुं । तुम्ब्याम् । अलाब्वाम् ॥ तुम्बतिरुचिम् । तुबिअर्दने । अच् ॥

तुम्बकः । पुं । तुम्बे ॥ स्वार्थेकः ॥ राजालाबौ ॥

तुम्बा । स्त्री । बृहत्फलायांतुम्ब्याम् ॥ वर्त्तुलालाब्वाम् ॥ गवि ॥

तुम्बिः । स्त्री । अलाब्वाम् ॥ तुम्बतिरुचिम् । तुबि० । सर्वध तुम्ब्यइन् ॥

तुम्बिका । स्त्री । अलाब्वाम् ॥ कटुतुम्ब्याम् ॥

तुम्बिनी । स्त्री । कटुतुम्ब्याम् ॥

तुम्बी । स्त्री । अलाब्वाम् । तूंबी इति भाषा ॥ तुम्बतिरुचिम् । तुबिअर्दने । अच् । गौ० ङीष् ॥ इवन्तत् कृदिकारादिति ङीष्वा ॥ कुलिकवृत्ते इतिरत्नमाला ॥

तुम्बीपुष्पम् । न । अलाबूपुष्पे । लता म्बुजे ॥

तुम्बुकम् । न । अलाबूफले । तूंवा इतिभाषा ॥ पुं । अलाब्वाम् ॥

तुम्बुरी । स्त्री । शुन्याम् । कुक्कुर्याम् ॥ धन्याके ॥ इतिमेदिनी ॥

तुम्बुरः । पुं । अर्हदुपासकविशेषे ॥ गन्धर्वप्रभेदे । स्वर्गगायके ॥ वृक्षविशेषे । शूलघ्ने । तीक्ष्णफले ॥ लघ्वादि (।ऽ) त्रिकले ॥ न । तुम्बुरुणि ॥ तिन्दुकीफले ॥ तुम्बुरु प्रथितं तिक्तं कटु पाकेपि तत्कटु । रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च ॥ वातश्लेष्माक्षिकर्णौष्ठशिरोरुग्गुदजकृमीन् । कुष्ठशूलारुचिश्वासप्लीहकृच्छ्राणि नाशयेत् ॥

तुरम् । न । तर्णे । शीघ्रे ॥ वेगे ॥ त्रि । तरति ॥ तुतोर्णे । तुरत्वरणे । कः ॥

तुरगः । पुं । चित्ते ॥ वाजिनि ॥ तौरगम् । तुरत्वरणे । घअर्थेकः । बाहुलकाद्घञ्वा । संज्ञापूर्वकत्वाद्गुणः । तुरेण तुरयावा गच्छति । अन्येभ्योपीतिडः ॥

तुरगगन्धा । स्त्री । अश्वगन्धायाम् ॥

तुरगब्रह्मचर्यकम् । न । अभावात् स्त्रीपरित्यागे ॥

तुरगलीलकः । पुं । तालप्रभेदे ॥ द्रुतद्वन्द्वं विरामान्तं लघुस्तुरगलीलके ॥

तुरगस्कन्धः । पुं । तुरगाणां समूहे ॥ नरकरितुरगाणांस्कन्धश्च ॥

तुरगी । त्रि । सादिनि । अश्वारोहे ॥

तुरगी । स्त्री अश्वगन्धायाम् ॥ वडवायाम् ॥

तुरङ्गः । पुं । अश्वे । घोटके ॥ चित्ते ॥ तुरेण गच्छति । गमेः सुपिवाच्य इति खच् । खच्चवाडित् । अरुर्द्विषदिति मुम् ॥ चतुष्कले (ऽ।) मध्यगुरोः संज्ञायाम् ॥

तुरङ्गकः । पुं । हस्तिघोषायाम् । घोषकाकृतौ ॥

तुरङ्गद्वेषिणी । स्त्री । महिष्याम् ॥

तुरङ्गप्रियः । पुं । यवे ॥

तुरङ्गमः । पुं । अश्वे ॥ तुरेण गच्छति । गम्लृ० । गमेरितिखच् । अरुर्द्विषदजन्तस्य मुम् ॥

तुरङ्गवक्त्रः । पुं । किन्नरे ॥ तुरङ्गस्येव वक्त्रमस्य ॥

तुरङ्गवदनः । पुं । किन्नरे । किम्पुरुषे ॥ तुरङ्गस्येव वदनमस्य ॥

तुरङ्गारिः । पुं । करवीरे ॥

तुरङ्गारोहः । त्रि । अश्वारोहे । सादिनि ॥ तुरङ्गमारोहति । वहेः कर्मण्यण् ॥

तुरङ्गिका । स्त्री । देवदालीलतायाम् ॥

तुरङ्गी । त्रि । अश्वारोहे ॥ मत्वर्थे इनिः ॥

तुरङ्गी । स्त्री । अश्वगन्धायाम् ॥ घोटिकायाम् ॥ वडवायाम् ॥

तुरायणम् । न । व्रतविशेषे ॥ असङ्गगमने ॥ तुतोर्त्ति । तुत्वरणे । कः । तुरस्यायनम् । पूर्वपदादितिणत्वम् । त्वरितस्यैवगमनमसङ्गं भवति ॥

तुराषाट्-ड् । पुं । आखण्डले । इन्द्रे ॥ तुतोर्त्ति । तुर० । इगुपधज्ञाप्रीकिरःकः । तुरं वेगवन्तं साहयति अभिभवति अधेः प्रसहने प्रसहनमभिभव इतिवचनात् । सहेः ण्विः । सहेः साडः स इति षत्वम् । अन्येषामपीतिपूर्वपदस्य दीर्घः । आकृतिगणत्वाद्वा ॥

तुरिः । स्त्री । तुर्याम् ॥ तुतोर्त्ति । तुर० । इन् ॥

तुरी । स्त्री । तन्तुवायस्य काष्ठनिर्मिते उपकरणविशेषे । तुल्याम् ॥ कृदिकारादितिङीष् ॥

तुरीयम् । न । ब्रह्मणि । सर्वाधारभूतेऽनुपहितचैतन्ये ॥ घनदृष्टान्तेऽवच्छिन्नाकाशयोर्जलगत प्रतिबिम्बाकाशयोश्च आधारानुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितचैतन्यं तत् तुरीयमित्युच्यते । आधारश्चासौ अनुपहितश्चासौ आकाशश्च सतथा तद्वदितियावत् । यद्यप्याकाशस्य घनाश्रयत्वं जलाश्रयत्वं वा नास्ति तदनारम्भकत्वात् तथाप्यवकाशमन्तरेण तयोः स्थित्यनुपपत्तेस्तदाधारत्वमस्तीतिद्रष्टव्यम् । अत्र

चैतन्यस्य तुरीयत्वं विश्वाद्यपेक्षया द्र
ष्टव्यम् ॥ त्रि । चतुर्थे ॥ यथा तुरीयं
वाचो मनुष्या वदन्तीति । वाचस्तु
रीयत्वं पराद्यपेक्षया कुलगुरूप
देशात् ज्ञातव्यम् ॥ चतुर्णां पूरणः
चतुरश्छयतावाद्यक्षरलोपश्चेतिछः ॥

तुरीयवर्णः । पुं । शूद्रे ॥ तुरीयश्चासौ
वर्णश्च ॥

तुरुष्कः । पुं । गन्धद्रव्यविशेषे । धूने ।
सिल्हके । पीतसारे । शिलारस इ
ति भाषा ॥ म्लेच्छजातिविशेषे
तुरक इति भाषा ॥ देशविशेषे । तुर
कस्थान इतिभाषा ॥ श्रीवासे ॥ तु
तोर्त्ति । तुर० । बाहुलकादुस्क् गुणा
भावश्च । स्वार्थे कन् ॥ सरलद्रुमे
इतिकश्चित् ॥

तुर्य्यः । त्रि । तुरीये । चतुर्थे ॥ चतुर्णां
पूरणः । चतुरश्छयतावितियत् आ
द्यक्षरलोपश्च ॥

तुर्वसुः । पुं । म्लेच्छानां राशि । म्लेच्छाधा
रपरे । ययातिराजस्य पुत्रविशेषे ॥

तुलजापुरम् । न । दक्षिणदेशप्रसिद्धे
दुर्गास्थाने ॥

तुलसी । स्त्री । स्वनाम्ना प्रसिद्धायां
वैष्णव्याम् । वृन्दायाम् । पर्णासे ॥
तुलसी कटुका तिक्ता हृद्योष्णा
दाहपित्तकृत् । दीपनी कुष्ठकृच्छ्रा



स्रपार्श्वरुक् कफवातजित् ॥ शुक्ला
कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्त्ति
ता ॥ तुलास्वसादृश्यम् स्यति ।
अस्तु क्षेपणे । कर्मण्यण् । ङीप् । श-
कन्ध्वादिः ॥ यस्या देव्याः स्तुलाना
स्ति विश्वेषु च निखिलेषु च । तुलसी
तेन विख्याता तेति देवीभागवतम् ॥ * ॥
यद्धर्मकर्म्म कुरुते मनुजः पृथिव्यां
नारायणप्रियतमां तुलसीं विना च ।
तत् सर्वमेव विफलं भवति द्विजेन्द्र
पश्यणो जिनहितुष्यति देवदेवः
॥ * ॥ तुलसीकाष्ठनिर्माणमालां
गच्छन्ति ये नराः । पदे पदेऽश्वमेधानां
लभन्ते निश्चितं फलम् ॥ प्रभाते तु
लसीं दृष्ट्वा स्वर्णदानफलं लभेत् ।
मालतीं यूथिकां कुन्दं माधवीं के
तकीं तथेत्यादि ब्रह्मवैवर्त्तपुराणे
श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥

तुलसीद्वेषा । स्त्री । वर्वर्याम् । सुरसा
याम् ॥

तुला । स्त्री । सादृश्ये ॥ माने ॥ गृहा-
णां दारुबन्धाय पीठिकायाम् । उप
रिस्थाप्यदारुवोधारभूते स्तम्भाग्रपीठे
॥ पलशते ॥ भाण्डे ॥ सप्तमराशौ ।
वृके । धटे ॥ अस्य कालेनचक्राङ्कि
तैलशाखिकलम् । वृषतुरङ्गगजाङ्ग-
विक्रमो विजयसुरार्च्चनदाननतः पु

मान् । शशिनि तौलिगते बहुदार भाग् विभवसञ्चितचित्रितविक्रमः ॥ तुलालग्नजातस्यफलम् । तुलालग्ने पुमान्जातः सुधीः सत्कर्मतत्परः । विद्वान् सर्वकलाविज्ञो धनाढ्यो जन पूजितः ॥ तोल्यतेऽनयावा तोलनं वा । तुलउन्माने । भिदाद्यङ् । अतलोपमाभ्यामिति निर्देशागुणाभावः ॥ * ॥ परीक्षाविशेषे ॥ यथा हलायुधः । ब्राह्मणस्यधटोदेयः क्षत्रियस्यहुताशनः । वैश्यस्यसलिलं देयं शूद्रस्यविषमेवतु ॥ साधारणः समस्तानांकोषःप्रोक्तो मनीषिभिः । विषवर्ज्जं ब्राह्मणस्य सर्वेषान्तुतुलास्मृता ॥

तुलाकोटिः । स्त्री । मानभेदे ॥ अर्बुदे ॥ नूपुरे ॥ तुलां तुलयावा कोटयति । कुटपरितापे । ण० । अचइः ॥ तुलाकारकोटिरग्रमस्या ॥

तुलाकोटी । स्त्री । तलाकोटी ॥

तुलाकोषः । पुं । तुलापरीक्षायाम् ॥

तुलाधरः । पुं । तुलाराशौ ॥ तुलागुणे ॥ त्रि । वाणिजके ॥ तुलायाः धरो-धारकः ॥

तुलापुरुषदानम् । न । तुलादानइतिलोकप्रसिद्धे दाने । यथा । आदौतुलापुरुषसंज्ञितमितिच । षोडशमहादानान्तर्गतदानविशेषे ॥

तुलामानम् । न । स्वर्णादीनांपरिच्छेदार्थंक्रियमाणे । कांटा इतिभाषाप्रसिद्धे ॥

तुलाबीजम् । न । गुञ्जायाम् ॥

तुलिः । स्त्री । तुर्य्याम् ॥

तुलिका । स्त्री । खञ्जनिकायाम् ॥

तुलिकायन्त्रम् । न । ज्योतिर्विदांयन्त्रविशेषे ॥

तुलितः । त्रि । तुलया परिच्छिन्ने । तुलाइति तुलगया इतिचभाषा ॥ उपमिते ॥ समीकृते ॥ तुलयतेस्तक्रोतेतर्य्यन्तम् कर्मणिक्तः ॥

तुलिनी । स्त्री । }
तुलिफला । स्त्री । } शाल्मलिवृक्षे ॥

तुली । स्त्री । तुर्य्याम् । तन्तुवायकाष्ठविशेषे ॥

तुल्यः । त्रि । सदृशे । समे । समाने ॥ तुलया सम्मितः । नौवयोधर्म्मेत्यादिना यत् ॥

तुल्यपानम् । न । बहुभिरात्मीयैर्जनैः सहमिलित्वा एककालेकृते पाने । सपीतौ ॥ इत्यमरः ॥ तुल्यञ्चतत् पानञ्च ॥

तुल्ययोगिता । स्त्री । अलङ्कारविशेषे ॥ यथा । नियतानां सकृद्धर्मः सापुनस्तुल्ययोगिता ॥ नियतानां प्राक-

रश्मिकानामेवाप्राकरणिकानामेव वा । क्रमेणोदाहरणम् । पाण्डुक्षामंवदनं हृदयं सरसं तवालसञ्च वपुः । आवेदयति नितान्तं क्षेत्रियरोगं सखिहृदन्तः ॥ कुमुदकमलनीलनीरजालि ललितविलासजुषोर्दृशोःपुरःका । अमृतममृतरश्मिरम्बुजन्मप्रतिहतमेकपदे तवाननस्य ॥ अन्यदपि । प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यतेयत्र सा मता तुल्ययोगितेति ॥

तुवरः । पुं । न । कषायरसे ॥ तवति हिनस्ति रोगान् । तुरितिसौत्रोधातुः । छित्वरच्छत्वरेत्यादिना ष्वरच् ॥ धान्यविशेषे । तुवरयावनाले ॥ त्रि । कषायरसवति ॥

तुवरयावनालः । पुं । धान्यविशेषे । तुवरे । रक्तयावनाले ॥ तुवरोयावनालस्तु कषायोष्णो विरेचकः । सङ्ग्राही वातशमनो विदाही शोषकारकः ॥

तुवरिका । स्त्री । तुवर्याम् । आढक्याम् । तवर इति अरहर इतिच भाषा ॥ तुवरोऽस्त्यस्याः । अतइनिठनाविति ठन् । टाप् ॥ सुराष्ट्रमृत्तिकायाम् । फिटकरी इतिभाषा ॥

तुवरी । स्त्री । आढक्याम् । अरहर इति तूर इतिचभाषा ॥ काक्ष्याम् । सौराष्ट्रमृदि । फिटकरी इतिभाषा ॥ तोरी इतिप्रसिद्धे धान्ये ॥ यथा । तुवरी ग्राहिणी शीता लघ्वी कफविषास्त्रजित् । तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोठकृमि प्रणुत् ॥

तुवरीतैलम् । न । तुवर्याः स्नेहे ॥ स्नेहे तैलम् । तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् । वह्निकृद्विषहृत् कण्डूकुष्ठकोष्ठकृमिप्रणुत् ॥ मेदोदोषापहञ्चापि व्रणशोथहरं परम् ॥

तुवरीशिम्बः । पुं । रक्तचक्रमर्द्दके ॥

तुविः । स्त्री । तुम्ब्याम् ॥ इ० श० ला ॥

तुषः । पुं । धान्यत्वचि ॥ विभीतकद्रुमे ॥ तुष्यति । तुषतुष्टौ । इगुपधेति कः ॥

तुषग्रहः । पुं । वह्नौ ॥

तुषधान्यम् । न । मुद्गादिषु ॥ मुद्गोमाषो राजमाषो निष्पावश्च मकुष्ठकः । चणकाढकिमङ्गल्या खितुटः सकुलायकः ॥ तुषधान्यानिप्रोक्तानि वैद्यशास्त्रे भिषग्वरैः ॥

तुषसारः । पुं । अग्नौ ॥ इतिशब्दमाला ॥

तुषानलः । पुं । तुषजाग्नौ । कुकूले ॥

तुषाम्बु । न । तुषोदके ॥

तुषारः । पुं । शीकरे ॥ हिमे ॥ देश

विशेषे ॥ हिमभेदे ॥ कर्पूरभेदे ॥ त्रि । शीतले ॥ तोषयति । तुषेरन्तर्भावितण्यर्थात् कर्मेः किद्दित्यनुवृत्तौ तुषारादयश्चेत्यारम् ॥

तुषारकालः । पुं । हेमन्ते ॥

तुषारकिरणः । पुं । चन्द्रे ॥

तुषाराम्बु । न । तौषारे ॥

तुषितः । पुं । गणदेवताप्रभेदे ॥ कृचेस्तनयस्य यज्ञाख्यस्य विष्णोर्द्वादशसुपुत्रेषु ॥ तेयथा । तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः । इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट् ॥ तुषितानामतेदेवा आसन् स्वायम्भुवान्तरे ॥ तुष्यति । तुष० । कृचिचिषिकुषिकुटिभ्यः कितजिति वाहुलकात् कितच् ॥ यद्वा । तोषणं तुट् । संपदादित्वात् क्विप् । ततस्तारकादित्वादितच् ॥ प्राणापानावुदानश्च समानो व्यानएवच । चक्षुः श्रोत्रं रसो घ्राणः स्पर्शोबुद्धिर्मनस्तथा । द्वादशैतेह्नितुषितादेवाः स्वारोचिषेन्तरे ॥ केषाञ्चिन्मते षट्त्रिंशत्तुषितामताः ॥

तुषोत्थम् । न । तुषोदके ॥ इतिराजनि० ॥

तुषोदकम् । न । काञ्जिके ॥ काञ्जिकप्रभेदे ॥ अस्यलक्षणं यथा । तुषोदकंयवैरामैः सतुषैः शकली कृतैः



। यवैरदकसहितैः सन्धानवर्गोक्तत्वात् । तुषाम्बुदीपनं हृद्यं पाण्डुकृमिगदापहम् । तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्वस्तिशूलनुत् ॥

तुष्टः । त्रि । परितृप्ते । सन्तोषविशिष्ट । प्राप्तपरितोषे ॥ स्त्रियोजारेणतुष्यन्ति गावः स्वच्छन्दचारतः । कुञ्जराः पांशुवर्षेण ब्राह्मणाः परनिन्दया ॥ तुष्यतेस्म । तुष० । क्तः ॥

तुष्टिः । स्त्री । तोषे । अधिगतार्थादन्यत्र तुच्छत्त्वबुद्धौ ॥ भोगेष्वेतावताऽलमितिवुद्धौ ॥ साचानन्तपत्नी । यथा । अनन्तपत्नीतुष्टिश्चपूजितावम्बिकाभवत् । ययाविना नसन्तुष्टाः सर्वेलोकाश्चसर्वतइति श्रीदेवीभागवतम् ॥ नवधातुष्टिः । ताः परिगणयति । आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभागाख्याः । वाह्याविषयोपरमात् पञ्चचनवतुष्टयोऽभिमताः ॥ प्रकृतिव्यतिरिक्त आत्मास्तीति यश्रुततोऽस्यश्रवणमननेऽस्तः । ततोविवेकसाक्षात्कारायतु असदुपदेशतुष्टो न प्रयतते तस्यचतस्र आध्यात्मिकास्तुष्टयो भवन्ति । प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिकाः । कास्ता इत्यतआह । प्रकृत्युपादानकालभा

गाख्याः। प्रकृत्याद्दिराख्यायासां ता स्तयोक्ताः। प्रकृत्याद्यर्थविभागस्तत्तच्छब्दार्थ निरूपणे यथास्थानं द्रष्टव्यः॥ वाह्या दर्शयति। वाह्याविषयोपरमादित्यादिना। वाह्यास्तुष्टयो विषयोपरमात् पञ्च। याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता वाह्याः आत्मज्ञानाभावेऽनात्मानमधिकृत्यप्रवृत्ताः. ताश्चवैराग्येसतिभवन्तितुष्टयइतिवैराग्यहेतुपञ्चकत्वाद्वैराग्याणि पञ्च तत पञ्चत्वात् तुष्टयःपञ्चेति। उपरम्यतेऽनेनेत्युपरमोवैराग्यम् विषयादुपरमोविषयोपरमस्तस्मात्। विषया भोग्याःशब्दादयःपञ्च उपरमाअपि पञ्च। तथाहि अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः एका पारपारापारपारतःपारानुत्तमाम्भोत्तमाम्भसंज्ञकाः पञ्चोपरमाभवन्ति। एकापाराद्यर्थविभागश्चयथास्थानं द्रष्टव्यः। तदेवमाध्यात्मिकाभिश्चतसृभिर्वाह्याभिश्चपञ्चभिर्नव तुष्टयोऽभिहिताःसाङ्ख्याचार्यैः॥ तोषणम्। तुष०। क्तिन्॥ तुष्टिर्नुरक्तता. र्थस्यकृतार्थोस्मीतियामतिः॥

तुष्टिदानम्। न। पारितोषिके॥ तुष्टि दानमेव चाराणां छिवेतनम् तेहि तल्लाभात् स्वामिकार्येष्वतीव त्वरयन्ते इति नीतिवाक्यामृतम्॥

तुष्टुः। पुं। कर्णमणौ॥ इति शब्दचन्द्रिका॥

तुष्टुषितः। त्रि। स्तोतुमभिप्रेते॥

तुहिनम्। न। हिमे॥ चन्द्रतेजसि॥ तोहति तुह्यतेऽनेनवा। तुहिर् अर्दने। वेपितुह्योर्ह्रस्वश्चेतीनन्प्रत्ययः लघूपधगुणे कृतेह्रस्वश्च॥

तुहिनांशुः। पुं। चन्द्रे॥ कर्पूरे॥

तुहिनांशुतैलम्। न। कर्पूरतैले॥

तूणः। पुं। उपासङ्गे। तूणीरे। निषङ्गे॥ तूण्यतेऽनेन। तूणसङ्कोचने। चु०। घञ्॥ तूणयति वा। अच्॥

तूणकम्। न। अतिशर्करीसंज्ञकच्छन्दो विशेषे॥ यथा। तूणकं समानिका पदद्वयं विनान्तिमम्॥ यथा। सा सुवर्णकेतकं विकाशि भृङ्गपूरितं पञ्चवाणवाणजालपूर्णहेमतूणकम्। राधिकावितर्क्य माधवाद्यमासिमाधवे मोहमेति निर्भरं त्वया विनाकलानिधे॥

तूणा। स्त्री। इषुधौ। तूणे॥ टाप्॥

तूणी। पुं। नन्दीवृक्षे। पीतके॥ त्रि। तूणयुक्ते॥

तूणी। स्त्री। तूणे॥ नील्याम्॥ तूणम्

तेऽनया । तूणपूरणे । इत्यस्येतिघ ञ् । गौरादित्वात् ङीष् ॥

तूणीकः । पुं । नन्दीवृक्षे ॥

तूणीरः । पुं । तूणे । निषङ्गे ॥ तूणी शरैः सङ्कोचं राति । रादाने आदा नेच । आतोनुपेतिकः ॥ यद्वा । तूण्यते । तूण० बाहुलकादीरन् ॥

तूतकम् । न । तूत्थे । तूतिया इति भाषा ॥

तूदः । पुं । तूदे । अश्वत्थाकारे पार्श्व पिप्पल इति ख्याते तूत इतिच प्रसिद्धे वृक्षे ॥ अस्यफलगुणाः । तूदं पक्वं गुरु स्वादु हिमं पित्तानिलापहम् । तदेवामं गुरु सर मत्युष्णं रक्तपित्तकृत् ॥ तूदति । तूद्व्यथने । इगुपधेतिकः । पृषोदरादिः ॥

तूरम् । न । वाद्यसामान्ये ॥ ताड्यमाने पटहादौ ॥

तूरी । स्त्री । धत्तूरे ॥ इतिभावप्रकाशः ॥

तूर्णम् । न । शीघ्रे । त्वरे ॥ त्रि । त इति ॥ त्वरतेस्म । ञित्वरासम्भ्रमे । गत्यर्थाकर्मकेतिकर्तरिक्तः । श्वीदि त्वरसङ्घुषास्वनामितीड भावपक्षे ज्वरत्वरेत्यूठ् । रदाभ्यामितिणत्वम् ॥

तूर्णिः । पुं । मले ॥ त्वरायाम् ॥ त्वरते त्वर्यते वा । ञित्वरा० । वह्निश्रि श्रुयुद्रुग्लाहात्वरिभ्यो नित्तिनिः ॥

तूर्य्यम् । न । वाद्ये ॥ वाद्यप्रभेदे ॥ आदिगुरु (ऽ।) त्रिकले ॥

तूर्य्यखण्डः । पुं । ढ्रगडवाद्ये ॥

तूलम् । न । ब्रह्मदारुणि । ब्राह्मणयष्टे । तूदे ॥ आकाशे ॥ पुं । न । पिचौ । निर्वीजकार्पासे । रुयी इति भाषा ॥ तूलयति तूल्यते वा । तूलनिष्कर्षे । इगुपधेतिकः घोषा ॥

तूलकम् । न । तूले ॥

तूलकार्म्मुकम् । न । तूलस्फोटनार्थे धनुषि । पिञ्जले । तूलधनुषि ॥

तूलचापः । पुं । } तूलकार्मुके । धुनक इति भाषा ॥
तूलधनुः । न । }

तूलनालिका । स्त्री । पिञ्जिकायाम् । पाँइज इति गौडभाषा ॥

तूलनाली । स्त्री । तूलनालिकायाम् ॥

तूलपिचुः । पुं । तूले ॥

तूलवृक्षः । पुं । शाल्मलीवृक्षे ॥

तूलशय्या । स्त्री । तूलिकायाम् ॥ तूलस्यशय्या । तूलेननिर्मिताशय्यावा । शाकपार्थिवादिः ॥

तूलशर्क्करा । स्त्री । कार्पासबीजे । विनौरा इति विनौला इति कपासिआ इतिचभाषा ॥

तूलसेचनम् । न । कर्त्तने । सूत्रकर्त्तने । कातना इतिभाषा ॥ तूल०शु०च्चा ॥

तूला । स्त्री । कार्पासाम् ॥ वर्त्त्याम् ॥

तूलिः । स्त्री । तूल्याम् ॥ स्वनामख्याते चित्रकरोपकरणे । ईषिकायाम् ॥ तूलति । तूल० । इगुपधात्किदि-मीन् ॥

तूलिका । स्त्री । शय्योपकरणे । तोसक इति भाषा ॥ आलेख्यसमलेखन्याम् । कूर्चिकायाम् ॥ यथा । जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि । स्वयमेव समालोक्य प्रीणाति भगवान् शिवः ॥ आत्ममये महति पटे विविधजगच्चित्रमात्मनालिखितम् । स्वयमेव केवलमसौ पश्यन् प्रमुदं प्रयाति परमात्मेति ॥ ईषिकायाम् । वीरणादिशलाकायाम् ॥ सुवर्णादेरावर्त्तनपरीक्षणार्थं निक्षिप्य मायायां शलाकायाम् ॥ तूलति तूल्यते वा । तूल० । क्वुन् ॥

तूलिनी । स्त्री । शाल्मलिद्रुमे ॥ शब्दरत्नाकरे ॥

तूलिफला । स्त्री । शाल्मलौ ॥

तूली । स्त्री । नील्याम् ॥ वर्त्त्याम् ॥ तूलिकायाम् ॥ चित्रलेखन्याम् । चित्रसाधनद्रव्ये । कूर्चिकायाम् ॥ ङीष् ॥

तूबरः । पुं । काले ऽश्मश्रुपुरुषे ॥ शौढाशृङ्गानडुहि । काले ऽजातशृङ्गे गवि ॥ मुखषष्ठ्यञ्जनव्यक्ते ॥ कषाय रसे ॥ तौति । तुः सौत्रोगत्यादौ । बाहुलकाद्वरोदीर्घश्च ॥ यद्वा । तनोति । बाहुलकाट् ऊः । तूश्चासौ वरश्च आच्छादकः ॥

तूबरी । स्त्री आढक्याम् ॥ सौराष्ट्रमृत्तिकायाम् ॥

तूष्णींशीलः । त्रि । तूष्णीके । मौनयुक्ते ॥ तूष्णीं शीलं यस्य ॥

तूष्णीकः । त्रि । मौनयुक्ते । मौनशीले ॥ तूष्णींशीलः । शीलेकोमलोपश्च । केण इति ह्रस्वेन मलोपसामर्थ्यात् अन्यथाऽपमेवषिद्ध्यात् । ऽपि अव्ययानामितिटिलोपेन सिद्धत्वात् ॥

तूष्णीकाम् । अ । मौने ॥ अकच्प्रकरणे तूष्णीमःकाम्वक्तव्यः । भित्त्वा दन्त्यादचःपरः ॥

तूष्णीम् । अ । मौने ॥ तोषणम् । तुषतुष्टौ । बाहुलात् नीम् उपधाया ऊत् ॥ घटाकाशं महाकाशइवात्मानं परात्मनि । विलाप्याखण्डभावेन तूष्णीं भव महामुने इत्युपदेशः ॥

तूस्तम् । न । रेणौ ॥ जटायाम् ॥ तोसति । तुसशब्दे । बाहुलकात् तन् धातोर्दीर्घश्च ॥

तृखम् । न । जातीफले ॥

तृखम् । न । अर्जुने । तृणमाषे ॥ तृ

णविशेषे नडादौ ॥ तृण्यते । तृणु अदने । घञ् । संज्ञापूर्वकत्वाद्गुणो न ॥ यद्वा । तृहति । तृहूहिंसायाम् । तृहेः क्नोहलोपश्च ॥ अग्निचौरभयं रोगो राजपीडा धनक्षतिः । सङ्ग्रहे तृणकाष्ठानां कृते । वस्त्रादिपञ्चके ॥

तृणकन्दः । पुं । कशेरुणि ॥

तृणकाण्डम् । न । तृणानां समूहे ॥ दूर्वादिभ्यःकाण्डः ॥

तृणकुङ्कुमम् । न । सुगन्धद्रव्यप्रभेदे । तृणपुष्पे । गन्धाधिके ॥ कटुत्वमुष्णत्वं कफमारुतशोफकण्डूतिपामाकुष्ठामदोषनाशित्वं परमभास्वरत्वञ्चास्यगुणाः ॥

तृणकुटी । स्त्री । कायमाने । तृणौकसि ॥

तृणकूर्म्मः । पुं । तुम्ब्याम् ॥

तृणकेतुः । पुं । } वंशे ॥
तृणकेतुकः । पुं । }

तृणगोधा । स्त्री । चित्रकोले ॥ कृकलासे ॥

तृणग्रन्थिः । स्त्री । स्वर्णजीवन्त्याम् ॥

तृणग्राही । पुं । नीलमणौ ॥ कपूर इति प्रसिद्धे मणिविशेषे । तृणमणौ ॥

तृणजातिः । स्त्री । उलपादौ ॥

तृणज्योतिः । न । रात्रौ प्रकाशशालिनि

लताविशेषे ॥

तृणता । स्त्री । कार्मुके । धनुषि ॥ तृणस्य भावे तल् ॥

तृणद्रुमः । पुं । नारिकेलादिवृक्षेषु ॥ ताले ॥ गुवाके ॥ ताल्याम् ॥ केतक्याम् ॥ खर्ज्जूरे ॥ खर्ज्जूर्याम् ॥ हिन्ताले ॥

तृणधान्यम् । न । नीवारे । श्यामाकादौ । उडिधान इति गौडभाषा ॥ तृणमिवधान्यम् अकृष्योत्पन्नत्वात् ॥

तृणध्वजः । पुं । वंशे ॥

तृणनिम्बः । पुं । नेपालनिम्बे ॥

तृणपत्रिका । स्त्री । इक्षुदर्भायाम् ॥

तृणपत्री । स्त्री । गण्डाशिन्याम् ॥

तृणपुष्पम् । न । तृणकुङ्कुमे ॥

तृणपुष्पी । स्त्री । सिन्दूरपुष्पीवृक्षे ॥

तृणपूली । स्त्री । चाँच इति गौडेषु प्रसिद्धे । चञ्चायाम् ॥

तृणमणिः । पुं । तृणग्राहिणि ॥

तृणमत्कुणः । त्रि । लग्नके । जामिन् इतिभाषा ॥ इतित्रिकाण्डशेषः ॥

तृणराजः । पुं । नारिकेले ॥ तालवृक्षे ॥ तृणानां राजा । टः ॥

तृणराजाह्वः । पुं । तालद्रुमे ॥ तृणराजस्याह्वाऽस्य ॥

तृणराजाह्वयः । पुं । तालवृक्षे ॥ तृण

राजहस्याख्ययोषस्य ॥

तृणवल्वजा । स्त्री । वल्वजायाम् ॥

तृणवीजः । पुं । } श्यामाके ॥
तृणवीजोत्तमः । पुं । }

तृणशीतम् । न । गन्धतृणे । कत्तृणे ॥

तृणशीता । स्त्री । जलपिप्पल्याम् ॥

तृणशून्यम् । न । मल्लिकायाम् ॥ केतकीशाखिनः फले ॥ तृणशून्येस्या नेसाधु । तत्तसाधुरितियत् ॥ त्रि । तृणरहिते ॥

तृणषट्पदः । पुं । वरोले । बरटायाम् । बरडै इति तत्तैया इतिचभाषा ॥

तृणसारा । स्त्री । कदल्याम् ॥ तृणानिसारमस्याम् ॥

तृणसिंहः । पुं । कुठारे ॥

तृणहर्म्यः । पुं । मयटे । तृणनिर्मितकुटिकायाम् । मैडा इतिभाषा ॥

तृणाग्निः । पुं । वल्लजे । तृणोत्थवह्नौ ॥

तृणाङ्घ्रिपः । पुं । मन्थानकतृणे ॥

तृणाञ्जनः । पुं । कृकलासे ॥

तृणाढ्यम् । न । पर्वततृणे । स्नमप्रिये ॥

तृणाम्लम् । न । लवणतृणे । लूणियाशाक इतिभाषा ॥

तृणासृक् । पुं । तृणकुङ्कुमे ॥

तृणेक्षुः । पुं । वल्वजायाम् ॥

तृणोत्तमः । पुं । उलवेतृणे ॥

तृणोद्भवः । पुं । नीवारे ॥

तृणौकः । न । कायमाने । तृणनिर्मितगृहे ॥

तृणौषधम् । न । एलवालुकाख्यगन्धद्रव्ये ॥

तृण्या । स्त्री । तृणसमूहे । तृणानां संहतौ ॥ तृणानांसमूहः । पाशादिभ्योयः ॥

तृतीयः । त्रि । त्रयाणां पूरणे । तीसरा इतिभाषा ॥ त्रेःसम्प्रसारणञ्चेतितीयप्रत्ययः सम्प्रसारणञ्च ॥

तृतीयकः । पुं । तृतीयकस्तृतीयेऽह्नीतिलक्षणलक्षितेज्वरविशेषे ॥ तृतीयेऽह्नीत्यागमर्दिनंगृहीत्वा । यमउक्तम् । दिनमेकमतिक्रम्य योभवेत् सतृतीयक इति ॥ तृतीयेऽहनिभवः । कालप्रयोजनाद्रोगइतिकन् ॥ त्रिके ॥ तृतीयेन रूपेण ग्रहणम् । तावतिथंग्रहणमितिलुग्वाइतिकन् ॥

तृतीयप्रकृतिः । स्त्री । क्लीवे ॥ स्त्रीपुंसावपेक्ष्य तृतीयाचासौप्रकृतिश्चेति विग्रहः ॥

तृतीया । स्त्री । तिथिविशेषे । चन्द्रमण्डलस्य तृतीयकलाक्रियारूपायाम् । तत्क्रियोपलक्षिते काले वा ॥ सकलगुणगभीरो भूमिपालानुरागी परनगरविनाशी सर्वलोकोपकारी । पर्वविषयनिवासी कौतुकी सत्य

वादी भवति निखिलविद्यो यस्तृतीयाप्रकृतः ॥ टा भ्याम् भिस् इति त्रिके ॥ टाप् ॥

तृतीयाकृतम् । त्रि । त्रिगुणाकृते । त्रिवारकृष्टक्षेत्रे ॥ तृतीयं कृतम् । कृञो द्वितीयतृतीयेतिडाच् ॥

तृतीयाप्रकृतिः । स्त्री । नपुंसके ॥ स्त्रीपुंसावपेक्ष्य तृतीया प्रकृतिः तृतीयः प्रकारः । असमस्तमेतत् । समासेतु तृतीयप्रकृतिरेव ॥

तृपत् । पुं । चन्द्रे ॥ छत्रे ॥ तृप्यति तृपप्रीणने । संस्त्तृपद्वदिति अतिप्रत्ययान्तोनिपातितः ॥

तृपला । स्त्री । लतायाम् ॥ तृप्यति । तृप० । कलस्तृपश्चेति तृपतेःकलप्रत्ययः ॥

तृप्तः । त्रि । हृष्टे । प्रमुदिते । प्रीते । तृप्तियुक्ते ॥ तृप्यतिस्म । तृप० । क्तः ॥

तृप्तिः । स्त्री । तर्पणे । सौहित्ये । भक्षणादिनाकाङ्क्षानिवृत्तौ ॥ सर्वकामावाप्तौ । अलम्प्रत्ययेनेच्छाविच्छित्तौ ॥ तर्पणम् । तृप० । स्त्रियांक्तिन् ॥

तृप्रः । पुं । घृते ॥ पुरोडाशे ॥ तृप्यतेऽनेन । तृप० । स्फायितञ्चीतिरक् ॥ न । काष्ठे ॥ दुःखे ॥

तृप्राशुः । त्रि । तृप्रंम सत्वरं । आशुः ॥



तृफला । स्त्री । त्रिफलायाम् ॥ तृफति । तृफतृप्तौ । कलस्तृपश्चेतिचकारात् तृफतेरपि कलः ॥

तृफुः । पुं । सर्पजातौ ॥

तृट् । स्त्री । त्रिषायाम् । वाञ्छायाम् ॥ उदन्यायाम् ॥ स्मरपुत्र्याम् । कामकन्यायाम् ॥ तर्षणम् । ञितृषपिपासायाम् । संपदादि क्विप् ॥

तृषा । स्त्री । तृषि ॥ भागुरिमते टाप् । तृषापि न कृशाममेति प्रयोगः ॥ लाक्षणिकोरघो ॥

तृषाभूः । स्त्री । क्लोमनि । फोँपडा इतिभाषा ॥

तृषाहम् । न । जले ॥

तृषाह्वकम् । न । मधुरिकायाम् ॥

तृषाह्वा । स्त्री । मधुरिकायाम् ॥

तृषितः । त्रि । सतृषि । तृषयायुक्ते ॥ तृट्सञ्जाताऽस्य । तारकादित्वादितच् ॥

तृषितोत्तरा । स्त्री । असनपर्ण्याम् ॥

तृष्णक् । त्रि । लुब्धे ॥ तृष्यति । ञितृष० । त्रस्गृधीत्यादिना क्नु ... ॥ स्वपितृषोर्नजिङ् ॥

तृष्णा । स्त्री । तर्षे । पिपासायाम् । प्यास इतिभाषा ॥ त्रिषायाम् । अप्राप्ताभिलाषे । अनात्मीयस्वीकारेच्छायाम् ॥ इदं मे न चीयतामितीच्छायाम् ॥ उचितव्ययाकरणेनादि

धनरत्नस्नेहाकाङ्क्षा कार्ष्ण्यगत्वमपि तृष्णाभेदः ॥ लोभे ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतो । तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ तर्षणम् । ञितृष० । तृषिशुषिरसिभ्यः किदिति नः ॥ विशेषो भावप्रकाशोक्तजलतृष्णायाम् ॥

तृष्णाक्षयः । पुं । शान्तौ ॥ परमानन्दप्राप्तिहेतौ ॥ तथाच वेदव्यासः । यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलामिति ॥ पिपासानाशे ॥ तृष्णायाः क्षयः ॥

तृष्णारिः । पुं । पर्पटे ॥ इतिराजनिर्घण्टः ॥

ते । अ । त्वयेत्यर्थे ॥

तेजःकार्यम् । न । घृतादिकार्ये व्यक्तिमत्त्वात्तु ॥ तेजसःकार्यम् ॥

तेजःफलः । पुं । तेजफल इति तेजबल इतिच प्रसिद्धे वृक्षविशेषे । गन्धफले । बहुफले ॥ अस्य गुणास्तु । तेजःफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनोमतः । वातश्लेष्मारुचिश्वासरक्ताकरः स्मृतइति ॥

तेजनः । पुं । वंशे ॥ मुञ्जे ॥ शरमुञ्जे ॥ तेजयति शस्त्रमसिंवा । तिजनिशाने । चु० । नन्द्यादित्वात् ल्युः ॥

तेजनकः । पुं । गुन्द्रे । शराभिधतृणे ॥ तेजयति । तिज० । चु० । ण्वुल् कुन्वा ॥

तेजनी । स्त्री । मूर्वायाम् ॥ ज्योतिष्मत्याम् ॥ तेजति । तिजपालने । ल्युट् । गौरादिङीष् ॥

तेजपत्रम् । न । गन्धजाते । पत्रके । त्वक्पत्रे । तेजपात इति प्रसिद्धे द्रव्ये ॥

तेजलः । पुं । कपिञ्जलपक्षिणि ॥

तेजवती । स्त्री । गजपिप्पलिकायाम् ॥

तेजस् । न । दीप्तौ ॥ प्रभावे ॥ पराक्रमे ॥ रेतसि ॥ नवनीते ॥ वह्नौ ॥ तापकेज्योतिषि ॥ शरीरगतायांकान्तौ ॥ सुवर्णे ॥ मज्जनि ॥ पित्ते ॥ असहने ॥ यथा । अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम् ॥ प्रागल्भ्ये ॥ पराभिभवसामर्थ्ये ॥ परैरनभिभाव्यत्वे ॥ अप्रतिहतात्मत्वे ॥ चैतन्यात्मकेज्योतिषि ॥ स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वे ॥ लिङ्गदेहे ॥ हयवेगे ॥ तेजोनाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशकोऽन्तःसारविशेषः । यथाह भोजराजः । तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेया स्त्रयोपि सहजा गुणाः ॥ तच्च द्विविधम् । सततोत्थितं भयोत्थितञ्चेति

। यथाहसएव। धीरासुवेजितात्मना निसर्गात् प्रेरणं विना। अविच्छिन्न मिवाभाति तत् तेजः सततोत्थित म्॥ कथावादादिघातैर्यत् साध्वसा त् स्फुरितन्नुतद्दिति॥ *॥ शब्दस्य र्शस्य चसहितावूपतन्मावात्कुत्पन्ने- शब्दस्पर्शरूपगुणे तृतीयेमहाभूते॥ यथा। तृतीयं ज्योतिरित्याहुश्च चुरध्यात्ममुच्यते। अधिभूतं ततोरूपं सूर्यस्तत्राधिदैवम्॥ उष्णस्पर्शवत्ते- जः। तद्विविधम्। नित्यमनित्यञ्च। नित्यंपरमाणुरूपम्। अनित्यंका र्यरूपम्। पुनस्त्रिविधम्। शरीरेन्द्रिय विषयभेदात्। शरीरमादित्यलोके। इन्द्रियंरूपग्राहकंचक्षुःकृष्णतारा- ग्रवर्त्ति। विषयस्तुर्विधः। भौमदि व्योदर्याकरजभेदात्। भौमंवह्न्या दिकम्। अविन्धनं दिव्यंविद्युदादि। भुक्तान्नस्यपरिणामहेतुरौदर्यम्। आ करजंसुवर्णादीतितर्कसङ्ग्रहः॥ स्प र्श उष्ण स्तेजसस्तु स्याद्रूपं शुक्लभास्व रम्। नैमित्तिकं द्रवत्वन्तु नित्यतादि चपूर्ववत्॥ इन्द्रियं नयनं वह्निस्वर्णादि विषयोमतइतिभाषापरिच्छेदः॥ तेजयति तेज्यते ऽनेन वा। तिज०। असुन्॥ तेजोजलमितिच्छन्दोनि- र्वचनः॥

तेजस्कारः। त्रि। तेजोवृद्धिकारकेवस्तुनि॥

तेजस्वी। त्रि। तेजोयुक्ते॥ तस्का- न्तिमति॥ तेजोऽस्यास्तीतिविन्। विनिः॥

तेजस्विनी। स्त्री। ज्योतिष्मत्याम्॥ महाज्योतिष्मत्याम्॥ तेजस्वती ते जवत्याश्च तेजवचरस्वादिना। स्या ते तेजःफले॥ तेजस्विनी कफघ्ना सकासाऽऽमयवातहृत्। पाच न्युष्णाकटुक्तिक्ता वर्ण्यवह्निप्रदीप- नी॥ भावप्रकाशोऽपि॥

तेजितः। त्रि। शाने। शाणादिना ती क्ष्णीकृते। शाणिते। निशिते॥ ते ज्यतेस्म। तिज०। चु०। क्तः॥

तेजीयान्। त्रि। तेजोयुक्ते॥ तेजीय सांनदोषायवह्नेः सर्वभुजोयथा॥

तेजोमन्थः। पुं। गणिकारिकायाम्॥ तेजोमन्थाति। मन्थ०। कर्मण्यण्॥

तेजोमयः। पुं। तेजःप्रचुरे चैतन्य प्रधानेज्योतिर्मये। अन्तःकरणोप- हितत्वात् वासनामये स्वप्ने॥

तेजोमाचा। स्त्री। इन्द्रिये॥ तेजसो माचा॥

तेजोरूपम्। न। प्रकाशरूपे ब्रह्मणि॥ त्रि। प्रकाशरूपे॥

तेजोवती। स्त्री। गजपिप्पल्याम्॥ चव्ये॥ महाज्योतिष्मत्याम्॥ वह्नि

तैरश्री । स्त्री । कुनीस्याम् । रागद्वेषु पविशेषे ॥

तैर्थिकः । पुं । तीर्थकरे । कपिलकणभुगादिषु ॥

तैर्य्यग्योनः । पुं । त्रिविधभूतादिसर्गेष्वेकस्मिन् सर्गे ॥ सपशुमृगपक्षिसरीसृपस्थावरभेदात् पञ्चविधो भवति ॥

तैलम् । न । तिलसर्षपादिजनितस्नेहे । स्नेहे । स्नेहे । तेल इतिभाषा ॥ तिलस्यविकारः । तस्यविकारइत्यऽण् ॥ तिलादिस्नेहवस्तूनां स्नेह स्तैलमुदाहृतम् । तत्तुवातहरंसर्वविशेषात्तिलसम्भवम् ॥ नास्तितैलात्परं किञ्चिद्भेषजंमारुतापहम् ॥ तिलतैलं गुरुस्थैर्यबलवर्णकरं सरम् । दृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥ सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम् । वीर्य्येणोष्णं हिमंस्पर्शे बृंहणं रक्तपित्तकृत् ॥ लेखनं मदुविण्मूत्रं त्वग्गर्भाशयशोधनम् । दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत् ॥ श्रोत्रयोनिशिरःशूलनाशनं लघुतावहम् । त्वच्यंकेश्यञ्च चक्षुष्यमभ्यङ्गे भोजने ऽन्यथा ॥ छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्छिते । भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ॥ तथाभिहतनिर्भुग्नमृगव्याघ्रादिविक्षते । वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे ॥ सेकान्नपानविधिषु तिलतैलं प्रशस्यते । * । ननु स्नेहनद्रव्ययोः कथं सामानाधिकरण्यमित्याह । कृष्णादिदुष्टः पवनः स्रोतःसङ्कोचयेद्यदा । रसोऽसम्यगवस्थान्कार्श्यं कुर्य्याद्रक्तावबुद्धम् ॥ तेषु प्रविष्टसरतावौष्ण्यस्निग्धत्वमार्दवैः । तैलंचमं रसं नेतुं कृशानां तन्न बृंहणम् ॥ व्यवायि सूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसःक्षयम् । शनैः प्रकुरुते तैलं तेन लेखन मीरितम् ॥ हृतं पुरीषं बध्नाति स्वलितं तत् प्रवर्त्तयेत् । ग्राहकं सारकं चापि तेन तैलमुदीरितम् ॥ घृत मब्दात्परं पक्वं हीनवीर्य्यं प्रजायते । तैलं पक्वमपक्वं वा चिरस्थायिगुणाधिकम् ॥ तैलं स्वयोनिगुणकृद्वाभटेनाखिलं मतम् । अतः शेषस्य तैलस्य गुणाः स्वयोनिवत् ॥ तैलानांसार्षपादीनां यथास्थानं गुणोरणम् ॥ * ॥ प्रातःस्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा । मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत् ॥ घृतञ्च सार्षपंतैलं यत्तैलंपुष्पवासितम् । अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गेच नित्यशः ॥ * ॥ पर्व्वमूलंदह

मिक्षद्वयं कीर्त्तिलाभश्चसोमे भौमे सन्ततभीर्वति नियतं चन्द्रजे पुत्रलाभः। अर्थम्लानिर्भवति च गुरौ भार्गवे शोकयुक्त स्नैलाभ्यङ्गात् तनयमरणं सूर्यजे दीर्घमायुः ॥ सिद्धके ॥

तैलकन्दः। पुं। तिलाङ्कितदले। द्रावककन्दे ॥ लोहद्राविभ्वं कटुत्वमुष्णत्वं वातापस्मारविषशोफनाशित्वं रसबन्धकारित्वं देहसिद्धिकारित्वञ्चेत्यस्य गुणा इति राजनिर्घण्टः ॥

तैलकारः। पुं। तेली इति प्रसिद्धे वर्णसङ्करजातिभेदे। धूसरे। चाक्रिके। तैलिनि ॥ कोटकस्त्रीगर्भे कुम्भकाराज्जातोयमिति ब्र०ब्र०खं॥

तैलकिट्टम्। न। खल इति भाषाप्रसिद्धे तैलमले। पिण्याके ॥

तैलङ्गः। पुं। अन्ध्रदेशे ॥ श्रीशैलन्तु समारभ्य चोलेशान्मध्यभागतः। तैलङ्गदेशो देवेशि ध्यानाध्ययनतत्परः॥

तैलचौरिका। स्त्री। तैलपायिकायाम्॥

तैलद्रोणी। स्त्री। कण्ठपर्यन्तमज्जनार्थं तैलपूर्णकाष्ठादिनिर्मितपात्रविशेषे ॥ तत्रावस्थितिगुणाः। वातरोगव्याकुलरोगपङ्गुबाधिर्यमिन्मिनगद्गदधन्वकुक्षस्तब्धपृष्ठप्रचलितपवनगात्रकम्पकपाटीग्रीवाभङ्गापतन्त्रकशर्करधिरभवमूत्रकृच्छ्रबस्तिरोगेषु प्रशस्त

मितिराजवल्लभः ॥

तैलधान्यम्। न। तिलादिषु ॥ तिलातसीचतोरीचद्विविधश्चापिसर्षपः। द्विधाराजीखालसञ्चवीजं कौसुम्भसम्भवम्। एतानि तैलधान्यानि प्रोक्तानि पूर्वसूरिभिः ॥

तैलपर्णः। पुं। पर्वतविशेषे ॥ न। ग्रन्थिपर्णे ॥

तैलपर्णकम्। न। ग्रन्थिपर्णद्रव्ये ॥

तैलपर्णिकम्। न। हरिचन्दने ॥ तिलपर्णीवृक्षविशेषे जातम्। तत्रजातइत्यण्। ङीप्। स्वार्थेकन्। केऽण इतिह्रस्वः॥ तैलपर्णीगिरिसम्भवाकार इतिस्वामी ॥ पुं। चन्दनविशेषे ॥

तैलपर्णी। स्त्री। मलयजे चन्दने ॥ श्रीवासे ॥ सिद्धके ॥ तिलपर्णीवृक्षेजाता। तत्रजातइत्यण्। ङीप्॥

तैलपा। स्त्री। तैलपायिकायाम् ॥

तैलपायिका। स्त्री। सपक्षकीटविशेषे। परोष्यायाम्। तिलचटा इति भाषा ॥ तैलं पिबति। पापाने। ण्वुल् ॥

तैलपिपीलिका। स्त्री। पिपीलिकाप्रभेदे। कपिजाङ्घिकायाम् ॥

तैलफलः। पुं। इङ्गुद्याम्॥ विभीतके॥

तैलभाविनी। स्त्री। जातीपुष्पवृक्षे ॥

तैलमाली। स्त्री। वर्त्याम्॥ दीपकू

ष्याम् ॥

तैलमाता । स्त्री । स्वधायाम् ॥ पतन्त्यनेन पात: । तिलस्यपात: । तिलपातो ऽस्याम् । यत:बाह्मक्रियेतिल: । यजनात् क्रियावाचिन: प्रथमान्ता दस्यामित्यर्थेऽत:स्यात् तदन्तात्स्त्रिया म् । श्येनतिलस्येतिमुम् ॥

तैलसाधनम् । न । गन्धद्रव्यविशेषे । काकोले । कक्कोले । काकला इति गौडेषु प्रसिद्धे कोषफले ॥

तैलस्फटिक: । पुं । सूर्यमणौ ॥ ह०हे ॥

तैलाक्त: । त्रि । तैलेनसिक्ते ॥

तैलागुरु । न । दाहागुरुणि ॥

तैलाटी । स्त्री । वरटायाम् ॥

तैलाम्बुका । स्त्री । तैलपायिकायाम् ॥

तैलिक: । पुं । तैलकारे । तैलार्थंतिलादिबीजानां पेष्टरि ॥

तैली । पुं । तैलकारे । चाक्रिके ॥ त्रि । तैलसम्बन्धिनि ॥

तैलिनी । स्त्री । दशावर्त्याम् । तैलकीटे । षड्विन्द्यायाम् ॥

तैलिशाला । स्त्री । तैलिकगेहे । यन्त्रगृहे ॥

तैलीनम् । न । तिल्ये । तिलक्षेत्रे ॥ तिलानां भवनं क्षेत्रम् । विभाषातिलेतिपक्षेखञ् ॥

तैष: । पुं । पौषमासे ॥ तिष्येणयुक्ता पौर्णमासी अस्मिन् । तास्मिन्पौर्णमासीत्यर्थे सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणित्यण् । तिष्यपुष्ययोर्नक्षत्राणियलोप: । ङीप् ॥ तत:साऽस्मिन्पौर्णमासीत्यण् ॥

तैषी । स्त्री । पौष्याम् ॥ तिष्येण युक्ता पौर्णमास्यस्मिन् । नक्षत्रेणयुक्त: कालइत्यण् । तिष्यपुष्ययोर्नक्षत्राणियलोप: । ङीप् ॥

तोकम् । न । अपत्ये । पुत्रदुहित्रो: ॥ तौति । तु: वौत्रो हिंसावृत्तिपूरणेषु । बाहुलकात्क: ॥

तोक्म: । पुं । हरिते ॥ हरिद्वर्णे । अपक्वयवे ॥ पक्कवाद्याङ्कुरे इति श्रीधरस्वामी ॥ हरिद्वर्णे ॥ न । कर्णमले ॥ तकति तक्यते वा । तकहसनेऽशामेच । बाहुलकान्म: ओत्वञ्च ॥ मेघे ॥ इत्युज्ज्वलदत्त: ॥

तोटकम् । न । द्वादशाक्षरपादे जगतीछन्दोभेदे ॥ यथा । विनिधेहि चतु:सगणं रुचिरं रविसङ्ख्यकवर्णकृतंसुचिरम् । फणिनायकपिङ्गलसंगदितं कुरु तोटकवृत्तमिदं रुचिरम् ॥ यथा । सकलं मनसा क्रियया जनितं समवेक्ष्यविमाशितयासुजनम् । परिवादकरिव्य इतोनिखिला इविनाशिकुलेन न कश्चिदितीति ॥

तोदः । पुं । भेदे ॥ तोडनम् । तुडतो डने ॥ घञ् ॥

तोडनम् । न । दारणे ॥ हिंसने । भेदे ॥

तोत्रम् । न । प्रतोदे । प्राजने । गवादिपशूनां ताडनदण्डे ॥ वेणुके । हस्तिन स्ताडनदण्डे ॥ तुद्यते ऽनेन । तुदव्यथने । दाम्नीतिष्ट्रन् ॥

तोदः । पुं । व्यथायाम् ॥ तोदनम् । तुद० । घञ् ॥

तोदनम् । न । व्यथने ॥ तोत्रे । वृषभादिप्रेरणदण्डे ॥ तुद० । ल्युट् ॥

तोदितः । त्रि । प्रेरिते ॥

तोमरः । पुं । न । सर्वलायाम् । गडाँसाइति सवली इतिवा ख्याते ऽस्त्रे॥ हस्तक्षेप्यसशल्यदण्डे । रामबांस इतिभाषा ॥ खूबागडायाम् ॥ गण्ड्वादि (।ऽ) त्रिकले ॥ द्वादशाक्षरवृत्तछन्दोभेदे ॥ यथा । प्रथमं करं विनिधाय जगद्वयच्चनिधाय । कुरु तोमरं सुखकारि फणिराजवक्त्रविहारि ॥ यथा । सखि मादके मधुमासि ब्रजसुन्दरं किमिहासि । सहतेनकिं विहरामि किमुपावकं प्रविशामीति ॥

तोमरधरः । पुं । अग्नौ ॥ इतिशब्दा० ॥

तोमरिका । स्त्री । आडक्याम् । तुवर इतिभाषा ॥

तोयम् । न । अम्बुनि । जले ॥ यथा

अमृतं तोय मभक्ष्यं सर्वसंस्मृतम् ॥ अमृतं वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तत्तुल्यं स्याद्भगुराह प्रजापतिः ॥ अगन्धमव्यक्तरसं शीतलञ्च तृषापहम् । अच्छं लघु च पथ्यञ्च तोयंगुणवदुच्यते ॥ तौति । तुः । तौचाचार्यः । तौणादिकोयः ॥ पूर्वाषाढायाम् ॥

तोयकामः । पुं । अम्बुवेतसे । परिव्याधे ॥ त्रि । जलाभिलाषिणि ॥

तोयकृच्छ्रम् । न । जलमात्रपानरूपव्रतविशेषे ॥ इतिमिताक्षरा ॥

तोयडिम्भः । पुं । घनोपले ॥ श०च० ॥

तोयदः । पुं । मेघे ॥ मुस्तके ॥ न । आज्ये ॥ त्रि । जलदातरि ॥ जलदानमाहात्म्यंमहाभारते दानधर्मे । अन्नेदत्तेनरेणेह प्राणादत्ताभवन्तु त । प्राणदानाद्धि परमंदान मिह विद्यते ॥ अन्नंवापिप्रभवति पानीयात् कुरुसत्तम । नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते ॥ अन्नौषध्योमहाराजवीरुधश्चजलौद्भवाः । यतः प्राणभृतां प्राणाः सम्भवन्ति विशांपते ॥ तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित् । तच्चदद्यान्नरो नित्यंयदीच्छेद्भूतिमात्मनः ॥ धन्यं यशस्य मायुष्यं जलदानं विशांपते

। यथर्ष्याप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ सर्वकामानवाप्नोति कीर्त्तिं चैवेह शाश्वतीम् । प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते ॥ तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते । अक्षयान् समवाप्नोति लोकानित्यब्रवीन्मनुरिति ॥ तोयं ददाति । डुदाञ्० । कः ॥

तोयधरः । पुं । मुस्तायाम् ॥ सुनिषण्णाख्यभेषजे ॥ घने । मेघे ॥ तोयस्य धरः ॥

तोयधिः । पुं । उदन्वति । समुद्रे ॥ तोयानि धीयन्तेऽत्र । डुधाञ्० । कर्मण्यधिकरणे चेति किः । आतोलोपः ॥

तोयधिप्रियम् । न । लवङ्गे ॥

तोयनिधिः । पुं । अब्धौ । समुद्रे ॥ तोयानि निधीयन्तेऽत्र । डुधाञः किः ॥ तोयानां निधिर्वा ॥

तोयपिप्पली । स्त्री । लाङ्गल्याम् । शकुलादन्याम् । गौडभाषया काँचडा इति प्रसिद्धे जलजशाके ॥ तोयस्य पिप्पलीव ॥

तोयपुष्पी । स्त्री । पाटलावृक्षे ॥

तोयप्रसादनः । पुं । न । कतके ॥ षष्ठीसमासः ॥

तोयप्रसादनफलम् । न । कतकफले ॥

तोयफला । स्त्री । इर्वारौ ॥

तोयवल्ली स्त्री । कारवेल्ले ॥

तोयशाला । स्त्री । प्रपायाम् ॥

तोयशुक्तिका । स्त्री । जलशुक्तौ ॥

तोयसूचकः । पुं । भेके ॥ इ० शब्दा० ॥

तोयात्मा । स्त्री । विष्णौ ॥ यथा । यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारः तस्मै तोयात्मने नमः इति ॥

तोयाधिवासिनी । स्त्री । पाटलावृक्षे ॥

तोयेशः । पुं । वरुणे ॥ शतभिषायाम् ॥

तोरणः । पुं । न । बहिर्द्वारे । द्वारबाह्यभागे ॥ स्तम्भोपरि चिते सिंहद्वाराख्ये ॥ तुरन्त्यत्र । तुरत्वरणहिंसयोः । अधिकरणे ल्युट् युच्वा ॥ तोरयन्त्यनेनेति वा । तुल उन्माने । रलयोरेकत्वम् ॥ तुतुरत्यनेन वा । तुरत्वरणे । जौहोत्यादिकः ॥ न । कन्धरायाम् ॥ कन्धरा तोरणं करोतीति हारावली ॥

तोलः । पुं । न । गुञ्जाशीतिसम्मिते । तोलके ॥

तोलकः । पुं । न । कोले । इङ्गुदे । वटके । कर्षार्द्धे । अशीतिगुञ्जामिते ॥ षोडशमाषके पञ्चवतिरक्तिकापरिमाणे । तोला इति भाषा । कर्षे ॥ इति वैद्यकपरिभाषा ॥

तोषः । पुं । तुष्टौ ॥

तौषिकः । पुं । धनूराशौ ॥

तौतातिकम् । न । तुतातभट्टकृतेमी मांसाशास्त्रे ॥

तौतिकः । पुं । शुक्तौ ॥ न । मुक्तायाम् ॥

तौरङ्गिकः । पुं । अश्वारोहे । सादिनि ॥

तौरायणिकः । पुं । यजमाने ॥ तुरायणं यज्ञविशेषं निर्वर्त्तयति । पारायण तुरायणेत्यादिनाठञ् ॥

तौर्यम् । न । तूर्यमुरजादौ भवेशब्दरूपे ॥

तौर्यत्रिकम् । न । नृत्यगीतवाद्येषु समुदितेषु ॥ तूरीत्वरायाम् । कल्लोलार्थम् । गुणं बाधित्वा बाहुलकादुलिचेतिदीर्घः । तूर्यमुरजादि तत्रभवं तौर्यंशब्दः । चयोंशा यस्य तत् त्रिकम् । सङ्ख्याया अतिशदन्तायाःकन् । तौर्योपलक्षितं त्रिकमिति विग्रहः ॥

तौलः । पुं । तुलाराशौ । तौलिनि ॥ त्रि । तुलासम्बन्धिनि ॥

तौलिकः । पुं । चित्रकारे ॥

तौलिकिकः । पुं । चित्रकारे । रङ्गाजीवे ॥

तौल्यम् । त्रि । तुलया परिच्छिन्ने ॥ तुल्यमेव । स्वार्थे ष्यञ् ॥

तौषारम् । न । द्रव्योदकविशेषे । तुषारजले ॥ अपिनद्धाः समुद्राद्ये वह्निरापस्तद्भवाः । धूमावयवनिर्मुक्तास्तेषाराख्यास्तुताः स्मृताः ॥ अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ताहिताः ॥ तुषाराम्बु हिमं रूक्षं स्यादात्वमपित्तलम् । कफोरुस्तम्भकण्ठाग्निमेदोगलगण्डादिरोगनुत् ॥ नदीमारभ्य समुद्रपर्य्यन्तंवह्निरापस्तद्भवा वह्निभवाः धूमावयव निर्मुक्ताः धूमांशरहिता आपः तुषाराख्याप्रख्याः ॥ तुषारस्येदम् । तस्येदमित्यण् ॥

त्यक्तः । त्रि । हीने । विधूते । समुज्झिते । कृतत्यागे । छोडा इतिभाषा ॥ त्यज्यतेस्म । त्यजहानौ । क्तः ॥

त्यक्तव्यः । त्रि । त्यजनीये ॥

त्यक्तसर्व्वपरिग्रहः । त्रि । समस्तभोगोपकरणरहिते विरक्ते ॥ त्यक्ताः सर्वे परिग्रहा येन ॥

त्यजनम् । न । त्यागे । वर्ज्जने ॥

त्यः । त्रि । तच्छब्दार्थे ॥ सर्वादिः । त्यजति । त्यज० । त्यजितनियजिभ्योडिद्दित्यदिः ॥ स्त्रियां त्या । क्लीबे त्यत् ॥ वाच्याकाशयोः ॥

त्यागः । पुं । दाने । अर्थिषु मुक्तहस्ततायाम् । धर्मेणोपार्जितार्थस्य सत्पात्रे विनियोगे ॥ वर्ज्जने ॥ सर्वकर्मफलाभिसन्धिवर्जने । कर्माधिकारिक

त्यागः

कर्तृत्वफलाभिसन्धिपूर्वककर्मत्यागे ॥ स च सात्त्विकादिभेदात् त्रिविधो भवति ॥ यथा । नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्याग स्तामसः परिकीर्त्तितः ॥ १ ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ २ ॥ कार्य्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥ ३ ॥ अपि च । विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च त्रिविधो भवति । तथाहि । फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्म्मणि फलाभिसन्धित्यागादेकः १ । स च सात्त्विकत्वाद्धेयः ॥ सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः २ । स च दुःखबुद्ध्याकृतो राजसः विपर्य्यासेन कृतस्तामसः इति भेदात् द्विविधो हेयो भवति ॥ फलाभिसन्धेः कर्म्मणश्च त्यागात् तृतीयः ३ । स च कर्मानधिकारिकर्तृको नैर्गुण्यरूपः- ॥ सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्य वेदान्तविचाराय फलाभिसन्धिरहितस्यापि करणशुद्धौ सत्यां तत्साधनस्य कर्म्मणो वैतृष्ण्येजातद्वारा ऽवहननस्य परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते ॥ द्वितीयस्तु जन्मान्तरकृतसाधनाऽभ्यासपरिपाकाद्वास्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः- कर्म्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते ॥ * ॥ त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् । त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ * ॥ त्यागेन युक्ता दिवमुत्पतन्ति त्यागेन हीना नरकं व्रजन्ति । न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति ॥ त्यजनम् । त्यज हानौ । घञ् ॥ विवेकिपुरुषे ॥ इति शब्दरत्नावली ॥ उपेक्षायाम् ॥

त्यागी

त्यागफलम् । म । ज्ञाननिष्ठायाम् ॥

त्यागी । त्रि । दातरि ॥ शूरे ॥ वर्जनशीले ॥ सात्त्विकत्यागेन युक्ते ॥ नद्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥

त्यजति तच्छीलः। सम्पृचानुरुधे तिघिनुण्॥

त्यागिमः। त्रि। त्यागजे॥ त्यागेन निर्वृत्तः। भावप्रत्ययान्तादिमप्॥

त्याजितः। त्रि। विसर्जिते॥ त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणि क्तः। गत्यन्ते कर्तुश्च कर्मणामि त्युक्तेः॥

त्याज्यः। त्रि। त्यागयोग्ये। वर्जनीये। वर्ज्ये॥ तीरे प्रतिग्रहस्त्याज्यो त्याज्यो धर्मस्य विक्रयः॥ अपिच। पित्र्यतिशयंमत्र्यं शोधितं वाप्यशोधितम्। त्याज्यो भवति कौनां दण्डनीयो ऽपिभूभृत इति॥ त्यजेश्चेति गत्यति कवर्गादेशाभावः॥

त्रक्षः। पुं। प्रतिमार्गे॥

त्रङ्गा। स्त्री। प्रतिमार्गे। उद्रङ्गे॥

त्रपः। पुं। सलज्जे॥ त्रपते। त्रपूषलज्जायाम्। पित्त्वादङ्॥

त्रपा। स्त्री। लज्जायाम्॥ कुलटायाम्॥ त्रपते ऽनया। त्रपूष्०। षिद्भिदादिभ्योङ्। टाप्॥ कुले॥ कीर्त्तौ॥ इति शब्दरत्नावली॥

त्रपाकः। पुं। म्लेच्छविशेषे॥

त्रपारण्डा। स्त्री। वेश्यायाम्॥

त्रपिष्ठः। त्रि। तृप्रतमे॥ अयमेषामतिशयेनतृप्रः। अतिशायने इष्ठन्। प्रियस्थिरेति तृप्रस्यत्रबादेशः॥

त्रपीयान्। त्रि। तृप्रतरे॥ अतिशयेन तृप्रः। द्विवचनविभज्येति ईयसुन्॥ प्रियस्थिरेति तृप्रस्यत्रबादेशः॥

त्रपु। न। सीसके॥ रङ्गे॥ अग्निंदृष्ट्वा त्रपते लज्जतइव। त्रपूष०। शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युः॥

त्रपुकर्कटी। स्त्री। त्रपुष्याम्॥

त्रपुटी। स्त्री। सूक्ष्मैलायाम्॥ इ०र०॥

त्रपुलम्। न। रङ्गे। राँग इति भाषा॥

त्रपुषम्। न। कर्कटीप्रभेदे। सुधावासे। सुशीतले। लघुखीरा बालम खीरा इत्यादिभाषा॥ त्रपुषं लघुनीलञ्च नवं तृट्क्लमदाहजित्। स्वादुपित्तापहं शीतं रक्तपित्तहरं परम्॥ तत् पक्वमम्लमुष्णंस्यात् पित्तलं कफवातनुत्। तद्बीजन्मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित्॥

त्रपुषी। स्त्री। कर्कट्याम्। खीरा इति भाषा॥

त्रपु०। न।
त्रपुसम्। न। } रङ्गे॥

त्रपुसी। स्त्री। महेन्द्रवारुण्याम्॥ कर्कट्याम्॥ लताविशेषे। पीतपुष्पायाम्। खीरा इति भाषा॥

त्रयम्। न। त्रितये॥ त्रयोऽवयवाः अस्य। सङ्ख्याया अवयवे तयप्। द्वि

त्रयोद

त्रिभ्यांतत्त्वायत्ता ॥

त्रयी । स्त्री । त्रिवेदाम् । ऋग्यजुःसामा ख्यश्रुतित्रये ॥ ब्रह्माऽयमुदयो रुद्र श्चैवमेतत् त्रयीमयम् । सर्गादावृ ग्वेदोब्रह्मा स्थितौविष्णुर्यजुर्मयः । रुद्रःसाममयोऽन्ताय तस्मात् तस्या शुचिर्ध्वनिः ॥ पुरन्ध्याम् ॥ सुमतौ ॥ सोमराजीवृक्षे ॥ भवान्याम् । दुर्गा याम् ॥ यथा । ऋग्यजुःसामभागेन साङ्गवेदगतापिया । त्रयीति पठ्यते लोकेदृष्टादृष्टार्थसाधिनीति देवी पुराणम् ॥ त्रितये ॥ टिड्ढेतिङीप् ॥

त्रयीतनुः । पुं । सूर्ये ॥ त्रयी तनुर्य स्य सः ॥

त्रयीधर्म्मः । पुं । त्रय्या विधीयमाने ज्यो तिष्टोमादिकर्मणि ॥ त्रय्याःधर्मः त्र यीधर्मः ॥

त्रयीमुखः । पुं । ब्राह्मणे ॥ त्रयी मुखे यस्य ॥

त्रयोदशः । त्रि । त्रयोदशानाम्पूरणे ॥ तस्यपूरणेडट् ॥

त्रयोदश । त्रि । सङ्ख्याविशेषे १३ । ते रह इति भाषा ॥ सङ्ख्येये ॥ त्रय श्च दश च । त्र्यधिकादशेति वा । त्रे स्त्रय इतित्रयस् । कस्त्रोस्त्वगुणाः ॥

त्रयोदशी । स्त्री । तिथिविशेषे ॥ सा चन्द्रस्य त्रयोदशकलाक्रियारूपा च

त्रयः

योदशकलाक्रियावच्छिन्नकालरूपा वेति तिथ्यादितत्त्वम् ॥ रूपान्वितः सात्त्विकभावशीलः सुखीचवाल्ये ज नतोप्रियश्च । सदालसः शिल्पगुणै कवेत्ता त्रयोदशी जन्मतिथिर्यदि स्यात् ॥

त्रय्यात्मा । पुं । सूर्ये ॥ त्रयीआत्मास्व रूपंयस्य ॥

त्रसम् । न । वने ॥ त्रि । जङ्गमे ॥ त्रस ति । त्रसीउद्वेगे । पचाद्यच् ॥

त्रसनः । त्रि । सन्त्रासयुक्ते ॥

त्रसरः । पुं । तन्त्रवायोपकरणविशेषे । सूत्रवेष्टने । तासनी इति गौडभा षा ॥ त्रसनम् । त्रसी० । अरन् ॥

त्रसरेणुः । पुं । परमाणुषट्के । संयु क्ताद्व्यणुकत्रये ॥ जालान्तरगतेभानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥ वैद्य कपरिभाषया त्रिंशत् परमाणुप रिमाणे । ध्वंस्याम् ॥ यथा । जाला न्तरगतेसूर्यकरे ध्वंसीविलोक्यते । त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणु भिरिति ॥ स्त्री । सूर्यपत्न्याम् ॥

त्रस्तः । त्रि । भीते ॥ चकिते ॥ न । शीघ्रे ॥

त्रस्नुः । त्रि । त्रासशीले । भीरौ ॥ त्रस्य ति । त्रसी० । त्रसिगृधिधृषिक्षिपेः

क्तः । नेड्वशीतिनेट् ॥

त्राणम् । न । त्रायमाणायामोषधौ ॥ रक्षणे ॥ त्रि । रक्षिते ॥ त्रायतेस्म । त्रैङ् पालने । क्तः । नुदविदेति पक्षे नत्वम् ॥ रक्षके ॥ त्रायते । कर्त्तरि ल्युट् वा ॥

त्राणा । स्त्री । त्रायमाणायाम् ॥

त्रातः । त्रि । रक्षिते ॥ त्रायतेस्म । त्रैङ्० । क्तः । नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्यामितिपक्षे नत्वाभावः ॥

त्राता । त्रि । पालयितरि ॥ त्रायते । त्रैङ्० । तृच् ॥

त्रान्तः । पुं । त्रावसाने शब्दे ॥ त्रोन्तेयस्य । यथा । यावान् कश्चित् त्रान्तः शब्दोऽयं नपुंसकेतु बोद्धव्यः ॥ यथा । पत्रच्छत्रसूत्रमित्रकलत्रादयो नपुंसकाः पठ्यन्ते ॥

त्रापुषम् । त्रि । त्रपुणोविकारे ॥ त्रपुजतुनोः षुगित्यण् ॥

त्रायन्ती । स्त्री । वार्षिके । त्रायमाणायाम् । बलभद्रिकायाम् ॥ त्राणं त्राः । संपदादित्वात् क्विप् । त्राम् अयति । इगतौ । शतृप्रत्ययः । उगितश्चेतिङीप् ॥ त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगुल्मास्रभ्रमशूलविषप्रणुत् ॥

त्रायमाणः । त्रि । रक्ष्यमाणे ॥

त्रायमाणा । स्त्री । बला इति बहुला



इतिच गौडभाषाप्रसिद्धायां देवबलायाम् । वार्षिकौषधौ । त्रायन्त्याम् ॥ अस्यागुणा यथा । शीतत्वं मधुरत्वं गुल्मज्वरकफास्रभ्रमतृष्णाक्षयग्लानिविषच्छर्दिविनाशित्वमितिराजनिर्घण्टः ॥ त्रायते । त्रैङ्० । शानच् त्रानश् वा ॥

त्रासः । पुं । भये ॥ त्रसीउद्वेगे । घञ् ॥ मणिदोषे ॥

त्रासजिह्मः । त्रि । भयक्लिष्टे ॥ त्रासेन जिह्मः ॥

त्रासदायी । त्रि । भयदातरि । शङ्कौ ॥ इति हेमचन्द्रः ॥

त्रासनः । त्रि । भयावहे ॥

त्रयः । पुं । त्रिसङ्ख्यायाम् । तीनइति भाषा ॥ त्रि । सङ्ख्येये । त्रिसङ्ख्याविशिष्टे ॥ यथा त्रयोदेवाः नतुदेवानांत्रयः ॥ तरति । तॄ० । तरतेड्रिः । त्रयः त्रीन् त्रिभ्यइत्यादिरूपाणि ॥ तिस्रोभार्याः स्त्रियाश्चास्त्रयोभृत्याश्च बान्धवाः । ध्रुवं वेदविरुद्धाश्च नह्येते मङ्गलप्रदाः इतिब्रह्मवैवर्त्तपुराणम् ॥

त्रिंशः । त्रि । त्रिंशत्तमे । तीसवाँ इति भाषा ॥ त्रिंशतःपूरणः । तस्यपूरणे डट् ॥

त्रिंशकः । त्रि । त्रिंशद्भिःक्रीते ॥ त्रिंश

त्रिंशांशः

त्रिंशद्भागेषु खसंज्ञायामिष्वसं-
ज्ञायामार्षीयेष्वंशेषु खुवुन् । टि
लोपः ॥

त्रिंशत् । स्त्री । सङ्ख्याविशेषे । तीस
इतिभाषा ॥ सङ्ख्येये ॥ त्रयोदश
त्तः परिमाणमस्य । पङ्क्ति विंशति
त्रिंशच्चत्वारिंशद्विति निपातनात् प्र-
कृतेस्त्रिन् भावः शच्च प्रत्ययः ॥

त्रिंशत्पत्रम् । न । कुमुदे । कैरवे ॥ त्रिंश
त्सङ्ख्याकानिपत्राणि यस्मिन् तत् ॥

त्रिंशांशः । पुं । राशेस्त्रिंशदंशे ॥ यथा ।
पञ्चपञ्चाष्टविधाविषमेत्रिंशदंश
काः । माहेयशनिजीवज्ञशुक्राणां व्यु
त्क्रमात्समे ॥ विषमराशौ कुज-
शनिगुरुबुधशुक्राणां पञ्चपञ्चाष्टसप्त
पञ्चमितास्त्रिंशदंशकाः क्रमात्ज्ञेयाः
। समराशौ व्युत्क्रमात् तेषांविपर्यये
णत्रिंशांशाज्ञेयाः ॥ यथा मेषोविष
मराशिः तत्र प्रथमावधिपञ्चांशा भौ
मस्य । षष्ठांशमारभ्य दशमांशपर्य
न्तं पञ्चांशाः शनेः । एकादशांशमा
रभ्या ष्टादशांशपर्यन्त मष्टावंशागुरोः
। ऊनविंशांशमारभ्य पञ्च विंशांश-
पर्यन्तं सप्तांशाबुधस्य । ततः षड्विंशां
शमारभ्य त्रिंशांशपर्यन्तं पञ्चांशाः-
शुक्रस्य त्रिंशांशाःक्रमात्ज्ञेयाः । मि
थुनसिंहतुलाधनुःकुम्भेष्वप्येवम् ॥

त्रिकम्

समराशौ व्युत्क्रमाद्यथा । वृषेप्रथ-
मांशमारभ्य पञ्चांशाभृगोः । ततो
दशांशपर्यन्तं सप्तांशाबुधस्य । त
तोविंशांशपर्यन्त मष्टावंशागुरोः। त
तः पञ्चविंशांशपर्यन्तं पञ्चांशाःशनेः
। ततस्त्रिंशदंशपर्यन्तं पञ्चांशाः कुज
स्य त्रिंशांशाः ॥ एवंकर्ककन्यावृश्चि-
कमकरमीनेष्वपिबोध्याः ॥

त्रिकम् । न । पृष्ठाधरे । पृष्ठवंशाधोभागे
। कटिभागे ॥ त्रये ॥ त्रिपथसंस्थाने
॥ त्रिफलायाम् ॥ त्रिकटुनि ॥ त्रिम
दे ॥ यथा । गुडूचीसारसंयुक्तात् त्रि
कचयसमन्वयात् । वातरक्तं निह-
न्त्याशु सर्वरोगहरस्त्वयः ॥ त्रयाणां
सङ्घः । सङ्ख्यायाः संज्ञासङ्घसूत्रा
ध्ययनेष्विति कन् ॥ तृतीयके ॥ तृ
तीयेनरूपेण ग्रहणं ग्रन्थस्य । तावति
थं ग्रहणमितिलुग्वेति कन् पूरणप्र
त्ययस्यच वालुक् ॥ पुं । गोक्षुरे ॥

त्रिककुत् । पुं । त्रिकूटाचले ॥ त्रीणि
ककुत् सदृशानि शृङ्गाण्यस्य ॥

त्रिककुब्धामा । पुं । विष्णौ ॥ ऊर्द्धाधो
मध्याभेदेन तिसृणां ककुभां धाम
आश्रयोयः ॥ तिसृणां ककुभांदिशां
समाहार इतिविग्रहे तद्धितार्थोत्त
रपदसमाहारेचेति समाहारे त्रिसु
रेकवचनमित्येकवद्भावे समपुंस-

कमितिनपुंसकत्वेन त्रिककुप् तस्य धाम अधिष्ठानं प्रकाशोवेति । इदञ्च समासात्मकमेकंनाम । त्रिसृणां ककुभामितिभाष्यं न विग्रहप्रदर्शकं किन्तुफलितार्थकथनम् ॥

त्रिकटः । पुं । गोक्षुरके ॥

त्रिकटु । न । कटुत्रिके । त्र्यूषणे । त्र्योषे ॥ विश्वोपकुल्यामरिचं त्रयं त्रिकटुकाच्यते ॥ त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् । गुल्ममेहकफस्थौल्यमेदः श्लीपदपीनसान् ॥ च यार्णां कटूनां मरिचशुण्ठिपिप्पलीनां समाहारः ॥

त्रिकण्टः । पुं । गोक्षुरके ॥ पञ्चगुप्ते । जूषीप्रभेदे । तिकांटामूरुर इतिभाषा ॥ टेङ्गरा इतिगौडप्रसिद्धे मत्स्ये ॥ न । कण्टकत्रये । मिलित वृक्षस्य भिदमनीदुस्पर्शात्रयरूपे ॥ त्रीणि कण्टकानि यस्य यस्मिन्वा ॥

त्रिकण्टकः । पुं । गोक्षुरकदृक्षे ॥ लघुगर्गमत्स्ये ॥

त्रिकर्मकृत् । पुं । इज्याध्ययनदानानां कर्त्तरि ॥

त्रिकशूलम् । न । वातजन्यव्यथाविशेषे ॥ स्फिगस्थ्नोः पृष्ठवंशास्थ्नो यः सन्धिस्तत्त्रिकं स्मृतम् । तत्र वातेन या पीडा त्रिकशूलं तदुच्यते ॥



त्रिका । स्त्री । कूपस्थनेमौ । कूपस्याग्रे रज्ज्वादिधारणयन्त्रे ॥ तिस्रो ऽस्त्र यो ऽस्याः । सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति कन् ॥

त्रिकायः । पुं । सुगते ॥ त्रयःकाया अस्य ॥

त्रिकार्षिकम् । न । मिलितनागरा ऽतिविषामुस्ताचयरूपे ॥

त्रिकालम् । न । कार्यकालतत्पूर्वापरकालेषु ॥

त्रिकालज्ञः । त्रि । सर्वज्ञे ॥ पुं । बुद्धे ॥ त्रिकालं जानाति । ज्ञा० । जात इलिकः ॥

त्रिकालदर्शी । पुं । मुनौ ॥ त्रि । सर्वज्ञे । भूतभविष्यद्वर्त्तमानवेत्तरि ॥ त्रिकालं पश्यति । दृशिर्० । गह्यादित्वाण्णिनिः ॥

त्रिकालवित् । पुं । बुद्धे ॥ त्रि । त्रिकालज्ञे ॥ त्रिकालंवेत्ति । विद्० । क्विप् ॥

त्रिकूटः । पुं । त्रिककुत्पर्वते । लङ्कापुराधारे । सुवेले ॥ क्षीरोदार्णवतीरवर्त्तिनिशैलविशेषे । यत्र गजेन्द्रो गरुडगामिना श्रीनारायणेनोद्धृतः । अस्यवर्णनं वामनपुराणे द्रष्टव्यम् ॥ न । सामुद्रलवणे ॥

त्रिकूटपर्वतः । पुं । तीर्थविशेषे ॥

त्रिकूटलवणम् । न । शोणीलवणे ॥

त्रिकोणम् । न । लग्नात् नवमपञ्चम स्थानयोः ॥ योनौ ॥ कामरूपपीठे ॥ करतोयां समारभ्य यावद्दिक्करवासिनी । शतयोजनविस्तारं त्रिकोणं सर्वसिद्धिदम् ॥ त्रि । त्र्यस्रे ॥

त्रिकोणफलम् । न । शृङ्गाटके ॥

त्रिक्षारम् । न । क्षारत्रये ॥

त्रिखुरः । पुं । कोकिलाक्षवृक्षे ॥

त्रिखम् । न । त्रपुषे ॥

त्रिखट्वम् । न । खट्वात्रये ॥ तिसृणां खट्वानां समाहारः ॥

त्रिखट्वी । स्त्री । त्रिखट्वे ॥ द्विगोरिति ङीप् ॥

त्रिगङ्गम् । न । तीर्थविशेषे ॥

त्रिगणः । पुं । त्रिवर्गे ॥ त्रयाणांधर्मार्थ कामानां गणः ॥

त्रिगर्त्तः । पुं । सुशर्माख्यनृपतेर्देशे । जालन्धरे ॥ तद्देशजे त्रिगर्त्ताः ॥ गणितान्तरे ॥

त्रिगर्त्तकः । पुं । त्रिगर्त्ते ॥ त्रिगर्त्तएव । स्वार्थे कः ॥

त्रिगर्त्ता । स्त्री । कामुकाङ्गनायाम् ॥ घुर्घुरिकायाम् ॥

त्रिगुणम् । न । प्रधाने । प्रकृतौ ॥ त्रयो गुणाःसुखदुःखमोहा अस्येतिव्युत्पत्तेः । तदनेन सुखादीनामात्मगुणत्वं पराभिमतं पराकृतं भवति ॥ त्र्यक्ते ॥ सत्त्वरजस्तमस्सु ॥ त्रयाणां गुणानां समाहारः ॥ त्रि । गुणत्रय युक्ते ॥

त्रिगुणा । स्त्री । तुल्यगुणत्रयात्मिकायां प्रकृतौ ॥

त्रिगुणाकृतम् । न । त्रिहल्ये । त्रिःकृष्टक्षेत्रे ॥ त्रिगुणाकृतम् । सङ्ख्याया श्चगुणान्ताया इतिडाच् ॥

त्रिगुणात्मकम् । न । अज्ञाने ॥ गुणालोहितशुक्लकृष्णाः अज्ञानकार्येषु तेजोवन्नेष्वा स्तरप्रकृतिषु श्रुतिप्रसिद्धाः । तथाच कार्यगतत्रिरूपेण कारणमप्यज्ञान मथाकृतात्मकं त्रिरूपेण त्रिगुणात्मकम् । यद्वा रजस्सत्त्वतमो लक्षणास्त्रयोगुणा स्तत्पुक्तमज्ञानं गुणगुणिनो रभेदविवक्षयात्रिगुणात्मकं भवति ॥ त्रयोगुणा आत्मानो यस्य ॥

त्रिगुणितः । त्रि । त्रिरावृत्तकृते ॥

त्रिजटा । स्त्री । राक्षसीविशेषे ॥ सीतापक्षपातिनीयं रावणालये ॥ बिल्ववृक्षे ॥

त्रिजातम् । न । समानतया मिलिते षुत्वगेलापत्रेषु ॥ यथा । एलात्वचपत्रैस्त्रि भिरुद्दिष्टं त्रिजातं त्रिसुगन्धिकम् । चतर्जातं सनागन्तु द्वयंवातकफापहमिति ॥

त्रिजातकम् । न । त्रिसुगन्धौ । तुल्येषु त्वगेलापत्रकेषु ॥ एतच्च रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् । लघु पित्ताग्निकृद् वर्ण्यं कफवातविषापहम् ॥ त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चातुर्जातक मुच्यते ॥

त्रिणता । स्त्री । धनुषि ॥ त्रिषु स्थानेषु नता । पूर्वपदादिति णत्वम् ॥ टाप्पत्वे ॥

त्रिणाचिकेतः । पुं । अध्वर्युव्रते ॥ तद्योगात् पुरुषे ॥ त्रिःकृत्वो नाचिकेतोऽग्नि श्चितो येन तस्मिन् ॥ तद्विज्ञान स्तदध्ययन स्तदनुष्ठानवान् वा य स्तस्मिन् ॥

त्रिणेत्रः । पुं । त्र्यम्बके । हरे ॥ त्रि । नेत्रत्रयविशिष्टे ॥ त्रीणि नेत्राणि यस्य । पूर्वपदात् संज्ञायामग इति गिरिन द्यादीनां वेति वा णत्वम् ॥

त्रितक्षम् । न । तक्ष्णां त्रये ॥ त्रयाणां तक्ष्णां समाहारः ॥

त्रितयम् । न । त्रये ॥ त्रयोऽवयवा अस्य । सङ्ख्याया अवयवे तयप् ॥

त्रिदण्डम् । न । वाङ्मनःकायाख्यदण्डविशेषे ॥ वाक्कायमनसामन्योन्यसम्बन्धे यतेर्दण्डविशेषे ॥ पुं । सन्न्यासाश्रमे ॥ यथा । यस्मिन् संयतषड्वर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहित स्त्रिदण्ड मुपजीवती ति विष्णुभागवतम् ॥ त्रयाणां दण्डानां समाहारः ॥ त्रिदण्डमस्त्यस्य । अच् ॥

त्रिदण्डी । पुं । त्रिदण्डधारिणि सन्न्यासिविशेषे ॥ वाङ्मनःकायानां निषिद्धाभिधानासत्सङ्कल्पप्रतिषिद्धव्यापार त्यागवति ॥ यथा मनुः । वाग्दण्डोऽथ मनोदण्डः कायदण्ड स्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते इति ॥ त्रिदण्डमस्यास्ति । इनिः ॥

त्रिदला । स्त्री । गोधापदीलतायाम् ॥

त्रिदलिका । स्त्री । चर्मकषायाम् ॥ इति शब्दचन्द्रिका ॥

त्रिदशः । पुं । देवे । निर्जरे ॥ तृतीया यौवनाख्या दशा यस्य सः । त्रिश ब्दस्य तृतीयार्थता त्रिविभागवत् । त्रिदशयोः सङ्ख्याव्यय इति बहुव्रीहिः । बहुव्रीहौ सङ्ख्येये डजबहुगणात् इति डच् ॥ त्रीन् तापान् दशति । दंशदशने । मूलविभुजादित्वात् कः । पृ॰ नलोप इति वा ॥ जन्मसत्ताविनाशाख्या स्तिस्रो दशाः यस्य । न तु मर्त्यानामिव बाल्ययौवनवार्द्धक्याख्याः ॥ त्रय स्त्रिंशद्देवमुख्यगणे ॥ व्यधिकाधिराद्दशादश त्रिदशाः । अधिकाश्रु तत्पार्थान्तर्भावेनैकार्थीभावः । ते च अर्कादादश रुद्रा एकादश वसवो ष्टौ विश्वेदेवौ द्वाविति ॥ एकएवा च

गन्धकान्तेकोभयार्थं इतिहृताधिका राशिद्रुमात्तकव्याख्यातः ॥

त्रिदशगोपः । पुं । इन्द्रगोपकीटे ॥

त्रिदशदीर्घिका । स्त्री । स्वर्गङ्गायाम् ॥

त्रिदशमञ्जरी । स्त्री । तुलस्याम् ॥

त्रिदशवर्त्म । न । नभसि ॥ त्रिदशानां वर्त्म ।

त्रिदशाचार्य्यः । पुं । जीवे । सुरगुरौ ॥ त्रिदशानाम् आचार्यः ॥

त्रिदशाधिपः । पुं । शक्रे ॥

त्रिदशाध्यक्षः । पुं । विष्णौ ॥ गुणत्रयेण सञ्जातानां तिसृणां दशानां जाग्रदादीनां अध्यक्षः स्वामी ॥ त्रिदशानां देवानां वा अध्यक्षः ॥

त्रिदशायुधम् । न । वज्रे ॥

त्रिदशारिः । पुं । दैत्ये ॥ त्रिदशानाम् अरिः ॥

त्रिदशालयः । पुं । स्वर्लोके ॥ त्रिदशानाम् आलयः ॥ सुमेरुपर्वते ॥

त्रिदशावासः । पुं । त्रिविष्टपे । स्वर्गे ॥ त्रिदशानाम् आवासः ॥

त्रिदशाहारः । पुं । अमृते । पीयूषे ॥

त्रिदशेश्वरी । स्त्री । दुर्गायाम् ॥

त्रिदालिका । स्त्री । चर्मकषायाम् ॥

त्रिदिनव्रतम् । न । नैमित्तिकेव्रतविशेषे ॥ यथा । खरकुक्कुटकाकांश्च विक्रीयक्तोद्विजातयः । मीषष्ट्रिंश्चरको विशुद्ध्येतु त्रिदिनव्रतात् ॥ दिवसेऽकं निराहारो द्वितीयं कणभोजनः । तृतीयन्तु नयेदह्नि त्रिदिनव्रतमन्त्रिकेइतिकुर्त्ताविसेतुः ॥

त्रिदिनस्पृक् । पुं । त्र्यहस्पर्शे । अहस्तिथित्रयस्पर्शने ॥ यथा । त्रिदिनस्पृक् दिनत्रयस्पर्शनादहः । तथाहोरात्रस्य वारद्वयेन तिथ्यन्तद्वयं यदि स्पृश्यते तदा त्रिदिनस्पृक् स्यादित्यर्थः ॥

त्रिदिवः । पुं । स्वर्गे ॥ त्रयो ब्रह्मविष्णुरुद्राः दीव्यन्त्यत्रेति त्रिदिवः । हलश्चेति घञ् । संज्ञापूर्वकत्वान्न गुणः ॥ यद्वा । सात्त्विकराजसतामसभेदेन त्रिविधा दीव्यन्ति व्यवहरन्ति प्रकाशन्ते वा । इगुपधत्वात्कः ॥ यद्वा तृतीया द्यौः । घञर्थे कविधानम् । वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वम् ॥ न । खे । नभसि ॥ सुखे ॥

त्रिदिवा । स्त्री । नदीविशेषे ॥

त्रिदिवेशः । पुं । देवे । निर्जरे ॥ त्रिदिवस्य ईशः ॥

त्रिदिवोद्भवा । स्त्री । स्थूलैलायाम् ॥

त्रिदिवौकाः । पुं । देवे । सुरे ॥

त्रिदृक् । पुं । शिवे । महादेवे ॥ त्रि । त्रिनेत्रे ॥

त्रिदोषः । पुं । सन्निपाते ॥ न । वात-

पित्तकफरूपे दोषत्रये ॥

त्रिदोषजः । पुं । त्रिदोषजनिते सन्निपातरोगे ॥ अस्य पूर्व्वरूपम् । सर्व्वलिङ्गसमवायः सर्व्वदोषप्रकोपजे ॥ सर्व्वदोषप्रकोपजे पूर्व्वं सर्व्वलिङ्गसमवायः । अतिशयितजृम्भामेवदाहाद्यारुचिसहितानां श्रमादीनां समवायो भवति ॥ * ॥ त्रिज्वरे वातकफोत्थेवा त्रिदोषजेवा दशमूलमिश्रः । किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिनेवा त्रिवृताविमिश्रः ॥

त्रिधा । अ । त्रिप्रकारे ॥ यथा । त्रिधाकरोति ॥

त्रिधातुः । पुं । गणेशे ॥ न । धातुत्रये ॥

त्रिधामा । पुं । विष्णौ ॥ शिवे ॥ अग्नौ ॥ मृत्यौ ॥ त्रीणि धामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य सः ॥ न । स्त्री । धामत्रये ॥

त्रिधारकः । पुं । गुण्डतृणे ॥

त्रिधारस्नुही । स्त्री । व्यस्ते । स्नुहीविशेषे ॥

त्रिधाविशेषः । पुं । सूक्ष्मादिविशेषे ॥ यथा । सूक्ष्मामातापितृजाः सहप्रभूतैस्त्रिधाविशेषाः स्युः । सूक्ष्मास्तेषां नियता मातापितृजानिवर्त्तन्ते ॥ सूक्ष्मशरीरमेकः मातापितृजोद्वितीयः महाभूतानितृतीयोविशेषः । तेषांमध्ये सूक्ष्मानियताः मातापितृजानिवर्त्तन्ते कीटान्ता वा भस्मान्ता वा विड्न्ता वेति ॥ त्रिप्रकारको विशेषः ॥

त्रिधासर्गः । पुं । भूतादिसर्गे ॥ अष्टविकल्पोदैव स्तैर्य्यग्योनश्च पञ्चधा भवति । मानुष्यश्चैकविधः समासतोयं त्रिधासर्गः ॥ ब्राह्मः प्राजापत्यः ऐन्द्रः पैत्रः गान्धर्व्वः याक्षः राक्षसः पैशाच इत्यष्टविकल्पो दैवः सर्गः । १ ॥ पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्य्यग्योनः सर्गः । २ ॥ मानुष्यस्त्वेकविधः । ३ ॥ ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात् ॥

त्रिनयनः । पुं । विषमनयने । शिवे ॥ त्रीणि नयनान्यस्य । क्षुभ्नादिषु चेति निषेधात् पूर्व्वपदात् संज्ञायामग इति णत्वाभावः ॥ त्रि । नेत्रत्रयवति ॥

त्रिनयना । स्त्री । उमायाम् ॥ टाप् ॥

त्रिनेत्रः । पुं । शिवे । हरे ॥ त्रीणि नेत्राणि यस्य ॥ त्रि । नेत्रत्रयविशिष्टे ॥

त्रिनेत्रचूडामणिः । पुं । शशाङ्के । चन्द्रे ॥

त्रिनेत्रा । स्त्री । वाराहीकन्दे ॥ नेत्रत्रययुक्तायाम् ॥

त्रिपत्र । त्रि । त्रिगुणितपत्रेषु । पञ्च

दशसु ॥

त्रिपथाङ्गम्। न। पञ्चदशसङ्ख्याकाङ्गेषु निदिध्यासनाङ्गिसाधकसाधनविशेषेषु ॥ तानि यथा। यमोऽथ नियमस्त्यागो मौनं देशश्च कालता। आसनं मूलबन्धश्च देहसाम्यञ्च दृक्स्थितिः ॥ प्राणसंयमनञ्चैव प्रत्याहारश्च धारणा। आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥ एषान्तु लक्षणं स्वस्वस्थाने ज्ञेयं मनीषिभिः ॥

त्रिपताकम्। न। रेखात्रयाङ्कितभाले॥

त्रिपत्रः। पुं। बिल्वे॥ न। दलत्रययुक्तबिल्वपत्रे ॥ यथा। विष्णुरुवाच। ऊर्द्ध्वपत्रं हरो ज्ञेयः पत्रं वामं विधिः स्वयम्। अहं दक्षिणपत्रञ्च त्रिपत्रदलमित्युतेति वृहद्धर्मपुराणे ११ अध्यायः ॥

त्रिपत्रकः। पुं। किंशुकवृक्षे। पलाशे॥

त्रिपत्री। स्त्री। पत्रत्रये॥ द्विगोरिति ङीप् ॥

त्रिपथम्। न। त्रिमार्ग्याम् ॥ त्रयाणां पथां समाहारः। तद्धितार्थेति समासः। ऋक्पूरिति समासान्तः। पथः सङ्ख्याव्ययादेरिति क्लीवता ॥

त्रिपथगा। स्त्री। भागीरथ्याम्। गङ्गायाम् ॥ त्रीन् पथो गच्छति। त्रिभिः पथिभिर्गच्छतीति वा। गम्लृ०। अन्येभ्योऽपीति डः ॥ यद्वा। त्रिपथेन गच्छति। डः ॥ टाप् ॥ क्षितौ तारयते मर्त्त्यान् नागांस्तारयतेऽप्यधः। दिवि तारयते देवांस्तेन त्रिपथगा स्मृता ॥

त्रिपदा। स्त्री। ऋग्विशेषे ॥ त्रयः पादा अस्याः। सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः। टाबृचीति टापि भस्यात् पादः पत् ॥ हंसपदीवृक्षे ॥

त्रिपदिका। स्त्री। तिपाई इति प्रसिद्धे आधारविशेषे॥ अर्घ्यार्थं धातुनिर्मिते त्रिपादयुक्ते शङ्खादिपात्राधारे ॥

त्रिपदी। स्त्री। गोधापदीलतायाम्। हंसपद्याम् ॥ हस्तिगात्रबन्धे ॥ त्रिपदी पादबन्धनमिति यादवः ॥ अर्घ्यादिपात्राधारे ॥ त्रयःपादा अस्याः सङ्ख्यासुपूर्वस्येति पादशब्दस्यान्त्यलोपः। पादोऽन्यतरस्यामिति ङीपि भत्वात् पादःपदिति पद्भावः ॥ पादत्रययुक्तायाम् ॥ भाषाकविताया श्छन्दोविशेषे। यथा। पञ्चझटिकान्ता यदियमकान्ता द्वादशपरिणतमात्रा। किन्नरगीतिस्तदिति निगीतिः स्यादर्द्धसमाचरगात्रा ॥ स्वपादान्त उदाहृतः ॥ यैषा सङ्गीतके नित्यं निबीतिः किन्नराख्यिका ॥ सैव स्यात् प्राकृते गाने त्रपदीति परिश्रुता ॥ इति काव्योदयः ॥

त्रिपर्णः । पुं । किंशुके ॥

त्रिपर्णा । स्त्री । वनकार्पास्याम् ॥

त्रिपर्णिका । स्त्री । कन्दविशेषे । अम्लवल्ल्याम् । कन्दाल्लौ ॥

त्रिपर्णी । स्त्री । शालपर्ण्याम् ॥ वनकार्पास्याम् ॥ पृश्निपर्णीभेदे ॥

त्रिपात्-द् । पुं । विष्णौ ॥ ज्वरे ॥ त्रयः पादा अस्य । संख्यासुपूर्वस्येतिपादस्यान्तलोपः ॥

त्रिपादिका । स्त्री । हंसपदीलतायाम् ॥

त्रिपिबन् । पुं । वार्द्धीणसे ॥ नद्यादौ पयः पिबतो यस्य त्रीणि जलं स्पृशन्ति कर्णौ जिह्वा च । त्रिभिः पिबति । पा० । शतृ ॥

त्रिपिष्टपम् । न । स्वर्गे ॥ त्रिदशानां पिष्टपम् । पृषोदरादित्वाद् दशशब्दलोपः ॥ तृतीयं पिष्टपम् त्रिपिष्टपम् । पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते त्रिभागवत् । मर्त्त्यपातालापेक्षया तृतीयं पिष्टपं भुवनम् ॥

त्रिपिष्टपसद् । पुं । देवतायाम् ॥ त्रिपिष्टपे दिवि सीदतिवर्त्तते । षद्लृ० । क्विप् ॥

त्रिपुटः । पुं । सतीनके । खिसारीति प्रसिद्धे कलाये ॥ त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा ॥ किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥ तीरे ॥ तालके ॥ हस्तभेदे ॥ गोक्षुरे ॥

त्रिपुटा । स्त्री । मल्लिकायाम् ॥ सूक्ष्मैलायाम् ॥ त्रिवृदोषधौ ॥ त्रयः पुटा यस्याः ॥ कर्णस्फोटायाम् ॥ रक्तत्रिवृति ॥ स्थूलैलायाम् ॥ देवीविशेषे ॥

त्रिपुटी । पुं । एरण्डे ॥

त्रिपुटी । स्त्री । त्रिवृतायाम् ॥ त्रयाणां पुटानां समाहारे ॥ त्रयाणां ज्ञातृज्ञानज्ञेयादिरूपाणां पुटानामाकाराणां समाहारः । द्विगोरिति ङीप् ॥

त्रिपुटीफलः । पुं । एरण्डे ॥ त्रिपुटी फले यस्य ॥

त्रिपुण्ड्रम् । न । भालस्थतिर्यग्रेखात्रयान्विते ॥ ऊर्द्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्त्रिपुण्ड्रकम् । अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रयोनिजः ॥ * ॥ विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥ तस्मान्मृदापि कर्त्तव्यं ललाटे तु त्रिपुण्ड्रकमिति स्मृतिः ॥ मृत्स्नया भस्मना वापि त्रिपुण्ड्रं बिन्दुसंयुतम् । ललाटे तिलकं कुर्याद् गायत्र्या वटुकुन्तल इति महानिर्वाणतन्त्रम् ॥ येषां वपुर्मनुष्याणां त्रिपुण्ड्रे

श्चविनाश्रितम् । श्मशानसहश्रंतत्- त्याज्यमेवं पुण्यकृज्जनैरितिदेवीभागवतम् ॥ अपिचतत्रैव नारदं प्रति नारायणवाक्यम् । त्रिपुण्ड्रंये विनिन्दन्तिनिन्दन्तिशिवमेवते । धारयन्ति चयेभक्त्या धारयन्ति तमेवते ॥ तिर्य्यग्रेखाः प्रदृश्यन्तेललाटे सर्वदेहिनाम् । तथापि मानवा मूर्खा न कुर्वन्ति त्रिपुण्ड्रकमिति ॥ त्रयाणां पुण्ड्राणां समाहारः ॥ तद्धितार्थेत्यादिनासमासः ॥

त्रिपुण्ड्रकम् । न । त्रिपुण्ड्रे ॥ वक्राभला टगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकमितिहारावली ॥ त्रिपुण्ड्रमेव । स्वार्थेकः ॥

त्रिपुरः । पुं । असुरविशेषे ॥ न । मयदानवविरचिते कामचारिणि पुरत्रये ॥ त्रयाणां पुराणां समाहारः त्रिपुरम् । तद्धितार्थेतिसमासः । पात्रादित्वात् स्त्रीत्वाभावः ॥

त्रिपुरदहनः । पुं । शिवे । हरे ॥

त्रिपुरभैरवी । स्त्री । देवीविशेषे ॥

त्रिपुरमल्लिका । स्त्री । पुष्पवृक्षविशेषे । स्वेषमल्लायाम् । त्रिपुरमालिकेति गौडेषु ख्यातायाम् ॥

त्रिपुरमालिका । स्त्री । मोहिन्याम् । वटपत्रायाम् ॥

त्रिपुरा । स्त्री । चतुर्वर्गप्रदायां परदेवतायाम् ॥ ब्रह्मविष्णुमहेशाद्यैस्त्रिदशैरर्चितापुरा । त्रिपुरेतितदानामकथितं दैवतैस्तव ॥ अपिच । त्रिकोणं मण्डलञ्चास्यास्त्रिपुरन्तु त्रिरेखकम् । मन्त्रन्तुत्र्यक्षरं प्रोक्तं तथारूपत्रयं पुनः ॥ त्रिविधाकुण्डलीशक्तिस्त्रिदेवानाञ्चसृष्टये । सर्वं त्रयं त्रयं यस्मात् तस्मात्तुत्रिपुरामतेति ॥

त्रिपुरान्तकः । पुं । महेश्वरे । शूलिनि । शिवे ॥ त्रयाणांसुवर्णरौप्यलोहानां मयादिनामकानां दैत्यत्रयाणां वा पुराणि तेषामन्तकोनाशकः । त्र्यवयवं पुरं त्रिपुरं तस्यान्तकः ॥ त्रयाणां पुराणां समाहारः । पात्रादिरिति कश्चित् तन्न । तथासतिपञ्चपात्रीतिवत् त्रिपुरीति प्रयोगाभावः स्यात् ॥

त्रिपुरारिः । पुं । सदाशिवे ॥

त्रिपुरी । स्त्री । चेदिपुर्याम् । त्रिपुरा इति प्रसिद्धदेशे ॥

त्रिपुषा । स्त्री । कृष्णत्रिवृति ॥

त्रिपुष्करम् । न । ब्रह्मकृततीर्थविशेषे । ज्येष्ठमध्यमकनिष्ठेषु त्रिषु पुष्कराभिधह्रदेषु ॥ पुं । योगविशेषे ॥ यथा । वाराःक्रूरा स्तिथिर्भद्रा नक्षत्रं भद्रपादकम् । जाते ऽकूजार्कीयोगो

मरणे ऽथत्रिपुष्करइति ॥

त्रिपुष्टः । पुं । राजभेदे । प्राजापत्ये ॥

त्रिपृष्ठः । पुं । त्रयाणांलोकानामुपरिस्थि ते सत्यलोके ॥

त्रिफला । स्त्री । हरीतक्यादिफलत्रिके ॥ पथ्याविभीतधात्रीणांफलैः स्यात् त्रिफला समैः । फलत्रिकञ्च त्रिफला सावराच प्रकीर्त्तिता ॥ त्रिफला क फपित्तघ्नी मेहकुष्ठहरीसरा । चक्षु-ष्या दीपनी रुच्या विषमज्वरनाशि नी ॥ त्रयाणां फलानां समाहारः । अ आदित्वात् द्विगोरिति न ङीप् ॥

त्रिफली । स्त्री । त्रिफलायाम् । इति राजनिर्घण्टः ॥

त्रिवल्लीकम् । न । पायौ ॥

त्रिभङ्गी । स्त्री । मात्राहत्तान्तरे ॥ यथा । प्रथमं यदि दशमं वहति विरामं त दनु निकामं वसुवसुकम् वसुविमल तुरङ्गम मतिहृदयङ्गम भूषितभुज ङ्गम नृपतिलकम् । चिंशद्विकलासं विहितनिवासं सततविलासं हृदय मुदे मदमुदितभुजङ्गी मोहनरङ्गी वदति त्रिभङ्गीहत्तमदः ॥ यथा- । विविधायुधमण्डित सङ्गरपण्डित र णखण्डितपाण्डवभटे चण्डासुरख ण्डिनि हरपुरमण्डिनि प्रमथरख लनिवहजटे । भवसागरतारि-



णि दुर्गतिवारिणि मङ्गलकारिणि मयिसुचिरम् गिरिराजनिवासिनि शैलविलासिनि प्रमुविलासिनि दे हिवरमिति ॥

त्रिभण्डी । स्त्री । त्रिवृतायाम् । श्वेत त्रिधारेतिख्यातौषधौ ॥ त्रीन्दोषा न्भण्डते । भण्डिपरिभाषणे । कर्म-ण्यण् । ङीप् ॥

त्रिभद्रम् । न । सुरते ॥ इतित्रिकाण्ड शेषः ॥

त्रिभुवनम् । न । स्वर्गमर्त्यपातालात्म के लोकत्रये । त्रिलोक्याम् ॥ त्रयाणां भुवनानां समाहारः ॥ तद्धितार्थेत्या दिना समासः ॥

त्रिमदः । पुं । मुस्ताचित्रकविडङ्गेषु ॥

त्रिमदोत्पथः । त्रि । त्रिभिर्मदैरुदृत्ते ॥ विद्यामदो धनमद स्तथैवाभिजनो मदः । एते मदा मदान्धानां त एव हिसतां दमाः ॥

त्रिमधुः । पुं । ऋग्वेदैकदेशे ॥ मधु वाताऋतायतेत्यादि ॥ यथा । त्रि-णाचिकेत स्त्रिमधुस्त्रिसुपर्णः षडङ्ग विदिति ॥ न । मधुत्रये । मिलित सितामाक्षिकसर्पिःषु ॥ यथा । दुग्धं सिता माक्षिकञ्च विज्ञेयं मधुर त्रयम् ॥

त्रिमार्गगा । स्त्री । गङ्गायाम् ॥ त्रिभि

मार्गैर्गच्छतीतिविग्रहः ।

त्रिमार्गी । स्त्री । त्रिपथे ॥ त्रयाणां मा गीणां समाहारः ॥ ङीप् ॥

त्रिमुकुटः । पुं । त्रिकूटाचले ॥

त्रिमुखः । पुं । बुद्धविशेषे ॥

त्रिमुखा । स्त्री । बुद्धदेवीविशेषे । मायादेव्याम् । वज्रवाराह्याम् ॥

त्रिमूर्त्तिः । पुं । बुद्धभेदे ॥ ब्रह्मविष्णुशिवाख्यमूर्त्तित्रयवति ॥ यथा । त्रिमूर्त्तिर्यःसर्गस्थितिविलयकर्माणित नुते । इतिगङ्गेशोपाध्यायः ॥ तिस्रोमूर्त्तयोयस्य ॥ स्त्री । देवीविशेषे ॥ तिस्रोमूर्त्तयोयस्याः । त्रयोब्रह्माद योत्रमूर्त्तयो यस्याः ॥ एकमूर्त्तिरपि भिन्नरूपिणी या जगज्जननपालन त्रये । काव्युतेश्वरतया विवर्त्तते ब्रह्मशक्ति मह मानतोस्मिताम् ॥

त्रियष्टिः । स्त्री । खेत्रपर्पट्याम् ॥

त्रियामकम् । न । पापे ॥ इतिशब्द माला ॥

त्रियामा । स्त्री । रात्रौ ॥ त्रयोयामा यस्याः । आद्यन्तयोरर्द्धयोश्चेष्टाकाल त्वेन दिनप्रायत्वात् ॥ हरिद्रायाम् ॥ यमुनायाम् ॥ नील्याम् ॥ कृष्णत्रिवृ तायाम् ॥

त्रियुगः । पुं । यज्ञपुरुषे ॥ कृतयुगेय ज्ञाभावात् । कलौकलत्वाद्दा ॥

त्रियूहः । पुं । कपिलाश्वे ॥

त्रिरात्रम् । न । रात्रित्रये । तिसृणांरा त्रीणां समाहारे ॥

त्रिरूक्तम् । त्रि । त्रिपादादिना त्रिवारो च्चारिते ॥ विषादे विस्मये हर्षे खे दे दैन्ये ऽवधारणे । प्रसादने सम्भ्रमेपि द्विस्त्रिरुक्तंनदुष्यति ॥

त्रिरेखः । पुं । शङ्खे ॥ त्रि । रेखात्रयवि शिष्टे ॥ तिस्रोरेखायस्य सः ॥

त्रिलवः । पुं । तृतीयांशे ॥

त्रिलवणम् । न । लवणत्रये ॥ यथा । सैन्धवञ्च विडञ्चैव रुचकञ्चतृतीय कम् । मिलितन्त्वेतत् त्रिलवणं वैद्य शास्त्रेनिरूपितम् ॥

त्रिलोकात्मा । पुं । अन्तर्यामिणि ॥ त्र याणां लोकाना मात्मा ॥

त्रिलोकधृक् । पुं । विष्णौ ॥ त्रीन्लो कान् धारयति इति । धृञ् । क्विप् ॥

त्रिलोकी । स्त्री । स्वर्गमर्त्यपातालेषु ॥ त्रयाणां लोकानां समाहारः । द्विगोरितिङीप् ॥

त्रिलोकेशः । पुं । सूर्ये ॥ सदाशिवे ॥ त्रयाणां लोकानामीशो ऽधिष्ठाता ॥ त्रयोलोका स्तदाज्ञप्ताः स्वेषुकर्मसु वर्त्तन्त इतिवा ॥

त्रिलोचनः । पुं । त्र्यम्बके । शिवे ॥ त्रीणि लोचनानि यस्य सः । त्रिषु कालेषु

लोकेषु गुणेषु वेदेषु वा लोच नं ज्ञानं यस्येति वा । त्रयो वेदाः वर्णा वा अकारोकारमकाराः लोचनानि यस्य वा ॥

त्रिलोचना । स्त्री । दुर्गायाम् ॥ बुद्धदेवी प्रभेदे ॥

त्रिलोचनाष्टमी । स्त्री । गौणचान्द्रज्येष्ठस्य कृष्णाष्टम्याम् ॥

त्रिलोहकम् । न । सुवर्णरजतताम्राभिधे धातुत्रये ॥

त्रिलोही । स्त्री । त्रिलोहघटितमुद्राविशेषे ॥

त्रिवर्गः । पुं । धर्मकामार्थेषु ॥ धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः सजनो जघन्यः ॥ * ॥ यथाऽऽनुकूल्यं दम्पत्यो स्त्रिवर्गस्तत्र वर्द्धते ॥ त्रिफलायाम् ॥ कटुत्रिके ॥ वृद्धिस्थानक्षये ॥ क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ सत्त्वरजस्तमस्सु ॥ त्रयाणां वर्गः समूहः ॥ सुनीतौ ॥ इति शब्दरत्नावली ॥

त्रिवर्णकः । पुं । गोक्षुरके ॥ न । त्रिफलायाम् ॥ त्र्यूषणे । कटुत्रिके ॥ ब्राह्मणक्षत्रियविट्सु ॥

त्रिवर्षिका । स्त्री । त्रिवर्षायाङ्गवि । त्रिहायण्याम् ॥ त्रीणि वर्षाणि वयो यस्याः सा त्रिवर्षा । ततः स्वार्थे कः ॥

त्रिविक्रमः । पुं । विष्णौ ॥ बलिबन्धनार्थं भूव्योमस्वर्गेषु त्रिषु लोकेषु गुणेषु वा त्रयो वा विक्रमाः पादन्यासा यस्य सः । त्रिरित्येव त्रयो लोकाः कीर्त्तिता मुनिसत्तमैः । क्रमते तांस्त्रयः सर्वांस्त्रिविक्रमो जनार्दनः ॥ इति हरिवंशः ॥ त्रींल्लोकान् विशेषेण क्रामति व्याप्नोति वा । क्रमु॰ अच् ॥

त्रिविधः । त्रि । त्रिप्रकारे ॥ तिस्रो विधा यस्य सः ॥

त्रिविधसर्गः । पुं । त्रिधासर्गे ॥

त्रिविष्टपम् । न । स्वर्गे । सुरलोके ॥ विशन्त्यस्मिन् सुकृतिन इति विष्टपम् । विटपपिष्टपविशिपोलपा इति विश्रेरौणादिकः कपन्प्रत्ययः तस्य तुट् । शश्चेति षत्वम् । रूपे पिष्टपेति पाठ उज्ज्वलदत्तटीकायोक्तः । अन्ये तु विष्टपेति दन्त्योष्ठादिमेव पठन्ति । युक्तञ्चैतत् । यत्र भ्रष्ट्यविष्टपमित्यादौ तथा दर्शनात् । अमरकोषेपि विष्टपं भुवनं जगदिति प्रचुरपाठश्च ॥ तृतीयं विष्टपम् ॥ त्रिभुवने ॥

त्रिविष्टपसद् । पुं । देवे । सुरे ॥

त्रिवीजः । पुं । श्यामाके ॥ इति राजनिर्घण्टः ॥

त्रिवृत् । स्त्री । त्रिवृतायाम् । सुवहायाम् । श्वेतत्रिधारा इति प्रसिद्धौषधौ

॥ श्वेतात्रिवृद्रेचनी स्यात् स्वादुरुष्णासमीरहृत् । रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा ॥ श्वेतकृष्णा प्रभेदेन द्विविधा त्रिवृदुच्यते । श्यामा त्रिवृत्ततो हीनगुणा तीव्रविरेचिका ॥ मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ त्रीन् अवयवान् वृणोति । वृञ् । क्विप् तुक् ॥

त्रिवृता । स्त्री । त्रिवृदोषधौ ॥ त्रिभिरवयवैर्वृता ॥

त्रिवृत्करणम् । न । तेजोबन्नानां मिश्रीकरणे ॥ तत्प्रकारो यथा । तेजोबन्नानां त्रयाणां मध्ये एकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधाविभागं कृत्वा स्वस्वद्वितीयं स्थूलं भागं परित्यज्यान्यदीयस्थूलभागयोरेकैकस्य भागस्य संयोजनमिति ॥

त्रिवृत्पर्णी । स्त्री । हिलमोचिकायाम् ॥

त्रिवृद्वेदः । पुं । त्रयाम् । ऋग्यजुःसामात्मके वेदे ॥ प्रणवे ॥ ऋचो यजूंषि सामानि तानि त्रिविधानि च । एष एव त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ ऋगाद्यात्मना त्रिरावर्त्तते इति त्रिवृत् स चासौ वेदश्चेति कर्मधारयः ॥

त्रिवेणी । स्त्री । स्थानविशेषे ॥ सा द्विधा । युक्तवेणीमुक्तवेणीतिभेदात् । तत्र प्रयागे युक्तवेणी गङ्गया यमुना सरस्वत्योः सङ्गमात् ॥ दक्षिणप्रयागे मुक्तवेणी गङ्गया यमुनासरस्वत्योर्वियोगात् ॥ दक्षिणप्रयागस्य सीमानिर्णयो यथा । प्रद्युम्नह्रदाद्याम्ये सरस्वत्यास्तथोत्तरं । तद्दक्षिणप्रयागन्तु गङ्गातो यमुना गतेति ॥ * ॥ सगरसन्ततिसन्तरणेच्छया प्रचलितातिजवेन हिमालयात् । इह तु मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवीति नदीयाधिपतिकृष्णचन्द्रराजस्य सभास्थो वाणेश्वरविद्यालङ्कारः ॥

त्रिवेणुः । पुं । रथमुखस्थेऽवयवविशेषे ॥

त्रिवेदः । पुं । वेदत्रयवेत्तरि ॥

त्रिवेदी । पुं । त्रिवेदशब्दे ॥

त्रिवेदी । स्त्री । वेदत्रये ॥ त्रयाणां वेदानां समाहारः । द्विगोरिति ङीप् ॥ ऐष्टिकपाशुकसौमिकवैदिकत्रये ॥

त्रिवेला । स्त्री । त्रिवृति ॥

त्रिशक्तिधृक् । पुं । भगवति ॥ त्रिशक्तिर्माया तां धरतीति विग्रहः ॥

त्रिशङ्कुः । पुं । सूर्यवंशीयनृपविशेषे ॥ शलभे ॥ वृषदंशके । मार्जारे ॥ चातके ॥ खद्योते ॥

त्रिशङ्कुजः । पुं । हरिश्चन्द्रनृपे ॥
त्रिशङ्कुयाजी । पुं । विश्वामित्रे ॥
त्रिशरणः । पुं । बुद्धे । जिने ॥
त्रिशर्करा । स्त्री । मिलितगुडोत्थसि
तोत्थामधुरेति राजनिर्घण्टः ॥
त्रिशला । स्त्री । वृत्तार्हन्मातृविशेषे । वर्द्धमानमातरि ॥
त्रिशाखपत्रः । पुं । बिल्वे । मालूरे ॥
त्रिशिखः । पुं । राक्षसान्तरे । रावणपुत्रे ॥ बिल्वे ॥ न । त्रिशूले ॥ मकुटान्तरे ॥ किरीटे ॥ त्रि । शिखात्रयवति ॥
त्रिशिखिदला । स्त्री । मालाकन्दे ॥
त्रिशिराः । पुं । ज्वरे ॥ कुबेरे ॥ रावणपुत्रविशेषे ॥ खरसेनापतौ ॥ त्रीणि शिरांसि यस्य ॥
त्रिशीर्षकम् । न । त्रिशूले ॥
त्रिशूलम् । न । अस्त्रविशेषे । त्रिशिखे ॥ त्रयाणां शूलानां समाहारः ॥
त्रिशूली । पुं । शिवे ॥ त्रि । त्रिशूलधारिणि ॥
त्रिशृङ्गः । पुं । त्रिकोणे ॥ त्रिकूटाद्रौ ॥ त्रीणि शृङ्गाण्यस्य ॥
त्रिशृङ्गी । पुं । रोहितमत्स्ये ॥
त्रिष्टुप् । स्त्री । एकादशाक्षरायां वृत्तौ ॥
त्रिसत्यः । त्रि । परदेवतायाम् । परमेश्वरे ॥ त्रिष्वपि कालेषु सृष्टेः पूर्वं प्रलयानन्तरं स्थितिकाले च सत्यो ऽव्यभिचारेण वर्तमानत्वात् ॥
त्रिसन्धिः । स्त्री । पुष्पविशेषे । सन्ध्याकुसुमे । फागनिया इति भाषा ॥ पूर्वापरमध्यसन्धौ ॥
त्रिसन्ध्यम् । न । प्राह्णापराह्णमध्याह्ने । त्रिकाले ॥ प्रातः सूर्योदयः काले । मध्याह्नकालस्तदनन्तरम् । सायंसूर्यास्तसमय त्रिकालानामयं क्रमः इति निर्वाणतन्त्रम् ॥ तिसृणां सन्ध्यानां समाहारः । आ वन्तो वेति पाक्षिकी क्लीबता ॥ पुष्पविशेषे ॥
त्रिसन्ध्या । स्त्री । जपापुष्पे ॥ देवीविशेषे ॥ अस्याः स्थानं कुरण्डकतीर्थम् ॥
त्रिसमम् । न । समत्रये । समहरीतकीनागरगुडरूपे ॥
त्रिसरः । पुं । कृशरे ॥ इति हेमचन्द्रः ॥
त्रिसरकम् । न । त्रिवारमधुपाने ॥ त्रयाणां सरकाणां समाहारः । तद्धितार्थेत्यादिना समाहारे द्विगुः । पात्रादित्वान्नपुंसकत्वम् ॥
त्रिसवनम् । न । त्रिकाले । त्रिसन्ध्ये ॥
त्रिसामा । स्त्री । नदीविशेषे । महेन्द्राद्रेः चरन्त्यां स्रवन्त्याम् ॥
त्रिसिता । स्त्री । त्रिशर्करायाम् ॥
त्रिसीत्यम् । न । त्रिःकृष्टक्षेत्रे । त्रिह

ल्ये ॥ त्रिवारं सीतया समितम् । नौ वयोधर्म्मेष्वादिनायत् ॥

त्रिसुगन्धि । न । त्रिजातके ॥ त्वगेला पत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ॥

त्रिसुपर्णः । पुं । बह्वृचानां वेदभागे ते षांत्रतेच ॥ तद्योगात् पुरुषे ॥

त्रिस्रोता ४ । स्त्री । गङ्गायाम् ॥ त्रीणि स्रोतांसियस्याः ॥ नद्यन्तरे ॥

त्रिहल्यम् । न । त्रिगुणाकृते । तृतीयाकृते । त्रिसीत्ये ॥ त्रिवारं हलेन कृष्टम् । मतजमहल तकरणजल्पकर्षे प्वितियत् ॥

त्रिहायणी । स्त्री । त्रिवर्षायां गवि । व्यब्दायाम् ॥ त्रयोहायना यस्याः । दाम हायनान्ताच्चेतिङीप् ॥ त्रिचतुर्भ्यांहा यनस्येतिणत्वम् ॥ द्रौपद्याम् ॥ यथा । कृते युगे वेदवती त्रेतायां जनकात्मजा । द्वापरे द्रौपदीछाया तेनकृष्णा त्रिहायणीति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

त्रुटनम् । न । विच्छेदे । टूटना इति भाषा ॥

त्रुटिः । स्त्री । संशये ॥ लेश । स्वल्पे ॥ सूक्ष्मैलायाम् ॥ कालमाने । लवद्वये ॥ द्वयोर्निमेषयोः ॥ त्रुट्यते ऽनेनवा । त्रुटछेदने । इगुपधात्किदि तीन् ॥

त्रुटितः । त्रि । छिन्ने ॥

त्रुटिवीजः । पुं । कच्च्याम् ॥ इति शब्दमाला ॥

त्रुटी । स्त्री । त्रुट्यर्थमात्रे ॥ कृदिकारादितिङीष् ॥

त्रेता । स्त्री । द्वितीययुगे । कृत्यवुमानन्तरयुगे ॥ अस्यपरिमाणं यथा । त्रिचत्वारिंशल्लक्षेण विंशत्सहस्राधिकेनच । चतुर्युगं परिमितं नरमानक्रमेणच ॥ द्विषड्लक्षपरिमितं षण्णवतिसहस्रकम् । त्रेतायुगं परिमितं कालविद्भिः प्रकीर्त्तितमिति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥ तद्धर्मा यथा ॥*॥ त्रेतायुगे समायाते धर्म्मःपादोनतां गतः । सत्यकेशान्विताले काः केचित् केचिद्दयाश्रयाः ॥ विष्णुध्यानरतालोका यज्ञदानपरायणाः । वर्णाश्रमाचाररताः सुखिनः सुस्थचेतसः ॥ त्रपाभूमिस्पृशः शूद्राः सर्वेब्राह्मणसेविनः । ब्राह्मणाश्चमहात्मानो वेदवेदाङ्गपारगाः ॥ प्रतिग्रहनिवृत्ताश्च सत्यसन्धाजितेन्द्रियाः । तपोव्रतपरानित्यं दातारो विष्णुसेविनः ॥ कालवर्षीतडित्वांश्च स्त्रियःसर्वाःपतिव्रताः । वसुन्धराचसस्याढ्या पुत्राश्चपितृसेविन इतिपाद्मेक्रि

यायोगसारः ॥ * ॥ अथावताराभग
वतोजीवानां निष्कृतिं यथा ॥ कृते
व्यतीते त्रेतायां दृष्ट्वा धर्म्मव्यतिक्रम
म् । वेदोक्तकर्मभिर्मर्त्त्या न शक्ताः
स्वेष्टसाधने ॥ बहुक्लेशकरं कर्म्म वै
दिकं भूरिसाधनम् । कर्त्तुं न योग्या
मनुजाश्चिन्ताव्याकुलमानसाः ॥ त्य
क्तुं कर्त्तुं न चार्हन्ति सदा कातरचेतसः
। वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि
भूतले ॥ तदा त्वं प्रकटीकृत्य तपः
स्वाध्यायदुर्बलान् । लोकानतारयः
पापात् दुःखशोकामयप्रदात् ॥ त्वां
विनाकोऽस्ति जीवानां घोरसंसा-
रसागरे । भर्त्ता पाता समुद्धर्त्ता पि
तृवत् प्रियकृत् प्रभुः ॥ इति श्रीमहानि
र्वाणतन्त्रे जीवोद्धारणहेतवे जगन्मा
तुःसदाशिवं प्रतिवाक्यम् ॥ त्रीन्
भेदान् एति । पृ० ॥ त्रेताये ॥ एको
ऽस्या दक्षिणाग्निगार्हपत्याहवनीया
त्मके अग्नित्रये ॥ त्रायां त्राः सदासन्धु
क्षणम् । त्रामिता ॥ यद्वा । त्रायन्ते
ऽत्राहुतयः । त्राभिरिता । त्रित्वमि
तेति वा । पृषोदरादिः ॥ त्रीणिइता
वा । पृषोदरादित्वादेत्वम् ॥

त्रेतायः । पुं । द्यूतक्रीडासाधनीभूताक्ष
स्याङ्कितस्य यस्मिन् भागे त्रयोङ्काभव
न्ति तस्मिन् ॥ त्रेतासंज्ञकोऽयः ॥

त्रेधा । अ । त्रिधा । त्रिप्रकारे ॥ स
ङ्ख्याया विधार्थे धा । एधाच्चेति धाप्रत्यये
तस्य एधाजादेशः ॥

त्रैककुदम् । न । सौवीराञ्जने ॥

त्रैकाल्यम् । न । कार्यकालात्पूर्वोऽप
रकाले ॥

त्रैगुणिकः । पुं । वार्द्धुषिके ॥ त्रिगुणार्थं
द्रव्यं त्रिगुणम् । तत् प्रयच्छति त्रि-
गुणं गृहीत्वैकगुणं ददातीत्यर्थः
। प्रयच्छति गर्ह्यमिति ठक् ॥

त्रैगुण्यम् । त्रि । त्रिगुणात्मके । सकामे
॥ न । त्रिषु गुणेषु ॥ त्रयो गुणा एव । ष्य
ञ् ॥ गुणत्रयकार्यपुण्यपापव्यामिश्रक
र्मफलसमाहारलक्षणे संसारे ॥

त्रैगुण्यविपर्य्ययः । पुं । त्रिगुणान्यथात्वे ॥

त्रैगुण्यविषयः । पुं । कर्मकाण्डात्मके
वेदे ॥ त्रयाणां गुणानां कर्म त्रैगु
ण्यम् काममूलःसंसारः स एव प्रका
श्यत्वेन विषयो यस्य सः ॥

त्रैदशिकः । पुं । दैवे ॥

त्रैधम् । अ । त्रैविध्ये । त्रिधा ॥ त्रिप्रका
रम् । द्वित्र्योश्च धमुञ् ॥

त्रैधर्म्मम् । न । हौत्राध्वर्यवौद्गात्रधर्म्मत्र
यार्हे ज्योतिष्टोमादिके काम्यकर्मणि ॥

त्रैपुरः । पुं । त्रिपुरदेशे । चैद्ये । डाह
ले ॥ इति हेमचन्द्रः ॥

त्रैलोक्यम् । न । स्वर्गमर्त्त्यपातालात्म

-के लोकत्रये ॥ त्रयाणां लोकानां समाहारः। त्रिलोकम् । तदेव। चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥

त्रैलोक्यविजया। स्त्री। भङ्गायाम् ॥ इति शब्दचन्द्रिका ॥

त्रैविद्यः। पुं। वेदत्रयवेत्तरि ॥ ऋग्वेदयजुर्वेदसामवेदलक्षणाः हौत्राध्वर्यवौद्गात्रप्रतिपत्तिहेतवस्तिस्रो विद्या यस्य स त्रिविद्यः। स्वार्थे तद्धितः॥ तिस्रो विद्या वेद। तदधीते तद्वेदेत्यणु वा ॥ याज्ञिके॥ त्रैविद्यास्यव्रते ॥

त्रैविष्टपः। पुं। अमरे। देवे ॥ त्रिविष्टपे वसति। अण् ॥

त्रैष्टुभम्। न। छन्दोविशेषे ॥ त्रिष्टुबेव। स्वार्थेऽण् ॥

त्रोटकी। स्त्री। रागिणीविशेषे ॥

त्रोटिः। स्त्री। कट्फले॥ चञ्च्वाम् ॥ खगान्तरे ॥ मीनविशेषे ॥ त्रोट्यते। त्रुटच्छेदने चु०। अच्यः ॥

त्रोटिहस्तः। पुं। पक्षिणि॥ त्रोटिर्हस्तो यस्य सः ॥

त्रोटी। स्त्री। त्रोट्यर्थमात्रे ॥

त्रोत्रम्। न। प्राजने। तोदने। गवादिपशुताडनदण्डे॥ त्रायते। त्रैङ् पालने। अमिनक्षिदिभ्य इत्रोत्रविति उत्रः ॥

त्र्यक्षः। पुं। शिवे ॥ त्रीण्यक्षीणि



यस्य सः ॥

त्र्यक्षरः। पुं। प्रणवे॥ अकारादीनि त्रीण्यक्षराणि यस्मिन् ॥ घटके ॥ इ० त्रि० ॥

त्र्यङ्कटम्। न। शिक्यप्रभेदे ॥ धौतान्याम् ॥

त्र्यङ्कटः। पुं। त्र्यङ्कटे ॥ ईश्वरे ॥

त्र्यङ्गुलम्। न। प्रमाणविशेषे ॥ तिस्रोऽङ्गुल्यः प्रमाणमस्य। तद्धितार्थेति समासः। द्विगोर्नित्यमिति द्वयसचो लुक्। तत्पुरुषस्याङ्गुलेरित्यच् ॥

त्र्यञ्जनम्। न। कालाञ्जनपुष्पाञ्जनरसाञ्जनात्मकेऽञ्जनत्रये ॥

त्र्यध्वगा। स्त्री। गङ्गायाम् ॥

त्र्यनीका। स्त्री। सेनाविशेषे ॥ त्रयाणामनीकानां समाहारः। अजादेराकृतिगणत्वात् टाप् द्विगोरिति प्राप्तो ङीप् बाध्यते ॥

त्र्यब्दा। स्त्री। त्रिहायण्याम् ॥ त्रयोऽब्दाः वयः प्रमाणमस्याः। आर्हीयष्ठक्। तस्याध्यर्द्धेति लुक् ॥

त्र्यहस्पृग्योगः। पुं। तिथिवारर्क्षात्मकयोगे ॥ नन्दाभौमार्कवारे पवनशतभिषार्द्रान्त्यचित्राग्निमूलासार्पैभैश्च समेता भद्राभृगुसुते फल्गुयुग्मार्द्रयुग्मैः। सौम्याद्वैजयाख्यामृगगुरुहरिभैन्द्राश्विकाख्याभिजिद्भिः पूर्णे रिक्तार्कविन्द्वादितिवसु विश्वाख्या

| त्र्यहस्पृ | त्र्यूषण |
| --- | --- |

नुराधामघाभिः॥ सौरेपूर्वाधनिष्ठा कर्कमकरमर्ययुक्ता यदित्रियोगं चाहुस्त्रिपूर्वं सततमशुभकरं चामृता र्थं मुनीन्द्राः॥

त्र्यम्बकः। पुं। महेश्वरे। शिवे। त्री णि अम्बकानि नयनान्यस्य॥ यथा यां लोकानाम् अम्बकः पितेति वा ॥ त्रीन्वेदान् अम्बते शब्दायते वा। अविशब्दे। चोषध्योपधः। कर्मण्य ण्। संज्ञायामितिकः॥ त्रिषु लोके षु कालेषु वा अम्बः शब्दो वेदश्च य स्य सत्येतिवा॥ अम्बनम् अम्बः शब्दः। त्रयोऽकारोकारमकाराः अम्बाः शब्दाः प्रतिपादकाः वाचकाः वा अस्ये तिवा॥ त्रीणि पृथिव्यन्तरीक्षद्युलोका ख्यानि अम्बकानि स्थानानि यस्येति वा। लोकत्रयव्यापीहि महेश्वरः॥

त्र्यम्बकसखः। पुं। कुबेरे॥ त्र्यम्बकस्य सखा। राजाहः सखिभ्यष्टच्॥

त्र्यम्बका। स्त्री। त्रिलोकजनन्यामाया याम्॥ सोमसूर्यानलात्रिस्त्वात् त्र्य म्बकासासुतावुधैः॥

त्र्यहस्पर्शः। पुं। त्रिदिनस्पृशि। तिथि त्रयस्पर्शयुक्ते ऽहनि॥

त्र्यहस्पृक्। पुं। वारत्रयेण्येकस्यांतिथौ॥ तिथिर्वारत्रये चैकाव्यहस्पृक्समुदा हृतम्॥ अन्यच्च। एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्र्यहस्पृक् तदहोरात्रमुपोष्यास्तदातिथिः॥

त्र्यहस्पृशम्। न। त्र्यहस्पर्शे॥ यथा। एकस्मिन् सावनेत्वह्नि तिथीनांत्रित यं यदा। तदा दिनक्षयः प्रोक्त अव साहस्त्रिकं फलम्॥ अपिच। एकं दि नं यत्र तिथित्रयव्यस्पृशेत्समाकृम्भेन येऽवमाख्यम्। एकातिथि स्त्रीणि दिनानियत्र स्पृशेत्सदाहुस्त्रिदिनस्पृश म्॥ त्र्यहस्पृशं नामयदेतदुक्तं तत्र प्रयत्नः कृतिभिर्निषेवः। विवाहयात्रा शुभपुष्टिकर्म सर्वंन कार्यं त्रिदिन स्पृशेतु॥

त्र्यहैहिकः। पुं। दिनत्रयनिर्वाहोचित धने ब्राह्मणे॥ ईहाचेष्टा तत्रा भवम् ऐहिकम्। त्र्यहपर्याप्तम् ऐ हिकंधनं यस्य॥

त्र्याहिकः। त्रि। तृतीयेऽह्निभवेज्व रादौ॥

त्र्युषणम्। न। त्रिकटुनि॥ ओषति। उषदाहे। ल्युट्। त्रयाणाम् उषणा नां समाहारः। पात्रादित्वात् स्त्री त्वंन॥

त्र्यूषणम्। न। त्र्युषणे। व्योषे॥ ऊष ति। ऊषदाहे। ल्युट्। त्रयाणामू षणानां समाहारः। पात्रादित्वात् स्त्रीत्वं न॥

त्वचीनी इति भाषा ॥ चर्मणि । स्व
र्णग्रन्थचित्रेदेव्यां प्रियालिने ॥ त्व
चति । त्वचसंवरणे । क्विप् ॥ यद्वा
। तनोति तन्यते वा । तनु० । इ जो
तेरनश्च व: चाच्चिक् प्रत्यय: ॥

त्वचम् । न । त्वचि । चर्मणि ॥ अल्क
ले ॥ त्वक्पत्रे ॥ यथा । त्वचं लघूष्णं
कटुकं स्वादु तिक्तञ्च रूक्षकम् । पि
त्तलं कफवातघ्नं कण्डूमारुतचिना
शनम् ॥ हृद्वस्तिरोगवातार्श: कृमि
पीनसशुक्रहृदिति ॥ प्रशस्ता त्वगस्य अ
स्ति । अर्श आद्यच् ॥ त्वचति । त्वचसं
वरणे । पुंसीति घ: ॥

त्वचनम् । न । संवरणे ॥ त्वचो ग्रहणे ॥

त्वचा । स्त्री । त्वचि ॥

त्वचापत्रम् । न । त्वक्पत्रे ॥

त्वचिष्ठ: त्रि । त्वचीयसि । अतिशयत्व
ग्विशिष्टे ॥

त्वचिसार: । पुं । वंशे ॥ हलदन्तादि
ति सप्तम्या अलुक् ॥

त्वचिसुगन्धा । स्त्री । क्षुद्रैलायाम् ॥

त्वत् । त्रि । भिन्ने । अन्यस्मिन् ॥ तनो
ति । तनु० । तनोतेरनश्च व: । चात्
क्विप् तुक् ॥

त्वदीय: । त्रि । भवदीये ॥ तवायम् ।
छ: । प्रत्ययोत्तरपदयोश्चेति मपर्य
न्तस्य त्वदादेश: ॥

त्वद्विध: । त्रि । त्वत्सदृशे ॥ त्वमेव विधा
प्रकारो यस्य ॥

त्वम्पदलक्ष्यार्थ: । पुं । प्रमातादिद्रष्टृ
सुषुप्त्याद्युपहिताधारभूते अनुस्यूत
प्रत्यगानन्दतुरीयचैतन्ये ॥

त्वम्पदवाच्य: । त्रि । त्वम्पदाभिधे ॥ दे
हादिभि: परिच्छिन्नो जीवस्तु त्वम्प-
दाभिध: ॥

त्वम्पदवाच्यार्थ: । त्रि । प्रमातृत्वादि
ष्टि: । एतदुपहितात्मतत्त्वादिविशि
ष्टं चैतन्यम् । एतदनुपहितचैतन्य-
ञ्च । एतत्त्रयं तप्तायःपिण्डवदेकत्वे
नावभासमानं त्वम्पदवाच्यार्थो भ-
वति ॥

त्वम्पदाभिध: । पुं । त्वम्पदवाच्ये । जीवे ॥
आलम्बनतया भाति योऽस्मत्प्रत्य
यशब्दयो: । अन्त:करणसम्भिन्नबो
ध: स त्वम्पदाभिध: ॥ त्वमिति पदमभि
धा यस्य ॥

त्वरणम् । न । त्वरायाम् ॥

त्वरा । स्त्री । वेगे । सम्भ्रमे । आवेगे
॥ त्वरणम् । ञित्वरा० । घटादय:
षित इति षित्त्वादित्यात् अङ् ।-
टाप् ॥

त्वरि: । स्त्री । त्वरायाम् । संवेगे ॥

त्वरितम् । न । शीघ्रे ॥ त्वरते स्म ञि
त्वरा सम्भ्रमे । गत्यर्थाकर्मकेति क

र्तरि क्तः । त्वष्यम् त्वरसंघुषास्व-नामिति वेट् ॥ चि । तद्विशिष्टे । तरस्विनि ॥ त्वरते । भीतः क्तः ॥ त्वरासञ्जाताऽस्येतिवा । तारकादित्वादितच् ॥ शीघ्रार्थेऽयं क्रियाविशेषणत्वादद्रव्येवर्त्तमानःक्लीवे । यथा । त्वरितं गच्छति ।द्रव्यवाचीतुत्रिलिङ्गः। यथा । त्वरितोऽश्वः । उतावलाधोडा इतिभाषा ॥

त्वरितगतिः । स्त्री । पङ्क्तिछन्दःप्रभेदे ॥ त्वरितगतिश्चनजनगैः । यथा । त्वरितगतिर्व्रजयुवति स्तरणिसुताविपिनगता । मुररिपुणा रतिगुरुणा परिरमितापमदमितेति ॥

त्वरितोदितः । त्रि । निरस्ते । शीघ्रोच्चारितेवचसि ॥ त्वरितम् उदितः ॥

त्वष्टः । त्रि । तष्टे । तनूकृते । छीला-इतिभाषा ॥ त्वक्ष्यतेस्म । त्वक्षूतनूकरणे । क्तः ॥

त्वष्टा । पुं । देवशिल्पिनि । विश्वकर्मणि ॥ आदित्यविशेषे ॥ तक्षिण । शिल्पिनि । तखाणइतिखाती इतिचभाषा ॥ वर्णसङ्करविशेषोयम् । शूद्रागर्भे विश्वकर्मण औरसेन जातः । इति ब्र० वै० ब्र० खं० ॥ चित्रानक्षत्रदेवतायाम् ॥ त्वक्षति । त्वक्ष्यते वा । त्वक्षू० । त्वेषतिवा । त्विष० । नप्तृ

नेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ इतिसाधुः । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्चेतिटृन् वा ॥

त्वा । अ । वितर्के ॥ विशेषे ॥

त्वाचप्रत्यक्षम् । न । स्पर्शज्ञाने । द्रव्यादेःस्पर्शद्वाराबोधे ॥ यथा । अवयवानमान्त्वङ्मनःसंयोगस्य बहि कारणत्वं तदा रासनचाक्षुषादिकालेत्वाचप्रत्यक्षंस्यात् । इतिसिद्धान्तमुक्तावली ॥

त्वाटक् । त्रि । त्वत्तुल्ये ॥

त्वाष्ट्रः । पुं । वृत्रासुरे । त्वष्टुरपत्ये ॥ अपत्येऽण् ॥

त्वाष्ट्रम् । न । चित्रानक्षत्रे ॥ त्वष्टादेवतास्य । सास्यदेवतेत्यण् ॥

त्वाष्ट्री । स्त्री । संज्ञानामसूर्यपत्न्याम् ॥ क्षुद्ररथे । रथिकायाम् ॥ चित्रानक्षत्रे ॥

त्विट् । स्त्री । शोभायाम् । कान्तौ ॥ वाचि ॥ रुचौ । प्रभायाम् ॥ जिगीषायाम् ॥ व्यवसाये ॥ त्वेषति । त्विषाममताबा । त्विषदीप्तौ । संपदादित्वात् क्विप् ॥

त्विषा । स्त्री । त्विडर्थे ॥ भागुरिमतेन टाप् ॥

त्विषाम्पतिः । पुं । सूर्ये ॥ अलुक् ॥

थिथिः । पुं । किरणे ॥ इति हेमचन्द्रः ॥

थे । अ ।
थै । अ । } वितर्के ॥ विशेषे ॥

त्सरुः । पुं । खड्गादिमुष्टौ । आदिशब्दात् कटितच्छुरिकादिग्रहः । मूंठ इति भाषा ॥ त्सरति । त्सर छद्मगतौ । भृमृशीतॄचरित्सरितनिधनिमिमस्‌जिभ्य उः ॥

त्सरुकः । त्रि । त्सरौ कुशले ॥ आकर्षादिभ्यः कन् ॥

## थः

थः । पुं । शिलोच्चये । पर्वते ॥ भयरक्षके ॥ व्याधिभेदे ॥ भयचिह्ने ॥ भक्षणे ॥ न । रक्षणे ॥ मङ्गले ॥ साध्वसे ॥ इति मेदिनीकरः ॥ थुडेर्डः ॥

थुत्कारः । पुं । निष्ठीवनत्यागानुकरणशब्दे ॥

थूथू । अ । निष्ठीवनत्यागानुकरणशब्दे ॥ यथा । थूथूकृत्यवमङ्गिरच्चमजनैरिति कृत्तिकर्णामृतम् ॥

थैथै । अ । वाद्यानुकरणशब्दविशेषे ॥

थोडनम् । न । संवरणे ॥ थुडसंवृतौ । ल्युट् ॥

थौणेयः । पुं । स्थौणेये ॥

## दः

दः । पुं । अचले । शैले ॥ दत्ते ॥ खण्डने ॥ न । भार्यायाम् ॥ इत्येकाक्षरकोषः ॥ त्रि । दातरि ॥

दंशः । पुं । वनमक्षिकायाम् । डाँस इति भाषा ॥ दंशति । दंश दशने । अच् ॥ वर्म्मणि ॥ मर्म्मणि ॥ दोषे ॥ खण्डने ॥ भुजगक्षते ॥ दंशने ॥ इत्यमरहेमचन्द्रः ॥

दंशकः । पुं । दंशे ॥ त्रि । दंशनकर्त्तरि ॥

दंशनम् । न । दंशे । दन्तेन खण्डने । काटखाना इति काटना इति च भाषा ॥ कवचे । वर्म्मणि ॥ दंश्यतेऽनेन । दश दंशनस्पर्शनयोः । करणे इति ल्युट् ॥

दंशभीरुः । पुं । स्त्री । कासरे । महिषे ॥ इति त्रिकाण्डशेषः ॥

दंशमूलः । पुं । शिग्रौ ॥

दंशितः । त्रि । कवचान्विते । धृतसन्नाहे । वर्म्मिते ॥ दष्टे ॥ दंशः सञ्जातोऽस्य । ता० इतच् ॥ यद्वा । दंश्यते स्म । दंश० क्तः ॥

दंशी । मशकू इतिख्याते क्षुद्रदंशे ॥ दंश

ति । दंश० । अङ् । गौरा० ङीष् ॥

दंष्ट्रा । स्त्री । दन्तविशेषे । दाढायाम् । दाढ इति भाषा ॥ दन्तपङ्क्तिद्वयप्रान्ते चतस्रश्चतस्रोदन्तविशेषा दंष्ट्राः । द्विगुणीकृतादन्तावलिरिति भावप्रकाशः ॥ दश्यतेऽनयेत्यर्थे दाम्नी शसयुयुजेत्यादिनाकरणेष्ट्रन् । टाप् । गौरादिषु मातामहीशब्दस्य पाठा दनित्यापितांङीष् ॥

दंष्ट्राल: । पुं । शूकरे ॥

दंष्ट्रिका । स्त्री । दाढिकायाम् ॥

दंष्ट्री । पुं । घृष्टौ । शूकरे ॥ सर्पे ॥ त्रि । दंष्ट्राविशिष्टे ॥ यथा दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः । ये स्वाम्यर्थे हता यान्ति राजन् स्वर्गे न संशयः । इत्यग्नि पुराणम् । प्रशस्ता दंष्ट्रास्ति अस्य । व्री० इनिः ॥

दकम् । न । वारिणि । जले ॥

दक्षः । पुं । ब्रह्मणो दक्षिणाङ्गुष्ठाज्जाते प्रजापतिविशेषे । ततएव मैथुनेन प्रजा जाताः ॥ ताम्रचूडे । कुक्कुटे ॥ मुनिविशेषे ॥ हरवृषे ॥ वृक्षविशेषे ॥ त्रि । चतुरे । सातव्येषु कर्म्मसुपेयोपस्थितेषु सद्यएव यत्तुङ्कर्त्तुञ्च समर्थे । शिक्षिते । कुशलसे ॥ दक्षते । दक्षवृद्धौ शीघ्रार्थेच । अचाद्यच् ॥

दक्षकन्या । स्त्री । भवान्याम् । दुर्गायाम् ॥ दक्षस्यप्रजापतेः कन्या ॥ ताःप्रजा शतसङ्ख्यकाः वह्निपुराणे गणभेदनामाध्याये प्रसिद्धाः ॥

दक्षजा । स्त्री । दुर्गायाम् ॥ दक्षात्जाता । पञ्चम्यामितिडः ॥

दक्षप्रजापतिः । पुं । शिवे ॥ चन्द्रे ॥

दक्षता । स्त्री । चिप्रकारित्वे ॥

दक्षसावर्णिः । पुं । नवमे मनौ । आमिषु सप्तमनुषु द्वितीये ॥

दक्षसुतः । पुं । देवे ॥

दक्षा । स्त्री । भूमौ ॥

दक्षाध्वरध्वंसकः । पुं । शिवे ॥ वीरभद्रे ॥ दक्षाध्वरस्य ध्वंसकः ॥

दक्षाध्वरध्वंसकृत् । पुं । हरे ॥ वीरभद्रे ॥ दक्षाध्वरध्वंसंकरोति । कृञ्० । क्विप् । तुक् ॥

दक्षाय्यः । पुं । गरुडे ॥ गृध्रे ॥ दक्षते । दक्ष० । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥

दक्षिणः । त्रि । दक्षिणोद्भूते ॥ सरले ॥ परच्छन्दानुवर्त्तिनि । पराभिप्रायवर्त्तिनि ॥ अपसव्ये । अवामे ॥ दक्षे ॥ औदार्यवति ॥ पुं । अनुधीपत्यन्तर्गतपतिविशेषे ॥ सकलनायिकाविषयसमसहजानुरागो दक्षिण इति लक्षणात् ॥ दक्षते । कृञ्० ।

दक्षिणाभ्यामिनम् ॥

दक्षिणकालिका। स्त्री। चामुण्डायाम्॥

दक्षिणतः। अ। दिशि॥ देशे॥ वसत्यागतो वा। कालेदक्षिणोत्तराभ्यामतसुजिति स्वार्थेऽतसुच्॥

दक्षिणतीरम्। न। दक्षिणतीरे॥

दक्षिणमार्गः। पुं। पितृयाणे। गतागतलक्षणे कर्मिणांमार्गे॥ यथोक्तमीशोपनिषद्भाष्ये। निर्विशेषं दक्षिणेनमार्गेण गतागतलक्षणेनेति॥

दक्षिणसिन्धुः। पुं। भीमतीर्थविशेषे॥

दक्षिणस्थः। पुं। सारथौ॥ त्रि। दक्षभागस्थिते॥ दक्षिणे तिष्ठति। ष्ठा० सुपीतिकः॥

दक्षिणा। अ। दिशि॥ देशे॥ वसति रमणीयं वा। दक्षिणस्यांदिशि दक्षिणादिग्वा। दक्षिणादाजिति स्वार्थेआच्॥ दक्षिणाहि इत्यर्थे॥

दक्षिणा। स्त्री। अवाच्यांदिशि। याम्यदिशि॥ यज्ञादिविधिदाने॥ यज्ञपत्न्याम्॥ यथा। दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्रपूजिता। ययाविनाहिविश्वेषु सर्वंकर्महिनिष्फलमिति भागवते ९ स्कन्धे १ऽध्यायः॥ प्रतिष्ठायाम्॥ देवान्तरे॥ दक्षिप्रजापतेस्तनयायाम्॥ परिक्रमद्रव्ये॥ नायिकाविशेषे॥ यथा। या गौरवं भयं प्रेम सद्भावं पूर्वनायके। नमुञ्चत्यन्यसक्तापि सा ज्ञेया दक्षिणा बुधैरितिश्रीधरस्वामी॥

दक्षिणाग्निः। पुं। अन्वाहार्यपचनाख्ये यज्ञाग्निविशेषे॥ दक्षिणाग्नेर्हि योनिविकल्पः। यतोवैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वानीयते॥ दक्षिणोऽग्निः। दिक्सङ्ख्ये संज्ञायामितिसमासः॥

दक्षिणाचलः। पुं। मलयपर्वते॥

दक्षिणाचारः। पुं। वामेतराचारे॥ यथा। स्वधर्मनिरतोभूत्वा पञ्चतत्त्वेन पूजयेत्। सएवदक्षिणाचारः शिवोभूत्वा शिवांयजेदित्याचारभेदतन्त्रम्॥ यच। चतुर्मकाराःअन्यैवपञ्चमोविजयारस इतिकश्चित्॥

दक्षिणात्। अ। दिशि॥ देशे॥ काले॥ वसत्यागतो रमणीयं वा॥ दक्षिणस्यांदिशि दक्षिणस्याः दक्षिणा वा। उत्तराधरदक्षिणादातिः॥

दक्षिणापथः। पुं। देशविशेषे॥ यथा। एतेगच्छन्तिबहवःपन्थानो दक्षिणापथम्। अवन्तीमृक्षवन्तञ्चसमतिक्रम्यपर्वतमितिमहाभारते नलोपाख्यानम्॥

दक्षिणापथजन्मा। पुं। आम्रविशेषे॥

यथा ॥ दक्षिणापथजन्मानः सर्वे नरवरान्धकाः । गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह ॥ उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि । यौनकाम्बोजगान्धाराः किराता बर्ब्बरैः सह ॥ एते पापकृतस्तात चरन्ति पृथिवीमिमामिति महाभारते मोक्षधर्मः ॥

दक्षिणापथदेशः । पुं । देशविशेषे ॥ यथा । तथापरे जनपदा दक्षिणापथवासिनः । पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च ॥ सेतुका मुष्यकाश्चैव कुपथा वारवासिकाः । नवराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः ॥ कावेराश्च सहैषीकैराटव्याः शवरास्तथा । पुलिन्दा विन्ध्यमूषीका वैदर्भा दण्डकैः सह ॥ कुलीयाश्च शिरालाश्च रूपसास्तापसैः सह । तथा तैत्तिरकाश्चैव सर्वे कारस्करास्तथा ॥ नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्मदाः । भानुकच्छाः समाहेयाः सहसारस्वतैस्तथा ॥ कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह । इत्येते अपरान्ताश्च शृणु ये विन्ध्यवासिनः ॥ इति मत्स्यपुराणम् ॥

दक्षिणामुखः । पुं । दक्षिणदिगभिमुखे ॥ यथा । अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् । न जीवत्पितृकः कुर्यात् कृते च पितृहा भवेत् ॥

दक्षिणामूर्त्तिः । पुं । परशिवे ॥ प्रोद्यच्छाखमहावटद्रुमतटे योगासनस्थं प्रभुं प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोद्वीक्ष्यमाणाननम् । मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं ध्यायन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम् ॥ चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥

दक्षिणायनम् । न । देवानां रात्रौ । कर्कटेऽर्कसङ्क्रमे । श्रावणादिषट्सु मासेषु ॥ माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादितः । उत्तरायणमाद्यैस्तैस्त्रिभिः स्याद्दक्षिणायनम् ॥ याम्यायने यस्य भवेत् प्रसूतिः शठः कठोरः पिशुनस्वभावः । चतुष्पदाढ्यः कृषिमानहंयुर्वाचामशान्तो मनुजः प्रतापी ॥

दक्षिणारुः । पुं । व्याधकर्त्तृकदक्षिणाङ्गकृतव्रणे मृगे । दक्षिणेर्म्मणि ॥ दक्षिणे अरुरस्य ॥

दक्षिणार्हः । त्रि । दक्षिणीये ॥ दक्षिणामर्हति । अर्ह पूजायाम् । अर्हश्चेत्यच् ॥

दक्षिणावर्त्तः । त्रि । दक्षिणे आवर्त्तविशिष्टे ॥

दक्षिणावर्त्तकी । स्त्री । वृश्चिकाल्याम् ॥

दक्षिणाशापतिः । पुं । यमे । वैवस्वते । धर्मराजे ॥ दक्षिणाशायाः पतिः ॥

दक्षिणाहि । अ । दक्षिणदिशि ॥ दक्षिणदेशे ॥ दक्षिणात् । आहिचदूरे इ तिस्वार्थे आहिर्दूरे चेदवधिमान् । वसति रमणीयंवा ॥

दक्षिणीय: । त्रि । दक्षिणार्हे ॥ दक्षिणामर्हति । कडङ्करदक्षिणाच्छचेति छः । तस्य ईयादेशः ॥

दक्षिणेन । अ । दक्षिणदिशि ॥ दक्षिणदेशे ॥ एनबन्यतरस्यामदूरेपञ्चम्याः । दक्षिणेन वसति रमणीयंवा ॥

दक्षिणेर्मा । पुं । दक्षिणारौ । सक्षत मृगे ॥ दक्षिणे ईर्म व्रणमस्य । दक्षिणेर्मालुब्धयोगइति अनिजन्तःसाधुः ॥

दक्षिण्यः । त्रि । दक्षिणार्हे ॥ दक्षिणामर्हति । कडङ्करदक्षिणाच्छचेति-यत् ॥

दगार्गलम् । न । निस्तोयदेशे जलोपलब्धिसाने ॥ तं निरूपयति वराहमिहिरः । तत्रादौ प्रयोजनप्रदर्शनार्थं माह । धर्म्यं यशस्यञ्चवदाम्यतोऽहं दगार्गलं येन जलोपलब्धिः । पुंसां यथाङ्गेषु सिरा स्तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः ॥ एकेन वर्णेन रसेन चाम्भ श्च्युतं नभस्तो वसुधा



विशेषात् । नानारसत्वं बहुवर्णता च गतं परीक्ष्यं क्षितितुल्यमेव ॥ २ ॥ सिरानामानि ॥ पुरुहूतानलयमनिरृतिवरुणपवनेन्दुशङ्करा देवाः । विज्ञातव्याः क्रमशः प्राच्याद्यानां दिशांपतयः ॥ दिक्पति संज्ञाश्चशिरा नवमीमध्ये महासिरानाम्नी । एताभ्योन्याः शतशो विनिसृतानामभिः प्रथिताः ॥ पातालादूर्द्ध्वसिरा शुभा चतुर्दिक्षुसंस्थितायाश्च । कोणदिगुत्थानशुभाः सिराः निमित्तान्यथोवक्ष्ये ॥ ५ ॥ * ॥ यदिवेतसोऽम्बुरहितेदेशे हस्तैस्त्रिभि स्ततःपश्चात् । सार्द्धेपुरुषे तोयं वहति सिरा पश्चिमातत्र ॥ चिह्नमप्यर्द्धपुरुषे मण्डूकः पाण्डुरोऽथमृत्पीता । पुटभेदकश्चतस्मिन् पाषाणो भवति तोयमतः ॥ ७ ॥ जम्ब्वाश्चोदग्घस्तैस्त्रिभिः सिराऽधोनरद्वये पूर्वा । मृल्लोहगन्धिकापाण्डुराचपुरुषेऽत्र तोऽत्रमण्डूकः ॥ ८ ॥ जम्बूवृक्षस्य प्राग् वल्मीकोयदिभवेत् समीपस्थः । तस्माद्दक्षिणपार्श्वेसलिलंपुरुषद्वये स्वादु ॥ अर्द्धपुरुषेच मत्स्यः पारावतसन्निभश्चपाषाणः । मृद्भवतिचात्रनीला दीर्घंकालंचबहुतोयम् ॥ १० ॥ पश्चादुदुम्बरस्यत्रिभिरेवकरैर्नरद्वयेसार्द्धे । पुरु

वेसितोऽहिरश्माभ्नोपमोऽधःसि
राशुभा ॥ ११ ॥ उदगर्जुनस्य दृश्यो
वल्मीको यदि ततोऽर्जुनाद्धस्तैः ।
त्रिभिरम्बु भवति पुरुषैस्त्रिभिरर्द्धस
मन्वितैः पश्चात् ॥ श्वेतागोधार्द्धन
रे पुरुषे मृद्धूसरा ततः कृष्णा । पी
ता सिता ससिकता ततोजलं नि
र्दिशेदमितम् ॥ १३ ॥ वल्मीकोप
चितायां निर्गुण्ड्यां दक्षिणेन कथित
करैः । पुरुषद्वये सपादे स्वादुजलं
भवति चाशोष्यम् ॥ रोहितमत्स्यो
र्द्धनरे मृत्कपिलापाण्डुरा ततः पर
तः । सिकताः सशर्करेटाः क्रमेण प
रतो भवत्यम्भः ॥ १५ ॥ पूर्वेणयदि
बदर्या वल्मीको दृश्यते जलंपश्चात्
। पुरुषैस्त्रिभिरादेश्यं श्वेतागृहगो
धिकाऽर्द्धनरे ॥ १६ ॥ सपलाशावद
रीचेद्दिश्यपरस्यां ततोजलं भवति
। पुरुषत्रये सपादे पुरुषेऽत्र च दुण्डु
भश्चिह्नम् ॥ १७॥ विल्वोदुम्बरयोगे
विहाय हस्तत्रयन्तु याम्येन । पुरुषैस्त्रि
भिरम्बु भवेत् कृष्णोर्द्धनरेचमण्डूकः
॥ १८ ॥ काकोदुम्बरिकायां वल्मी
कोदृश्यते सिरातस्मिन् । पुरुषत्रये
सपादे पश्चिमदिक्स्थावहति सा
च ॥ आपाण्डुपीतिकामृद्गौरसव-
र्णो भवतिपाषाणः । पुरुषेर्द्ध कुमु



दनिभो दृष्टिपथं मूषिको याति ॥
२० ॥ जलपरिहीनेदेशे वृक्षः का
म्पिल्यको यदा दृश्यः । प्राच्यांहस्त
त्रितयेवहति सिरा दक्षिणा प्रथमम्
॥ मृन्नीलोत्पलवर्णा कापोता दृ
श्यते तत्तस्मिन् । हस्तेऽजगन्ध-
को मत्स्यो जलमल्पञ्च सक्षारम् ॥
२२ ॥ श्योनाकतरोरपरोत्तरे सिरा
द्वौकरावतिक्रम्य । कुमुदानामसिरा
सा पुरुषत्रयवाहिनी भवति ॥ २३ ॥
आसन्नोवल्मीको दक्षिणपार्श्वे विभी
तकस्य यदि । अध्यर्द्धे भवतिसिरा पु
रुषे ज्ञेया दिशि प्राच्याम् ॥ २ ॥ त
स्यैवपश्चिमायांदिशिवल्मीको यदा
भवेद्धस्ते । तत्रोदग्भवतिसिरा चतु
र्भिरर्धाधिकैः पुरुषैः ॥ श्वेतोविश्व
म्भरकः प्रथमेपुरुषेतु कुङ्कुमाभो
श्मा । अपरस्यां दिशिचसिरानश्य
तिवर्षत्रयेतीते ॥ २६ ॥ सकुशःसितए
षायां वल्मीको यत्र कोविदारस्य ।
मध्येतयोर्नरैरर्ध पञ्चमैस्तोयमक्षो
भ्यम् ॥ प्रथमेभुजगः कमलोदरस
न्निभो महीरक्ता । कुरुविन्दःपाषा
णश्चिह्नान्येतानि वाच्यानि ॥ २८ ॥
यदिभवति सप्तपर्णो वल्मीकवृत
स्तदुत्तरेतोयम् । वाच्यं पुरुषैः पञ्च
भिरत्रापि भवन्ति चिह्नानि ॥ पुरु

षार्द्धेनतुहरितो दर्दुरोहरितालसन्निभाभूश्च। पाषाणोभ्रनिकाशःसौम्या च सिरा शुभाम्बुवहा ॥ ३० ॥ सर्वेषां हच्चाणामधःस्थितो दर्दुरोयदा दृश्यः। तस्माद्धस्तेतोयं चतुर्भिरर्द्धाधिकैःपुरुषैः ॥ पुरुषेतुभवति नकुलो नीलामृत् पीतिकाततःश्वेता। दर्दुरसमानरूपः पाषाणोदृश्यते तत्र ॥ ३२ ॥ यद्यहिनिलयोदृश्यो दक्षिणतः संस्थितःकरञ्जस्य। हस्तद्वयेतु याम्ये पुरुषत्रितये सिरासार्द्धे ॥ उदगन्धा स्वादुजला हरितोश्माधस्ततस्तोयम्। पुरुषार्द्धे कच्छपकः प्रथमं पूर्वा सिरोद्भिद्यते तत्र ॥ उत्तरतश्च मधूका दहिनिलयः पश्चिमेततस्तोयम्। परिहृत्य पञ्चहस्तान् नव चाष्टौ पौरुषान् प्रथमम् ॥ अहिराजः पुरुषेऽधोधूम्राधात्री कुलत्थवर्णोश्मा। माहेन्द्रे भवति सिरा वहतिसफेनं सदातोयम् ॥ ३६। वल्मीकःस्निग्धो दक्षिणे सकुशदूर्वस्तेत् तिलकस्य। पुरुषैःपञ्चभिरम्भोदिशि वारुण्यांसिरापूर्वा ॥ ३७ ॥ सर्पावासःपश्चाद्वल्मीका दक्षिणे कदम्बस्य। परतोहस्तत्रितयात्षड्भिःपुरुषैस्तुरीयोनैः ॥ कौवेरीचात्रसिरा वहतिजलं लोहगन्धिचाक्षोभ्यम्। कन



कनिभोमण्डूकोमरमाचेमृत्तिकापीता ॥ ३९ ॥ वल्मीकसंहतोयदितालोवाभवति नारिकेलोवा। पश्चात् षड्भिर्हस्तैर्नरैश्च तुभिःसिरायाम्या ॥ ४० ॥ याम्येनकपित्थस्याहिसंश्रयश्चे दुदग्जलं वाच्यम्। सप्तपरित्यज्यकरान् खात्वापुरुषान् कर्बुरा पुटभिद् ॥ अश्मन्तकस्यवामे बदरीवादृश्यतेहिनिलयोवा। षड्भिरुदग्स्थकरैः सार्द्धेपुरुषत्रये तोयम् ॥ कूर्मःप्रथमे पुरुषे पाषाणोधूसरः ससिकतामृत्। आदौचसिरायाम्या पूर्वोत्तरतो द्वितीयाच ॥ ४३ ॥ वामेनहारिद्रतरोर्वल्मीकश्चेज्जलं भवतिपूर्वे। हस्तत्रितयेसत्र्यंशैः पुम्भिःपञ्चभिर्भवति ॥ नीलोभुजगो दृश्योमृत्पीतामरकतोपमश्चाश्मा। कृष्णाभूःप्रथमं वारुणीसिरादक्षिणेनान्या ॥ ४४ ॥ जलपरिरहितेदेशेऽनूपजानिदृश्यन्ते निमित्तानि। वीरणदूर्वामृदवो यत्रस्तु तत्रजलं पुरुषे ॥ भार्गीत्रिवृतादन्ती सूकरपादीच लक्ष्मणाचैव। नवमालिका च हस्तद्वयेऽम्बुयाम्येत्रिभिः पुरुषैः ॥ ४६ ॥ स्निग्धाः प्रलम्बशाखावामनविकटद्रुमाःसमीपजलाः। सुषिराजर्जरपत्राहृक्षाश्चजलेनसन्त्यक्ताः

॥ ४७ ॥ तिलकाम्रातकवरुणकभल्लात
कबिल्वतिन्दुकाङ्कोलाः । पिण्डारशि
रीषकाञ्जनपरूषकावञ्जुलातिबलाः
॥ एतेयदिसुस्निग्धैर्वल्मीकैःपरिवृता
स्ततस्तोयम् । हस्तैस्त्रिभिरुत्तरतश्च
तुर्भिरर्द्धेनचपुरुषेण ॥ ४९ ॥ अतृणेस
तृणायस्मिन्सतृणेतृणवर्जिता मही
यत्र । तस्मिन्सिरा प्रदिष्टा वक्तव्यं
वाधनंवास्मिन् ॥ ५० ॥ कण्टक्यक
ण्टकानां व्यत्यासेम्भस्त्रिभिःकरैःप
श्चात् । खात्वापुरुषत्रितयं त्रिभागयु
क्तंधनंवास्यात् ॥ ५१ नदतियदिभूर्ग
म्भीरं यस्मिंश्चरणाहता जलं तस्मिन्
। सार्द्धैस्त्रिभिर्मनुष्यैः कौबेरीतत्र
च सिरास्यात् ॥ ५२ ॥ वृक्षस्यैकाशा
खा यदिविनताभवति पाण्डुरावास्या
त् । विज्ञातव्यं शाखातले जलं त्रिपु
रुषंखात्वा ॥ ५३ ॥ फलकुसुमविका
रोयस्यतस्यपूर्वेसिरात्रिभिर्हस्तैः । भ
वति पुरुषैश्चतुर्भिः पाषाणोऽधः-
क्षितिःपीता ॥ ५४ ॥ यदिकण्टका
रिकाकंटकैर्विनादृश्यतेसितैः कुसु-
मैः । तस्यास्तलेम्बुवाच्यं त्रिभिर्नरैर
र्द्धपुरुषेच ॥ ५५ ॥ खर्जूरीद्विशिरस्का
यत्रभवेज्जलविवर्जितेदेशे । तस्याः
पश्चिमभागे निर्देश्यं त्रिपुरुषैर्वारि ॥
॥ ५६ ॥ यदिभवतिकर्णिकारःसितै



कुसुमःस्यात्पलाशश्चवा । सव्येन
तत्रहस्तद्वयेम्बु पुरुषद्वये भवति ॥
५७ ॥ यस्यामूष्माधाम्यां धूमोवातत्र
वारिनरयुगले । निर्देष्टव्याचसिराम
हतातोयप्रवाहेण ॥ ५८ ॥ यस्मिन्
क्षेत्रोद्देशेजातंसस्यं विनाशमुपयाति
। स्निग्धमतिपाण्डुरं वा महासिरान
रयुगेतत्र ॥ ५९ ॥ * ॥ इतिजाङ्गला
नूपयोर्जलपरिज्ञानम् ॥ * ॥ अथम
रुभूमौ सिराविज्ञानम् ॥ मरुदेशे
भवतिशिरायथातथाऽतःपरंप्रवक्ष्या
मि । ग्रीवाकरभाणामिव भूतलसं
स्थाःसिरायान्ति ॥ ६० ॥ पूर्वोत्तरेण
पीलोर्यदिवल्मीको जलं भवति-
पश्चात् । उत्तरगमनाचसिरा वि-
ज्ञेयापञ्चभिःपुरुषैः ॥ चिह्नंदर्दुरमा
दौ मृत्कपिलाततपरं भवेद्धरिता ।
भवतिचपुरुषे ऽधोश्मातस्यतलेम्भो
विनिर्देश्यम् ॥ ६२ ॥ पीलोरेव प्रा
च्यां वल्मीकोऽतोर्द्धपञ्चमैर्हस्तैः ।
दक्षिणस्यायां तोयं वक्तव्यं सप्तभिः
पुरुषैः ॥ प्रथमेपुरुषे भुजगः सिता
सितो हस्तमात्रमूर्त्तिश्च । दक्षिणा
तोवहतिसिरा सक्षारं भूमिपानीय
म् ॥ ६४ ॥ उत्तरतश्च करीरस्याहि
गर्हदक्षिणेजलं स्वादु । दशभिः
पुरुषैर्ज्ञेयंपुरुषेपीतोऽभेकः

॥ ६५ ॥ रोहीतकस्य पश्चाद्दक्षिणास्य त्रिभिः करैर्याम्ये । द्वादशपुरुषान् खात्वा सवारापश्चिमेन सिरा ॥ ६६ ॥ इन्द्रतरोर्वल्मीकः प्राग्दृश्यः पश्चिमे सिरा हस्ते । खात्वा चतुर्दशनरान् कपिलागोधा नरे प्रथमे ॥ ६७ ॥ यदि वा सुवर्णनाम्नस्तरोर्भवेद्वामतो भुजङ्गगृहम् । हस्तद्वये तु याम्ये पञ्चदशनरावसाने ऽम्बु ॥ क्षारं पयो ऽत्र नकुलोऽर्द्धमानवे ताम्रसन्निभश्चाश्मा । रक्ता च भवति वसुधा वहति सिरा दक्षिणा तत्र ॥ ६८ ॥ बदरीरोहितवृक्षौ सम्पृक्तौ चेद्विनापि वल्मीकम् । हस्तत्रये ऽम्बु पश्चात् षोडशभिर्मानवैर्भवति ॥ सुरसं जलमादौ दक्षिणा सिरा वहति चोत्तरेणान्या । पिष्टनिभः पाषाणो मृच्छ्वेता वृश्चिकोऽर्द्धनरे ॥ ६९ ॥ सकरीरा चेद्बदरी त्रिभिः करैः पश्चिमेन तत्राम्भः । अष्टादशभिः पुरुषैरैशानी बहुजला च सिरा ॥ ७० ॥ पीलुसमेता बदरी हस्तत्रयसम्मिते दिशि प्राच्याम् । विंशत्या पुरुषाणामशोष्यमम्भो ऽत्र सक्षारम् ॥ ७१ ॥ ककुभकरीरावेकत्र संयुतौ यत्र ककुभबिल्वौ वा । सार्द्धकरे ऽम्बु पश्चात् नरैर्मितैः पञ्चविंशत्या ॥ ७२ ॥ व-



ल्मीकमूर्द्धनि यदा दूर्वाश्च कुशाश्च पाण्डुराः सन्ति । कूपो मध्ये देयो जलमत्र नरैकविंशत्या ॥ ७३ ॥ भूमिः कदम्बकयुता वल्मीको यत्र दृश्यते दूर्वा । हस्तद्वयेन याम्ये नरैर्जलं पञ्चविंशत्या ॥ ७४ ॥ वल्मीकत्रयमध्ये रोहीतकपादपो यदा भवति । नानावृक्षैः सहितस्त्रिभिर्जलं तत्र वक्तव्यम् ॥ हस्तचतुष्के मध्यात् षोडशभिश्चाङ्गुलैरुदग्वारि । चत्वारिंशत् पुरुषान् खात्वाश्माधः सिरा भवति ॥ ७६ ॥ ग्रन्थिप्रचुरा यस्मिन् शमी भवेदुत्तरेण वल्मीकः । पश्चात् पञ्चकरान्ते शतार्द्धसंख्यैर्नरैः सलिलम् ॥ ७७ ॥ एकस्थाः पञ्च यदा वल्मीका मध्यमो भवेच्छ्वेतः । तस्मिन् सिरा प्रदिष्टा नरषष्ट्या पञ्चवर्जितया ॥ ७८ ॥ सपलाशा यत्र शमी पश्चिमभागेऽम्बु मानवैः षष्ट्या । अर्द्धनरेऽहिः प्रथमं सवालुका पीतमृत् परतः ॥ ७९ ॥ वल्मीकेन परिवृतः श्वेतो रोहीतको भवेद्यस्मिन् । पूर्वेण हस्तमात्रे सप्तत्या मानवैरम्बु ॥ ८० ॥ श्वेता कण्टकबहुला यत्र शमी दक्षिणेन तत्र पयः । नरपञ्चकसंयुतया सप्तत्याहिर्नरार्द्धे च ॥ ८१ ॥ * ॥ अथ विशेषः ॥ मरुदेशे यच्चिह्नं न जाङ्ग-

दगार्गो

स्तैर्जलं विनिर्देश्यम् । जम्बूवेतस
पूर्वे येपुरुषा स्ते मरौद्विगुणाः ॥
८२ ॥ जम्बूत्रिवृत्ता मौर्वीशिशुमारी
सारिवाशिवाश्यामा । वीरुधयो वा
राहीज्योतिष्मतीगरुडवेगाच ॥ सू
करिकामाषपर्णीव्याघ्रपदाचेतियद्य
हेर्निलये । वल्मीकादुत्तरतस्त्रि-
भिः करैस्त्रिपुरुषेतोयम् ॥ एतदनू
पेवाच्यंजाङ्गलभूमौतु पञ्चभिः पुरु
षैः । एतैरेवनिमित्तै र्मरुदेशे सप्त
भिः कथयेत् ॥ ८५ ॥ एकनिभायत्र
मही तृणतरुवल्मीकपरिहीना ।
तस्यां यद्विकारोभवति धरित्र्यां ज
लं तत्र ॥ ८६ ॥ यत्रस्निग्धा निम्ना स
वालुका सानुनादिनी वास्यात् । त
त्रार्द्धपञ्चकैर्वारि मानवैः पञ्चभि-
र्वाद्विवा ॥ ८७ ॥ स्निग्धातरूणांयाम्ये
नरैस्त्रिभि र्जलं प्रभूतञ्च । तरुग
हनेऽपिविकृतो यस्तस्मात् तस्तदे
व वदेत् ॥ ८८ ॥ नमतेयत्रधरित्री
सार्द्धेपुरुषेम्बु जाङ्गलानूपे । कीटा
वायत्रविनालयेनवहवोम्बु तत्रापि ॥
८९ ॥ उष्णाशीताचमहीशीतोष्णा
म्भस्त्रिभिर्नरैः सार्द्धैः । इन्द्रधनुर्म्म
त्स्योवावल्मीकोवाचतुर्हस्तात् ॥ ९०
॥ वल्मीकानांपङ्क्त्या यद्येकोभ्यु
च्छ्रितःसिरा तदधः । शुष्यतिनरो

दगार्गं

हते वा सस्यं यस्यांचतत्राम्भः ॥ ९१
॥ एतज्जाङ्गलानूपे ॥ * ॥ न्यग्रोध
पलाशोदुम्बरैः समेतैस्त्रिभिर्जलं त
दधः । वटपिप्पलसमवाये तद्वत्वा
च्यं सिराचोदक् ॥ ९२ ॥ * ॥ अथ
कूपलक्षणम् ॥ आग्नेयदिक्कोणे ग्रा
मस्यपुरस्य वाभवेत् कूपः । नित्यं
सकरोतिभयं दाहञ्च समानुषं प्रायः
॥ नैर्ऋतकोणे बालक्षयञ्च वनिताभ
यञ्चवायव्ये । दिक्त्रयमेतत् त्यक्त्वा
शेषास्तुशुभावहाः कूपाः ॥ ९४ ॥ *
॥ सारस्वतेनमुनिना दगार्गलं यत्
कृतं तदवलोक्य । आर्याभिः कृतमे
तद् वृत्तैरपिमानवं वक्ष्ये ॥ ९५ ॥
स्निग्धा यतः पादपगुल्मवल्ल्यो नि-
श्छिद्रपत्रा श्च ततःसिरास्ति । पद्म
क्षुरोशीरकुलाः सगुन्द्राः काशाः कु
शावा नलिका नलोवा ॥ खर्ज्जूरजं
म्ब्वर्जुनवेतसाः स्युः क्षीरान्वितावा
द्रुमगुल्मवल्ल्यः । छत्रेभनागाः शतप
त्रनीपाः स्युर्नक्तमालाश्च ससिन्धुवा
राः ॥ विभीतकोवा मदयन्तिकावा
यत्रास्ति तस्मिन् पुरुषत्रये ऽम्भः ।
स्यात् पर्वतस्योपरिपर्वतोन्य स्तत्रा-
स्ति मूलेपुरुषत्रयेम्भः ॥ ९८ ॥ या
मौञ्जीभिः काशकुशैश्चयुक्ता नीला-
चमृद्यत्रसशर्करा च । तस्यां प्रभूतं

सुरसमतोयं कृष्णाचरणाच तथैव मृदे ॥ ९९ ॥ * ॥ अथभूगुणाः ॥ सशर्करा ताम्रमही कषायं क्षारं धरित्रीकपिला करोति। आपाण्डुरायां लवणं प्रदिष्टं मिष्टंपयोनीलवसुन्धरायाम् ॥ १०० ॥ शाकाश्वकर्णार्जुनबिल्वसर्जाः श्रीपर्ण्यरिष्टाधवशिंशपाश्च। छिद्रैश्चपर्णैर्मनगुल्मवल्लीोकृष्णा सुदूरेम्बुनिवेदयन्ति॥ १ ॥ सूर्याग्निभस्मोष्ट्रखराऽनुवर्णा या निर्जलासा वसुधा प्रदिष्टा। रक्ताङ्कुराःक्षीरयुताः करीरा रक्ताधराचेज्जलमम्मनोधः ॥ २ ॥ वैदूर्यमुद्गाम्बुदमेचकाभा पाकोन्मुखोदुम्बरसन्निभावा। भङ्गाञ्जनाभा कपिलाथवा या ज्ञेया शिलाभूरिसमीपतोया॥ ३ ॥ पारावतक्षौद्रघृतोपमाया क्षौमस्यवस्त्रस्य च तुल्यवर्णा। यासोमवल्ल्याश्च समानरूपा साप्याशुतोयं कुरुतेऽक्षयञ्च ॥ ४ ॥ ताम्रैःसमेता पृषतैर्विचित्रैरापाण्डुभस्मोष्ट्रखरानुरूपा। भृङ्गोपमाङ्गुष्ठिकपुष्पिकाच सूर्याग्निवर्णा च शिलावितोया ॥ ५ ॥ चन्द्रातपस्फटिकमौक्तिकहेमरूपाः याश्चेन्द्रनीलमणिहिङ्गुलकाञ्जनाभाः। सूर्योदयांशुहरितालनिभाश्चयाः स्युः शोभनामुनिवचोभिश्चपुण्यमेत त् ॥ ६ ॥ एता ह्यभेद्याश्च शिलाः शिवाश्च यक्षैश्च नागैश्च सदाभिजुष्टाः। येषाञ्च राष्ट्रेषु भवन्ति राज्ञां तेषा मवृष्टिर्न भवेत्कदाचित् ॥ ७ ॥ * ॥ शिलानां विदारणार्थमाह॥ भेदं यदानैति शिला तदानीं पलाशकाष्ठैः सह तिन्दुकानाम्। प्रज्वालयित्वानलमग्निवर्णा सुधाम्बुसिक्ताप्रविदारमेति ॥ ८ ॥ तोयं श्रितं मोक्षकभस्मनावा यत्सप्तकृत्वः परिषेचनं तत् ॥ कार्यं शरक्षारयुतं शिलायाः प्रस्फोटनं वह्निवितापिताया ॥ ९ ॥ तक्रकाञ्जिकसुराः सकुलत्था योजितानि बदराणि च तत्र। सप्तरात्रमुषितान्यभितप्तां दारयन्ति हि शिलां परिषेकैः ॥ १० ॥ नैम्बं पत्रं त्वक्च नालं तिलानां सापामार्गं तिन्दुकं स्याद्गुडूची। गोमूत्रेण स्रावितः क्षारएषां षट्कृत्वो ऽत स्तापितो भिद्यतेश्मा ॥ ११ ॥ * ॥ शस्त्रपानम् ॥ आर्कम्पयोहुडुविषाणमसीसमेतं पारावताखुशकृताचयुतः प्रलेपः। टङ्कस्यतैलमथितस्य ततोस्य पानं पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥ १२ ॥ क्षारं कदल्या मथितेनयुक्तं दिनोषितं पायितमप्ययसंयत्। सम्यक्छितं चाश्मनिनैति

भग्नं नचाम्बुनो ह्रेष्वपि तस्य कोष्ठम् ॥ १३ ॥ * ॥ वापीलक्षणम् ॥ प्राक्पश्चिमायता ऽम्भः सुचिरं धत्ते न याम्योत्तरा कल्लोलै रवदार मेति मरुता सा प्रायशः प्रेरितैः । तां चेदिच्छति सारदारुभि रपां सम्पात मावारयेत् पाषाणादिभिरेव वा प्रतिचयं क्षुण्णं द्विपाश्वादिभिः ॥ १४ ॥ ककुभवटाम्रप्लक्षकदम्बैः सनिचुलजम्बूवेतसनीपैः । कुरुवकताला ऽशोकमधूकै र्बकुलविमिश्रैश्चावृततीराम् ॥ १५ ॥ * ॥ नैर्वाहिकद्वारलक्षणम् ॥ द्वारञ्च नैर्वाहिक मेकदेशे कार्यं शिलासञ्चितवारिमार्गम् । कोशस्थितं निर्विवरं कपाटं कृत्वा ततः पांसुभिरावपेत्तम् ॥ १६ ॥ * ॥ कूपयोगमाह ॥ अञ्जनमुस्तोशीरैः सराजकोशातकामलकचूर्णैः । कतकफलसमायुक्तैर्योगः कूपेप्रदातव्यः ॥ १७ ॥ * ॥ अस्य गुणानाह ॥ कलुषं कटुकं लवणं विरसं सलिलं यदि वा ऽशुभगन्धि भवेत् । तदनेन भवत्यमलं सुरसं सुसुगन्धिगुणैरपरैश्च युतम् ॥ १८ ॥ * ॥ नक्षत्राणि ॥ हस्तो मघानुराधापुष्यधनिष्ठोत्तराणि रोहिण्यः । शतभिषगित्यारम्भे कूपानां शस्यते भगणः ॥ १९ ॥ * ॥ प्रतिष्ठा



विधानम् ॥ कृत्वा वरुणस्य बलिं वट वेतसकीलकं सिरास्थाने । कुसुमैर्गन्धैर्धूपैः सम्पूज्य निधापयेत् प्रथमम् ॥ १२० ॥ इति वाराह्यां द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

दग्धः । त्रि । भस्मीकृते । प्लुष्टे । प्रुष्टे ॥ अग्निस्पृष्टे ॥ सन्तप्ते ॥ दह्यते स्म । दह भस्मीकरणे । क्तः ॥ न । कतृणे ॥

दग्धकाकः । पुं । द्रोणकाके ॥

दग्धभम् । न । रव्यादिवारेषु भरण्यादिसप्तनक्षत्रेषु ॥ यथा । याम्यं त्वाष्ट्रं वैश्वदेवं धनिष्ठार्यमणं ज्येष्ठान्त्यं रवेर्दग्धभं स्यात् ॥ दग्धमतत्भञ्च ॥

दग्धरथः । पुं । चित्ररथगन्धर्वे ॥

दग्धरुहः । पुं । तिलकवृक्षे ॥

दग्धरुहा । स्त्री । दग्धाह्वये । भस्मरोहायाम् ॥

दग्धलग्नम् । न । शून्यलग्ने ॥ यथा । मृगसिंहौ तृतीयायां प्रथमायां तु वामगौ । पञ्चम्यां वृषराशी द्वौ सप्तम्यां चापचन्द्रभे ॥ नवम्यां सिंहकीटाख्यौ एकादश्यां गुरोर्गृहौ । वृषमीनौ त्रयोदश्यां दग्धसंज्ञास्तमीरिताः ॥ दग्धलग्ने यत्कर्मकृतं सर्वं विनश्यति ॥

दग्धा । स्त्री । रविमुक्तदिशि ॥ तिथिविशेषे ॥ यथा । द्वादश्येकादशी चैव

दशमीचन्द्रिषष्टिका। द्वितीयासप्तमीचैवदग्धाः सूर्यादिवारतः॥ प्रकारान्तरमपि। एकादशीचेन्दुवारे द्वादशीचार्कवासरे। षष्ठीवृहस्पते र्वारे। तृतीयाबुधवासरे। अष्टमी शुक्रवारेच नवमीशनिवासरे॥ पञ्चमीभौमवारेच दग्धयोगाः प्रकीर्त्तिताः॥ मासदग्धा यथा। द्वितीयामीनधनुषो श्चतुर्थी वृषकुम्भयोः। मेषकर्कटयोः षष्ठी कन्यामिथुनकोष्टमी॥ दशमी वृश्चिकेसिंहे द्वादशी मकरेतुले। एभिर्जातोनजीवेत यद्दिशक्रसमोभवेदितिदीपिका॥ कुरुइ इति गौडप्रसिद्धे वृक्षे। स्थलेरुहायाम्। कर्कशदलायाम्। दग्धरुहायाम्॥ दहेःक्तान्तात् टाप्॥

दग्धिका। स्त्री। दग्धभक्ते। भिक्षाटायाम्। जला भात इति भाषा॥ कुत्सितादग्धा दग्धिका। कुत्सिते इति कन्॥ दग्धाइत्ये॥

दग्धेष्टका। स्त्री। झामके। झांमा इति भाषा॥

दण्डः। पुं। न। लगुडे। लठ लठिया इतिभाषा॥ पुं। व्यूहप्रभेदे॥ प्रकाण्डे॥ अश्वे॥ कोणे॥ मन्थाने॥ सैन्ये॥ दाम्यते उद्धतोऽनेन। दम॥ अमन्तात्डः॥ काले। घडी इति भाषा॥ यथा। दशगुर्वक्षरोच्चारकालः प्राणःषडात्मकैः। तैःपलं स्यात्तत् षष्ट्यादण्डइत्यभिधीयते॥ मानभेदे। काठा इति गौडभाषा॥ चतुर्हस्तपरिमिते मानकाष्ठादौ॥ चण्डांशोः पार्श्वपार्श्विके। अर्कानुचरे॥ दमे॥ यमे॥ अभिमाने॥ ग्रहभेदे॥ अर्थापशारादिरूपेराज्ञांचतुर्थोपाये॥ यथा। दण्डः शास्ति प्रजाः सर्वा दण्डएवाभिरक्षति। दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः॥ यत्रश्यामो लोहिताक्षो दण्डश्चरति पापहा। प्रजा स्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति॥ सर्वोदण्डजितोलोको दुर्लभोहिशुचिर्नरः। दण्डस्यहि भयात् सर्वं जगद्भोगायकल्पते॥ *॥ नृपेणदोषजन्यग्राह्यधने॥ उत्पथप्रवृत्तौ निग्रहहेतुर्दण्डोभगवद्विभूतिः॥ माषामाचे॥ धनुर्द्वयपरिमिते मानकाष्ठादौ॥ इक्ष्वाकुराजपुत्रे॥ दण्डोस्यास्ति। अर्शआद्यच्॥ दण्डयति दण्ड्यतेऽनेनवा। दण्डदण्डनिपातने। पचाद्यच्। पुंसीतिघोवा॥ दमनम्वा। दमुउपशमे। अमन्तात्डः॥ राज्ञांहस्त्यश्वरथपदातिषु॥

दण्डकः। पुं। न। चण्डवृष्टिप्रपातादिछन्दःप्रभेदे॥ लघुलगुडे। सोठा

सोठी छडी इत्यादि भाषा ॥ ह्रस्वो दण्डः । ह्रस्वे इति कन् ॥

दण्डकन्दकः । पुं । धरणीकन्दे ॥

दण्डका । स्त्री । दण्डकारण्ये । जनस्थाने ॥

दण्डकाकः । पुं । द्रोणकाके ॥

दण्डकारण्यम् । न । रावणस्य शर्मनिवेशस्थाने । जनस्थाने ॥ दण्डकनाम्ना राज्ञा परिपालितो देशः । सच शुक्रशापादरण्यमभूत् ॥ तीर्थविशेषे ॥

दण्डढक्का । स्त्री । वाद्यविशेषे । यामघोषे । यामनाख्याम् । दमामा नगारा नौबत इत्यादि भाषा ॥

दण्डताम्री । स्त्री । ताम्रीवाद्ये ॥

दण्डधरः । पुं । काले । यमे । अन्तके ॥ दण्डधारः ॥ नृपे ॥ कुम्भकारे ॥ त्रि । दण्डहस्ते ॥ दुष्टनिग्रहकर्त्तरि ॥

दण्डधारः । पुं । पृथ्वीपतौ । राज्ञि ॥ यमे । समवर्त्तिनि ॥ त्रि । दण्डहस्ते ॥ दण्डं धरति । धृञ्० । कर्म ण्वुल् ॥

दण्डनायकः । पुं । सेनान्याम् । चतुरङ्गबलाध्यक्षे ॥

दण्डनीतिः । स्त्री । अर्थशास्त्रे । शुक्रनीत्यादिनीतिशास्त्रे ॥ दम्यते ऽनेन । दम० । अमन्ताड्डः । दण्डो नीयते बोध्यते ऽनया इति दण्डनीतिः ॥ क्तिन् ॥ दण्डेन नीयते चेदं दण्डं नयति वा पुनः । दण्डनीतिरिति ख्याता त्रीँल्लोकानतिवर्त्तते ॥ विश्वकोशभारते राजधर्मे द्रष्टव्यः ॥ दुर्गायाम् ॥ यथा । नयानयगता लोके विकल्पनिलया ऽमला । दण्डनाद्गमनाद्वापि दण्डनीतिरिति स्मृतेति देवीपुराणम् ॥०

दण्डनीयः । त्रि । दण्ड्ये ॥

दण्डपतिः । पुं । दण्डधरे ॥ दण्डनायके ॥

दण्डपांशुलः । पुं । गर्वाटे । द्वारपाले ॥

दण्डपाणिः । पुं । भैरवविशेषे । काशीस्थे शिवगणविशेषे ॥ यमे ॥ दण्डः पाणौ यस्य सः ॥

दण्डपारुष्यम् । न । ताडनादौ । अष्टादशविवादान्तर्गतविवादविशेषे ॥ राज्ञां सप्तव्यसनान्तर्गतव्यसनविशेषे ॥

दण्डपालः । पुं । अर्द्धशफरमत्स्ये । दांडिका इति गौडभाषा ॥

दण्डपालकः । पुं । प्रकुक्षमत्स्ये ॥

दण्डभृत् । पुं । यमे ॥ कुम्भकारे ॥ त्रि । दण्डधारके ॥ दण्डं बिभर्त्ति । डुभृञ्० । क्विप् ॥

दण्डमत्स्यः । पुं । दण्डारी इति प्रसिद्धमत्स्ये ॥ दण्डमत्स्योरसो तिक्तः पित्तरक्तकफं हरेत् । वातसाधारणः प्रोक्तः गुरुर्लघुविवर्द्धनः ॥

दण्डमाथ: । पुं । दण्डाकारेपथि ॥

दण्डयात्रा । स्त्री । दिग्विजये ॥ युद्धाय गमने ॥ संयाने ॥ वरयात्रायाम् ॥ इति मेदिनीहेमचन्द्रौ ॥ दण्डाययात्रा ॥

दण्डयाम: । पुं । कीनाशे ॥ दिवसे ॥ कुम्भसम्भवे । अगस्त्यमुनौ ॥ इति मेदिनी ॥

दण्डरी । स्त्री । डङ्गरीफले इति राजनिर्घण्ट: ॥

दण्डवान् । त्रि । दण्डिनि ॥ मतुप् ॥

दण्डवाटी । पुं । दर्वटे । द्वारपाले ॥ त्रि । दण्डवत्करि ॥

दण्डवालधि: । पुं । हस्तिनि । इभे ॥ दण्डइववालधिर्यस्य ॥

दण्डवासी । पुं । द्वारपाले ॥ इतित्रिका ण्डशेष: ॥ एकग्रामाधिकृतेजने । चौधरीइतिभाषा ॥ इतिजटाधर: ॥

दण्डविष्कम्भ: । पुं । कुठरे । मन्थबन्धनकाष्ठे । गर्गरीमुखस्थमन्थदण्डधारककाष्ठे ॥ दण्डं विष्कभ्नाति । स्क म्भुरोधने सौत्र: । कर्मण्यण् । वे:स्क भ्नातेर्नित्यमितिषत्वम् ॥

दण्डहस्तक: । पुं । सुद्दाम् ॥

दण्डव्यूह: । पुं । दण्डाकृतिव्यूहरचना विशेषे ॥ यत्राग्रेबलाध्यक्षो मध्येराजा पश्चात् सेनापति: पार्श्वयोर्ह स्तिन स्तत्समीपेघोटका स्तत:पदा तय: इत्येवंकृतरचनोदीर्घ:सर्वत: समविन्यासोदण्डव्यूहउच्यते । तेन यातव्यंमार्गंसर्वतोभयेसतियायात् ॥

दण्डस्थानम् । न । दशमुख्यानविशेषेषु ॥ यथा । दशस्थानानि दण्डस्य मनु: स्वायम्भुवोऽब्रवीत् । त्रिषु वर्णेषु यानिस्यु रक्षतो ब्राह्मणोब्रजेत् ॥ उपस्थ मुदरं जिह्वा ह स्तौ पादौचपञ्चमम् । चक्षु र्ना साच कर्णौच धनं देह स्तथैवच ॥ अनुबन्धं परिज्ञाय देशकालौ च त त्त्वत: । सारापराधौचालोक्य दण्डं दण्ड्येषुपातयेदितिमनु: ॥

दण्डहस्तम् । न । तगरपुष्पे ॥

दण्डाजिनम् । न । दम्भे ॥ शाठ्ये ॥

दण्डाजिनिक : त्रि । मायाविनि ॥

दण्डादण्डि । अ । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तमित्यर्थे ॥ अ न्ये० दीर्घ: । इच्कर्मव्यतिहारे ॥

दण्डार: । पुं । वाहने ॥ मत्तवारणे ॥ शरयन्त्रे ॥ कुम्भकारस्यचक्रे ॥

दण्डाहतम् । न । घोले । गोरसे ॥ द ण्डेन मथा आहतम् विलोडितम् । कर्तृकरणेकृतावहुलमिति समा स: ॥ त्रि । दण्डेन ताडिते ॥

दण्डिक: । पुं । दण्डिनि ॥ दण्डोस्यास्ति । अतइनिठनावितिठन् ॥ दण्डधारके

। कुडिया इतिभाषा ॥ डानिकला-माच इतिगौडभाषाप्रसिद्धे मत्स्ये ॥

दण्डिका । स्त्री । हारविशेषे ॥

दण्डितः । त्रि । राजादापिते । कृतदण्डे ॥ दण्डः सञ्जातो ऽस्य । तारका दित्वादितच् ॥

दण्डी । पुं । यमे ॥ द्वाःस्थे । द्वारपाले ॥ मञ्जुघोषे ॥ रवेः पार्श्वगविशेषे ॥ जिनविशेषे ॥ दमनकवृक्षे ॥ चतुर्थाश्रमिणि ॥ कविविशेषे ॥ यथा । जाते जगतिवाल्मीके कविरित्यभिधीयते । कवीइति ततोव्यासे कवयस्त्वयिदण्डिनीतिकालिदासः ॥ त्रि । दण्डयुक्ते ॥ दण्डोऽस्यास्ति । अत इनिठनावितीनिः ॥

दण्डिनी । स्त्री । दण्डश्यामा ॥ ऋन्नेभ्योङीप् ॥

दण्डिमा । पुं । दण्डत्वे ॥ दण्डस्य भावः । इमनिच् ॥

दण्डोत्पलम् । न । डानिपोला इति डानकुनि इतिच गौडभाषाप्रसिद्धे वृक्षविशेषे ॥ सतु पीतरक्तश्वेत-पुष्पभेदात् त्रिविधम् । पीतस्य पर्यायाः । गोवन्दनी । गन्धवल्ली । सहदेवी । सखा । इति ॥ रक्तस्य पर्यायः । विश्वदेवा । इति ॥ श्वेतस्य । दण्डोत्पलेतिरत्नमाला ॥

दण्डोत्पला । स्त्री । श्वेतपुष्पे दण्डोत्पले ॥

दण्ड्यः । त्रि । दण्डनीये । दण्डार्हे ॥ दण्डमर्हति । दण्डादिभ्योयत् ॥

दत् । पुं । दन्ते ॥ दतौ । दतः ॥ इ० ग्र० चं ॥

दत्तः । पुं । दत्तात्रेये ॥ अग्निसिंहमदनेन्द्रपविशेषे ॥ वैश्योपपदे ॥ यथा । शर्मा देवश्चविप्रस्य वर्माचाताचभूभुजः । भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेदितिस्मृतिः ॥ दत्तिमेपुत्रे ॥ त्रि । कृतदाने । विसृष्टे । विश्राणिते ॥ अर्चिते ॥ न । शरणागतरक्षणादौ ॥ यथा । शरणागतसन्त्राणं भूतानांचाप्यहिंसनम् । वहिर्वेदिच यद्दानं दत्तमित्यभिधीयते ॥ डुदाञ् । क्तः । दोदद्घोः ॥

दत्तकः । पुं । द्वादशपुत्रान्तर्गतपुत्रविशेषे । दत्रिमे ॥ यथा । दद्यान्माता-पितावायं सपुत्रो दत्तकोभवेदिति-याज्ञवल्क्यः ॥

दत्तात्मा । पुं । पुत्रविशेषे ॥ यथा । दत्तात्मातुस्वयंदत्तइति कात्यायनः । अस्यार्थः । दत्तात्मातुपत्रो यो माता पितृविहीनः ताभ्यांत्यक्तोवा तवाहं पुत्रो भवामीति स्वयंदत्तउपनीत-इति ॥

दत्तात्रेयः । पुं । विष्णोरंशेऽत्रिपुत्रे यो-

णीश्वरे परमावधूते ॥ विष्णुना आ
त्मसदृशमपश्यता ऽऽत्मैवाचर्वेदत्तः
। दत्तश्चासावात्रेयश्च ॥

दत्तानपकर्म्म । न । दत्ताप्रदानिके ॥

दत्ताप्रदानिकम् । न । अष्टादशविवाद
पदान्तर्गतविवादपदविशेषे ॥ यथा
नारदः । दत्त्वाद्रव्य मसम्यग्यः पु
नरादातुमिच्छति । दत्ताप्रदानिकं
नामव्यवहारपदंहितदिति॥ असम्य
क्अविहितमार्गेण । दत्तस्य पुनराह
रणं यस्मिन् विवादपदे तत् ॥

दत्तिः । स्त्री । प्रतिपादने । दाने ॥

दत्तेयः । पुं । इन्द्रे ॥ इतित्रिकाण्डशेषः ॥

दत्त्रिमः । पुं । पुत्रविशेषे । दत्तके ॥ मा
ता पितावा दद्यातां यमद्भिः पुत्रमा
पदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो
दत्त्रिमःसुतः ॥

ददत् । त्रि । प्रयच्छति ॥ ददाति । डु
दाञ्० । लटः शत्रादेशः । शपः श्लुः
। श्लाविति द्वित्वम् । अभ्यासस्य ह्रस्वः
। श्नाभ्यस्तयोरित्याल्लोपः । स्वाद्यु-
त्पत्तिः । उगित्त्वात् प्राप्तोनुम् अभ्य
स्तत्वान्नभवति ॥

ददनम् । न । प्रतिपादने । दाने ।

दद्रुः । पुं । न । दाद इतिप्रसिद्धे रो
गे । दद्रूम् ॥ तल्लक्षणं यथा ।
सकण्डुरागपिडकं दद्रुमण्डलमुन्नत-
मिति ॥ तच्चिकित्सा यथा । कुष्ठकृमि
मदद्रुघ्नानिशासैन्धवसर्षपाः । अम्लपि
ष्टाः प्रलेपोऽयं दद्रुकुष्ठनिषूदन इति
॥ अपिच । दूर्वाभयासैन्धवचक्रमर्द
कुठेरकाः काञ्जिकतक्रपिष्टाः । त्रि-
भिः प्रलेपैरपिवद्धमूलं दद्रुश्चकुष्ठ-
ञ्चविनाशमेतीति ॥ कच्छपे ॥

दद्रुकः । पुं । दद्रुरोगे ॥

दद्रुघ्नः । पुं । चक्रमर्द्दके । चकवड इति
कसौंदी इति च भाषा । दद्रुं हन्ति ।
हन० । अमनुष्यकर्त्तृकेचे
ति टक् । अत्पूर्वस्येति नियमाभावा
त्त्वम् ॥

दद्रुघ्नपत्रम् । न । पद्माटशाके । पवाँड
काशाकइति चकवंडकीभाजी इति
च भाषा ॥ दद्रुघ्नपत्रं दोषघ्नमम्लं वात
कफापहम् । कण्डूकासकृमिश्वासद
द्रुकुष्ठप्रणुल्लघु ॥

दद्रुणः । त्रि । दद्रुरोगिणि ॥ दद्रुरस्या ऽ
स्ति । पा०नः । पामादित्वान्नः । दद्रूणां इ
स्वत्वञ्च ॥

दद्रुनाशिनी । स्त्री । तैलिनीकीटे ॥

दद्रुरोगी । त्रि । दद्रुणे ॥

दद्रूः । पुं । त्वग्रोगविशेषे । कुष्ठप्रभेदे ॥
दरिद्र्यते ऽनेनाङ्गम् । दरिद्रादुर्ग
तौ । दरिद्रातेर्यालोपश्चेत्यूः । रिश्च
ञ्चापेतिसमस्तोवर्णोयो ॥

दधानः । त्रि । बिभ्राणे । धारयति ॥ दधातेः कर्त्तरि शानच् ॥

दधि । न । क्षीरोत्तरावस्थापन्ने दधि इति प्रसिद्धे गोरसे । क्षीरजे । मङ्गल्ये । त्रिरले । पयस्ये ॥ अस्य गुणाः । दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु । पाकेऽम्लं ग्राहि पित्तास्रशोथमेदःकफप्रदम् ॥ मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमज्वरे । अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत् ॥ तद्भेदाः पञ्च सम्प्रोक्ता लक्षणैस्तान् वदाम्यहम् । आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम् ॥ अम्लं चतुर्थं मत्यम्लं पञ्चमं दधि पञ्चधा । मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् ॥ मन्दं स्यात् सृष्टविण्मूत्रं दोषत्रयविदाहकृत् । यत् सम्यग्घनतां यातं व्यक्तं स्वादुरसं भवेत् ॥ अव्यक्ताम्लरसं तत्तु स्वादुविज्ञैरुदाहृतम् । स्वादु स्याद्दध्यभिष्यन्दि वृष्यं मेदःकफावहम् ॥ वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् । स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत् ॥ स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्ज्ञैः ॥ यत्तिरोहितमाधुर्य्यं व्यक्ताम्लत्वं तदम्लकम् । अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ॥ तदत्यम्लं दन्तरो-



मर्षकण्ठादिदाहकृत् । अत्यम्लं दीपनं रक्तपित्तदुष्टिकरं परम् ॥ * ॥ गव्यं दधि विशेषेण स्वादु बल्यं रुचिप्रदम् । पवित्रं दीपनं स्निग्धं पुष्टिकृत् पवनापहम् ॥ उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् ॥ * ॥ माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् । स्वादुपाकमभिष्यन्दि वृष्यं गुर्व्वस्रदूषकम् ॥ * ॥ आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् । शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥ * ॥ पक्वदुग्धभवं रुच्यं दधि स्निग्धं गुणोत्तरम् । पित्तानिलापहं सर्व्वधात्वग्निबलवर्द्धनम् ॥ * ॥ अथ निस्सारदुग्धस्य दध्नो ह्येते गुणाः स्मृताः । असारं दधि सङ्ग्राहि शीतलं वातलं लघु । विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥ * ॥ गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु । बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत् ॥ * ॥ सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित् । सगुडं वातनुद्वृष्यं बृंहणं तर्पणं गुरु ॥ * ॥ न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् । नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ * ॥ शस्यते दधि नो रात्रौ शस्तञ्चाम्बुघृतान्वितम् ।

रक्तपित्तकफोत्थेषु विकारेषु तु तच्च न ॥ * ॥ हेमन्ते शिशिरे चापि वर्षासु दधिशस्यते । शरद्ग्रीष्मवसन्तेषु प्रायश स्तद्विगर्हितम् ॥ ॥ ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् । प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः ॥ श्रीवासे ॥ सर्जे ॥ वासे ॥ त्रि । धारके ॥ इति मुग्धबोधम् ॥

दधिकूर्चिका । स्त्री । दध्नासहपक्वदुग्धे ॥ दध्नासह पयःपक्वं यत् तत्स्याद् दधिकूर्चिके त्युक्तः ॥ अर्द्धोदकोष्णदुग्धे दध्यम्लसंयोगात् जाते तिके चित् ॥ उष्णदुग्धे दध्यम्लसंयोगात् जाते त्वन्ये । छाना छेना इति राजाराधाकान्तः ॥

दधिचारः । पुं । मन्थानदण्डे । वैशाखे । तक्राटे । करधर्षणे । रयी इति भाषा ॥

दधिजम् । न । नवनीते ॥

दधित्थः । पुं । कपित्थे ॥ दधिवर्णोद्रवत्तिष्ठत्यस्मिन् । शा० । सुपिस्थ इति कः । पृषोदरादिः ॥

दधित्थाख्यः । पुं । सरलद्रवे । लोवान् इति भाषा ॥ इति रत्नमाला ॥

दधिधेनुः । स्त्री । दानार्थं दध्यादिनिर्मितायां धेनौ ॥

दधिपुष्पिका । स्त्री । अपराजितायाम् ॥

दधिपुष्पी । स्त्री । कोलशिम्ब्याम् ॥

दधिपूपः । पुं । अपूपप्रभेदे ॥ शालिपिष्टं युतं दध्ना मर्दयित्वा घृते पचेत् । वेष्टयेत् पक्वखण्डेन सुहृत्तं दधिपूपकम् ॥ दधिपूपो गुरु र्वृष्यो हृद्यश्लेष्मपित्तकृत् । वृष्योग्निजनन श्चैव विशेषाद्वातविकारकः ॥

दधिफलः । पुं । कपित्थवृक्षे ॥ दधिफलेऽस्य ॥

दधिमण्डः । पुं । मस्तुनि ॥

दधिमण्डोदः । पुं । दधिसमुद्रे ॥

दधिमुखः । पुं । रामायणप्रसिद्धे वानरविशेषे । सुग्रीवस्य श्वशुरे ॥

दधिशोणः । पुं । वानरे ॥

दधिसक्तवः । पुं । करम्भे ॥ दधिसक्तुशब्दो नित्यं बहुवचनान्तः ॥ दध्नाउपसिक्ताः सक्तवः । अन्नेनव्यञ्जनमिति समासः ॥

दधिसारम् । न । नवनीते ॥

दधिस्नेहः । पुं । दधिसरे । दध्युत्तरगे ॥

दधिस्वेदः । पुं । घोले ॥

दधीचः । पुं । दधीचिमुनौ ॥ इतिशब्दभेदप्रकाशः ॥

दधीचतीर्थम् । न । तीर्थविशेषे ॥

दधीचास्थि । न । वज्रे ॥ हीरके ॥

दधीचिः । पुं । मुनिविशेषे । अथर्वमुनेरौरसात् कर्दमकन्यायां शान्तिनामन्यां जाते ॥ वृत्रासुरवधाय देवैरस्यास्थ्ना वज्रं निर्मितम् ॥

दधीच्यस्थि । न । हीरके ॥ वज्रे ॥

दधृक् । त्रि । धृष्टे ॥ धृष्णोति । ञिधृषा प्रागल्भ्ये । अस्मात् ऋत्विगादिना क्विन् द्वित्वमन्तोदात्तत्वञ्च निपात्यते । कुत्वात् पूर्वंजश्त्वेनडः गः कः ॥

दध्नः । पुं । यमे ॥ इतिशब्दरत्नावली ॥

दध्यङ् । पुं । आथर्वणे मुनिविशेषे ॥

दध्याकरः । पुं । दधिसमुद्रे ॥

दध्याली । स्त्री । श्रावणायाम् ॥ सुदर्शनायाम् । सुदर्शनगुलञ्चइतिगौडभाषा ॥

दध्युत्तरम् । न । कद्वरे । दधिस्नेहे ॥

दध्युत्तरगम् । न । दधिस्नेहे ॥

दध्युदः । पुं । दधिसमुद्रे ॥ दधिउदकं यस्य । उत्तरपदस्यचेत्युदकस्योदादेशः ॥

दनुः । पुं । दनुवंशजत्वात् कबन्धाख्ये असुरे ॥

दनुः । स्त्री । दानवमातरि । दक्षकन्यायाम् । कश्यपपत्न्याम् ॥

दनुजः । पुं । असुरे । दैत्ये ॥ दनौ दनोर्वा जातः । सप्तम्यांजनेर्डः । पञ्चम्यामजातौ ॥

दनुजदलिनी । स्त्री । दुर्गायाम् ॥

दनुजद्विट् । पुं । देवे ॥

दनुसूनुः । पुं । असुरे ॥ दनोःसूनुः ॥

दन्तः । पुं । अद्रिकटके ॥ कुञ्जे ॥ सानुनि ॥ चर्वणसाधनास्थनि । दशने । रदने । रदे । द्विजे ॥ द्वात्रिंशत्सङ्ख्यायाम् ॥ पञ्चमाशप्रभेदे (155) ॥ दाम्यति । दमु० । अन्तर्भावितण्यर्थात् बाहुलकात्तन् । हसिमृग्रिणिति वा तन् ॥

दन्तकः । पुं । नागदन्ते । खूंटी इति भाषा ॥ गिरेः प्रदेशात् तिर्यग्बहिर्निर्गते पाषाणे ॥ दन्तेषु प्रसिते ॥ स्वाङ्गेभ्यः प्रसिते इतिकन् ॥ दन्ते ॥ स्वार्थेकन् ॥

दन्तकर्षणः । पुं । जम्बीरे ॥

दन्तकाष्ठम् । न । विकङ्कतवृक्षे ॥ दन्तधावनार्थकाष्ठे ॥ यथा । दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम् । सर्वेकण्टकिनः पुण्याः क्षीरिणश्चयशस्विनः ॥ ॥ तिक्तं कषायं कटुकं सुगन्धि कण्टकान्वितम् । क्षीरिणो वृक्षगुल्माद्या भक्षये दन्तधावनम् ॥ इतिमहाभारतम् । परिमाणमाहविष्णुः । कनिष्ठाग्रसमं स्थूलं सुकूर्चं द्वादशाङ्गुलम् । प्रातर्भुक्त्वाच यतवाक् भक्षये

दृढ़दन्तधावनम् ॥ विशेषमाह मरीचिः। द्वादशाङ्गुलन्तु विप्राणां क्षत्रियाणां नवाङ्गुलम्। अष्टाङ्गुलञ्च वैश्यानां शूद्राणान्तु षडङ्गुलम् ॥ चतुरङ्गुलमानेन नारीणां विधिरुच्यते। अन्तरप्रभवानाञ्च षडङ्गुलमुदाहृतमिति ॥ अथास्य लक्षणम्। तत्प्रयोजनप्रदर्शनम्। वल्लीलतागुल्मतरुप्रभेदैः स्युर्दन्तकाष्ठानि सहस्रशो यैः। फलानि वाच्यान्यथ तत्प्रसङ्गो माभूदतो वच्म्यथ कामिकानि ॥ १ ॥ परिभाषार्थमाह। अज्ञातपर्वाणि न दन्तकाष्ठान्यग्रासनपत्रैश्च समन्वितानि। नयुग्मपर्वाणि न पाटितानि नचोर्द्ध्वशुष्काणि विना त्वचा च ॥ २ ॥ प्रविभागेन फलानि ॥ वैकङ्कतश्रीफलकाश्मरीषु ब्राह्मीद्युतिः चे मतरौ सुदाराः। इद्धिर्वटेऽर्के प्रचुरञ्च तेजः पुत्रा मधूके सगुणाः प्रियत्वम् ॥ लक्ष्मीः शिरीषे च तथा करञ्जे प्लक्षेऽर्थसिद्धिः समभीप्सिता स्यात्। मान्यत्वमाप्नोति जनस्य याभ्यां प्राधान्यमश्वत्थतरौ वदन्ति ॥ आरोग्यमायुर्वदरीबृहत्योः रैश्वर्यवृद्धिः खदिरे सविल्वे। द्रव्याणि चेष्टान्यतिमुक्तकेऽयुः प्राप्नोति तान्येव पुनःकदम्बे ॥ नीपेऽर्थाप्तिः करवीरे च वह्नि भाण्डीरे स्यादन्नमेवं प्रभूतम्। शम्यांशत्रून् सोपहन्त्यर्जुने च श्यामायाञ्च द्विषतामेव नाशः ॥ साले ऽश्वकर्णे च वदन्ति गौरवं सभद्रदारावपि चाटरूषके। वाल्लभ्यमायाति जनस्य सर्वतः प्रियङ्ग्वपामार्गसजम्बुदाडिमैः ॥ * ॥ अथ विधानम् ॥ उदङ्मुखः प्राङ्मुख एव वाऽब्दं कामं यथेष्टं हृदये निवेश्य। अद्यादनिन्द्यंश्च सुखोपविष्टः प्रक्षाल्य जह्याच्च शुचौ प्रदेशे ॥ ८ ॥ * ॥ त्यक्तस्य लक्षणम्। अभिमुखपतितं प्रशान्तदिक्स्थं शुभमतिशोभनमूर्द्धसंस्थितं यत् ॥ अशुभकरमतोऽन्यथा प्रदिष्टं स्थितपतितञ्च करोति मिष्टमन्नम् ॥ इति ॥



दन्तकाष्ठकम्। न। आहुल्यवृक्षे ॥

दन्तच्छदः। पुं। रदनच्छदे। उत्तराधरोष्ठमात्रे ॥ दन्ताश्छाद्यन्तेऽनेन। छदसंवरणे। चु०। पुंसीति घः। छादेर्घ इति ह्रस्वः ॥

दन्तच्छदोपमा। स्त्री। बिम्ब्याम् ॥

दन्तधावनः। पुं। खदिरद्रुमे ॥ दन्तान् धावति। धावुगतिशुद्ध्योः। ल्युट् ॥ गुच्छकरञ्जे ॥ वकुले ॥ न। दन्तशुद्धौ ॥ तस्य विधिः। प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम्। भक्षयेद् दन्तप

षनं दन्तमांसान्यबाधयन् ॥ * ॥ द
न्तानूर्द्धमधोघृष्ट्वा प्रात: सिञ्चेज्जले
षने । तोयपूर्णमुख कोमदृष्टि राशु
प्रसीदति ॥ * ॥ अर्हिती कर्णशूलीच
दन्तरोगी नवज्वरी । शोषी कासी
च मूर्च्छार्त्तो दन्तकाष्ठं विवर्जयेत् ॥
* ॥ उपवासदिने विप्र पितृश्राद्धदि
ने तथा । नचतत् फलमाप्नोति-
दन्तधावनकृन्नर: ॥ प्रभातेमार्ज्ज-
येद् दन्तान् वाससा रसनां तथा ।
कुर्यात् द्वादशविप्रेन्द्र कवलानि ज
लैर्बुध: ॥ उपवासे पितृश्राद्धे विधि
नानेन जैमिने । दन्तधावनकृन्मर्त्य:
सम्पूर्णं लभते फलमिति ॥ * ॥ स्मृत्य:
न्तारद् दक्षिणास्येन पश्चिमास्येनवा
मय: । पूर्वास्ये नोत्तरास्येन सम्यदो
दन्तधावनादिति विशेष: ॥ अपिच
। मध्यमानामिकाभ्याञ्च वृद्धाङ्गुष्ठेन
चद्विज: । दन्तानांधावनं कुर्यात् तर्ज
न्यानकदाचन ॥ नित्यक्रियाफलंप्रे
प्सुस्त्वरया दन्तधावनम् । प्रभाते कु
र्वते प्राज्ञ: सूर्योदयविवर्जिते । सू-
र्योदयेद्विजश्रेष्ठय: कुर्याद् दन्तधाव
नम् । नित्यक्रियाफलं तस्य सर्वमेव
विनश्यति ॥ य:स्नानसमये कुर्यात्
जैमिने दन्तधावनम् । निराशा:पित
रोयान्ति तस्यदेवा:सुरर्षय: ॥ दन्तस्य



धावनंकुर्याद् योमध्याह्नापराह्णयो:
। तस्यपुष्पं न गृह्णन्ति देवता: पि
तरोजलम् ॥ स्नानकाले पुष्करिण्यां
य: कुर्याद्दन्तधावनम् । तावच्चेय:
सचण्डालो यावद्गङ्गा न पश्यति ॥
भगवत्युदिते सूर्येय:कुर्याद् दन्तधा
वनम् । तद्दन्तकाष्ठीं पितरो भुक्त्वा
गच्छन्तिदु:खित: ॥ इति पाद्मे क्रि
यायोगसार: ॥

दन्तपत्रम् । न । कुण्डले ॥

दन्तपत्रकम् । न । कुन्दपुष्पे ॥

दन्तपर्य्याय: । पुं । पत्तमानप्रभेदे (155) ॥

दन्तपुप्पुटक: । पुं । दन्तरोगविशेषे ॥
अस्यनिदानं यथा । दन्तयो स्त्रिषुवा
यस्य श्वयथु र्जायते महान् । दन्तपु
प्पुटको नाम स व्याधि: कफरक्तज
इति ॥

दन्तपुष्पम् । न । कतकफले ॥ कुन्दे ॥

दन्तफलम् । न । कतके ॥ पुं । कपि
त्थे ॥

दन्तफला । स्त्री । पिप्पल्याम् ॥

दन्तभाग: । पुं । हस्त्यग्रभागे । गजस्य
मुखम: स्कन्धपर्यन्तोऽग्रभागे ॥ दन्त
स्यभाग: । दन्तसम्बन्धीभागोवा । या
वत्पार्थिवादि: ॥

दन्तमलम् । न । मुक्षिकायाम् । कुन्द
कमलादे ॥

दन्तमूलम् । न । दन्तार्बुदाभिधेरोगे ॥

दन्तमूलिका । स्त्री । दन्तीवृक्षे ॥

दन्तरोगः । पुं । रदनामये ॥

दन्तरोगी । त्रि । रदनामयविशिष्टे ॥ फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् । तथा तिकठिनं भक्ष्यं दन्तरोगी विवर्जयेत् ॥

दन्तवक्रः । पुं । भारतादिप्रसिद्धे नृपविशेषे ॥

दन्तवस्त्रम् । न । ओष्ठे ॥

दन्तवासः । न । ओष्ठे । अधरौष्ठयोः ॥

दन्तवीजकः । पुं । दाडिमे ॥

दन्तवेष्टः । पुं । दन्तरोगविशेषे ॥ यथा । स्रवन्ति पूयरुधिरं चलादन्ता भवन्ति च । दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥

दन्तशठः । पुं । जम्बीरे ॥ कपित्थे ॥ कर्म्मरङ्गे ॥ नागरङ्गे ॥ शठति । शठ कैतवे च । चात् हिंसासङ्क्लेशनयोः । पचाद्यच् ॥ अम्लरसे ॥ दन्तानां शठ इवापकारित्वात् ॥

दन्तशठा । स्त्री । चाङ्गेर्याम् ॥ क्षुद्राम्लिकायाम् ॥ दन्तानां शठेवापकारित्वात् ॥

दन्तशर्करा । स्त्री । कफवायुशोषितद्दन्तमलमले ॥ यथा । मलो दन्तगतो यस्तु कफमारुतशोषितः । शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥

दन्तशाणम् । न । मिशुकवे । मिस्सि इति भाषाप्रसिद्धे दन्तघर्षणचूर्णे ॥ इति त्रिकाण्डशेषः ॥

दन्तशिरा । स्त्री । माड्याम् ॥

दन्तशूलः । पुं । रदनवेदनायाम् ॥ अस्यौषधं यथा । पिप्पलीनिम्बपत्राभ्यां कटुकारग्वधैः शृतम् । पाययेन्मधुनामिश्रं दन्तमूलोपशान्तये ॥

दन्तशोफः । पुं । दन्तार्बुदे ॥

दन्तहर्षः । पुं । दन्तरोगविशेषे ॥ यथा । शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः समागतः ॥

दन्तहर्षकः । पुं । जम्बीरे । इति जटाधरः ॥

दन्तहर्षणः । पुं । जम्बीरे ॥ इ० त्रि० ॥

दन्ताघातः । पुं । निम्बूके ॥ रतिक्रीडायां दशनाघाते ॥ तत्स्थानानि यथा । स्तनयो र्गण्डयो श्चैव ओष्ठे चैव तथाधरे । दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः ॥ इति कामशास्त्रम् ॥

दन्तायुधः । पुं । शूकरे ॥ दन्तावायुधौ अस्य ॥

दन्तार्बुदः । पुं । न । दन्तरोगप्रभेदे । दन्तशोफे । द्विजव्रणे ॥

दन्तालिका । स्त्री । वल्गायाम् । लगाम

इतिभाषा ॥

दन्तावलः । पुं । हस्तिनि । गजे ॥ अति शयितौ दन्तावस्य । दन्तशिखात् सं ज्ञायामितिवलच् । वले इतिदीर्घः ॥

दन्तिका । स्त्री । दन्त्योषधौ । मुकूल के ॥ दाम्यति दाम्यते वा । दमुउप शमे । हसिमृग्रिणुवाऽमिदमीत्या दिना तन् । स्वार्थे कन् ॥

दन्तिजा । स्त्री । दन्तिकायाम् ॥

दन्ती । पुं । दन्तावले ॥ अतिशयितौद न्तावस्य । इनिः ॥

दन्तिनी । स्त्री । दन्तीवृक्षे ॥

दन्तिमदः । पुं । हस्तिमदे ॥

दन्तिमूलिका । स्त्री । दन्त्योषधौ ॥

दन्ती । स्त्री । उदुम्बरपर्ण्यामोषधौ । प्रत्यक् पर्ण्याम् ॥ दाम्यति दाम्यते वा । दमु० । तन् । गौ० ङीष् ॥ ल घुदीर्घ प्रभेदेन प्रोक्तं दन्तीद्वयं बु धैः । दन्तीद्वयं सरं पाके रसेच क टु दीपनम् ॥ गुदाङ्कुराश्मशूला स्रकण्डुकुष्ठविदाहनुत् । तीक्ष्णो ष्णंहन्ति पित्तास्रकफशोथोदरकृ- मीन् ॥

दन्तीवीजम् । न । जयपाले ॥

दन्तुरः । त्रि । उन्नतरदे ॥ उन्नताद न्ताः सन्त्यस्य । दन्तउन्नत उरच् ॥ उ न्नतानते । विषमे ॥ कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशःसुखी । क- दाचित् तुन्दिलोदुःखीकदाचिच्च- ञ्चलासतीति सामुद्रकम् ॥ स्त्री । दन्तुरा ॥

दन्तुरच्छदः । पुं । वीजपूरे ॥

दन्तोलूखलिकः । पुं । } तापसे । वान
दन्तोलूखली । पुं । } प्रस्थविशेषे ॥
योग्रीह्यादीन् दन्तैः खण्डयित्वा भ क्षयति सः ॥

दन्त्यः । त्रि । दन्तोद्भवेवर्णविशेषे ॥ द न्तेषुभवः । शरीरावयवाच्चेति यत् ॥ दन्तहिते ॥ दन्तेभ्योहितः । शरीरा वयवाद्यत् ॥

दन्दशूकः । पुं । राक्षसे ॥ सरीसृपे । फणिनि ॥ गर्हितं दशति । लुपसदे ति यङ् । यजजपेत्यूकः । जपजभ दहेत्यभ्यासस्यनुक् ॥ नरकविशेषे ॥

दन्द्रम्यमाणः । त्रि । अत्यर्थं कुटिला- मनेकरूपांगतिमिच्छति ॥

दभ्रम् । न । अल्पे ॥ दभ्यते । दम्भुद- म्भने । स्फायितञ्चीति रक् ॥ पुं । समुद्रे ॥

दम् । अ । कलत्रे । पत्न्याम् ॥

दमः । पुं । दमथे ॥ वाह्येन्द्रियनैश्चल्ये । वाह्येन्द्रियाणां श्रवणादिभ्यतिरिक्त विषयेभ्यो निवर्त्तने । वहिरिन्द्रियाणा मुच्छृङ्खलव्यापारनिरोधे । वाह्येन्द्रि

यसंयमे ॥ निग्रहेवाह्यवृत्तीनां द मइत्यभिधीयते ॥ ऋतुकालव्यति रिक्तकाले मैथुनाद्यभावे ॥ उपशमे । विकारहेतुविषयसन्निधानेपि अ नसो ऽविक्रियत्वे ॥ कुत्सितात्कर्म णो विप्र यच्चचित्तनिवारणम् । स कीर्त्तितो दमः प्राज्ञैः समस्ततत्त्वद र्शिभिः ॥ दण्डे ॥ दण्डकार्ये ॥ क र्दमे ॥ दमने ॥ दमनम् । दमु उप शमे । भावे घञ् । नोदात्तोपदेशे तिवृद्ध्यभावः ॥

दमकः । त्रि । शासके । दमनकर्त्तरि ॥ दाम्यति । दमु० । ण्वुल् । नोदा-त्तोपदेशस्येति न वृद्धिः ॥

दमघोषः । पुं । चन्द्रवंशीयेक्षत्रियवि शेषे । शिशुपालपितरि ॥

दमघोषसुतः । पुं । शिशुपाले ॥

दमथः । पुं । दण्डे ॥ दमे । तपः क्लेश सहे ॥ दमनम् । दमु० । शमादि भ्यो ऽथच् ॥ दाम्यति वा । बाहुल कादथप्रत्ययः ॥

दमथुः । पुं । दण्डे ॥ दमे ॥

दमनम् । न । दण्डे ॥ यथा । अभ्यु-च्छ्रितस्य दमनमुचितञ्च श्रुतोश्रुत म् ॥ पुं । दोना इतिप्रसिद्धे पुष्पे । प द्मचामरे ॥ दमनस्तुवरस्तिक्तो हृ द्यो हृष्यः सुगन्धिकः । ग्रहणीविष कुष्ठास्रक्लेदकण्डुत्रिदोषजित् ॥ वी रे ॥ कुन्दवृक्षे ॥ दाम्यति । दमु० । नं० ल्युः ॥

दमनकः । पुं । दमने । गन्धोत्कटे । दोना इतिप्रसिद्धे पुष्पवृक्षे ॥ दमन एव । स्वा०कः ॥ न । वर्णवृत्तान्तरे ॥ यथा । द्विगुणनगण मिह वितनु हि । दमनकमिति गदतिशुचिहि ॥ यथा । सरभसमिह द्रुतमपनय । सु मुखिमदनरुजमयनयेति ॥ त्रिष्टुप् छन्दोभेदेपि ॥ यथा । दिजवरगणयु ग ममलं तदनु च कमयकरतलम् । फणिपतिवरपरिगदितं दमनक मिदमतिललितम् ॥ यथा । प्रणम त मधुरिपुचरणं भवजलनिधिपरि तरणम् । अभिनवकिशलयरुचिरं सुरपतिसकलभयहरम ॥

दमनी । स्त्री । अग्निदमनीवृक्षे ॥

दमयन्ती । स्त्री । नलनृपतेर्भार्याया म् । विदर्भदेशीयभीमराजकन्याया म् । भैम्याम् ॥ दमयन्तीनलाभ्याञ्च नमस्कारं करोम्यहम् । अविवादो भवत्वत्र कलिदोषप्रणाशनिदः ॥ म दमल्लिकायाम् ॥

दमितः । त्रि । दान्ते ॥ कृतदमने वृषा दौ । भारादिसहे ॥ दम्यतेस्म । द मु० । क्तः । वादान्त शान्तिपूर्णपस

साधुः ॥

दमी । चि । दमविशिष्टे ॥

दमुनाः । पुं । चित्रभानौ । अग्नौ ॥ दाम्यति । दमु० । अन्तर्भावितण्यर्थाद्दमेरुनसिः । दमुनसौ दमुनसः इत्यादि ॥ शुक्राचार्ये ॥

दमूनाः । पुं । त्रिभावसौ । वह्नौ । पावके ॥ दाम्यति । दमु० दमेरुनसिः । अन्येषामपिदृश्यतइति पचेदीर्घः । जुष्टोदमुनाः । दमूनसंगृहपतिं वरेण्यम् । दमपाद्यान्तु गृहपदवद्दीर्घः पच्यते । तन्मते ह्रस्वोबाहुलका बोध्यः ॥

दम्पती । पुं । सह्योक्त्या जायापत्योः । अम्पत्योः ॥ जायाचपतिश्च । राजदन्तादिगणेपाठाज्जायायाः दम्भावोवा निपात्यते । यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥

दम्भः । पुं । कैतवे ॥ धर्मध्वजित्वे । धार्मिकतयात्मनःख्यापने । अधार्म्मिकत्वेपि धार्मिकत्वख्यापने । कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छायाम् ॥ लोकवञ्चनाय विहितकर्मानुष्ठाने ॥ दभ्यतेऽनेन । दम्भु दम्भने । घञ् ॥

दम्भनम् । न । दम्भे ॥

दम्भित्वम् । न । लाभपूजाख्यात्यर्थंस्व धर्मप्रकटीकरणे ॥

दम्भोलिः । पुं । वज्रे ॥ दम्भुरोधने । अमुन् । दम्भसि रोधने अलिःसमर्थः । अलभूषणपर्याप्तिवारणेषु । इन् दम्भोति खेदयति । दम्भु० । औणादिकश्चोलिर्वा ॥

दम्यः । पुं । प्राप्तदमावस्थेवत्से । वत्सतरे ॥ अनडुहि ॥ चि । दमनीये । शास्ये ॥ दमनार्हः । दमुशमने । अर्हेकृत्यतृचश्चेत्यर्थे पोरदुपधादिति यत् ॥

दयः । पुं । करुणायाम् । दयायाम् ॥ इति शब्दरत्नावली ॥

दयमानः । त्रि । दयाकर्त्तरि ॥ दयते । दय० । लटःशानच् मुक् ॥

दया । स्त्री । कृपायाम् । दुःखितेषु भूतेष्वनुकम्पायाम् । परदुःखासहने ॥ लक्षणं यथा । यत्नादपिपरक्लेशं हर्त्तुं या हृदिजायते । इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्त्तितेति ॥ आत्मवत् सर्वभूतेषु यो हिताय शुभायच । वर्त्तते सततं हृष्टः क्रियाह्येषा दयास्मृता ॥ प्राणा यथात्मनोभीष्टा भूतानामपि ते तथा । आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः ॥ धर्मस्य पत्नी । यथा । मोहपत्नी दया साध्वी पूजिताच जगत्प्रिया । सर्वेषो

काश्यसर्वेष निष्फलाश्चयया विना ॥ यत्रमोहोऽस्तितत्रदयायाः सत्त्वाद्दयामोहपत्नीति देवीभागवते ९ स्कन्धे १ ऽध्यायः ॥ अहिंसापरमोधर्मो । व प्राणानाचसंशयः । दया सर्वेच कर्त्तव्या ब्राह्मणेन विजानता ॥ यज्ञाद न्यत्र विप्रेन्द्र न हिंसायाज्ञिकीमतेति देवीभागवतम् ॥ यज्ञादन्यत्र दयाकर्त्तव्या यज्ञेतु हिंसैवकर्त्तव्या न सा याज्ञिकी हिंसा हिंसाभवति । अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य- इति श्रुतेः॥ या वेदविहिता हिंसानियतास्मिंश्चराचरे। अहिंसा मेव तां विद्याद्वेदाद् धर्मोहि निर्वभाविति मनुस्मृतेश्च ॥ तृणंवाप्यविधानेन च्छेदयेन्नकदाचनेतिकुमारोक्तेश्च॥ रसान्तरे॥ दयते रक्षत्यनया। दय दानगतिहिंसारक्षणेषु । भिदाद्य- ङ् ॥ टाप् ॥

दयाकूर्चः । पुं । बुद्धे ॥ इति हेमचन्द्रः॥

दयालुः । त्रि । स्नूरते । कारुणिके । दयायुक्ते । परदुःखप्रहाणपरे ॥ अहो वकीयं स्तनकालकूटं जिघांसयाऽपायि यदप्यसाध्वी । लेभेगतिं धात्र्युचितां ततोन्यंकंवा दयालुं शरणं व्रजेम ॥ दयते । दय० । स्पृहिगृही त्यालुच् ॥ दयालोरसमर्थस्यदुःखायैवदयालुता ॥

दयालुकः । त्रि । सदये ॥

दयावान् । त्रि । परदुःखहरणेच्छौ ॥

दयितः । पुं । पत्यौ ॥ त्रि । प्रिये ॥ दय्यतेस्म । दय० । क्तः ॥

दयिता । स्त्री । भर्य्यायाम् ॥ प्रियायाम् ॥ रामस्य दयिता भार्य्यानित्यंप्राणसमाहिता ॥ टाप् ॥

दर । अ । मनागर्थे । ईषदर्थे॥ यथा। दरदलितनीलोत्पलरुचेति ॥

दरः । पुं । न । साध्वसे । भये । डर इति भाषा ॥ गर्त्ते । गढा इतिभाषा ॥ शङ्खे ॥ यथा । स उच्चकाशे धवलोदरो दरो प्युरुक्रमस्याधरशोणशोणिमेति ॥ दीर्यन्त्यस्मात् । दृ भये । ऋदोरप् ॥ दरणम् दीर्यतेवा । दृभये । दृविदारणे वा । अप् । ग्रहवृदृनिश्चिगमश्चेत्यप् वा ॥

दरकः । त्रि । भीरौ । दरपोक इति भाषा ॥ दृ० । कृञादिभ्यो वुन् ॥

दरकण्टिका । स्त्री । शतावर्य्याम् ॥

दरणिः । पुं । कूलभङ्गे । कूलखण्डे ॥

दरत्-द् । स्त्री । प्रपाते॥ भये ॥ पर्वते ॥ म्लेच्छजातौ ॥ हृदये ॥ कूले । तीरे ॥ दरणम् दीर्यते वा । दृ० । दृदभसोऽदिः ॥

दरदः । पुं । देशविशेषे ॥ भये ॥ म्ले

च्छजातिविशेषे । दरददेशोद्भवे- आदौ चाभिधेये पुनर्विहितक्रियालोपा द्दिना शूद्रतामापन्ने दरदुपदवाच्ये ॥ त्रि । भयप्रदे ॥ पुं । न । हिङ्गुले ॥ दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्यादुगुणवानुत्तरोत्तरः ॥ चर्मारः शुक्लवर्णः स्यात् सपीतः शुकतुण्डकः । जपाकुसुमसङ्काशो हंसपादो महोत्तमः ॥ तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि । हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति ॥ ऊर्द्ध्वपातनयुक्त्यातु तस्मात्सूतं समाहरेत् । हिङ्गुलं तस्य सूतं तु शुद्धमेव न शोधयेत् ॥

दरवरः । पुं । भगवतः श्रीकृष्णस्य शङ्खे ॥ दरेषुवरः ॥

दरिः । स्त्री । दर्य्याम् ॥

दरितः । त्रि । भीते । डर इति भाषा ॥ दरः सञ्जातोऽस्य । ता० इतच् ॥

दरिद्रः । दीने । निःस्वे । निर्धने ॥ अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च । अदत्वा हेम धेनूश्च दरिद्रो जायते नरः ॥ दरिद्राति । दरिद्रा दुर्गतौ । पचाद्यच् ॥ दरिद्रोयस्त्वसन्तुष्टः कृपणोयोऽजितेन्द्रियः ॥

दरिद्रितः । त्रि । दुर्गते । दारिद्र्ययुक्ते ।

॥ दरिद्राते: कर्त्तरि क्तः ॥

दरी । स्त्री । कन्दरायाम् । कृत्रिमगृहाकारे गिरिविवरे ॥ दृणाति । दृ विदारणे । पचादौ दरडिति पाठात् टिड्ढेतिङीप् ॥

दर्दरः । पुं । पर्वते ॥ त्रि । ईषद्भग्नभाजने ॥

दर्दराम्रः । पुं । मीनाम्रोणे । सामुद्रमीनव्यञ्जने ॥ इति शब्दमाला ॥

दर्दरीकम् । न । वाद्यप्रभेदे ॥ दीर्यते । दृ० पर्फरीकादयश्चेतीकन् धातोर्द्वित्वमभ्यासस्यरुक् च ॥

दर्दुरः । पुं । तोयदे ॥ भेके ॥ वाद्यभाण्डविशेषे ॥ अद्रिविशेषे ॥ मृत्पात्रविशेषे ॥ न । ग्रामजाले ॥ इ० मे० ॥ दृणाति शब्दैः कर्णौ । दृ० मकुरदर्दुरावितिनिपातितः ॥

दर्दुरा । स्त्री । चण्डिकायाम् । उमायाम् ॥ दृणात्यसुरान् । दृ० । मकुरदर्दुरावित्युरच् धातोर्द्वित्वमभ्यासस्य रुक् टिलोपश्च । टाप् ॥

दर्द्रूः । स्त्री । कुष्ठप्रभेदे । दद्रुरोगे ॥ दरिद्राते ऽनयाङ्गम् । दरिद्रा० । दरिद्रातेर्यालोपश्चेत्यूः । रश्चदूश्च याश्च याः । तेषां लोपः । अन्यथाधेऽन्यसंदेशश्चेति द्वितीयरेफलोपः ॥

दर्दूः । पुं । दद्रुरोगे ॥ दरिद्राते । दरि

द्रा० । मृगय्वादयश्चेति कुः ॥

दर्द्रुघ्नः । पुं । चक्रमर्द्दे ॥ दर्द्रुं हन्ति । हन० । हन्ते रमनुष्येतिटक् ॥

दर्द्रुणः । त्रि । दर्द्रुरोगिणि ॥ दर्द्रुरस्यास्ति । शाकीपलालीदर्द्र्वां ह्रस्वत्वञ्चेति पामादिषु पाठान्नः ॥

दर्द्रुरोगी । त्रि । दर्द्रुणे ॥ दर्द्रुस्तासौ रोगश्च । इकोह्रस्वोऽङ्यो इतिह्रस्वः । दर्द्रुरोगोऽस्यास्ति । द्वन्द्वोपतापेतीनिः ॥

दर्द्रूः । पुं । दद्रौ ॥ दरिद्राति । दरिद्रा० । दरिद्रातेर्यालोपश्चेति इकाराकारलोपः ऊप्रत्ययश्च ॥

दर्द्रूणः । त्रि । दद्रुणे ॥

दर्द्रूरोगी । त्रि । दर्द्रूरोगिणि ॥

दर्प्पः । पुं । कस्तूर्य्याम् । मृगमदे ॥ अहङ्कृतौ । गर्व्वे ॥ परावधीरणारूपो गुर्व्वाद्यतिक्रमकारणश्चित्तदोषविशेषो दर्प्पः ॥ अहङ्कारश्च सर्वेषां पापबीजममङ्गलम् । ब्रह्माण्डेषु च सर्वेषां दर्पपर्यन्तमुन्नतिः ॥ धर्म्माद्यतिक्रमकारणे । हर्षजन्यमदे ॥ हृष्टो दृप्यति दृप्तो धर्म्ममतिक्रामति ॥ धर्म्मध्वजित्वेन दम्भ एव दर्प्पः । दर्प्पति । दृप उत्क्लेशे । पचाद्यच् ॥

दर्प्पकः । पुं । कामदेवे । पञ्चशरे ॥ दर्पयति । दृप हर्षमोहनयोः । ण्वुल् ॥ त्रि । अहङ्कारकारके ॥

दर्प्पणः । पुं । मुकुरे । आदर्शे । रूपदर्शनाधारे ॥ दर्पयति । दृप णिच् अन्तः । दृप सन्दीपने । चु० वा । नं० ल्युः ॥ न । अक्षिणि ॥ पर्वतविशेषे ॥ नदीविशेषे ॥ यथा । ततः पूर्व्वं महाराज दर्प्पणो नामपर्वतः । कुबेरो यत्र वसति धनपालैः समं सदेति ॥ यस्मिन्नास्ते मध्यभागे रोहिणो रोहिता कृतिः । यस्मिं ल्लौहादिकं स्पृष्टं स्वर्णतां याति तत्क्षणात् ॥ तस्मात्तदूर स्रवति दर्पणोनामवै नदः । हिमाद्रिप्रभवो नित्यं लौहित्यसदृशः फले ॥ समुत्पन्नं हि लौहित्यं सर्व्वैर्द्देवगणैर्हरिः । सर्वतीर्थोदकैः सम्यक् स्नापयामास तं सुतम् ॥ तस्य स्नानसमुद्भूतः पापदर्पस्य पाटनः । तेनायं दर्पणो नाम पुरा देवगणैः कृतः ॥ तस्मिन् स्नात्वा नदवरे योऽर्च्चयेद् दर्पणाचले । कुबेरं प्रतिपत्तिथ्यां कार्त्तिके शुक्लपक्षतः ॥ स याति ब्रह्मसदनमिह भूतिशतैर्वृतः इति कालिकापुराणे ८१ अध्यायः ॥

दर्प्पारम्भः । पुं । अहङ्कारारम्भे । मंटस्फटौ ॥ इति जटाधरः ॥

दर्भः । पुं । कुशे ॥ काशादिषट्सु ॥ यथा । काशाः कुशा वल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः । मौञ्जाश्च शाद

त्वास्येव षड्दर्भाः परिकीर्त्तिताः ॥ दृभ्यते । दृभीग्रन्थे । घञ् ॥ यद्वा । दृणाति । दृ० । दृदृभिभ्योऽभः ॥

दर्भटः । पुं । न । निभृतगृहे ॥ इति त्रिकाण्डशेषः ॥

दर्भपत्रः । पुं । काशे ॥ इतिराजनि० ॥

दर्भमूली । स्त्री । ओषधीभेदे ॥ पाककर्णेतिङीष् ॥

दर्भाह्वयः । पुं । मुञ्जे ॥ इति राज०॥

दर्वः । पुं । राक्षसे ॥ दृणाति सर्वान् । दृ० । भृमृदृशियजि० ॥ ॥

दर्वटः । पुं । दण्डवादिनि ॥

दर्विः । स्त्री । खजाकायाम् । दर्व्याम् ॥ दृणाति । दृ० । दृदृभ्यांविन् ॥ उत्सृकदर्विहोमिन इतिविर्वा ॥

दर्विकः । पुं । दर्व्याम् । व्यञ्जनादिदारके । कौँचा इतिभाषा ॥

दर्विका । स्त्री । दर्व्याम् । खजाकायाम् ॥ गोजिह्वायाम् । दार्विकायाम् ॥

दर्विहोमः । पुं । अप्रकृतिविकृतिहोमे ॥ योनकस्यचित् प्रकृतित्वेन विकृतित्वेन वा वर्त्तते स दर्विहोम इतिव्याख्यातारः ॥

दर्वी । स्त्री । कंब्याम् । खजाकायाम् । कर्छी इतिभाषा ॥ दृणाति । दृ० । भृदृभ्यांविन् । कृदिकारादक्तिनइति ङीष् ॥

दर्वीकरः । पुं । उरगे । दीर्घपृष्ठे । सर्पे ॥ रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः । ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥ दर्व्याकारः फणएवकरो यस्य प्रहारसाधनत्वात् । दर्वीं फणां करोति । कृञोहेत्विति टः ॥

दर्वीसङ्क्रमणम् । न । तीर्थविशेषे ॥

दर्शः । पुं । अमावस्यायाम् । सूर्येन्दुसङ्गमे ॥ अवलोकने । दर्शने ॥ अमावास्यायागे ॥ दर्शे अमावास्यायां क्रियमाणत्वात् उपचाराद्दर्शशब्देनोच्यते । सयागत्रयात्मकः । यथा । आग्नेयाष्टाकपालैन्द्रदध्यैन्द्रपयोयागाःत्रयो ऽमावास्यायां सत्रयावज्जीवं कर्त्तव्यः कौण्डपायिकर्त्तव्यो मासत्रयश्चेति ॥ दृश्यते शास्त्रेण । पुंसिसंज्ञायांघः ॥

दर्शकः । त्रि । द्वारपाले । प्रतीहारे ॥ दर्शयितरि ॥ प्रवीणे । निपुणे ॥ पश्यति । दृशिर्० । ण्वुल् ॥

दर्शतः । पुं । सोमे ॥ सूर्ये ॥ पश्यति । दृशिर्० । भृमृदृशियजीत्यादिना ऽतच् ॥

दर्शनम् । न । नयने ॥ स्वप्ने ॥ वुद्धौ ॥ ॥ धर्मे ॥ उपलब्धौ ॥ शास्त्रे ॥ दर्पणे ॥ ईक्षणे ॥ षट्दर्शनेषु । वैशेषिकन्या

यमीमांसासाङ्ख्यपातञ्जलवेदान्तरूपेषु ॥ एतानि तत्त्वज्ञानार्थं भेदान्विचार्य्य कणादगौतमजैमिनिकपिलपतञ्जलिवेदव्यासाख्यै र्मुनि‍भि र्भिः कृतानि ॥ अथाकुलार्णवे श्रीसदाशिवः । षड्दर्शनानि मेऽङ्गानि पादौ कुक्षिः करौ शिरः । तेषु भेदन्तु यः कुर्य्यान्मदङ्गच्छेदको हि सः ॥ एतान्येव कुलस्यापि षडङ्गानि भवन्ति हि । तस्मान्मदात्मकं कौलं मत्कौलात्मकःप्रिये इति ॥ देव्याः पूजायामुक्तानि षड्दर्शनानि यथा । शैवशाक्तसौरगाणेशवैष्णवनास्तिकमतप्रतिपादकानिषड्दर्शनानीति ॥ इज्यायाम् ॥ धर्म्मे ॥ अनुसन्धाने ॥ ज्ञानैकस्वरूपे ॥ रूपे ॥ दृश्यतेऽनेन अस्मिन् वा । दृशिर् ० । करणे अधिकरणे वा ल्युट् ॥

दर्शनीयः । त्रि । मनोज्ञे ॥ दर्शनयोग्ये ॥

दर्शयामिनी । स्त्री । तमिस्रायाम् ॥

दर्शयिता । पुं । द्वारपाले । प्रतीहारे ॥ त्रि । दर्शके ॥

दर्शविपत्-द् । पुं । चन्द्रे ॥ इतिहारावली ॥

दर्शितः । त्रि । आविष्कृते । प्रकाशिते । दर्शनङ्कारिते ॥

दलम् । न । उत्सेधे ॥ खण्डे ॥ शस्त्रीच्छदे ॥ अपद्रव्ये ॥ पत्रे । पर्णे ॥ तमालपत्रे ॥ पत्रे ॥ अर्द्धे ॥ पुं । खण्डने ॥ उत्सेधवद्वस्तुनि ॥ दलति । दलविदारणे । पचाद्यच् ॥

दलकोषः । पुं । माघ्ये । कुन्दपुष्पवृक्षे ॥

दलत् । त्रि । विकसिते ॥

दलनिर्म्मोकः । पुं । भूर्जपत्रवृक्षे ॥

दलनी । स्त्री । लोष्टे । ढीम इतिढेला इतिच भाषाप्रसिद्धे ॥ त्रि । भेदकर्त्तरि ॥

दलपः । पुं । स्वर्णे ॥ शास्त्रे ॥ प्रहरणे ॥ दलति दल्यते ऽनेनवा । दल० । उषिकुटिदलिकचिखजिभ्यः कपन् ॥

दलपतिः । पुं । दलाध्यक्षे ॥

दलपुष्पा । स्त्री । केतक्याम् ॥

दलसारिणी । स्त्री । केमुके ॥

दलसूचिः । पुं । कण्टके ॥

दलस्नसा । स्त्री । पत्रशिरायाम् । मालायाम् ॥

दलाढकः । पुं । अरण्यतिले । स्वयंजाततिले ॥ पृश्निपर्ण्याम् ॥ गैरिके ॥ फेने ॥ आतके ॥ नागकेशरे ॥ मरुबके ॥ कुन्दे ॥ करिकर्णे ॥ शिरीषे ॥ वात्यायाम् ॥

दलाढ्यः । पुं । पङ्कर्वटे । हूंवश इति दल् दल् इतिच भाषा ॥ इति त्रिकाण्डशेषः ॥

दलाम्लम् । न । मत्स्यकण्डे ॥ दम

नवृक्षे ॥ मदनवृक्षे ॥

दवाग्नम् । न । चुक्रे ॥

दलिः । पुं । स्त्री । लोष्टे । ढीम्इति ढेल इतिच भाषा ॥ स्त्री । दलितेश मीधान्ये । दालिइति दारिइतिच-भाषा ॥

दलिकम् । न । काष्ठे । दली इति पर्वतीयभाषा ॥ इतिहेमचन्द्रः ॥

दलितः । त्रि । प्रफुल्ले ॥ खण्डिते ॥ यथा । दलितकुचभराङ्कमङ्कपालिं रचय ममाङ्कमुपेत्य पीवरोरु इति॥

दलेगन्धः । पुं । सप्तपर्णवृक्षे ॥

दल्भः । पुं । ऋषिविशेषे ॥ चक्रे ॥ प्रतारणायाम् ॥ पापे ॥ दलति । दल० । दृदलिभ्यांभः ॥

दल्मिः । पुं । इन्द्रे ॥ वज्रे ॥ दलति । दल० । बाहुलकान्मिः ॥

दल्मिमान् । पुं । इन्द्रे ॥ दल्मिरस्त्यस्य । मतुप् । यवादित्वान्नवत्वम् ॥

दवः । पुं । वनानले ॥ वने ॥ उपतापे ॥ दवति । दुगतौ । पचाद्यच् ॥

दवथुः । पुं । परितापे ॥ नेत्रादिदाहे ॥ दवनं दूयते ऽनेनवा । टुदुउपतापे । ट्वितोऽथुच् ॥

दवाग्निः । पुं । दावानले ॥

दविष्ठः । त्रि । अतिदूरे । सुदूरे ॥ इदमेषामतिशयेन दूरम् । इष्ठन् । स्थूलदूरेतिसाधुः ॥

दवीयान् । त्रि । दविष्ठे ॥ इदमनयोरतिशयेनदूरम् । ईयसुन् । स्थूलदूरयुवह्रस्वेत्यादिना साधुः ॥

दशाः । पुंभूम्नि । वस्त्रान्ते । वसनाञ्चले ॥ दशानाभौ प्रयोजये दितिस्मृतिः ॥ अधोंशुकस्येत्यर्थः ॥ दश्यते । दंश० । भि० कन् ॥

दशकः । पुं । दशति ॥ दशपरिमाणमस्य । सङ्ख्याया इतिकन् ॥

दशकण्ठः । पुं । रावणे ॥ दश कण्ठाः यस्य सः ॥

दशकण्ठजित् । पुं । श्रीरामचन्द्रे ॥ दशकण्ठं जयति । जि० । क्विप् तुक् ॥

दशकन्धरः । पुं । रावणे ॥ दश कन्धराः ग्रीवाः अस्य ॥

दशग्रीवः । पुं । रावणे ॥ दश ग्रीवा यस्य सः ॥ गरुडपुराणे सप्तग्रीवत्यधा योक्ते एकादशमन्वन्तरीयदयनाम केन्द्रभचुविशेषे ॥

दशत् । पुं । दशके । वर्गे ॥ दशपरिमाणमस्य । पञ्चद्दशतौ वर्गेवेति निपातनादति प्रत्ययः ॥

दशतिः । स्त्री । शते ॥ इतिमहाभारते दानधर्मः ॥

दशधा । अ । दशप्रकारे ॥ सङ्ख्याया विधार्थेधा ॥

दश । चि । सङ्ख्याविशेषे । द्विगुणित पञ्चसु ॥ तत्सङ्ख्या विशिष्टे ॥ दशन्ति दश्यन्ते वा । दंश दशने । बाहुलकात् कनिन् ॥

दशनः । पुं । शिखरे ॥ दन्ते ॥ न । कवचे ॥ दंष्ट्राव्यापारे ॥ दश्यते ऽनेन । दंश० । करणेति ल्युट् । दशदशेतिनिर्देशात् क्वचिदनिष्यपिनलोपः ॥ यद्वा । कर्त्तरि ल्युट् ॥

दशनवासः । न । ओष्ठे । उत्तराधरोष्ठमात्रे ॥ दशनानां वाससीव आवरकत्वात् ॥

दशनाङ्कः । पुं । दन्तचते ॥

दशनाढ्या । स्त्री । चुञ्चिकायाम् । चाङ्गेर्याम् ॥

दशनोच्छिष्टः । पुं । निःश्वासे ॥ अधरे ॥ चुम्बने ॥ चि । दन्तच्युत्ते ॥

दशपारमिताध्वरः । पुं । बुद्धे ॥

दशपुरम् । न । कुटन्नटे । कैवर्त्तीमुस्तके ॥ मालवदेशैकखण्डे ॥ पुरविशेषे ॥ दशपिपर्त्ति । पृपालनपूरणयोः । मूं०कः । उत्तम् ॥ दशपुरोऽस्य वा । ऋक्पूरित्यः समासान्तः ॥

दशपूरम् । न । वानेये । कैवर्त्तीमुस्तके ॥ दशपूरयति । पूरपूर्त्तौ । कर्मण्यण् ॥

दशबलः । पुं । बुद्धमुनौ ॥ दशबलान्यस्य । यदाहुः । दानशीलक्षमावीर्यध्यानप्रज्ञावलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै ॥

दशभुजा । स्त्री । दुर्गायाम् ॥ यथा । इतिहृत्तं पुराकल्पे मनोः स्वायम्भुवेन्तरे । प्रादुर्भूता दशभुजादेवी देवहितायवै ॥ इतिकालिकापुराणम् ॥

दशभूमिगः । पुं । बुद्धे ॥

दशभूमीशः । पुं । बुद्धे ॥

दशमः । चि । दशानाम् पूरणे । दसवां इतिभाषा ॥ तस्यपूरणेडट् । नान्तादसङ्ख्यादेर्मट् ॥

दशमी । चि । वर्षीयसि । अतिवृद्धे ॥ नवतेरूर्द्धं दशमी ऽवस्थाविशेषो ऽस्यास्ति । वयसि पूरणादितीनिः ॥

दशमी । स्त्री । नवत्यधिकावस्थायाम् ॥ शताब्दानां दशधाविभागे कृते दशम्यवस्था नवत्यधिका भवति ॥ तिथिविशेषे ॥ साचन्द्रस्य दशमकलाक्रियारूपा तदुपलक्षितकालपरावा ॥ तत्रजातस्य फलम् । यथा । विद्याविनोदी धनपुत्रयुक्तः प्रलम्बकण्ठो मदनाधिकश्रीः । उदारचित्तः सुमना दयालुः प्रसूतिकाले दशमी यदि स्यादिति ॥ ङीप् ॥

दशमीस्थः । चि । नष्टवीर्य्ये । चीणरागे ॥ गतामने ॥ नवत्यधिकवयसि

। स्थविरे ॥ स्मृतिहीने ॥ कामव
स्थान्तरदशावस्थां प्राप्ते कामिनि ॥ न
यनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽ
थ सङ्कल्पः । निद्राच्छेदस्तनुता विष
यनिवृत्तिस्त्रपानाशः । उन्मादो
मूर्च्छा मृतिरित्येताः स्मरदशा दशैव
स्युः ॥ दशम्यां कामावस्थायां तिष्ठति
। स्था^० । सुपिस्थ इति कः ॥

दशमुखः । पुं । रावणे ॥ दशमुखान्यस्य ॥
लिङ्गात्मनि ॥ दश इन्द्रियाणि मुखा
नि भोगद्वाराणि यस्य सः ॥

दशमुखान्तकः । पुं । रामे ॥ दशमुख
स्यान्तकः ॥

दशमूत्रकम् । न । हस्तिमहिषोष्ट्रगवा
जमेषाश्वगर्द्दभमानुषमानुषीणां मू-
त्रे ॥ इति राजनिर्घण्टः ॥ दशानां मू
त्राणां समाहारः ॥

दशमूलम् । न । पाचनविशेषे । पञ्चमू
लद्वये ॥ यथा । बिल्वश्योनाकगम्भा
रीपाटलागणिकारिकाः । शालप
र्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ॥
उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदा
हृतम् ॥ दशमूलं त्रिदोषघ्नं श्वास
कासशिरोरुजः । तन्द्राशोथज्वराना
हपार्श्वपीडारुचीर्हरेत् ॥ वातपित्त
हरं वृष्यं कनीयः पञ्चमूलकम् ॥ उ
भयं दशमूलन्तु सन्निपातज्वरापहम् ।



कासे श्वासे च तन्द्रायां पार्श्वशूले च श
स्यते ॥ पिप्पलीचूर्णसंयुक्तं कण्ठह
द्ग्रहनाशनमिति ॥

दशयोगभङ्गः । पुं । संस्कारकर्मणि न
चत्रवेधविशेषे । खर्जूरवेधे ॥

दशरथः । पुं । रामताते ॥

दशरथप्रभवः । पुं । रामे ॥ रामादि
षु ॥ दशरथः प्रभवो यस्य येषां वा ॥

दशरूपभृत् । पुं । विष्णौ ॥

दशवदनः । पुं । रावणे ॥ दश वदनानि
यस्य सः ॥

दशवाजी । पुं । चन्द्रे ॥ दश वाजिनो
रथे यस्य सः ॥

दशशतलोचनः । पुं । इन्द्रे ॥ दशशता
नि सङ्ख्यायेषु तानि लोचनानि
यस्य ॥

दशहरा । स्त्री । गङ्गाजन्मदिने ॥ यथा
। ज्येष्ठेमासि चितिसुतदिने शुक्लप-
चे दशम्यां हस्ते शैलान्निरगमदियं
जाह्नवी मर्त्यलोकम् । पापान्यस्यां
हरति च तिथौ सा दशेत्याहुरार्याः
पुण्यं दद्यादपि शतगुणं वाजिमेधायुत
स्येति शङ्खः ॥ अपि च । अदत्ता-
नामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं
स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्य
ञ्चापि सर्वशः । असम्बद्धप्रलापश्च

ऽमयं स्याच्चतुर्विधम् ॥ परद्रव्येष्व भिध्यानं मनसानिष्टचिन्तनम् । वित थाभिनिवेशश्चमानसं त्रिविधं स्मृतम् ॥ एतानि दशपापानिहरत्वं न-मजाह्नवि । दशपापहरायस्मात्तस्माद्दशहरास्मृता ॥ ज्येष्ठेमासिसितेपक्षेदशम्यांबुधहस्तयोः । गरानन्दे व्यतीपातेकन्याचन्द्रेवृषेरवौ । दश योगेनरः स्नात्वासर्वपापैः प्रमुच्यते इति स्कन्दपुराणे काशीखण्डः ॥ अत्रकुजबुधयोः कल्पभेदेन व्यवस्था ज्ञेया ॥ सेतुबन्धरामेश्वरयोः प्रति-ष्ठादिने ॥ यथोक्तं स्कान्दे सेतुमा हात्म्ये ॥ ज्येष्ठेमासि सितेपक्षेदशम्यांबुधहस्तयोः । गरानन्देव्यतीपाते कन्याचन्द्रेवृषेरवौ ॥ दशयोगे सेतुमध्ये लिङ्गरूपधरंहरम् । रामो वैस्थापयामास शिवलिङ्गं मनुत्तममिति । अतोऽस्यांतुविशेषेण पूजा कार्याहितार्थिभिः ॥ * ॥ अथसंक्षेपत उक्तःस्नानावगाहडे २१५ अध्याये । यथा । अद्यहस्तेतु नक्षत्रे दशम्यांज्येष्ठकेसिते । दशपापहरांगाञ्चअदत्ता दानकल्मषम् ॥ विरुद्धाचरणं हिंसा परदारोपसेवनम् । पारुष्यानृतपैशुन्यमसम्बद्धञ्च भाषणम् ॥ परद्रव्या भिध्यानञ्च मनसानिष्टचिन्तनम् । एतद्दशाघघाताय गङ्गास्नानं करोम्यहमिति ॥

दशा । स्त्री । अवस्थायाम् ॥ दीपवर्त्याम् ॥ चेतसि ॥ दशति । दंशदशने । मू०कः । पचाद्यचितु जपजभदहद शेतिनिर्देशादकिच्यपिनलोपः ॥ यद्वा । दश्यते गुरोश्चेच्चहलः ॥ कलौ त्वर्थायचोक्तायुषः सूर्याद्यष्टग्रहभो-ग्याष्टभागविशेषे ॥ इति दैवज्ञाः ॥ शरीरस्थदशदशा यथा । गर्भवासः १ । जन्म २ । बाल्यम् ३ । कौमारम् ४ । पौगण्डम् ५ । यौवनम् ६ । स्थाविर्यम् ७ । जरा ८ । प्राणरोधः ९ । नाशः १० इति ॥ * ॥ कामजदश दशा यथा । चक्षूराग स्तदनुमनसःस ङ्गतिर्भावनाच व्यावृत्तिःस्यात् तदनुविषयग्रामतश्चेतसोपि । निद्राछेदस्तदनुतनुता निस्त्रपत्वं ततोनूमादोमूर्च्छातदनुमरणं स्युर्दशाःप्रक्र-मेणेति ॥

दशाकर्षः । पुं । प्रदीपे ॥

दशाकर्षी । पुं । प्रदीपे ॥

दशाङ्गधूपः । पुं । त्रिदोषघ्ने अवशर्दपि शाचकादिनाशके धूपविशेषे ॥ यथा । वासयेद्दशाङ्गेन त्रिदोषघ्नेन चाङ्कम् । मन्यन्तियस्यधूपेन अवशाचपिशाचकाः ॥ पञ्चाङ्गगणपाषाणा

त् तावन्मात्रिकगुग्गुलुः । चतुरंशच-न्दनञ्च जटामांसीच तावती ॥ त्रि-भागःसर्ज्जकःसार स्तावदेवशिलाज-कम् । उशीरन्तु त्रिभागंस्यात् घृतभृ-ष्टं नखं समम् ॥ कर्पूरो मृगनाभि-श्च एकभागौप्रकीर्त्तितौ । एषोदशाङ्ग धूपस्तुकस्यापि मनोहरोऽिति ॥ पु-ष्पदानोत्तरं देवायदीयमाने धूमवि-शेषे ॥ यथा । मधुमुस्तं घृतं गन्धो गु-ग्गुल्वगुरुशैलजम् । सरलं सिह्ल सिद्धार्थं दशाङ्गोधूपउच्यतइति ॥ अन्यच्च । कर्पूरं कुष्ठमगुरु गुग्गुलु र्मलयोद्भवम् । केशरं वालकं पद्मंत्व-क् जाती कोषमुत्तमम् ॥ सर्वमेतद्-घृतयुतं दशाङ्गोधूपईरित इति ॥

दशाङ्गुलम् । न । खर्बूजे ॥ त्रि । दशा-ङ्गुलमिते ॥

दशाननः । पुं । रावणे ॥

दशानिकः । पुं । दन्तीवृक्षे ॥

दशानीकिनी । स्त्री । सेनाविशेषे ॥

दशापवित्रम् । न । वासःखण्डे ॥

दशारुहा । स्त्री । कैवर्त्तिकायाम् ॥

दशार्णः । पुं । देशविशेषे ॥ सविन्ध्य-स्यपूर्वदक्षिणस्यां दिशि वर्त्तते ॥ इ-तिराधाकान्तः ॥

दशार्णा । स्त्री । नदीविशेषे ॥

दशार्हः । पुं । कृष्णे । बुद्धे ॥ यदुदेशे ॥

दशार्हाः । पुंभूम्नि । दशार्हदेशवासे ॥

दशावतारः । पुं । विष्णौ ॥ दशअवता-राय्यस्य सः । तेयथा । शेते स च्चिसश-यने मम मीनकूर्मकोलोऽभनवह-रिवामनजामदग्न्यः । योऽभूद्भव भरतागजकृष्णबुद्धः कल्की समाश्च भ-विता प्रहरिष्यतेऽरीनितिवोपदेवः॥

दशाश्वः । पुं । चन्द्रे ॥ दशअश्वाय्यस्य य-स्यसः । रथश्चिचक्रःसोमस्य कुन्दाभा-स्तस्यवाजिनः । वामदक्षिणतोयुक्ता-दश तेन चरत्ययौ ॥

दशाश्वमेधिकः । पुं । तीर्थविशेषे ॥

दशाश्वितिः । स्त्री । अवस्थायाम् ॥

दशास्यः । पुं । दशानने ॥ दश आस्या-नि यस्य सः ॥

दशास्यजित् । पुं । श्रीरामचन्द्रे ॥ द-शास्यं जयति । जि॰ । क्विप् तुक् ॥

दशाहः । पुं । दशदिनसमुदाये ॥ द-शानामह्नां समाहारः । तद्धितार्थेति समासः । समाहारस्यैकत्वादेकवच-नम् । राजाहःसखिभ्यष्टच् । रात्रा-ह्नाहाःपुंसि ॥

दशेन्धनः । पुं । प्रदीपे ॥ दशाइन्धनं यस्य ॥

दशेरः । पुं । हिंस्रे ॥ दशति । दंश॰। पर्जि कठिकुठिगडिगुडि दंशिभ्यएरक् । अनिदितामिति नलोपः ॥

दशेरकः । पुं । मरुदेशे ॥ पुं भूम्नि । तद्देशस्थे ॥ इति हेमचन्द्रः ॥

दशेरुकः । पुं । मरुदेशे ॥ पुं भूम्नि । तद्देशस्थे ॥ इति भूरिप्रयोगः ॥

दशैकादशिकः । पुं । वार्द्धुषिके ॥ एकादशार्थत्वादेकादश वस्तुतो दश ये दत्ता एकादश भविष्यन्ति ते दशैकादशाः । निपातनात् समासान्तोऽकारः । दशैकादशान् प्रयच्छति । कुसीददशैकादशात् ष्ठन्ष्ठचौ वेति ष्ठच् ॥ स्त्री । ङीपि दशैकादशिकी ॥

दष्टः । त्रि । दंशिते । दंशयुक्ते ॥ दंशेः क्तः ॥

दस्मः । पुं । यजमाने ॥ चौरे ॥ हुताशने ॥ खले ॥ दस्यति । दसुउपक्षये । इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ दर्शनीये ॥

दस्युः । पुं । मलिम्लुचे । चौरे ॥ रिपौ ॥ महासाहसिके ॥ दस्यति । दसु० । यजिमनिशुन्धिदसिजनिभ्यो युच् । बा० अनादेशाभावः । अनुनासिकयोरित्युक्तत्वाद्वा नानादेशः ॥ पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा जवनाः शकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥ मुखबाहूरुपज्जानां या लोके जातयो बहिः । म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥ ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना याः पौण्ड्रकाश्चौड्रद्रविडाद्यादिनोक्ता जातयो बाह्या जाताः म्लेच्छभाषायुक्ताः आर्यभाषोपेता वा ते दस्यवः सर्वे स्मृता इत्यर्थः ॥

दस्रः । पुं । खरे ॥ अश्विनीसुते ॥

दस्रौ । पुं । द्विवचनान्तः । नासत्ययोः । अश्विनीसुतयोः । स्वर्वैद्ययोः ॥ दस्यतः क्षिपतो रोगान् । दसु० । स्फायितञ्चीति रक् ॥

दस्रदेवता । स्त्री । अश्विनीनक्षत्रे ॥ दस्रौ देवते यस्याः ॥

दस्रसूः । स्त्री । सूर्ययोषिति । संज्ञायाम् ॥

दहनः । पुं । चित्रके ॥ भल्लातके ॥ अग्नौ ॥ कपोते ॥ चतुष्कलगणभेदे (ऽ।।) ॥ न । दाहे । भस्मीकरणे ॥ त्रि । दुष्टचेष्टिते ॥ दहति दह्यते वा । दह भस्मीकरणे । ल्युः ल्युट् वा ॥

दहनकेतनः । पुं । धूमे ॥ दहनः केतनं यस्य ॥

दहनप्रिया । स्त्री । स्वाहायाम् ॥ दहनस्याग्नेः प्रिया ॥

दहनागुरु । न । दाहागुरुणि ॥

दहनारातिः । पुं । जले ॥

दहनीयः । त्रि । दहनार्हे । दाह्ये ॥

दहनोपमः । पुं । } सूर्यकान्तमणौ ॥
दहनोपलः । पुं । }
दहनोल्का । स्त्री । अग्निकुक्कुटे ॥
दहरः । पुं । मूषिकायाम् ॥ स्वल्पे । सूक्ष्मे ॥ भ्रातरि ॥ बालके ॥ हृदयाकाशे ॥ ब्रह्मणि ॥
दहराकाशः । पुं । चिदाकाशे ॥ ईश्वरे ॥ दहरश्चासावाकाशश्च ॥
दह्रः । पुं । दावानले ॥ वह्नौ ॥ दहति । दह० । स्फायितञ्चीति रक् ॥ हृदयाकाशे ॥ जठरे ॥
दा । स्त्री । शोधने ॥ दाने ॥ छेदे ॥ उपतापे ॥ रक्षायाम् ॥ दानम् । डुदाञ्० । सम्पदादित्वात् क्विप् ॥
दाकः । पुं । यजमाने ॥ दातरि ॥ ददाति । डुदाञ्० । कृदाधारेतिकः ॥
दाक्षः । त्रि । दक्षसम्बन्धिनि ॥ दक्षस्यायम् । अण् ॥
दाक्षायणयज्ञः । पुं । आदक्षायुक्ते दर्शपूर्णमासात्मके यज्ञे ॥ दक्षस्येमे दाक्षाः । तेषामयनमावृत्तिरिति तन्निर्वचनम् ॥
दाक्षायणी । स्त्री । अपर्णायाम् । उमायाम् । सत्याम् ॥ अश्विन्यादिसप्तविंशतिभेषु ॥ रोहिण्याम् ॥ दन्तीवृक्षे ॥ मानवे दक्षयज्ञपीठाधिष्ठातृदेव्याम् ॥ दक्षस्यापत्यम् । बाला मघेयश्चेति इञ्संज्ञायाम् उदीचां वृद्धादगोत्रादिति फिञ् । गौरादित्वात् ङीष् ॥
दाक्षायणीपतिः । पुं । एणतिलके । चन्द्रे ॥ शिवे ॥ दाक्षायण्याः पतिः ॥
दाक्षायणीरमणः । पुं । चन्द्रे ॥
दाक्षाय्यः । पुं । गृध्रे ॥ दक्षते । दक्ष दृष्टौ शीघ्रार्थे च । श्रुदक्षिस्पृहिगृहिभ्य आय्यः । दक्षाय्यस्यायम् । तस्येदमित्यण् ॥
दाक्षिः । पुं । दक्षस्यापत्ये ॥ अत इञ् ॥
दाक्षिणम् । न । दक्षिणानां समूहे ॥ भिक्षादिभ्योऽण् ॥
दाक्षिणात्यः । पुं । नारिकेले ॥ त्रि । दक्षिणदिग्भवे ॥ दक्षिणाभवः । दक्षिणापश्चात्पुरसस्त्यक् ॥
दाक्षिणिकः । पुं । बन्धविशेषे ॥ स चेष्टापूर्त्तेन भवति । पुरुषतत्त्वानभिज्ञोहि इष्टापूर्त्तकारी कामोपहतमना बध्यते ॥
दाक्षिण्यम् । न । आनुकूल्ये ॥ त्रि । दक्षिणार्हे ॥
दाक्षी । स्त्री । पाणिनिमुनेर्मातरि ॥ दक्षस्यगोत्रापत्यं स्त्री । अत इञ् । इतोमनुष्यजातेरिति ङीष् ॥
दाक्षीपुत्रः । पुं । पाणिनिमुनौ ॥ दाक्ष्याःपुत्रः ॥

दाधेयः । पुं । पाणिनिमुनौ ॥ दाक्ष्या अपत्यम् । स्त्रीभ्योढक् ॥

दाक्ष्यम् । न । कौशले । दक्षतायाम् ॥ सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तौ ॥ दक्षस्य कर्म भावो वा । ष्यञ् ॥

दाघः । पुं । दाहे ॥ दह्यतेऽनेन । दहभस्मीकरणे । हलश्चेतिघञ् । न्यंक्वादित्वात् कुत्वम् ॥

दाडकः । पुं । दन्ते ॥ इति शब्दार्थकल्पतरुः ॥

दाडिमः । त्रि । एलायाम् ॥ पुं । करके । वृत्तफले । शुकवल्लभे ॥ समौकरकदाडिमावित्यमरः ॥ तत्फलं त्रिविधं स्वादु स्वादम्लं केवलाम्लकम् । तत्स्वादुत्रिदोषघ्नंतृट्दाहज्वरनाशनम् ॥ हृत्कण्ठमुखरोगघ्नं तर्पणं शुक्रलंलघु । कषायानुरसंग्राहि स्निग्धं मेधाबलावहम् ॥ स्वादम्लं दीपनं रुच्यंकिञ्चित् पित्तकरंलघु । अम्लन्तु पित्तजनकमुष्णं वातकफापहमिति भावप्रकाशः ॥ * ॥ तापहारिमधुरं लघुपथ्यमिति राजनिर्घण्टः ॥ दलनं दालः । दलविशरणे । घञ् । दालेन निर्वृत्तः । भावप्रत्ययान्तादिमप् । डलयोरेकत्वम् ॥

दाडिमपुष्पः । पुं । रोहितकद्रुमे ॥ दाडिमस्य पुष्पमिव पुष्पमस्य ॥ न । करकपुष्पे ॥

दाडिमपुष्पकः । पुं । रोहितकवृक्षे ॥ दाडिमइव पुष्पाणि यस्य ॥

दाडिमप्रियः । पुं । शुकखगे ॥

दाडिमभक्षणः । पुं । कीरे ॥

दाडिमादिचूर्णम् । न । चूर्णविशेषे । द्वेपलेदाडिमादष्टौ खण्डात् त्र्योषं पलत्रयम् । त्रिसुगन्धिपलञ्चैकं चूर्णमेकत्रकारयेत् ॥ तच्चूर्णमाषयाभुक्तमरोचकहरं परम् । दीपनं पाचनञ्चशात् पीनसज्वरकासजित् ॥

दाडिमी । स्त्री । दाडिमे ॥

दाडिमीरसः । पुं । व्यञ्जनोपस्करान्तरे ॥ दाडिमं घृतसन्तप्ते तत्रपात्रे विनिःक्षिपेत् । ततःपक्वः पटेपूत इति स्याद्दाडिमीरसः ॥

दाडिमीसारः । पुं । दाडिमे ॥ इति राजनिर्घण्टः ॥

दाडिम्बः । पुं । दाडिमे ॥ इतित्रिकाण्डशेषः ॥

दाढा । स्त्री । दंष्ट्रायाम् ॥ अभिलाषायाम् ॥ समूहे ॥ इतिशब्दार्थकल्पतरुः ॥

दाढिका । स्त्री । दंष्ट्रिकायाम् ॥

दाण्डपाता । स्त्री । तिथिविशेषे ॥ दण्डपातोस्यां वर्त्तते । घञः साऽस्यां क्रि

येतिञ्‌:॥

दाण्डमाथिकः। त्रि। दण्डमाथं धावति। माथोत्तरपदेतिठक्‌॥

दाण्डा। स्त्री। क्रीडाविशेषे। पटा इतिभाषा॥ दण्डः प्रहरणमस्यां क्रीडायाम्‌। तदस्यां प्रहरणमितिणः॥

दाण्डाजिनिकः। पुं। मायाजीविनि। सदम्भे॥ दण्डाजिनेन दम्भेनार्थानन्विच्छति। अयःशूलदण्डाजिनाभ्यामितिठञ्‌॥

दाण्डिनायनः। पुं। दण्डिनोगोत्रापत्ये॥ नडा० फक्‌। दाण्डिनायनहास्तिनायनेत्यादिना टिलोपाभावः॥

दातः। त्रि। लूने। छिन्ने॥ दायते स्म। दाप्‌लवने। क्तः॥ शुद्धे॥ दायति। दैप्‌शोधने। कर्त्तरि क्तः॥

दाता। त्रि। दानशीले। सुचिरे। दानकर्त्तरि॥ ददाति। डुदाञ्‌०। तृच्‌॥

दात्यूहः। पुं। कालकण्ठके खगे॥ चातके॥ जलकाके॥ मेघे॥ दातिः। दाप्‌०। क्तिन्‌। दातिं मारणं यूहते। ऊह०। अण्‌॥ यद्वा। दित्यौहोयम्‌। अण्‌। देविकाशिंशपेत्यात्त्वे वाहऊठि शकन्ध्वादिः॥

दात्यौहः। पुं। दात्यूहे॥ दित्यौहोऽयम्‌। अण्‌। देविकाशिंशपेत्यादि



नात्त्वे सम्प्रसारणम्‌। वृद्धिः॥

दात्रम्‌। न। छेदनशस्त्रे। लविते॥ दान्त्यनेन। दाप्‌०। दाम्नीत्यादिना ष्ट्रन्‌॥ दादिभ्यश्छन्दसीतिइत्वा॥

दात्री। स्त्री। दानशीलायाम्‌॥ तृजन्तान्‌ ङीप्‌॥

दात्वः। पुं। दातरि॥ ददाति। डुदाञ्‌०। अनिदेत्यादिना ददातेस्त्वन्‌॥

दादः। पुं। दाने॥ दयते। दददाने। कर्मणि घञ्‌॥

दाधिकम्‌। त्रि। दधिसंस्कृतद्रव्ये॥ दधिसंस्कृतम्‌। दध्नष्ठक्‌॥ दध्ना संस्कृतं वा। प्राग्वहतीयष्ठक्‌। दध्नाचरति। चरतीतिठक्‌। दध्ना संसृष्टं वा। संसृष्टेठक्‌। दध्नोपसिक्तं वा। व्यञ्जनैरुपसिक्त इतिठक्‌॥

दानम्‌। न। गजमदे॥ पालने। रक्षणे॥ छेदे॥ शुद्धौ॥ विश्राणने। त्यागे। परस्वत्त्वापत्तिपर्यन्तं स्वत्त्यागे। देशेकालेश्रद्धया यथाशक्त्यान्यायार्जितार्थानां सत्पात्रे समर्पणे। स्वस्वत्त्वास्पदानामन्नादीनां यथाशक्ति शास्त्रोक्तसंविभागे। असङ्कोचेनवित्तेषु स्वस्वत्त्वपरित्यागेन परस्वत्त्वापादने। समदानस्वत्त्वापादकद्रव्यत्यागे॥ *॥ अर्थानामुदिते पात्रेश्रद्धया प्रतिपादनम्‌। दानमित्यभिनिर्दिष्टं व्याख्या

मंतस्यवच्यते ॥ दाता प्रतिग्रहीताच
श्रद्धा देयञ्च धर्मयुक् । देशकालौच
दानानामङ्गान्येतानि षड्विदुः ॥ म
नसा पात्रमुद्दिश्य भूमौ तोयं विनिः
क्षिपेत् । विद्यते सागरस्यान्तो दान
स्यान्तो न विद्यते ॥ परोक्षे कल्पितं
दानं पात्राभावे कथं भवेत् । गोत्र
जेभ्यस्तथा दद्यात् तदभावे ऽस्यव-
न्धुषु ॥ यदातु न सकुल्यः स्याच्च-
सम्बन्धिवान्धवाः । दद्यात् स्वजाति
शिष्येभ्य स्तदभावेप्सुनिःक्षिपेत् ॥
स्नात्वाशुद्धेसमे देशे गोमयेनोपले-
पिते । वसित्वा वसनंशुद्धं दानं दद्या
त् सदक्षिणम् ॥ दानं चतुर्विधं प्रोक्त
मृषिभिर्धर्मकोविदैः । नित्यं नैमि
त्तिकं काम्यं विमलं दानमीरितम् ॥
अहन्यहनि यत्किञ्चिद् दीयते ऽ
नुपकारिणे । अनुद्दिश्यफलं तत्स्या
त् ब्राह्मणायतु नित्यकम् ॥ यत्तुपा
पोपशान्त्यैच दीयते विदुषांकरे ।
नैमित्तिकं तदुद्दिष्टंदानं सद्भिरनुष्ठि
तम् ॥ अपत्यविजयैश्वर्यस्वर्गार्थं य
त् प्रदीयते । दानं तत् काम्यमाख्या
त मृषिभिर्धर्मचिन्तकैः ॥ ईश्वरप्रीण
नार्थाय ब्रह्मवित्सु प्रदीयते । चेत-
सा सत्त्वयुक्तेन दानं तद्विमलं स्मृतं
म् ॥ * ॥ गत्वायद् दीयतेदानं भ



क्त्यापात्रेविधानतः । तदनन्तफलं वि
द्धिमवस्था चिन्तयेन्नृप ॥ * ॥ तच्च सा
त्त्विकादि भेदात् त्रिविधम् । यथा ।
दातव्य मिति यद्दानं दीयते ऽनुप
कारिणे । देशेकालेच पात्रेच तद्दा
नं सात्त्विकं स्मृतम् ॥ यत्तुप्रत्युप
कारार्थं फलमुद्दिश्यवापुनः । दीयते
च परिक्लिष्टं तद्दानं राजसं स्मृतम्
॥ अदेशकालेयद्दानमपात्रेभ्यश्चदी
यते । असत्कृत मवज्ञातं तत् ता
मस मुदाहृतम् ॥ * ॥ यदेवमिम
मेदमितिविशेषंजानानःपरस्वत्वाप
त्तयेस्वामी त्यजति परस्वविशेषेणे
दंममेतिस्वत्त्वंप्रत्येतीति व्यवहारे
॥ * ॥ अस्यविधिर्यथा । स्नानसन्ध्याच
मनानिकृत्वा नारायणनवग्रहगुरून्
सम्पूज्य देयद्रव्यं वामहस्तेन धृत्वा
दक्षिणहस्तेन त्रिरभ्यर्च्य तद्द्रव्याधि
पतिदेवतां सम्प्रदानञ्चार्चयित्वा स
ङ्कल्प्यकुशतिलजलत्यागपूर्वकंदद्या
दिति ॥ विवेकज्ञानशुद्धौ ॥ दैपृशो
धनशब्दस्यस्मादुदातोर्हानपदं व्युत्पद्यते
। यदाहपतञ्जलिः । विवेकख्यातिरवि
प्लवादुःखत्रयस्यहानोपाय इति । अवि-
प्लवा शुद्धिः । सा चसवासनसंशयविपर्या
सानांपरिहारेण विवेकसाक्षात्कारस्य
स्वच्छप्रवाहे ऽवस्थानम् । सा च न वि

नादरनैरन्तर्यदीर्घकालसेवितास्या सपरिपाकाङ्क्षतीति । दानेनविवेकख्यात्युपकार्यंशाङ्गेन सोपिसङ्गृहीतः । सेयं पञ्चमीसिद्धिः सदामुदितमित्युच्यते । दानञ्च सिद्धिहेतुः । धनादिदानेनाराधितोज्ञानी ज्ञानं प्रयच्छति ॥ इति अनेन । दोअवखण्डने । ल्युट् ॥ डुदाञो भावे दीयते इति कर्मणि वा ल्युट् ॥ स्वधनस्यपरेभ्यः प्रतिपादने राज्ञामुपायविशेषे । उपप्रदाने ॥

दानकम् । न । कुत्सितदाने ॥ दानकुत्सितेऽइतियावादिषुपाठात्कन् ॥

दानकर्म । न । दानक्रियायाम् ॥

दानतोयम् । न । मदोदके ॥

दानधर्मः । पुं । दानस्यफले ॥

दानपतिः । पुं । सदाप्रदे । सततदातरि ॥ अक्रूरे ॥

दानपात्रम् । न । विद्यादियुक्ते ॥ विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः । वृत्तिग्लाने गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः ॥ दानस्यपात्रम् ॥

दानवः । पुं । असुरे । दनुजे । दक्षकन्याया दनोर्गर्भे कश्यपाज्जाते ॥ दनोरपत्यम् । तस्यापत्यमित्यण् ॥

दानवज्रः । पुं । वैश्ये ॥ इति पुराणम् ॥



दानवारिः । पुं । सुरे । देवतायाम् ॥ दानवाना मरिः । दानवो ऽरिर्यस्य वा ॥

दानशीलः । त्रि । वदान्ये । दातरि ॥

दानशौण्डः । त्रि । वदान्ये । बहुप्रदे ॥ दानेशौण्डः । सप्तमीशौण्डैरितिसमासः ॥

दानायोग्यः । त्रि । अपात्रे ॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । नैषां प्रतिग्रहो देयो न शिलातारयेच्छिलाम् ॥

दानीयः । त्रि । सम्प्रदाने । दानपात्रे ॥ दीयतेऽस्मै । डुदाञ्० । कृत्यल्युटोबहुलमिति सम्प्रदानेऽनीयर् ॥

दानुः । त्रि । दातरि ॥ विक्रान्ते ॥ ददाति । डुदाञ्० । दाभाभ्यांनुः ॥

दान्तः । त्रि । तपःक्लेशसहे । जितेन्द्रिये । बहिरिन्द्रियनिग्रहकर्त्तरि ॥ दाम्यतिस्म । दमेर्गत्यर्थेतिक्तः । यस्यविभाषेतिनेट् । अनुनासिकस्येतिदीर्घः ॥ दमिते । शिक्षितवृषे ॥ दान्तोयं बलीवर्दः युगाशकटवाहनयोग्यःकृतइतिगम्यते इतिभामती ॥ दम्यतेस्म । दमुउपशमे । णिजन्तः । क्तः । वादान्तशान्तेतिसाधुः ॥ पुं । दमनकवृक्षे ॥

दान्तिः । स्त्री । तपःक्लेशसहिष्णुतायाम् ॥

। दमथे । दमे ॥ दमनम् । दमु० । णिचि । क्तिन् । अनुनासिकस्येतिदीर्घः ॥

दापितः । त्रि । साधिते ॥ दापयते स्म ण्यन्ताद्दाञः क्तः ॥ दण्डिते ॥

दाप्यः । त्रि । दापनीये ॥

दाम । न । स्त्री । दोहनकाले पशुपादबन्धनरज्जौ । सन्दाने ॥ द्यति । दो अवखण्डने । दीयते वा । दीङ् क्षये । मनिन् ॥ मालायाम् ॥ रज्जौ ॥

दामनपर्व्व । न । दमनभञ्जनतिथौ । चैत्रशुक्लचतुर्दश्याम् ॥

दामनी । स्त्री । तन्त्याम् । पशुबन्धनरज्ज्वाम् ॥ दामैव । प्र० अण् । अन्नितिप्रकृतिभावः । टिड्ढेतिङीप् ॥

दामलिप्तम् । न । तमोलुकइति प्रसिद्धे तमोलिप्तदेशे ॥

दामा । स्त्री । दामनि ॥ दो अवखण्डने । दीङ् क्षये वा । मनिन् । मन इति नङीप् । दामानौ दामानः इत्यादि । डाबुभाभ्यामन्यतरस्याम् इति डापि तु । दामा दामे दामाः इत्यादि बोध्यम् ॥

दामाञ्चनम् । न । अश्वादेः पादबन्धनरज्जौ । पिछाडी इतिभाषा ॥ इति हेमचन्द्रः ॥

दामाञ्चलम् । न । एकशफाङ्घ्रिबन्धे । दामाञ्चने ॥ दामाञ्चलं पादपाशे इति वैजयन्ती ॥

दामिनी । स्त्री । विद्युति ॥ दामवित्यस्याः । संज्ञायां मन्नाभ्यामिनीनिः ॥

दामोदरः । पुं । श्रीकृष्णे ॥ बाल्येचापल्यनिषेधाय यशोदया दाम्नोदरे बद्धत्वात् दाम उदरे यस्येति सप्तम्यन्तस्य वैयधिकरण्येपि समासः । सप्तमीविशेषणे बहुव्रीहाविति लिङ्गात् ॥ तर्वोर्मध्यगतं बद्धं दाम्ना गाढं तथोदरे । ततश्च दामोदरतां स ययौ दामबन्धनात् ॥ दामानि लोकनामानि तानि यस्योदरान्तरे । तेन दामोदरो देवः श्रीधरस्त्वं रमाश्रित इतिव्यासः ॥ दमादिसाधनेन उदारा उत्कृष्टा या गति र्धूमादिगत्यपेक्षया ऽर्चिरादिस्तयागम्यते इति वा ॥ दमाद्दामोदरं विदुरिति भारतोक्तेः ॥ भूतार्हद्विशेषे ॥ नदविशेषे ॥

दाम्भिकः । त्रि । छद्मनाधर्मकारिणि । बैडालव्रतिकादौ ॥ दम्भयुक्तो धर्मध्वजिनि ॥ पुं । वकपक्षिणि ॥ दम्भेनचरति । ठक् ॥

दायः । पुं । सोलुण्ठभाषणे ॥ विभक्तव्यपितृद्रव्ये ॥ दाने ॥ हरणे । यौतुकादिधने । कन्यादानकाले जामात्रादिभ्यो व्रतभिक्षादौ ब्राह्मणादिभ्यश्च यद्द्रव्यं दीयते तदिति भरतः ॥ याव

तत्सम्बन्धिधने ॥ क्षये ॥ स्थाने ॥ खण्डने ॥ ददाति । डुदाञ्० । श्याद्व्यधेति णः । आतोयुक् ॥ यद्वा । दीयतेऽसौ । दोङ् क्षये ॥ अकर्त्तरि चेति चकारस्य संज्ञाव्यभिचारार्थत्वात् घञ् ॥

दायकः । त्रि । दातरि ॥ ददाति । डुदाञ्० । ण्वुल् । आतोयुक् ॥

दायबन्धुः । पुं । भ्रातरि ॥

दायभागः । पुं । दायविभागे । सम्बन्धिमात्रेण सम्बन्धिधनस्य विभागे । पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्दस्तस्य विभागे ॥ एकदेशगतस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतयाऽव्यवस्थितस्य गुटिकापातादिना व्यञ्जने ॥ अथवा विशेषेण भजनं स्वत्वज्ञापनं वा । यत्तु चैकदासीगवादिकं बहुसाधारणं तत्रापि तत्तद्विशेषवत्त्वदोहनफलेन स्वत्वं व्यज्यते ॥ विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते । दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥ दायस्य भागः ॥

दायविभागः । पुं । दायभागे ॥ श्रीसदाशिव उवाच ॥ भूयस्ते कथयाम्यार्ये व्यवहारान् सनातनान् । यानाश्र



न् प्रविद्वान् राजा स्वच्छन्दं पालयेत् प्रजाः ॥ नियमेन विना राज्ञो मानवा धनलोलुपाः । मियस्ते विवदिष्यन्ति गुरुस्वजनबन्धुभिः ॥ व्यतिक्रान्ते तदा देवि स्वार्थिनो विलष्टेतवे । पापाश्रया भविष्यन्ति हिंसया चिकीर्षया ॥ अतस्तेषां हितार्थाय नियमो धर्मसम्मतः । नियोज्यते यमाश्रित्य न भ्रश्येयुः शुभाचराः ॥ दण्डयेत् पापिनो राजा यथा पापानुरूपये । तथैव विभजेद्दायान् न्वयानां सम्बन्धभेदतः ॥ सम्बन्धो द्विविधो ज्ञेयो विवाहाज्जन्मनस्तथा । तत्रौद्वाहिकसम्बन्धादपरो बलवत्तरः ॥ दायेतूर्द्ध्वतनाज्ज्यायान् सम्बन्धोऽधस्तनः शिवे । अधऊर्द्धक्रमादत्र पुमान् मुख्यतरः स्मृतः ॥ तत्रापि सन्निकृष्टेन सम्बन्धी दायमर्हति । अनेन विधिना धीरा विभजेयुः क्रमाद्धनम् ॥ मृतस्य पुत्रपौत्रेषु कन्यासु पितरि स्थिते । भार्य्यायामपि दायार्हः पुत्र एव न चापरः ॥ बहवस्तनया यत्र सर्वे तत्र समांशिनः । ज्येष्ठे राज्याधिकारित्वं तत्तु वंशानुसारतः ॥ ऋणं यत् पैतृकं तत्र शोधयेत् पैतृकैर्धनैः ॥ तस्मिन् स्थिते विभागार्हं न भवेत् पैतृकं वसु ॥ विभज्य यदि गृह्णीयुर्विभवं पैतृकं नराः । तेभ्यस्तत्तु समादत्त्वा पितुर्ऋणं दापयेन्नृपः ॥ अज्ञात्वा

प्रायेणनिरयंयान्तिमानवाः। कन्येना
पितथावढ़ः स्वयमेवनचापरः॥ साधा
रणंधनंयच्चस्थावरंस्थावरेतरत्। अंशि
नःप्राप्तुमर्हन्तिस्वंस्वमंशंविभागतः॥
अंशिनांसम्मतावेवविभागःपरिसिध्य
ति। तेषामसम्मतौराजासमदृष्ट्यां
शमाचरेत्॥ स्थावरस्यचरस्यापिवि
भागानर्हवस्तुनः। मूल्यं वा तदुपस्व
त्व मंशिनां विभजेन्नृपः॥ विभक्तेपि
धनेयस्तुस्वीयांशं प्रतिपादयेत्। पु
नर्विभज्यतद्द्रव्यम प्राप्तांशायदाप-
येत्॥ कृतेविभागेद्रव्याणां मंशिनां
सम्मतौ शिवे। पुनर्विवादयं कश्चि
स्योभवतिभूभृतः॥ स्थितेप्रेतस्यपौत्रे
चभार्य्यायांचपितर्य्यपि। पौत्रएवध
नार्हः स्यादधस्ताज्जन्मगौरवात्॥
अपुत्रस्यास्थितेतातेसे दरेच पिताम-
हे। जन्मनःसन्निकर्षेण पितैवास्यध
नंहरेत्॥ विद्यमानासुकन्यासुस-
न्निकृष्टास्वपिप्रिये। मृतस्यपौत्रोध
नभाक् यतोमुख्यतरःपुमान्॥ धनं
मृतेन पुत्रेणपौत्रं यातिपितामहात्
। अतोपगीयतेलोकैः पुत्ररूपःस्वयं
पिता॥ औद्वाहिकेपिसम्बन्धे ब्राह्मी
भार्य्यावरीयसी। अपुत्रस्यहरेद्दृक्-
थं पत्युर्देहार्द्धहारिणी॥ पतिपुत्र
विहीनातुसंप्राप्य स्वामिनोधनं। नै



वदातुं नविक्रेतुं समर्थास्वधनं विना
॥ पितृभिःश्वशुरैर्वापिदत्तं यद्धर्मसम्म
तं। स्वकृत्योपार्जितं यच्चस्त्रीधनंतत्
प्रकीर्त्तितं॥ तस्यांमृतायां रिक्थं त
त्पुनःस्वामिपदं व्रजेत्। तदासन्नत
रो रिक्थमधस्तादूर्द्ध्वमाहरेत्॥ मृते
पत्यौस्वधर्मेण पतिबन्धुवशे स्थिता।
तदभावेपितृबन्धोः स्थित्वा तीदायमर्ह
ति॥ शंकितव्यभिचारापिनपत्युर्दा
यभागिनी। लभतेजीवनंमात्रंभर्त्तु
र्विभवधारिणः॥ वद्ध्यश्चेद्वनिता-
स्तस्यस्वयांतुधर्मतत्पराः। भजेरन्स्वा
मिनोवित्तं समांशेनसुचिस्मिते॥ प
त्युर्धनहरायाश्च मृतौभर्त्तृसुतास्थि-
तौ। पुनःस्वामिपदं गत्वा धनं तुरि
तरं व्रजेत्॥ एवंस्थितायां कन्याया
रिक्थं पुत्रवधूगतं। तन्मृतेस्वामिनं
प्राप्य श्वशुरात्तत्सुतामियात्॥ तथा
पितामहेसत्वे वित्तं मातृगतं शिवे।
तस्यांमृतायां पुत्रेणभर्त्तुश्वशुरगम्भ-
वेत्॥ मृतयोर्वंगतं वित्तं यथा प्रा
प्नोति तत् पिता। जनन्यपितथाप्नो
ति पतिहीना भवेद्यदि॥ अतःस-
त्यांजनन्यांतु विमाताननधनं हरेत्।
मृतेजनन्यास्तं प्राप्यविभागकृतेविमा
तरं॥ अधस्तनानां विरहात् दारिक्
थमयान्यः। येनैवाधस्तनं प्राप्तं ते

नैवोर्द्धं नदायंभजेत् ॥ अतःस्थितौपि
तृव्यस्यधनं स्वस्रगतं चसत् । पत्यौ
स्थितेऽनपत्यायामृतौपितृव्यमाश्र-
येत् ॥ ऊर्द्ध्वंवित्तमधः प्राप्यपुमांस·
मवलम्बते । अतःसत्यांसोदरायांवै
मात्रेयोधनं हरेत् ॥ स्थितायां सोद
रायांचविमातुः पुत्रसंततौ । वैमात्रे
यगतं वित्तं वैमात्रेयान्वयोभजेत् ॥
मृतश्चसोदरोभ्राता वैमात्रेयस्तथा ।
शिवे । धनं पितृगतत्वेन विभजेतां
समांशिनौ ॥ कन्यायां जीवितायांच
तदपत्यं नदायभाक् । यच्चयत्साधितं
वित्तंतन्मृतावपरं भजेत् ॥ विभजेयु
र्दुहितरः पुत्राभावेपितुर्वसु । उद्वाह
यं त्योऽनूढास्तुपितु साधारणैर्धनैः ।
असंतत्यामृतायास्तु स्त्रीधनं स्वामिनं
भजेत् । अन्यत्तुद्रविणं यस्मादाप्तं·
तत्पदमाश्रयेत् ॥ प्रेतस्याश्रयनैर्मो
रीविदध्या दात्मपोषणं । पुण्यन्तु
तदुप स्वत्वैर्नशक्ता दानविक्रये ॥ पि
तामहस्नुषायाञ्च सत्यांतातविभातरि
। पितामहगतंरिक्थंतत्पुत्रेणस्नुषां
भजेत् ॥ पितामह पितृव्येचतथाभ्रा
तरिजीवति । अधोभवानांमुख्यत्वा
त् भ्रातैवधनभाग्भवेत् ॥ पितृव्यात्
सान्निकर्षेचतुल्यौ भ्रातृपितामहौ ।
धर्मंपितृपदंगत्वा प्रयातुभ्रातरं भजे



त् ॥ स्थितेप्यपत्येदुहितुः प्रेतस्यपि
तरिस्थिते । दुहित्रपत्यंधनभाक् धनं
यस्मादधोमुखं ॥ स्वः प्रयातुःस्थिते-
मातेतथामातरिकालिके । पुंसोमु-
ख्यतरत्वेनधनहारीभवेत् पिता ॥
स्थितः स्वपितृसापिण्डोवर्त्तमानेपि
मातुले । प्रेतस्यधनहारीस्यात् पितुः
सम्बन्धगौरवात् ॥ अधस्तादुगमना·
भावेधनमूर्द्धभवंगतं । तत्रापिपुंसांमु
ख्यत्वादितं पितृकुलंशिवे ॥ अतोप
सन्निकृष्टोपिमातुलोनामुयाद्धनं । अ
जीवत् पितृकःपौत्रः पितृव्यैःसहपा
र्वंति ॥ पितामहस्यद्रविणात् स्वपितु
र्दायमर्हति । भ्रातृहीनातथापौत्री
पितृव्यैः समभागिनी ॥ पितामह-
धनंपौत्र्याहरेच्चेन्मृतमातृका । सत्यां
पौत्र्याः पितामह्यांपौत्र्याः पितृस्व
सर्य्यपि ॥ वित्तेपितृगतेदेविपौत्री-
तत्राधिकारिणी । अधोगामिषु वित्ते
षु पुमान् ज्यायानधस्तनः ॥ ऊर्द्धगा-
मिधनेश्रेष्ठः पुमानूर्द्धाङ्गवोभवेत् ॥
अतःस्नुषायां पौत्र्याञ्चसत्यांदुहित
रिप्रिये । प्रेतस्यविभवंहर्त्तुंनैवशक्तो
तितत्पिता ॥ यदापितृकुलेनस्या-
न्मृतस्यधनभाजनं । पूर्वोक्तविधिनारि
क्थंमातामहकुलंभजेत् ॥ मातामह
गतंवित्तंमातुलैस्तत्सुतादिभिः । अ

धजर्द्धक्रमेणैवपुमांसंस्त्रियमाश्रयेत् ॥ ब्राह्मणान्वयेविद्यमानेपिन्नोः सापि च नेस्थिते । सतसुम्रैवीतनयोमपि तुर्द्दायभाग्भवेत् ॥ शैवीपत्नीभ्वनृत् पुत्रावभेदनुधनभागिनः । ग्रासमा-च्छादनंभद्रेस्वःप्रयातुयंधनं॥शैवो द्वाहं प्रकुर्व्वन्ती शैवभर्त्तृवपाक्षयेत् । शैव्याश्वेवाधिकारोस्ताःपित्रादीनां धनेप्रिये ॥ सतःसत्कुलजांकन्यांश्रै वैवाह्यन् पिता । क्रोधाद्वालोभतो वापिसभवेल्लोकगर्हितः ॥ शैवीसद् न्ययाभावेसोदकोत्रक्षुदोन्वयः । चरे युः मनतोवित्तंमृतस्यग्निवग्रासनात् ॥ पिण्डदात्सप्तपुरुषाः सपिण्डाः क थिताः प्रिये । सोदकादग्रमांताः स्तु स्ततःकेवलगोत्रजाः ॥ विभक्तंद्रविणं यत्रसंसृष्टंस्वेच्छयातुचेत् । अविभ क्तविधानेनभजेरंस्तद्धनं पुनः॥ अविभ क्तविभक्तेवायस्ययाद्दग्विभागिता । म तेपितस्यदायादास्ताद्दग्विभवभागि-नः॥ येयस्यधनहर्त्तारोभवेयुर्जीवना वधि। हयुःपिण्डंतएवास्यशैवभार्य्या सुतंविना॥ इतिश्रीमहानिर्वाणतन्त्रे द्वादशोल्लासे सनातनव्यवहारकथ-नम्॥

दायादः । पुं । सपिण्डे ॥ तनये । सुते ॥ दायमत्ति । अदभक्षणे । कर्मण्य



ण् ॥ यद्वा । आदत्ते । डुदाञ्० । आ तोनुपसर्गे इतिकः । दायस्यादः । स्वामीश्वराधिपतिदायादसाक्षिप्रति-भूप्रसूतैश्चेतिसूत्रएवनिपातनात्सो पसर्गाद्प्यादन्तात् कः ॥

दायितः । त्रि । दण्डिते । साधिते ॥ दयतेर्यस्मात् कर्त्तरिक्तः ॥

दाराः । पुंभूम्नि । भार्यायाम् ॥ दारय न्ति भ्रातॄन् । दृ० णिजन्तः । दारजा रौकर्त्तरिणिलुक् चेतिघञ् ॥

दारकः । पुं । बालके । पुत्रे ॥ ग्राम्यशू करे ॥ त्रि । भेदके ॥ दारयति । दृ० ण्वुल् ॥

दारकर्म्म । न । विवाहे ॥

दारणम् । न । विदारणे ॥ कतके ॥ दार्यतेऽनेन । दृ० । णयन्तात्ल्युट् ॥

दारदः । पुं । विषभेदे ॥ पारदे ॥ हिङ्गुले ॥ समुद्रे ॥ दरदि देशविशे षेभवः । अण् ॥

दारवल्लिभुक् । पुं । वकपक्षिणि ॥

दारा । स्त्री । भार्यायाम् ॥ इतिभरतः ॥

दारिः । स्त्री । विदारके ॥

दारिका । स्त्री । बालिकायाम् ॥

दारितः । त्रि । भिन्ने । भेदिते । कृत दारणे ॥ दार्यतेस्म । दृ० । णयन्ता त्क्तः ॥

दारिद्र्यम् । न । दरिद्रत्वे । निर्द्धनत्वे

॥ भावे ल्युट् ॥

दारी । स्त्री । क्षुद्ररोगविशेषे । विपादिकायाम् । बिवाई इति भाषा ॥ परिक्रमणशीलस्य वायुरत्यर्थरूक्षकः । पादयोःकुरुतेदारींसरुजांतलसंश्रिताम् ॥ अस्याश्चिकित्साभावप्रकाशेद्रष्टव्या ॥

दारु । न । पित्तले ॥ काष्ठे ॥ देवदारौ ॥ त्रि । शिल्पिनि ॥ दातरि ॥ दारके ॥ दीर्यते । दॄ० । दृसनिजनीति ञुण् ॥ यद्वा । ददाति । डुदाञ्० । र्दाति । दो० । दयते वा । देङ्रक्षणे । तच्छीलादिः । दाधेट्सिशदसदो रुरितिरुर्वा ॥

दारुकः । पुं । श्रीकृष्णसारथौ ॥ न । देवदारुणि ॥

दारुकदली । स्त्री । वनकदल्याम् ॥

दारुका । स्त्री । पुत्रिकायाम् । कुवंच्याम् । शालभंज्याम् । कठपूतली इति भाषा ॥

दारुगन्धा । स्त्री । चीडानामगन्धद्रव्ये ॥

दारुगर्भा । स्त्री । दारुकायाम् ॥

दारुचीनी । स्त्री । स्वनामप्रसिद्धद्रव्ये ॥

दारुचीर्णकम् । न । गुडत्वचि ॥

दारुजः । पुं । मर्दले ॥ त्रि । दारुजाते ॥

दारुणः । पुं । चित्रके ॥ रौद्ररसे । भयानकरसे ॥ न । तीव्रसंक्रमणेषु ॥

॥ त्रि । भयावहे । दुःसहे । भीषणे । भयहेतौ ॥ दारयति णिच्‌ल्युट् । इभये । क्रूरदारिम्णउनन् ॥

दारुणकम् । न । रूपीतिख्याते मस्तकस्थे रोगे ॥ तल्लक्षणं यथा । दारुणा कण्डुरा रूक्षा केशभूमौ प्रजायते । मारुतश्लेष्मकोपेण विद्याद्दारुणकन्तु तम् ॥ दारुणाकर्कशा ॥

दारुणा । स्त्री । रात्रिविशेषे ॥ ॥ यथा । तृतीयाऽप्ययसंज्ञाया दारुणा साप्रकीर्तितेति ॥ नर्मदत्तटवर्तीर्थाधिष्ठात्र्यांदेव्याम् ॥

दारुनिशा । स्त्री । दारुहरिद्रायाम् ॥

दारुपत्री । स्त्री । हिङ्गुपत्र्याम् ॥

दारुपीता । स्त्री । दारुहरिद्रायाम् ॥

दारुपुत्रिका । स्त्री । दारुकायाम् ॥

दारुमुखाह्वया । स्त्री । } गोधायाम् ।

दारुमुखाह्वा । स्त्री । } निहाकायाम् ॥

दारुमूषा । स्त्री । दारुमूसीतिप्रसिद्धौषधौ ॥

दारुसारम् । न । चन्दने ॥ दारुषां दारुषु वा सारं श्रेष्ठम् ॥

दारुसिता । स्त्री । त्वक्स्वाद्याम् । दारुचीनीतिख्यातायाम् ॥ उक्तादारुसिता स्वाद्वी तिक्तानिलपित्तनुत् । सुरभिः शुक्रलाबल्या मुखशोषतृषा

पचा ॥

दारुषी । स्त्री । दारुपुत्रिकायाम् ॥

दारुहरिद्रा । स्त्री । पचम्पचायाम् । पर्ज्जन्याम् । कस्सल इतिपर्व्वतीयभाषाप्रसिद्धायाम् ॥ दारुचासौ हरिद्रा च ॥

दारुहस्तकः । पुं । दर्व्वीम् । डोई इति भाषा ॥ हस्तस्य प्रतिकृतिः । इवेप्रतिकृताविति कन् । दारुणो हस्तकः ॥

दार्ढ्यम् । न । दृढतायाम् ॥ भावे ष्यञ् ॥

दार्त्तेयः । त्रि । दृतिस्थे ॥ दृतौ भवम् । दृतिकुक्षीति ढञ् ॥

दार्दुरम् । न । दक्षिणावर्त्तशङ्खे ॥ दर्दुरधर्म्मे ॥

दार्दुरिकः । पुं । कुलाले ॥ दर्दुरो मृत्पात्रविशेषः । तं करोति । शब्ददर्दुरं करोतीति ठक् ॥

दार्व्वटम् । न । मन्त्रवेश्मनि । मन्त्रणागृहे ॥

दार्व्वाडः । पुं । मयूरे ॥

दार्व्वाघाटः । पुं । काष्ठकुट्टखगे । शतपत्रके । खुटकबढ्या इति भाषा ॥ दार्व्वाहन्तीति विग्रहे दारावाहनोऽणन्यस्य चटः संज्ञायामिति दारुशब्दे उपपदे आङ् पूर्व्वाद्धन्तेरण् प्रत्ययः टश्चान्तादेशः ॥

दार्व्वाघातः । पुं । दार्व्वाघाटे । श० च० ॥

दार्व्विका । स्त्री । दारुहरिद्राक्वाथतुल्ये । काथोद्भवतुत्थे ॥ गोजिह्वौषधौ ॥ दारयति । दृ० । उत्वादित्वात्साधुः । दार्व्वी दारुहरिद्रा तद्विकारोपि दार्व्वी अभेदोपचारात् । स्वार्थे कन् ॥

दार्व्विपत्रिका । स्त्री । गोजिह्वायाम् ॥

दार्व्वी । स्त्री । देवदारुणि ॥ हरिद्रायाम् ॥ गोजिह्विकौषधौ ॥ दारुहरिद्रायाम् ॥ दार्व्वी निशामुक्ता किन्तु नेत्रकर्णास्यरोगनुत् ॥ दीर्य्यते । दृ० । दृसनिञ्जनीतिञुण् । वोतइति गौरादित्वाद् ङीष् ॥

दार्व्वीकाथोद्भवम् । न । रसाञ्जने ॥

दार्षदः । त्रि । दृषद्पिष्टे चूर्णादौ ॥ दृषदो भवार्थेपि शैषिकोऽण् ॥

दालः । पुं । कोद्रवे ॥ न । मधुविशेषे ॥ संस्तुत्य पतितं पुष्पात् यत्तु पत्रो परिस्थितम् । मधुराम्लकषायञ्च तद्दालं मधुकीर्त्तितम् ॥ दालं मधु लघु प्रोक्तं दीपनीयं कफापहम् । कषायानुरसं रूक्षं रुच्यं छर्दिप्रमेहजित् ॥ अधिकं मधुरं स्निग्धं वृंहणं गुरुभारिकम् ॥ लघुपाके । गुरुभारिकं तुमितम् ॥ इन्द्रनीलदलाकाररक्तश्यामविङ्कोत्पन्नं वृक्षकोटरान्तरभवं मक्षिकातिराजिनिर्घरटः ॥

दालनः । पुं । दन्तरोगविशेषे ॥ दन्तम्

 

जनतानाद्यः पञ्चभेया यथेरिताः। दीर्घमालेष्विवरुजा यस्य हस्तेषु जायते। दावनो नाम सव्याधिःसदागतिनिमित्तजः॥ १२॥

दालनः। पुं। स्थावरविषभेदे॥

दाला। स्त्री। महाकाले। किम्पाके॥

दालिः। स्त्री। दलितेशमीधान्ये। दाल इति भाषा॥

दालिका। स्त्री। महाकाललतायाम्। किम्पाके॥

दालिमः। पुं। दाडिमे॥ इतिभरतः॥

दाली। स्त्री। दलिते शमीधान्ये। दालइतिभाषा॥ देवदालीलतायाम्॥

दाल्भ्यः। पुं। मुनिविशेषे॥ चैकितायने॥ वकाख्यर्षी॥ दल्भस्यगोत्रापत्यम्। गर्गादिभ्योयञ्॥

दाल्मी। पुं। इन्द्रे॥ इति त्रिकाण्डशेषः॥

दावः। पुं। वनानले॥ वने॥ उपतापे॥ दुनोति। टुदुउपतापे। दुन्योरनुपसर्गे इतिणः॥

दावाग्निः। पुं। वनवह्नौ। दावे॥ दावस्यवनस्याग्निः॥

दावानलः। पुं। दवाग्नौ॥

दाविकः। त्रि। देविकानद्युद्भवे॥ देविकायां भवः। तत्रभवइत्यण्। देविकाशिंशपेत्याद्यचामादेरात्त्वम्। स्त्रियां टिड्ढेतिङीपि दाविकी॥

दाशः। पुं। धीवरे॥ दशति मत्स्यान्। दंशदशने। दंसेष्टटनौन आच। दंशेश्च॥ यद्वा। दाश्यते मूल्यमस्मै। दाशृदाने। घञ्॥

दाशतयी। स्त्री। ऋग्वेदसंहितायाम्॥ दशमण्डलानि अवयवा यस्याः। सङ्ख्याया अवयवेतयप्। ङीप्॥

दाशपुरम्। न। कैवर्तीमुस्तके। दशपुरे। मोथा इति भाषा॥ दाशान् कैवर्तान् पिपर्त्ति। पृपालनपूरणयोः। मूलकः। उदोष्ठ्यपूर्वस्येत्युत्वम्॥

दाशपूरम्। न। दाशपुरे॥

दाशफली। स्त्री। ओषधिविशेषे॥ पाककर्णेतिङीप्॥

दाशरथः। पुं। श्रीरामचन्द्रे॥ दशरथस्यायम्। तस्येदमितिसम्बन्धाऽर्थेऽण्। सम्बन्धश्चात्र पितापुत्रत्वरूपः॥ पुरा शरत्सूर्यमरीचिसन्निभान् नवाग्रपुंखान्सुदृढान्नृपात्मजः। सृजत्यमोघान् विशिखान् वधायते मदीयतांदाशरथायमैथिली॥

दाशरथिः। पुं। श्रीरामे॥ दशरथस्यापत्यम्। अतइञ्॥

दाशार्हः। पुं। विष्णौ॥ यादवे॥ दाश्यते इति दाशो दानम्। तदर्हतीति। अर्हपूजायाम्। अच्॥ दशार्ह

लोदहत्वाद्वा । दशार्ह एवबा । स्वार्थिकःप्रमाद्यञ् ॥ त्रि । दशार्हदेशजे ॥
दाशी । स्त्री । धीवर्याम् ॥
दाशेयी । स्त्री । व्यासमातरि ॥ दाशस्य अपत्यं स्त्री । चतुष्पाद्भ्योढञिति ढञभावे द्व्यच इति ढक् । ङीप् ॥
दाशेरकः । पुं । मालवदेशे ॥ इ० त्रि० ॥
दाश्वः । त्रि । दातरि ॥
दाश्वान् । त्रि । दत्तवति ॥ दाश्वान् साह्वान्मीढ्वांश्चेतिनिपातितः ॥
दासः । पुं । ज्ञातात्मनि ॥ शूद्रे ॥ धीवरे ॥ दानपात्रे ॥ शूद्रनामोपपदे ॥ सेवके । भृत्ये ॥ सचपञ्चदशविधो नारदेनोक्तो यथा । गृहजातस्तथाक्रीतोलब्धो दायादुपागतः । अन्नाकालभृत स्तद्वदाहितः स्वामिना चयः ॥ मोचितो महतश्चार्णाद्युद्धे प्राप्तः पणोजितः । तवाहमित्युपगतः प्रव्रज्यावसितःकृतः ॥ भक्तदासश्चविज्ञेय स्तथैववडवाकृतः । विक्रेताचात्मनः शास्त्रेदासाःपञ्चदशस्मृताः ॥ अस्यार्थः । गृहजातः दास्यामुत्पन्नः । दायादुपागतः क्रमागतः । अन्नाकालभृतः दुर्भिक्षपोषितः । स्वामिनाआहितः बन्धकीकृतः । मोचितः ऋणदानेनाङ्गीकृतदास्यः । तवाहमित्युपगतःकश्चाप्यदासःसन् स्वयं-
दासत्वेन दत्तरूपः । प्रव्रज्याऽवसितः सन्न्यासभ्रष्टः । कृतः केनचिन्निमित्तेन एतावत्कालपर्यन्तं तवाहं दासइतिकृतसमयः । भक्तदासः सुभिक्षेपि भक्तार्थमङ्गीकृतदास्यः । वडवाकृतः वडवा दासीतल्लोभादङ्गीकृतदास्यःइति ॥ ध्वजाहृतो भक्तदासोगृहजः क्रीतदत्रिमौ । पैत्रिकोदण्डदासश्चसप्तैते दासयोनयः ॥ * ॥ विप्रस्यकिङ्करोभूपो वैश्यो भूपस्य भूमिप । सर्वेषां किङ्कराःशूद्रा ब्राह्मणस्य विशेषतः ॥ दसति । दंस दशने । दंसयति दंस्यतेवा । दसिदीसौ । दंसेष्टटनैानश्चाच ॥
दासकः । पुं । सामान्यदासे ॥ दासे ॥ दासएव । स्वा° कः ॥
दासकर्म्म । न । दासस्यकृत्ये ॥ कर्मापिद्विविधं ज्ञेय मशुभं शुभमेवच । अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् ॥ गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् । गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥ अशुभं कर्मविज्ञेयं शुभमन्यदतः परम् ॥
दासनन्दिनी । स्त्री । व्यासमातरि । सत्यवत्याम् ॥
दासपुरम् । न । कैवर्त्तीमुस्तके ॥ दासान् शूद्रान् पिपर्त्ति । पृ० । मू°

कः । उदोषृथ्यपूर्वस्यस्य ह्रस्वम् ॥

दासपूरम् । न । दासपुरे ॥ दासान् पूरयति । पूरपूर्त्तौ । कर्मण्यण् ॥

दासिका । स्त्री । पीतजिएट्याम् ॥ भुजिष्यायाम् ॥ वेश्याम् ॥ दास्येव । स्वार्थे कः । केण इति ह्रस्वः ॥

दासी । स्त्री । चेट्याम् । भुजिष्यायाम् ॥ वाणायाम् । जिएट्याम् ॥ काकजङ्घायाम् ॥ नीलाम्लाने ॥ नीलजिएट्याम् ॥ पीतजिएट्याम् ॥ वेश्याम् ॥ शूद्रायाम् ॥ कैवर्त्तभार्य्यायाम् ॥ दस्यते । दसु उपक्षये । कर्मणि घञ् । गौ० ङीष् ॥

दासीफली । स्त्री । ओषधिविशेषे ॥ पाककर्णेतिङीष् ॥

दासीसभम् । न । दासीनांसभायाम् ॥ दासीनां सभा । अशालाचेतिनपुंसकत्वम् ॥

दासेयः । पुं । धीवरे ॥ भृत्ये । दासीतनये ॥ दास्या अपत्यम् । क्षुद्राभ्यो वेति ढगभावपक्षे स्त्रीभ्यइतिढक् ॥

दासेयी । स्त्री । सत्यवत्याम् । व्यासजनन्याम् ॥ ङीप् ॥

दासेरः । पुं । क्रमेलके । उष्ट्रे ॥ धीवरे ॥ त्रि । चेटे । दासीपुत्रे ॥ दास्या अपत्यम् । क्षुद्राभ्योवेति ढक् ॥

दासेरकः । पुं । दासेरार्थेषु ॥ स्वा०-कम् ॥

दास्यम् । न । दासत्वे । दासभावे ॥ दासस्यभावः । ष्यञ् ॥

दास्यमानः । त्रि । भविष्यद्दानसम्बन्धिवस्तुनि ॥

दास्रम् । न । अश्विनीनक्षत्रे ॥ दस्रयोरिदम् । तस्येदमित्यण् ॥

दास्रभम् । न । अश्विनीनक्षत्रे ॥ दास्रदैवतम् भम् ॥

दाहः । पुं । दहने । भस्मीकरणे ॥ गात्रसन्तापे ॥ दहनम् । दहभस्मीकरणे । घञ् ॥

दाहकः । पुं । चित्रके ॥ रक्तचित्रके ॥ त्रि । दाहकर्त्तरि ॥ दह० । ण्वुल् ॥

दाहज्वरः । पुं । देहज्वालायुक्तोज्वररोगे ॥ यथा । पीतं हरिद्रकल्कन्तु पर्युषितजलेनवै । साद्रं विनाशयेद् दाहज्वरञ्च परमेश्वरेतिगारुडे १९३ अध्यायः ॥

दाहनम् । न । भस्मीकरणाय प्रेरणे । दाहकरावना इतिभाषा ॥ दहस्माद् हेल्युट् ॥

दाहसरः । पुं । श्मशाने ॥

दाहहरणम् । न । वीरणमूले ॥ त्रि । दाहघ्ने ॥

दाहाकर्षिनः । पुं । गन्धविशेषे ॥ यथा । देवदार्वमुरमांसीसारचन्दनाः

। प्रियादीनाञ्च योदृग्ध्वा गृह्यते दा

रुजोरस: । सदाशाकर्षितोगन्ध: सृ

तीय: परिकीर्त्तितइति ॥

दाहागुरु । न । सुगन्धिद्रव्यविशेषे । दा

रुकाष्ठे । तैलागुरुणि ॥

दाहिका । स्त्री । तेजसोभार्यायाम् ॥

पश्यप्रभाम् ॥

दाही । त्रि । दाहके ॥

दिक्क: । पुं । करभे ॥ विंशतिवर्षकेगजे ॥

दिक्कर: । पुं । यूनि ॥

दिक्करवासिनी । स्त्री । कामरूपदेशप्र

सिद्धनद्याम् ॥ देवीविशेषे ॥ दिक्क

रस्तरुण: प्रोक्त स्तथाशम्भुश्च दिक्क

र: । तस्मिन्नधुषितादेवी तस्माद्दि

क्करवासिनीति ॥

दिक्करिका । स्त्री । नाटकशेषस्य पश्चि

मभागाश्रित: स्रुतायां नद्याम् ॥

दिक्करी । स्त्री । युवत्याम् ॥

दिक्पति: । पुं । दिगधीश्वरे ॥ यथा ।

सूर्य: शुक्र: क्ष्मापुत्र: सैंहिकेय: श

नि: शशी । सैाम्यस्त्रिदशमन्त्रीच-

प्राच्यादिदिगधीश्वरा: ॥ * ॥ इन्द्रोव

ह्नि: पितृपतिर्नैर्ऋतोवरुणोमरुत् ।

कुबेरईश:पतय: पूर्वादीनांदिशांक्र

मात् ॥ * ॥ मेषसिंहधनु: प्राच्यां द

क्षिणस्यान्तुतत्परे । प्रतीच्यांतत्परे

ज्ञेया: उदीच्याञ्चतत: परे ॥ दिश:

पति: ॥

दिक्पाल: । पुं । पूर्वादिदशदिक्पतौ ॥

यथा । इन्द्रोवह्नि:पितृपतिर्नैर्ऋतोवरु

णोमरुत् । कुबेरईशोब्रह्मा चानन्तो

दिग्पालसंज्ञका: ॥

दिक्शूलम् । न । दिग्विशेषगमनेनिषि

द्धवारे ॥ यथा । शुक्रादित्यदिनेनश

रुणदिशं नचकुजेचोत्तरां मन्देन्दो

श्चदिनेनशक्रककुभंयाम्यांगुरौनव्रजे

त् । शूलानीति विलङ्घ्ययान्तिमनु

जा येऽपिस्वलाभाशयाभ्रष्टाशा: पुनरा

पतन्ति यदिते शक्रेणतुल्या अपि ॥

दिगन्त: । पुं । शास्त्रीयस्नानकर्मसंस्कृत

जनाधिष्ठितमध्यदेशादतिरिक्ते देशे

॥ दिशामन्त: ॥

दिगम्बर: । पुं । शङ्करे ॥ तमसि ॥ क्ष

पणे । आत्मनोमध्यमपरिमाणवादि

निर्वौद्धविशेषे ॥ यथा । दिगम्बराम

ध्यमत्वमाहु रापादमस्तकम् । चै

तन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि ॥

अस्य भाषा प्राकृतावान्तरभेदभिन्ना

मागधी । अस्यस्वरूपन्तु । गलन्मल

पङ्केन पिच्छिलवीभत्सदुष्प्रेक्ष्यदे

हच्छवि र्लुञ्चितचिकुरो मुक्तवस

नो वेशदुर्दर्शन: शिखिशिखण्डपि-

च्छिकाहस्त इति । अस्यशिष्या:श्राव

का: ॥ त्रि । नग्ने । विवसने ॥ दिगे

वाम्बरमस्य ॥

दिगम्बरी । स्त्री । कालिकायाम् ॥ दिगेवाम्बरमस्याः ॥

दिगीश्वरः । पुं । दिगधीश्वरे ॥ यथा । दिगीश्वरा भास्करशुक्र भौमाराहुश्च किंचन्द्रजसुरार्चिताः स्युरिति ॥ दिशः ईश्वरः ॥

दिग्गजः । पुं । दिग्हस्तिनि ॥ ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ दिक्षु स्थिताः गजाः दिग्गजाः ॥

दिग्दर्शनम् । न । दिक्साधनयन्त्रे । कम्पासइतीङ्ग्रभाषा ॥ दिशां दर्शनं ज्ञानं येन ॥

दिग्दाहः । पुं । उत्पातविशेषे ॥ यथा दाहलक्षणं वराहाचार्यः । तद्वर्ण- भेदेन तस्यफलम् । दाहोदिशां राजभयायपीतो देशस्यनाशायहुताशवर्णः । यश्चारुणःस्यादपसव्यवायुः सस्यस्य नाशञ्च करोतिदृष्टः ॥ योतीवदीप्याकुरुते प्रकाशं छायामभिव्य- ञ्जयतेर्कवच्च । राज्ञोमहद्वेदयते भयं स शस्त्रप्रकोपं क्षतजानुरूपः ॥ सर्वेषुदिक्षुफलम् । प्राक् क्षत्रियाणां समरेश्वराणां प्राग्दक्षिणे शिल्पकुमारपीडा । याम्ये सहोग्रैः पुरुषैस्तु वैश्या दूताः पुनर्भूप्रमदाश्चकोणे ॥ पश्चात् तुशूद्राः कृषिजीविनश्च चौरास्तुरङ्गैः सहवायुदिक्स्थः । पीडां व्रजन्त्युत्तरतश्चविप्राः पाखण्डिनोवाणिजकाश्चशार्व्याम् ॥ * ॥ शुभलक्षणम् । नभः प्रसन्नंविमलानि भानि प्रदक्षिणं वातिसदागतिश्च । दिशाञ्चदाहः कनकावदातो हिताय लोकस्यसपार्थिवस्येति ॥

दिग्द्वारभवनम् । न । पूर्वादिदिक्षुस्थिरासु च्यामेषादिराशिषु ॥

दिग्धः । पुं । लिप्तके । विषाक्तबाणे ॥ अग्नौ ॥ प्रवृद्धे ॥ स्नेहे ॥ प्रबन्धे ॥ त्रि । लिप्ते । लीपा इति भाषा ॥ दिह्यतेस्म । दिहउपचये । क्तः ॥

दिग्वासाः । पुं । शिवे ॥ त्रि । नग्ने । दिगम्बरे ॥ दिगेववासोऽस्य ॥

दिग्विजयः । पुं । विद्यया युद्धेन वा दिशांविजये ॥ यथा । शङ्करदिग्विजयः पाण्डवदिग्विजयइति ॥

दिङ्कः । पुं । उत्कुणडिम्भे ॥ इति शब्दार्थकल्पतरुः ॥

दिङ्मात्रम् । न । एकदेशे ॥

दिण्डिभाण्डम् । न । डिण्डिभाण्डाख्ये वादित्र विशेषे ॥ पटहमृदङ्गकरटाः समेतायत्रवाद्यन्ते तत् दिण्डिभाण्डमित्युच्यते ॥

दितः। त्रि। छिन्ने॥ दीयतेस्म। दोअवखण्डने। क्तः। द्यतिस्यतीतीत्वम्॥

दितिः। स्त्री। दैत्यजनन्याम्॥ खण्डने॥ दोअवखण्डने। क्तिच्क्तौचसंज्ञायामितिक्तिच्। द्यतिस्यतीतीत्वम्॥

दितिजः। पुं। दैत्ये॥ दितेर्जातः। जनी०। डः॥

दितिसुतः। पुं। दैतेये॥ दितेःसुतः॥

दिती। स्त्री। दैतेयमातरि॥ कृदिकारादक्तिनइति ङीष्॥

दित्सा। स्त्री। दातुमिच्छायाम्॥ डुदाञ्०। सनिमीमेत्यादिना इसादेशः। अत्रलोपोऽभ्यासस्येत्यभ्यासलोपः। अप्रत्ययादित्यकारप्रत्ययः॥

दिदृक्षमाणः। त्रि। द्रष्टुमिच्छति॥ दृशेःसन्नन्तात् लटःशानच्॥

दिदृक्षा। स्त्री। द्रष्टुमिच्छायाम्॥ दृशेः सन्नन्तादप्रत्यये टाप्॥

दिदृक्षुः। त्रि। द्रष्टुमिच्छति॥ सनाशंसभिक्षउः॥

दिद्युत्। त्रि। द्योतनशीले॥ द्योतते तच्छीलः। द्युतदीप्तौ। द्युतिगमिजुहोतीनांद्वेचेति क्विप्॥

दिधिषाय्यः। पुं। मध्ये॥ दधाति आज्ञादम्, धीयते वा। डुधाञ्०। दिधिषाय्यइति साय्यः धातोर्द्वित्वमित्वंषुकृचनिपात्यते॥ आरोपितमर्थो। मित्रस्यवयो दिधिषाय्यः॥

दिधिषुः। पुं। विरूढास्वामिनि। पुनर्भूपतौ॥ दिधिषूमात्मनइच्छति। सुपआत्मनःक्यच् क्विप्। वाकुलकादृभस्वः॥ स्त्री। विरूढायाम्॥

दिधिषूः। स्त्री। विरूढायाम्। पुनर्भ्वाम्॥ दधाति पापम् धिष्यते वा। डुधाञ्० धिषशब्दे वा। अन्दूदृन्भूइति साधुः॥ यद्वा। दिधिं धैर्यंस्यति। षो०। प्रात्नत॥ मनुस्तु। ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। साचाग्रेदिधिषूर्ज्ञेया पूर्वातु दिधिषूः स्मृतेत्याह॥ पुं। पुनर्भूपतौ॥

दिधिषूपतिः। पुं। विरूढायाः पत्यौ॥ भ्रातुर्मृतस्य भार्यायां योनुरज्येतकामतः। धर्मेणापि नियुक्तायां सज्ञेयो दिधिषूपतिः॥

दिनम्। न। सूर्यकिरणावच्छिन्नेकाले। अहनि। घस्रे। वासरे॥ तत्तु मनुष्यमाने षष्टिदण्डात्मकम्। पितृमाने गौणचान्द्रमासात्मकम्। देवासुरमाने वत्सरात्मकम्। ब्रह्ममाने दिव्यदिसहस्रयुगात्मकम्॥ * ॥ मनुष्यमाने ब्रह्मणो दिनस्य सङ्ख्या। ८६४००००००। इति

पितरि ॥

दिवोमराट् । पुं । दिवीपे ॥ इ° सि ॥

दिवोरम् । न । गोमयच्छत्रिकायाम् । शिलीन्ध्रके ॥

द्यौः । स्त्री । स्वर्गे ॥ आकाशे ॥ दीव्यन्त्यस्याम् । दिवु° । वा° दिवेर्डिविः । द्यौःदिवौ दिवः । द्युभ्याम् ॥

दिवम् । न । स्वर्गे ॥ आकाशे ॥ वने ॥ दीव्यन्त्यस्मिन् । दिवु° । इगुपधे तिकः ॥

दिवसः । पुं । न । दिने ॥ सावनादिप्रभेदेन दिवसोपि चतुर्विधिः । नाडीषष्टितमस्तत्र सावनो दिवसःस्मृतः ॥ त्रिंशांशभागार्कराशेर्दिवसः-सौरउच्यते । चान्द्रस्तुतिथ्यवच्छिन्नो भावधिश्चभभूःस्मृतः ॥ दीव्यन्त्यत्र । दिवु° । दिवःकित्दिवसम् ॥

दिवसकरः । पुं । सूर्ये ॥

दिवसमुखम् । न । प्रभाते ॥

दिवस्पतिः । पुं । वासवे । इन्द्रे ॥ दिवः पतिः । तत्पुरुषे कृतीत्यत्र बहुलग्रहणादलुक्यपि अलुक् इति मुकुटः । तन्न । पातेर्डतिरित्युणादिसूत्रस्य सत्त्वात् । वस्तुतस्तु । षष्ठ्याः पतिपुत्रेतिसत्वविधानसामर्थ्याल्लोकवेदः-साधारणेनालुगुक्तःमतः । अस्मादि सामर्थ्यात् । अनुपसृष्टाः पतिपुत्रेतिसत्वमितिमत्वा बुद्धेनोक्तं तन्न । तत्र छन्दोधिकारात् ॥

दिवस्पृथिव्यौ । स्त्री । द्यावापृथिव्योः ॥ द्यौश्चपृथिवीच । दिवसश्पृथिव्या-मितिदिवोदिवसादेशः ॥ दिवश्च-नाम्नः ॥

दिवा । अ । दिवसे ॥ दीव्यन्त्यत्र । दिवु° । कान्प्रत्ययः ॥

दिवाकरः । पुं । भास्करे । सूर्ये ॥ अर्कवृक्षे ॥ दिवादिनं करोति । दिवाविभेतिटः ॥ काके ॥ पुष्पविशेषे ॥ इतिशब्दचन्द्रिका ॥

दिवाकीर्त्तिः । पुं । नापिते ॥ रात्रौक्षुरकर्मनिषेधात् । दिवाकीर्तिरस्य ॥ अन्त्यावसायिनि । चण्डाले ॥ दिवाचरेयुः कार्यार्थं चिह्निता राजशासने रात्रि चण्डालेषु निःक्रमात् ॥ उलूके ॥ इतिशब्दचन्द्रः ॥

दिवाटनः । पुं । काके ॥

दिवातनः । त्रि । दिनभवे ॥

दिवान्धः । पुं । पेचके । उलूके ॥ यथा । दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे । केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः इति देवीमाहात्म्यम् ॥

दिवान्धकी । स्त्री । छुच्छुन्दर्याम् ॥

दिवान्धा । स्त्री । चर्मचटकापक्षिणि ॥

दिवाभीतः । पुं । कुमुदे । चौरे ॥

उलूके ॥ कुमुदाकरे ॥

दिवाभीतिः । पुं । पेचके ॥ दिवा दिवसे भीतिर्भयं यस्य ॥

दिवामणिः । पुं । सूर्य्ये ॥ दिवा दिवसस्य मणिरिव ॥

दिवामध्यम् । न । दिनार्द्धे । मध्याह्ने ॥

दिवाशयः । त्रि । दिनेशयनकर्त्तरि ॥ दिवा शेते स्वपितीति । शीङो ऽधिकरणे शेतेरित्यच् ॥

दिवास्वापः । पुं । दिननिद्रायाम् ॥ दिवास्वापं न कुर्वीत यतोऽसौ स्यात् कफावहः । ग्रीष्मवर्ज्जेषु कालेषु दिवास्वापो निषिध्यते ॥ उचितो हि दिवास्वापो नित्यं येषां शरीरिणाम् । वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥ * ॥ येषामुचितस्तानाह । व्यायामाध्वव्यवायवाहनरताक्रान्तामतीसारिणः शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् । क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो रात्रौ जागरितान् नरान् निरशनान् कामं दिवास्वापयेदिति ॥

दिवास्वापा । स्त्री । दिवान्धायाम् ॥

दिविः । पुं । चाषखगे ॥

दिविजः । त्रि । स्वर्गीये ॥

दिविषत् । पुं । देवे ॥ दिवि स्वर्गे सीदतिवर्त्तते । षद्लृविशरणगत्यवसादनेषु । सत्सूद्विषेति क्विप् । हृद्युभ्यां ङेरिति ङेरलुक् । सुषामादित्वात् षत्वम् ॥

दिविष्ठः । त्रि । स्वर्गस्थे ॥

दिवी । स्त्री । उपजिह्विकाकीटे ॥

दिवेदिवे । अ । अहन्यहनि ॥

दिवोकाः । पुं । दिवौकसि ॥ द्यौरोको यस्येति विग्रहः ॥

दिवोदासः । पुं । चन्द्रवंशीयभीमरथस्यराजः पुत्रे । काशिराजे ॥ दिवद्ध्यनेन तास्याद्देवाः । तेषाम् दिवः स्वर्गस्य वा दासः । दिवस्पदासइतिषष्ठ्या अलुक् ॥

दिवोद्भवा । स्त्री । एलायाम् ॥ त्रि । दिविजाते ॥

दिवौकःपुष्करिणी । स्त्री । तीर्थविशेषे ॥

दिवौकाः । पुं । देवे ॥ द्यौः दिविवा ओकोयस्य । पृ० ॥ यद्वा । दिवमोकोयस्येत्यदन्तेन विग्रहः ॥ चातके ॥

दिव्यम् । न । लवङ्गे ॥ हरिचन्दने ॥ शपथे ॥ तद्भेदाः यथा । घटोग्निरुदकञ्चैव विषं कोषश्च पञ्चमम् । षष्ठञ्च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकम् ॥ अष्टमं फालमित्युक्तं नवमं धर्म्मसंयुतम् । दिव्यान्येतानि सर्वाणि

निर्दिष्टानि स्वयम्भुवा ॥ गङ्गाजलस्य शपथपूर्वकशपथे सत्यमिथ्याकथने दोषो यथा । गङ्गातोयमुपस्पृश्य मिथ्यां यदि वदेज्जनः । सयाति कालसूत्रं च यावद्वै ब्रह्मणोवय इति ब्रह्मवैवर्त्तपुराणम् ॥ पानीयप्रभेदे ॥ यथा । दिव्यं चतुर्विधं प्रोक्तं धाराजं करकाभवम् । तौषारञ्च तथा हैमं तेषु धारं गुणाधिकमिति ॥ पुं । गुग्गुलौ ॥ यवे ॥ आगमोक्ते भावविशेषे यथा । दिव्यश्च देवताप्रायः शुद्धान्तःकरणः सदा । द्वन्द्वातीतो वीतरागः सर्वभूतसमः क्षमीति ॥ नायकविशेषे ॥ त्रि । द्योतमानके मनुष्येतरजन्मे सर्वप्रपञ्चातीते अत्यद्भुते अप्राकृते ॥ दिविशोभनात्मन्या दिव्येभवः । दिविपरमेव्योम्नि स्व स्वरूपेवाभवः । शुभागपागुद्दकप्रतीचोयत् ॥ मनोज्ञे ॥ दिविभवे ॥

दिव्यकुण्डम् । न । कामरूपे शोभकाद्रिपूर्वभागस्थे पुष्करिणी विशेषे ॥

दिव्यगन्धः । पुं । गन्धके ॥ न । लवङ्गे ॥

दिव्यगन्धा । स्त्री । स्थूलैलायाम् ॥ महाचञ्चुशाके ॥

दिव्यगायनः । पुं । गन्धर्वे । स्वर्गगायके ॥

दिव्यचक्षुः । पुं । सुगन्धद्रव्यप्रभेदे ॥ मर्कटे ॥ त्रि । अन्धे ॥ सुलोचने ॥

न । ज्ञानात्मके नेत्रे ॥

दिव्यतेजाः । स्त्री । ब्राह्मयाम् ॥

दिव्यदृष्टिः । स्त्री । निमेषशून्यायां दृष्टौ ॥ दिव्याचासौ दृष्टिश्च ॥

दिव्यदोहदम् । न । मनोराज्यस्य सिद्धये देवेभ्योदीयमाने द्रव्ये । उपयाचिते ॥ यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधा इति हारावली ॥

दिव्यपञ्चामृतम् । न । मिलितगव्याज्यगव्यदधिगव्यक्षीरमाक्षिकशर्करारूपे ॥ इतिराजनिर्घण्टः ॥

दिव्यपुष्पः । पुं । करवीरे ॥

दिव्यपुष्पा । स्त्री । महाद्रोणायाम् ॥

दिव्यपुष्पिका । स्त्री । लोहितवर्णार्कवृक्षे ॥

दिव्ययमुना । स्त्री । कामरूपे दर्भनिकायानद्याः पूर्वभागस्थे नदीविशेषे ॥

दिव्यरत्नम् । न । चिन्तामणौ ॥

दिव्यरथः । पुं । देवविमाने । व्योमयाने ॥

दिव्यरसः । पुं । पारदे ॥

दिव्यलता । स्त्री । मूर्वालतायाम् ॥

दिव्यवस्त्रः । पुं । सूर्यशोभायाम् ॥ न । शुभांशुके ॥ दिविभववस्त्रे ॥ त्रि । सुन्दरवस्त्रवति ॥

दिव्यसारः । पुं । शालवृक्षे ॥

दिव्यस्त्री । स्त्री । अप्सरः प्रभृतौ ॥

दिव्या । स्त्री । आमलक्याम् । धात्र्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ शतावर्याम् ॥ महामेदायाम् ॥ ब्राह्म्याम् ॥ स्थूलजीरके ॥ श्वेतदूर्वायाम् ॥ हरीतक्याम् ॥ मुरायाम् । गन्धवन्याम् ॥

दिव्यादिव्या । स्त्री । उपदेवीविशेषे ॥

दिव्योदकम् । न । आकाशजले । खवारिणि ॥

दिव्योपपादुकः । त्रि । अमरे । निर्जरे ॥ मातृपित्रादिदृष्टकारणमनपेक्ष्य अदृष्टसहकृतेभ्योजाता ये देवास्ते दिव्योपपादुकाउच्यन्ते ॥ दिविभवः । द्युप्रागपागितियत् । उपपद्यते । पदगतौ । लषपतपदेत्युकञ् । दिव्यश्चासावुपपादुकश्च ॥

दिव्यौघः । पुं । गुरुविशेषे ॥

दिव्यौषधिः । स्त्री । मनःशिलायाम् ॥

दिक्-ग् । स्त्री । ककुभि । आशायाम् । काष्ठायाम् । प्राच्यादिव्यवहारहेतौ । मूर्त्तैकमवधिं तस्मादिदं पूर्वञ्च पश्चिमम् । इति देशोनिदिश्येत यथासादिगितिस्मृतेतिव्युत्पत्तेः कार्य्यमात्रनिमित्तकारणे ॥ साचैकानित्याविभ्वी चेतिन्यायमतम् ॥ साद शधा । यथा । पूर्वा आग्नेयी दक्षिणाच



नैर्ऋती पश्चिमा तथा । वायवी चोत्तरैशानी ऊर्द्धा चाधोदिशोदशेतिवराहपुराणम् ॥ दिशअतिसर्जने । ऋत्विगित्यादिना निपातनात् क्विन् ॥ दिश्यते ऽसौवा । दिशेःकर्मणिक्विन् ॥ हस्तव्रतविशेषे ॥ दिग्दष्टे वर्त्तुलाकारे इति वैजयन्ती ॥

दिशा । स्त्री । दिशि ॥ भागुरिमतेन टाप् ॥ अस्याअङ्गारिण्यादि संज्ञा चोक्ता । यथा । अङ्गारिणी दिगुरविविप्रयुक्ता यस्यांरवि स्तिष्ठतिसा प्रदीप्ता । प्रधूमिता यास्यतियांदिनेशः शेषाः प्रशस्ताःशुभदाश्चताःस्युः ॥

दिश्यम् । त्रि । दिग्भवेवस्तुनि ॥ दिग्भवम् । दिगादिभ्योयत् ॥ दिगन्तरागामीनि ॥

दिष्टः । पुं । काले ॥ दारुहरिद्रायाम् ॥ न । भाग्ये । दैवे । भागधेये ॥ त्रि । आदिष्टे । उपदिष्टे ॥ दिशति । दिशअतिसर्जने । क्तिच्क्तौचसंज्ञायामितिक्तः ॥ दत्ते ॥

दिष्टान्तः । पुं । मरणे ॥ दिष्टस्यदैवस्यअन्तः ॥

दिष्टिः । स्त्री । मुदि । हर्षे ॥ माने ॥ परिमाणे ॥ दिशति । दिश० क्तिच्क्तौचेतिक्तिच् ॥

दिष्ण्या । स्त्री । हर्षे ॥ मङ्गले ॥ भाग्येने त्यर्थे ॥ देशनम् । दिश० । सं० क्विप् । दिशं स्यायति वा । स्यै घ्ये शब्दसङ्घातयोः । क्विप् । ष्टुत्वम् । रुशा पूर्वकस्वाज्जश्त्वं न ॥ यद्वा । दिशति । अघ्न्यादिश्यश्चेति यक् ॥

दिक्षुः । त्रि । दातरि ॥

दीक्षणीया । स्त्री । इष्टिभेदे । सौमिक्याम् ॥

दीक्षा । स्त्री । नियमे ॥ य० । एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन्निति ॥ गुरुमुखात् स्वेष्टदेवस्य मन्त्रग्रहे ॥ क्रियावर्णकलास्पर्शवाग्दृष्ट्यात्मसंज्ञकाः । दीक्षा मोक्षप्रदा देवि सप्तधा परिकीर्त्तिताः ॥ दीक्षा च द्विविधा प्रोक्ता बाह्याभ्यन्तरभेदतः । क्रियादीक्षा भवेद्बाह्या वेधाख्याभ्यन्तरी भवेत् ॥ दिव्यभावप्रदानाच्च क्षालनात् किल्बिषस्य च । दीक्षेति कथिता सद्भिर्भवबन्धविमोचनी ॥ दीयते सकलं देवि गुरवे प्राणसंयुतम् । धनं तथ सुवर्णादिपट्टवस्त्रसमुच्चयम् ॥ क्षयं प्राप्नोति सद्भावात्मा मापापसमुच्चयः । तस्माद्दीक्षेति नामास्याः सर्वशास्त्रेषु सुव्रते ॥ दीयते विमलं ज्ञानं चीयते कर्मवासना । तेन दीक्षेति सा प्रोक्ता मुनिभिर्धर्मकोविदैः ॥ क्रियाविशेषे ॥ दीक्षा च तृतीयं जन्म ब्राह्मणादेः । यथाह मनुः । मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनादिति ॥

दीक्षागुरुः । पुं । मन्त्राद्युपदेशकर्त्तरि । देशिके ॥

दीक्षान्तः । पुं । अवभृथे ॥ प्रधानयागदीक्षा तस्या अन्तः समापको योऽपरो यज्ञो न्यूनत्वादिदोषशान्त्यर्थं प्रधानयागस्य पूरणार्थं प्रतिष्ठार्थं क्रियते सोऽवभृथो दीक्षान्तोऽप्युच्यते ॥

दीक्षितः । त्रि । संजातदीक्षे । स्वीकृतदीक्षे ॥ य० । अदीक्षिता हि मरणे रौरवं नरकं व्रजेत् । तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिका इति ॥ अपि च । अदीक्षितस्य मरणं रौरवाय प्रकल्पते । न पूजाद्यधिकारोऽस्ति विनादीक्षां वरानने इति ॥ दीक्षणीयेष्टिकृति ॥ सोमपानाध्वरान्विते । सोमपानवतियागे आदेष्टरि ॥ दीक्षतेस्म । दीक्षमौण्ड्येज्योपनयननियमव्रतादेशेषु । गत्यर्थेति क्तः ॥ यद्वा । दीक्षासंजाताऽस्य । ता० इतच् ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भो भवत्पूर्वकं त्वेन मभि भाषेत धर्मविद्-

शिमन्: ॥ काम्पिल्लनगरस्थयज्ञदत्त नामकेविप्रे ॥ सचकाशीखण्डे प्रसिद्ध: ॥

दीक्षिता। पुं। सोमयागाख्ये ॥ दीक्षते तच्छील:। दीक्ष०। तृन्। स्तृद दीपदीक्षश्चेतियुजन ॥

दीक्षितायनी। स्त्री। काम्पिल्लनगरस्थदीक्षितनामकविप्रस्यपत्न्याम् ॥

दीदिवि:। पुं। धिषणे। बृहस्पतौ॥ पुं। न। अन्ने ॥ दीव्यत्यनेन। दिवु०। क्विपोदेदीर्घश्चाभ्यासस्यचेवादिक:क्विन्। किञ्चाद्गुणाभाव:। गौपामतस्यदीदिविमितिमन्त्रेतु बोतमानमित्यर्थ: ॥

दीधिति:। स्त्री। किरणे॥ दीधीते दीप्यते। दीधीङ्दीप्तिदेवनयो:। क्तिच्। तितुत्रेतीणिनषेधस्तुन। अग्रहादीनामितिवार्त्तिकात्। यीवर्णयोरितीकारलोप: ॥

दीन:। त्रि। दुर्गते। दरिद्रे ॥ भीते॥ शोच्ये ॥ दीयतेस्म। दीङ्क्षये। गत्यर्थेतिक्त:। स्वादयओदित:। ओदितश्चेतिनत्त्वम् ॥ यद्वा। इणसिञ्जिदीङ्ति नक् ॥ न। तगरपुष्पे ॥ इतिराजनिर्घण्ट: ॥

दीननाथ:। त्रि। दरिद्रजनभर्त्तरि ॥

दीना। स्त्री। मूषिकायाम्। मूसी इ

तिभाषा ॥

दीनार:। पुं। स्वर्णभूषणे ॥ मुद्रायाम्। व्यावहारिकरूपके। रुप्या इति भाषा॥ निष्कपरिमाणे॥ सुवर्णकर्षद्वये ॥ सम्यग् व्यवहारार्थं मानवस्तुनि ॥ द्वात्रिंशद्रक्तिकापरिमिते काञ्चने ॥ दीयते। दीङ्०। दीङो नुट् चेत्यारन् ॥

दीप:। पुं। वर्त्तिस्थज्वलदग्निशिखायाम्। प्रदीपे। कज्जलध्वजे। गृहमणौ ॥ घृततैलभवदीपार्थे ह्रेशान्यन्या निवर्जयेत् ॥ इति वह्निपुराणम् ॥ दीपनिर्वापणात् पुंस: कुष्माण्डच्छेदनात् स्त्रिय:। अचिरेणैव काले नवंशनाशो भवेद्ध्रुवम् ॥ नैवनिर्वापयेद्दीपं देवार्थमुपकल्पितम्। दीपहर्त्ता भवेदन्ध:काणो निर्वापको भवेत् ॥ इतिकालिकापुराणम् ॥ कोषजं रोमजं वस्त्रं वर्त्तिकार्थे नचाहरेत्। नमिश्रीकृत्य दद्यात्तु दीपेस्नेहान्घृतादिकान् ॥ कृत्वामिश्रीकृतं स्नेहं तामिस्रं नरकंव्रजेत्। वसामज्जास्थिनिर्यासै:स्नेहै:प्राण्यङ्गसम्भवै:। प्रदीपं नैवकुर्वीत्तु कृत्वा पङ्केविषीदतीतिकालि० पु० ॥ दीप्यतेऽनेनवा। दीपोदीप्तौ। इगुपधज्ञाप्रीक:। घञ्वा। अच् ॥

दीपकः । पुं । दीपे । स्नेहाशे । दीपा इति दीया इति च भाषा ॥ श्येनाख्यखगे बाज इति सिकरा इति च भाषा ॥ यमान्याम् ॥ लोचमस्तके ॥ मात्रावृत्तविशेषे । य० । तुरगैकमुपधाय सुनरेन्द्रमवधाय । इह दीपकमवेहि लघुमन्त्यमवधेहि ॥ यथा । चपलमानमतिवल्गु जगदेतदसिफल्गु । धनलोभमपहाय भजपद्मनयनाय ॥ रागविशेषे ॥ न । कुङ्कुमे ॥ इति शब्दरत्नावली ॥ वागलङ्कारे ॥ सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ प्राकरणिकानामर्थात् उपमानोपमेयानां धर्मः क्रियादिरेकवारमेव यदुपादीयते तदेकस्यैव समस्तवाक्यदीपनाद्दीपकम् ॥ यथा । किवणाणं धणं णाआणं फणमणी केसराइं सीहाणम् । कुलवालिआणं थणा कुत्तो छिप्पन्ति अमुआणम् ॥ कृपणानां धनं नागानां फणामणिः केसराणि सिंहानाम् । कुलपालिकानां स्तनाः कुतः स्पृश्यन्ते अमृतानामिति संस्कृतम् ॥ अमृतानामिति सकलपद्व्यन्तविशेषणम् । अत्र वर्ण्यत्वेन प्रकृतानां कुलवधूस्तनानां तदुपमानत्वेन प्रकृतानामन्येषां च कुतः स्पृश्यन्त इति सकृद्धर्मोपादानाद्दीपकालङ्कारः ॥ ६५ ॥ कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा । स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणयावधूः शयने ॥ स्विद्यति स्वेदं भजते । कूणति सङ्कोचमालम्बते । वेल्लति परिवृत्त्य शेते । विचलति विशेषतश्चञ्चला भवति । निमिषति निद्राव्याजेन नेत्रे मुद्रयति । अन्तर्नन्दति हृष्यति नवोढात्वेन बाह्यतो हर्षाप्रकाशनात् । अत एव चुम्बितुमिच्छति न तु चुम्बतीत्यनेकासु क्रियासु वधूरूपकर्त्तृकारकस्य सकृद्वृत्तिरित्यर्थः ॥ अपि च । वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः । मदेन भाति कलभः प्रतापेन महीपतिः ॥ दीपयति । दीपि दीप्तौ । णयन्तः । ण्वुल् ॥ त्रि । दीपे कुशले ॥ आ० कन् ॥ दीप्तिकारके । भासके ॥

दीपकूपी । स्त्री । दीपवर्त्याम् । तैलमाल्याम् । पलीता इति बत्ती इति च भाषा ॥

दीपखोरी । स्त्री । दीपकूप्याम् ॥ इति शब्दमाला ॥

दीपध्वजः । पुं । कज्जले ॥ इति जटा

धरः ॥

दीपनः । पुं । कासमर्द्दे ॥ पलाण्डौ ॥ मयूरशिखायाम् ॥ शालिञ्चशाके ॥ न । तगरमूले ॥ कुङ्कुमे ॥ त्रि । दीपयितरि ॥

दीपनी । स्त्री । पाठायाम् ॥ मेथिकायाम् ॥ यवान्याम् ॥

दीपनीयः । पुं । यवान्याम् ॥ औषधवर्गविशेषे ॥ यथा । पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । दीपनीयः स्मृतो वर्गः कफानिलगदापहः इतिचक्रदत्तः ॥ त्रि । दीपनयोग्ये ॥

दीपपुष्पः । पुं । चम्पकवृक्षे ॥

दीपमाला । स्त्री । दीपशृङ्खलायाम् । दीपाल्याम् ॥ दीपानां माला ॥

दीपमालिका । स्त्री । दीपान्विताया ममावास्यायाम् । दीपाल्याम् । यच्च रात्रौ ॥ दीपमालेव । स्वार्थे कः । इत्वम् ॥

दीपलक्षणम् । न । प्रज्वलितदीपस्य शुभाशुभफलाय तत्स्वरूपनिरूपणम् ॥ तत्राशुभफलम् । वामावर्त्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिः क्षिप्रंनाशं व्रजति विमलस्नेहवर्त्त्यन्वितोपि । दीपः पापं कथयति फलं शब्दवान् वेपनश्च व्याकीर्णार्चिर्विशलभभ्रमवश्च नाशं प्रयाति ॥ १ ॥ शुभम् । दीपः संहतमूर्त्तिरायततनुर्निर्वेपनो दीप्तिमान् निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्यहेमद्युतिः । लक्ष्मींक्षिप्रमभिव्यनक्ति सुचिरं यश्चोद्यतं दीप्यते शेषंलक्षणमग्निलक्षणसमं योज्यं यथायुक्तितः ॥ इति वाराह्याम् ८१ ॥

दीपवती । स्त्री । कामाख्यायां नदीविशेषे ॥ यथा । एषा वह्निभवज्जाता छिन्दन्ती दीपवत्तमः । तेन देवमनुष्येषु नदीदीपवती स्मृतेति कालिकापुराणम् ॥

दीपवृक्षः । पुं । दीपाधारे । दीपवरौ । दीवट इतिभाषा ॥ यथा । दीपवृक्षाश्च कर्त्तव्या स्तैजसाद्याश्च भैरव । वृक्षेषु दीपोदातव्यो नतुभूमौ कदाचन ॥ सर्वसहावसुमती सहते नत्विदंद्वयम् । अकार्यपादघातञ्च दीपतापंतथैवच । तस्माद्यथातु पृथिवी तापंनाप्नोति वैतथा ॥ दीपंदद्यान्महादेव्यै अन्येभ्योपिच भैरवेति ॥

दीपवृक्षकः । पुं । दीपवृक्षे ॥

दीपशिखा । स्त्री । प्रदीपज्वालायाम् ॥

दीपशृङ्खला । स्त्री । दीपमालिकायाम् ॥

दीपाग्निः । पुं । अर्कनिष्कासनाय वह्नि

विशेषे ॥ यथा । द्वाभ्यां तस्य चतुर्थ्यां भ्यां योगे दीपाभिरुच्यते । तस्यका छस्येत्यर्थः ॥

दीपान्विता । स्त्री । दीपाल्याम् ॥ सा च मुख्यचान्द्रेणाश्विनस्य । गौणचान्द्रेणकार्त्तिकस्यामावास्या । यथा । येयं दीपान्विता राजन् ख्याता पञ्चदशीभुवि । तस्यां देया अचे इस्तं पितृणां वैमहालये ॥ तत्रकर्माणि यथा । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षा स्तथाकार्या शक्त्यादेवगृहेष्वपि ॥ चतुष्पथे श्मशानेषु नदीपर्वतसानुषु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषुच ॥ वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् ॥ ब्राह्मणान् भोजयित्वादौ विभाज्यच बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥ स्निग्धै र्मुग्धै विदग्धैश्च वान्धवै र्भृतकैःसहेति ॥ पश्यात्रसुखरात्रिकाम् ॥

दीपाली । स्त्री । दीपान्वितायाममायाम् । यत्ररात्रौ । दिवाली इति भाषा ॥ दीपमालायाम् ॥

दीपिका । स्त्री । प्रकाशिकायाम् ॥ ग्रन्थविशेषे ॥ हिन्दोलरागस्य रागिण्याम् ॥ प्रदोषकाले गृहसम्प्रविष्टा, प्रदीपहस्ता ऽरुणगात्रवस्त्रा । सीमन्तसिन्दूरविराजमाना सुरक्तमाल्याकिलदीपिकेयमितिध्यानम् ॥ गानकालःसायाह्नः ॥

दीपितः । त्रि । प्रकाशिते ॥ उज्ज्वलिते । निखारा इतिभाषा ॥ मण्डिते ॥

दीपिता । त्रि । दीप्तिकर्त्तरि ॥

दीपोत्सवः । पुं । दीपान्वितायाममायाम् ॥

दीप्तः । पुं । निम्बूके ॥ सिंहे ॥ न । स्वर्णे ॥ हिङ्गुनि ॥ त्रि । ज्वलिते ॥ दग्धे ॥ निर्भासिते ॥ दीप्तिमति ॥ दीप्यतेस्म । दीपोदीप्तौ । क्तः । श्वीदितोनिष्ठायामितिनेट् ॥

दीप्तकम् । न । स्वर्णे ॥

दीप्तजिह्वा । स्त्री । उल्कामुख्याम् ॥ दीप्ता ज्वलन्ती जिह्वा यस्याः । शिवानां वाशितेन जिह्वाज्वलतीति प्रसिद्धिः ॥

दीप्तपिङ्गलः । पुं । सिंहे ॥

दीप्तरसः । पुं । किञ्चुलुके ॥

दीप्तलोचनः । पुं । विडाले ॥

दीप्तलोहम् । न । कांस्ये ॥

दीप्ता । स्त्री । लाङ्गलिकायाम् । अग्निशिखौषधौ ॥ ज्योतिष्मत्याम् ॥ सातलायाम् ॥

दीप्ताक्षः । पुं । मार्जारे ॥

दीप्ताग्निः । पुं । अगस्त्यमुनौ ॥ त्रि । तीक्ष्णजठरानलयुक्ते ॥

दीप्ताङ्गः । पुं । मयूरे ॥

दीप्तिः । स्त्री । प्रभायाम् । रुचि । त्विषि ॥ प्रभाप्रसरे ॥ दीप्यतेऽनया । दीपी॰ क्तिन्नाबादिभ्यः ॥ लाक्षे गस्त्यतीक्ष्णतायाम् ॥ स्त्रियाः अयत्नज- गुणे ॥ कान्तिरेव वयोभोगदेशकाल गुणादिभिः । उद्दीपितातिविस्ता रं प्राप्ताचेद्दीप्तिरुच्यते ॥ लाक्षायाम ॥ कांस्ये ॥

दीप्तिकः । पुं । दुग्धपाषाणवृक्षे ॥

दीप्तोपलः । पुं । सूर्यकान्तमणौ ॥

दीप्यः । पुं । यमान्यम् ॥ लोचमस्तके ॥ जीरके ॥ न । शुभ्रजीरे ॥ दीपनम् । दीपी॰ भावे घञ् ॥ दीपेसा धुर्वा । तत्रसाधुरितियत् ॥ त्रि । दीपीये ॥ दीपायहितम् । अपूपादि त्वात् पक्षेयत् ॥

दीप्यकः । पुं । अलङ्कारे ॥ यमान्याम् ॥ लोचमस्तके ॥ न । अजमोदायाम् ॥ यवान्याम् ॥ वर्हिचूडायाम् । वद्र जटेति गौडभाषा ॥

दीप्यमानः । त्रि । प्रकाशमाने ॥

दीप्या । स्त्री । यवान्याम् ॥

दीप्रः । त्रि । दीप्तिमति ॥

दीयमानः । त्रि । वर्त्तमानदानकर्म न्यवस्तुनि ॥

दीर्घः । पुं । शालाशालवृक्षे ॥ दृक्कटे ॥ रामशरे ॥ उष्ट्रे ॥ द्विमात्रवर्णे । गुरुवर्णे ॥ त्रि । आयते ॥ दृणाति । दृविदारणे । बाहुलकाद्घञ् ॥

दीर्घकणा । स्त्री । गौरजीरके ॥

दीर्घकण्टकः । पुं । वर्बुरे ॥

दीर्घकण्ठः । पुं । वके ॥

दीर्घकन्दकम् । न । मूलके ॥

दीर्घकन्दिका । स्त्री । मुषल्याम् ॥

दीर्घकन्धरः । पुं । वकपक्षिणि ॥

दीर्घकाण्डः । पुं । गुण्डतृणे । त्रिकोणके ॥

दीर्घकाण्डा । स्त्री । तिक्ताङ्गायाम् ॥

दीर्घकीलः । पुं । } अङ्कोठवृक्षे । नि
दीर्घकीलकः । पुं । } कोचके ॥

दीर्घकूरकम् । न । आन्ध्रदेशोद्भवेशा लिविशेषे । राजान्ने । धान्यश्रेष्ठे ॥

दीर्घकेशः । पुं । भल्लूके ॥ त्रि । आयतकचे ॥

दीर्घकोशा । स्त्री । दुर्नामायाम् ॥ दीर्घःकोशोयस्याः ॥

दीर्घकोशिका । स्त्री । दुर्नामायाम् । जिनुक् इति गौडभाषा प्रसिद्धे ज लजन्तुविशेषे । सीपीइतिदेशभाषा ॥ दीर्घःकोशोयस्याः । जातेरितिङीप् । संज्ञायां कन् । केणइति ह्रस्वः ॥

दीर्घकोषा । स्त्री । } दीर्घकोशि
दीर्घकोषिका । स्त्री । } कायाम् ॥
प्रक्रियापूर्ववत् ॥
दीर्घगतिः । पुं । उष्ट्रे ॥ इ०रानि० ॥
दीर्घग्रन्थिः । पुं । गजपिप्पल्याम् ॥
दीर्घग्रीवः । पुं । उष्ट्रे ॥ दीर्घा ग्रीवा यस्य सः ॥ नीलक्रौञ्चे । अतिजागरे ॥
दीर्घघाटिकः । पुं । उष्ट्रे ॥ इतिशब्दमाला ॥
दीर्घच्छदः । पुं । इक्षौ ॥ दीर्घा च्छदा यस्य सः ॥
दीर्घजङ्गलः । पुं । भङ्गानमत्स्ये ॥
दीर्घजङ्घः । पुं । वके ॥ उष्ट्रे ॥ त्रि । दीर्घप्रसृतावति ॥
दीर्घजिह्वः । पुं । सर्पे ॥
दीर्घतरुः । पुं । ताले ॥
दीर्घतिमिषा । स्त्री । कर्कट्याम् ॥
दीर्घतुण्डा । स्त्री । छुच्छुन्दर्याम् ॥
दीर्घतृणः । पुं । पल्लिवाहे ॥
दीर्घदण्डः । पुं । एरण्डवृक्षे ॥ शुक्लैरण्डे ॥
दीर्घदण्डी । स्त्री । गोरक्ष्याम् ॥
दीर्घदर्शी । पुं । पण्डिते । विदुषि ॥ गृध्रे ॥ भल्लूके ॥ त्रि । दूरदर्शके ॥ आगामिकार्यज्ञे ॥ दीर्घं दीर्घाद्वा पश्यति । दृशिर्० । ग्रह्यादित्वात् णिनिः । सुपीति वा ॥
दीर्घदृष्टिः । पुं । दीर्घदर्शिनि ॥ दूरावलोकनाय यन्त्रविशेषे । दूरवीक्षणे ॥ दीर्घा दृष्टिर्यस्य येन वा ॥
दीर्घद्रुः । पुं । तालवृक्षे ॥
दीर्घद्रुमः । पुं । शाल्मलिवृक्षे ॥
दीर्घनादः । पुं शङ्खे ॥
दीर्घनालः । पुं । यावनाले ॥ वृत्तगुण्डे ॥ न । दीर्घरोहिषके ॥
दीर्घनिद्रा । स्त्री । मरणे ॥ अनया निद्रया राजन् दीर्घनिद्राभविष्यति ॥
दीर्घपक्षः । पुं । कलिङ्गे । धूम्याटखगे ॥
दीर्घपटोलिका । स्त्री । धुंदुल इति गौडभाषाप्रसिद्धे लताफलविशेषे ॥
दीर्घपत्रः । पुं । जलजमधूलके ॥ रसोनभेदे । राजपलाण्डौ ॥ विष्णुकन्दे ॥ हरिदर्भे ॥ कुन्दरे ॥ ताले ॥ कुपीलौ ॥
दीर्घपत्रकः । पुं । एरण्डे ॥ रक्तलशुने ॥ हिज्जले ॥ वेतसे ॥ करवीरवृक्षे ॥ जलजमधूके ॥ लशुने ॥ दीर्घाणि पत्राणि यस्य सः । स्वार्थेकः ॥
दीर्घपत्रा । स्त्री । अल्पजम्बूवृक्षे ॥ शालपर्ण्याम् ॥ चञ्च्वाम् । चेञ्चूशाके ॥ चित्रपर्णिकायाम् ॥ केतक्याम् ॥ गन्धपत्रायाम् ॥ डोडीक्षुपे ॥ दीर्घाणि पत्राणि यस्याः ॥
दीर्घपत्रिका । स्त्री । घृतकुमार्याम् ॥

शालपर्ण्याम् ॥ श्वेतवचायाम् ॥

दीर्घपर्वी । स्त्री । पलाशीलतायाम् ॥ महाचञ्चुशाके ॥

दीर्घपर्णी । स्त्री । पृश्निपर्ण्याम् ॥

दीर्घपल्लवः । पुं । शणवृक्षे ॥ न । आयतच्छदे ॥ त्रि । दीर्घच्छदवति ॥

दीर्घपात् । पुं । कङ्कपक्षिणि ॥

दीर्घपादः । पुं । कङ्कपक्षिणि ॥ दीर्घौ पादौयस्य ॥

दीर्घपादपः । पुं । ताले ॥ पूगे ॥

दीर्घपृष्ठः । पुं । सर्पे ॥ दीर्घंपृष्ठमस्य ॥

दीर्घफलः । पुं । आरग्वधे ॥ दीर्घाणि फलान्यस्य ॥

दीर्घफलकः । पुं । अगस्त्यवृक्षे ॥

दीर्घफला । स्त्री । कपिलद्राक्षायाम् ॥ जतुकायाम् ॥

दीर्घमारुतः । पुं । हस्तिनि ॥ दीर्घो मारुतोवायुर्यस्य ॥

दीर्घमूलः । पुं । मोरटलतायाम् ॥ विल्वान्तरवृक्षे ॥ न । लामज्जके ॥

दीर्घमूलकम् । न । मूलके ।

दीर्घमूला । स्त्री । शालपर्ण्याम् ॥ श्यामलतायाम् ॥ दीर्घंमूलं यस्याः ॥

दीर्घमूली । स्त्री । दुरालभयाम् ॥

दीर्घरदः । पुं । शूकरे ॥ दीर्घौरदौयस्य ॥ त्रि । आयतदन्ते ॥

दीर्घरसनः । पुं । सर्पे ॥ दीर्घारसना जिह्वायस्य सः ॥

दीर्घरागा । स्त्री । हरिद्रायाम् ॥

दीर्घरात्रम् । न । चिरकाले ॥

दीर्घरोमा । पुं । भल्लूके ॥

दीर्घरोहिषकम् । न । कत्तृणविशेषे । दृढकाण्डे ॥

दीर्घवंशः । पुं । नले ॥ आयते कुले । तृणध्वजेच ॥

दीर्घवक्त्रः । पुं । हस्तिनि ॥

दीर्घवल्ली । स्त्री । पलाश्याम् ॥ पातालगरुडीलतायाम् ॥ महेन्द्रवारुण्याम् ॥ आयतायां लतायाम् ॥

दीर्घवाला । स्त्री । चमर्याम् ॥

दीर्घवृन्तः । पुं । श्योनाकद्रुमे ॥ दीर्घं वृन्त मस्य ॥

दीर्घवृन्तकः । पुं । श्योनाकप्रभेदे ॥

दीर्घवृन्ता । स्त्री । इन्द्रचिर्भिट्याम् ॥

दीर्घवृन्तिका । स्त्री । एलापर्ण्याम् ॥

दीर्घशरः । पुं । यावनाले ॥

दीर्घशाखः । पुं । शणवृक्षे ॥ शालवृक्षे ॥

दीर्घशाखिका । स्त्री । नीलाम्लीक्षुपे ॥

दीर्घशिम्बिकः । पुं । चवे ॥ इतिराजनिर्घण्टः ॥

दीर्घशूकः । पुं । शालेर्भेदान्तरे ॥

दीर्घशूककम् । न । राजान्ने ॥

दीर्घसत्रम् । न । यज्ञविशेषे ॥ तीर्थविशेषे ॥

दीर्घसुरतः । पुं । कुक्कुरे । शुनि ॥ दीर्घसुरतंमैथुनमस्य ॥

दीर्घसूत्रः । त्रि । चिरक्रिये । दीर्घकालेन क्रियानुष्ठातरि ॥ दीर्घसूत्रं व्यवस्थायस्य ॥ अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः । दीर्घसूत्रस्य नृपतेः कर्महानि ध्रुवं भवेत् ॥ रागे द्वेषेच कामेच द्रोहे पापेच कर्मणि । अप्रियेचैवकर्त्तव्ये दीर्घसूत्रश्च शस्यते इतिमत्स्यपुराणम् ॥ न । विस्तृततन्तौ ॥

दीर्घसूत्री । त्रि । दीर्घसूत्रे । निरन्तरशङ्कासहस्रकवलितान्तःकरणत्वेनातिमन्थरप्रवृत्तौ । यद्यकर्त्तव्यं तन्महासेनापि करोति नवेत्येवंशीले ॥

दीर्घसोमः । पुं । सोमयागविशेषे ॥

दीर्घस्कन्धः । पुं । तालवृक्षे ॥

दीर्घा । स्त्री । पृश्निपर्ण्याम् ॥ दीर्घप्रमाणाय ङ्विवि ॥

दीर्घाध्वगः । पुं । लेखहारे । धाउडिया० इति गौडभाषा ॥ उष्ट्रे ॥

दीर्घायुधः । पुं । कुन्तास्त्रे ॥ दीर्घस्यासावायुधश्च ॥ शूकरे ॥ दीर्घमायुधोऽस्य ॥

दीर्घायुष्यः । पुं । श्वेतमन्दारके ॥

दीर्घायुः । पुं । शाल्मलिद्रुमे ॥ वायसे ॥ जीवकवृक्षे ॥ मार्कण्डेयमुनौ ॥ त्रि । आयुष्मति । चिरजीविनि ॥ दीर्घमायुर्यस्य ॥

दीर्घार्कः । पुं । श्वेतमन्दारे ॥

दीर्घिका । स्त्री । वाप्याम् । अधिकायतायांचतुरस्रायां वाप्याम् ॥ त्रिशतधनुः परिमिते जलाशये इतिगौडाः ॥ दीर्घैव । संज्ञायांकन् ॥

दीर्घिमा । पुं । दीर्घत्वे ॥ दीर्घस्य भावः । इमनिच् ॥

दीर्घेर्वारुः । पुं । ङ्कर्याम् ॥ इ०रानि० ॥

दीर्णः । त्रि । विदारिते ॥ भीते ॥

दीविः । पुं । किकीदिवौ ॥

दुःकूलः । पुं । चोरनामगन्धद्रव्ये ॥

दुःखम् । न । संसारे ॥ मनोधर्मविशेषे ॥ न्यायमते आत्मगुणभेदे ॥ तत् अधर्मजन्यं सचेतसां प्रतिकूलमिति भा० प० ॥ पीडायाम् । बाधायाम् । कष्टे । सर्वेषांप्रतिकूलवेदनीये ॥ बाधनालक्षणं दुःखम् । २१ ॥ बाधनापीडा तदेव लक्षणंस्वरूपं यस्य । तथाचानुभवसिद्धदुःखत्वजातिरेवलक्षणं शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् । सुखेचदुःखानुषङ्गात् दुःखव्यवहारो गौण इति । दृक्सुतोऽसत्स्वरूपेचित्तस्यराजसे परिणामे बाधनालक्षणे ॥ तद्दुःखंत्रिविध

म। आध्यात्मिकं शारीरं मानसञ्च व्याधिवशात् कामादिवशाच्च भवति। आधिभौतिकं व्याघ्रादिजनितम्॥ आधिदैविकं ग्रहपीडादिजनितम्॥ *॥ अधर्मसाधारणकारणके प्रतिकूलवेदनीये॥ निरुपाधिद्वेषविषयीभूताचित्तवृत्तिरधर्मासाधारणकारणिकादुःखम्॥ इष्टवियोगानिष्टसंयोगजे अध्यात्मादिनिमित्ते॥ तात्कालिक्यां पीडायाम्॥ रजसि॥ न दुःखंपञ्चभिःसह॥ दुष्टानिखान्यस्मिन्॥ यद्वा। दुर्निन्दितं खनति। खनु०। अन्येऽ ड:॥ यद्वा। दुःखयति। सुखदुःखतत् क्रियायाम्। चु०। पचाद्य॥ दुःखंचित्तस्यराजसः परिणामोबाधनालक्षणः यद्वशात् प्राणिनस्तदपघाताय प्रवर्त्तन्ते॥

दुःखग्रामः। पुं। संसारे॥

दुःखत्रयम्। न। आध्यात्मिकाधिभौतिकाधिदैविकस्वरूपे॥ तत्राध्यात्मिकं द्विविधम्। शारीरं मानसञ्च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्। मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषदर्शननिमित्तम्। सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्। बाह्योपायसाध्यं दुःखंद्वेधा। आधिभौतिकम् आधिदैविकञ्च। तत्राधिभौतिकम् मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तम्। आधिदैविकम् यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम्॥ प्रत्यात्मवेदनीयोरजःपरिणामभेदो दुःखम्। दुःखानांत्रयम्॥

दुःखत्रयाभिघातः। पुं। दुःखत्रयसम्बन्धे॥ दुःखत्रयं प्रत्यात्मवेदनीयंरजःपरिणामभेदो नशक्यते प्रत्याख्यातुम्। तदनेनदुःखत्रयेणान्तःकरणवर्त्तिना प्रतिकूलतयाचेतनाशक्तेरभिसम्बन्धोऽभिघातः॥

दुःखदिरः। पुं। दुष्खदिरे। मद्सारे॥

दुःखदोह्या। स्त्री। दुर्दोह्यगव्याम्। करटायाम्॥ दुःखेनदुह्यते। दुह०। ऋहलोर्ण्यत्॥

दुःखावसानम्। न। दुरन्ते॥

दुःखितः। त्रि। दुःखिनि॥ संसारिणि॥ दुःखमूलं हि संसारः स यस्यास्ति सदुःखितः। तस्य त्यागःकृतोयेनससुखीनापरःप्रिये इति कुलार्णवतन्त्रम्॥ ईर्षादियुक्ते। यथोक्तं महाभारते। ईर्ष्यीघृणीत्वसन्तुष्टःक्रोधनोनित्यशङ्कितः। परभाग्योपजीवीचषडेते नित्यदुःखिताइति॥*॥

त्यक्तात्म सुखभोगेच्छां सर्वसत्त्वसुखैषिणः। भवन्तिपरदुःखेन साधवो नित्यदुःखिताः इतिवह्निपुराणम्॥ दुःखं सञ्जातमस्य। ता० इतच्॥

दुःखी। त्रि। दुःखान्विते। अध्यात्मादिदुःखवति॥ दुःखमस्त्यस्य। सुखादिभ्यश्चेतीनिः॥ उपाधिजनितोयोयं चिदाभासोवभासते। दुःखाद्यनुभव स्तत्रश्रौते स्सर्वविनिश्चितः॥ दुःखीयदि भवेदात्मा कः साक्षी दुःखिनोभवेत्। दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा॥ न र्त्तेस्यादिक्रियां दुःखी साक्षिता काविकारिणः। धीविक्रियासहस्राणां साक्ष्यतोह मविक्रियः॥ शरीरेन्द्रियसङ्घात आत्मत्त्वेनाभिमानिनीम्। चिदाभासयुतां बुद्धिं विशिषन्ति सुखादयः॥

दुःशकुनम्। न। अशुभसूचके निमित्ते॥ यथा। वन्ध्याचर्मतुषास्थिसर्पलवणाङ्गारेन्धनक्लीवविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः॥ नग्नाभ्यक्तविमुक्तकेशपतितव्यङ्गक्षुधार्त्ता असृक् स्त्रीपुष्पं शरटस्वगेहदहनं मार्जारयुद्धं क्षुतम्॥ काषायी गुडतक्रपङ्कविधवाः कुब्जाः कुटुम्बेकलि र्वस्त्रादेःस्खलनं लुलापसमरं कृष्णानिधान्यानिच। कार्पासंवमनञ्च गर्दभरवो दक्षेऽतिरुट् गर्भिणी मुण्डार्द्राम्बरदुर्वचोन्धवधिरोदक्यानदृष्टाःशुभाः॥ कृष्णाम्बराकृष्णविलेपनाद्या कृष्णास्रजं मूर्द्धनि धारयन्ती। दृष्टाप्रकोपायदिकृष्णवर्णा नारी नरै स्सद्विपदोभवन्तीति॥

दुःशासनः। पुं। दुर्योधनात्मजे भारतप्रसिद्धे क्षत्रिये॥ दुःखेनशास्यते। शासु०। भाषायां शासियुधीतियुच्॥

दुःशीलः। त्रि। दुष्टस्वभावे॥ दुष्टंशीलं यस्यसः॥

दुःषमम्। अ। गर्ह्ये। निःषममित्यर्थे॥ दुष्टं समम त्र। तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावत्त्वम्. सुविनिर्दुर्भ्यइति षत्त्वम्॥

दुःसमम्। अ। असमञ्जसे॥

दुःसहः। त्रि। असह्ये॥

दुःसहा। स्त्री। नागदमन्याम्॥

दुःसाक्षी। त्रि। कूटसाक्षिणि॥

दुःसाधी। पुं। दौःसाधिके। द्वारपाले॥

दुःसाध्यः। त्रि। दुःखनिष्पाद्ये॥ दुःखेनसाध्यतेनिष्पाद्यते। साध०। यत्॥

दुःस्थः। त्रि। दुर्गते॥ मूर्खे॥ दुःखेन तिष्ठति। सुपिस्थ इतिकः॥ लुब्धे॥

दुःस्थितः। त्रि। अनवस्थिते॥ ष्ठा०। क्तः। द्यतिस्यतीतीत्त्वम्॥

दुःस्पर्शः । पुं । धन्वासा इतिजवासा इति चप्रसिद्धे धन्वयासे । दुरालभायाम् ॥ लताकरञ्जे ॥ त्रि । खरस्पर्शे ॥ दुःखे नस्पृश्यते । स्पृशस्पर्शने । ईषद्दुरि तिखल्॥

दुःस्पर्शा । स्त्री । कण्टकार्याम् ॥ आकाशवल्ल्याम् ॥ कपिकच्छ्वाम् ॥ दुरालभायाम् ॥ टाप् ॥

दुःस्फोटः । पुं । शस्त्रप्रभेदे ॥ इतिहै० ॥

दुकूलम् । न । सूक्ष्मवाससि । श्लक्ष्ण वस्त्रे ॥ क्षौमाम्बरे ॥ दुष्टं कूलति । कूलआवरणे । इगुपधेतिकः । पृ० ॥ यद्वा । दवति । दुगतौ । पिच्छा० ऊलच् । धातोः कुक् ॥

दुगूलम् । न । दुकूले ॥ इतिहेमचन्द्रः ॥

दुग्धम् । त्रि । प्रपूरिते ॥ कृतदोहे ॥ न । क्षीरे । पीयूषे । ऊधस्ये । स्तन्ये । पयसि । अमृते । वालजीवने ॥ विदाहीन्यन्नपानानि यानिभुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयःपिबेत् ॥ दुह्यतेस्म । दुहप्रपूरणे । क्तः ॥ दुग्धं सुमधुरं स्निग्धं वातपित्तहरं सरम् । सद्यःशुक्रकरं शीतं सात्म्यं सर्वशरीरिणाम् ॥ जीवनं वृंहणं वल्यं मेध्यं वाजीकरं परम् । वयःस्थापकमायुष्यंसन्धिकारि रसायनम् ॥ विरेकवान्तिव स्तीनां तुल्य मोजो विवर्द्धनम् । जीर्णज्वरे मनोरोगे शोषमूर्च्छाभ्रमेषु च ॥ ग्रहण्यां पाण्डुरोगेच दाहे तृषि हृदामये । शूलोदावर्त्तगुल्मेषु वस्तिरोगे गुदाङ्कुरे ॥ रक्तपित्तेऽतिसारेच योनिरोगे श्रमे क्लमे । गर्भस्रावे चसततं हितं मुनिवरैः स्मृतम् ॥ वालवृद्धक्षतक्षीणाः क्षुद्व्यवायकृशाश्चये । तेभ्यः सदातिशयितं हित मेतदुदाहृतम् ॥ * ॥ धारोष्णं गोःपयो वल्यं लघु शीतं सुधासमम् । दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् ॥ धारोष्णं शस्यते गव्यंधाराशीतन्तु माहिषम् । शृतोष्णमाविकंपथ्यं शृतशीतमजापयः ॥ आमंक्षीर मभिष्यन्दि गुरु श्लेष्मामवर्द्धनम् । ज्ञेयं सर्वमपथ्यं तन्नव्यमाहिषवर्जितम् ॥ नारीक्षीरन्त्वाममेवहितंनतुशृतंहितम् । शृतोष्णंकफवातघ्नंशृतशीतन्तुपित्तनुत् ॥ * ॥ अर्द्धोदकं क्षीरशेष मामाल्लघुतरं पयः ॥ * ॥ जलेनरहितं दुग्ध मतिपक्वं यथायथा । तथातथा गुरु स्निग्धं वृष्यं वलविवर्द्धनम् ॥ * ॥ पेयूषञ्च किलाटस्च क्षीरशाकंतथैवच । तक्रपिण्ड इमे दृष्या वृंहणा वलवर्द्धनाः ॥ गुरवः श्लेष्मलाश्चापिवातपित्तविना

शनाः। दीप्ताग्नीनां विनिद्राणां व्यायेचातिपूजिताः॥ * ॥ मुखशोष तृषादाहरक्तपित्तज्वरप्रणुत्। लघुर्वलकरोरुच्योमोरटःस्यात्सितायुतः॥ खण्डेन सहितं दुग्धं कफकृत् पवनापहम्। सितासितोपलायुक्तं शुक्रलं कृमिलापहम्॥ सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं स्मृतम्॥ *॥ रात्रौ चन्द्रगुणाधिक्या द्यायामाकरणा त्तथा। प्राभातिकं पयः प्रायःप्रादोषा गुरु शीतलम्॥ दिवाकरकरातापा द्यायामकरणात् पयः। प्राभातिका त्प्रादोषं लघु वातकफापहम्॥ * ॥ वृष्यं बृंहण मग्निदीप्तिजनकं पूर्वाह्णकाले पयो मध्याह्नेतुबलावहं कफहरं पित्तापहं दीपनम्। बालेवृद्धिकरं क्षये क्षयहरं वृद्धेषु रेतोवहं रात्रौ क्षीर मनेकदोषशमनं पथ्यं सदाचक्षुषोः॥ * ॥ वदन्ति पथ्यं निशि केवलं पयोभोज्यं न तेनेच्छसहैादनादिकम्। भवेदजीर्णं नसपीतशर्वरी क्षीरस्य पीतस्य नशेष मुत्सृजेत्॥ * ॥ विदाहीन्यन्नपानानि दिवाभुक्तेहि यत्नरः। तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदापिवेत्॥ * ॥ दीप्तानले कृशे पुंसि बाले वृद्धे पयःप्रिये। मतं



हिततमं दुग्धं सद्यःशुक्रकरं यतः॥ * ॥ मथितदुग्धस्यत्। क्षीरं गव्यमथाजंवा कोष्णं दण्डाहतं भवेत्। लघु हृष्यं ज्वरहरं वातपित्तकफापहम्॥ * ॥ दुग्धफेनगुणाः। गोदुग्धप्रभवं किंवा छागीदुग्धसमुद्भवम्। भवेत्फेनं त्रिदोषघ्नं रोचनं बलवर्द्धनम्॥ वह्निवृद्धिकरं पथ्यं सद्यस्तृप्तिकरं लघु। अतिसारेऽग्निमान्द्येच ज्वरेजीर्णे प्रशस्यते॥ * ॥ विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितंपयः। वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद्यतः॥ शाकाम्लफलपिण्याककुलत्थलवणामिषैः। करीरदधिमाषैश्चप्रायः क्षीरंविरुध्यते॥ * ॥ केच्याविकं पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः। दोषाल्पशीतं महिषीपयस्यं गव्यन्तु धारोष्णमिदं प्रशस्तम्॥ * ॥ वृष्यं बृंहण मग्निवर्द्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने बलदायकं रतिकरं कृच्छ्रस्यविच्छेदनम्। बाल्येवह्निकरं ततोबलकरं वार्यप्रदं वार्द्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा॥ * ॥ क्षीरं मुहूर्त्तंचितयोपितं यदतःसमेतद्विकृतिं प्रयाति। पश्चात्तु दोषं कुरुते तदूर्द्ध्वं विषोपमं स्याद्दूषितं दशाना

म्॥ * ॥ जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्। तदेव तरुणे पीतं विषवद्धन्ति मानुषम्॥ * ॥ चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्त्तितमुत्तमं तत्। सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम्॥ * ॥ गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम्। क्षीरं सशर्करं पथ्यं यद्वासात्म्यञ्च सर्वदा॥ * ॥ क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तञ्च नैव लवणेन सार्द्धम्। पिष्टान्नसन्धानकमाषमुद्गकोषातकीकन्दफलादिकैश्च॥ * ॥ मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः। शाकजाम्बवरसादिसेवितं मारयत्यबुधमाशु सर्पवत्॥ * ॥ स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत्। दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च॥ * ॥ नित्यं तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः। पुष्यन्ति धातवः सर्वे बलपुष्टिविवर्द्धनम्॥ क्षीरं गवाजकादेर्मधुरं क्षारं नवप्रसूतानाम्। रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते॥ * ॥ मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम्। लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम्॥ गुणहीनं निस्सारं क्षीरं प्रथमप्रसूतानाम्। मध्यवयसां रसायनमुक्तमिदं दुर्बलानां वृद्धानाम्॥ तासां मासत्रयादूर्द्ध्वं गुर्विणीनाञ्च यत्पयः। तद्वाहिलवणं क्षीरं मधुरं पित्तशोषकृत्॥ * ॥ दुग्धाम्रं शीतलं स्वादु वृष्यं वर्णकरं गुरु। वातपित्तापहं रुच्यं बृंहणं बलवर्द्धनम्॥ एवं भिषग्वराः प्राहुस्तथार्थं न संशयः॥

दुग्धकन्दगणः। पुं। अश्वगन्धादिषु॥ अश्वगन्धा च मुसली विदारी च शतावरी। क्षीरवाराहिका चेति दुग्धकन्दगणस्त्वयम्॥

दुग्धकूपिका। स्त्री। पक्वान्नविशेषे॥ यथा। तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन। दृढकूपिकां विदध्यात् ताञ्च पचेत् सर्पिषा सम्यक्॥ अथ तां कोरितमध्यां घनपयसा पूर्णगर्भाञ्च। शट्टकमुद्रितवदनां तप्तघृतेन पक्ववदनाञ्च॥ अतिपाण्डुखण्डपाके स्नपयेत् कर्पूरवासिते कुशलः॥ अथ दुग्धकूपिका सा बल्या पित्तानिलापहा दृष्टा। शीता वृष्या गुर्वी शुक्रकरी तर्पणी रुच्या। विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीं सुचिरम्॥

दुग्धतालीयम्। न। दुग्धाग्रे॥ क्षीर

फेने ॥ दुग्धाग्रे ॥

दुग्धपाचनम् । न । वज्रके । दुग्धपाकपात्रे ॥ इतिहारावली ॥

दुग्धपाषाणः । पुं । दुग्धपाषाणके ॥

दुग्धपाषाणकः । पुं । शिरगोला इति गौडभाषा प्रसिद्धे वृ० विशेषे । चीर्याम् । गोमेदसन्निभे । वज्राभे ॥

दुग्धपुच्छी । स्त्री । दुग्धपेया इतिगौडभाषाप्रसिद्धे वृ० विशेषे । सेवकालौ । नसक्कर्याम् ॥ इतिशब्दचन्द्रिका॥

दुग्धफेनः । पुं । सशर्करदुग्धफेने । चीरडिण्डीरे । शार्करे ॥ इतिराजनि०॥

दुग्धफेनकः । पुं । दुग्धफेने ॥

दुग्धफेनी । स्त्री । चुद्रचुपविशेषे । पयः फेन्याम् । गोजापर्याम् ॥

दुग्धाब्धितनया । स्त्री । लक्ष्म्याम् ॥

दुग्धाश्मा । पुं । दुग्धपाषाणे ॥

दुग्धिका । स्त्री । चीराव्याम् । स्वादुपर्याम् । दुद्धी इति ख्यातायाम् ॥ दुग्धमस्य्यस्याः । अतइनिठना विति ठन् ॥ दुग्धिकोष्णा गुरू रूचा वातलापुंस्त्वदायिनी । स्वादुचीरा कटु स्निग्धा सृष्टमूत्रमला पटुः ॥ स्वादी विष्टम्भिनी वृष्या कफकुष्ठकृमिप्रणुत् ॥ गन्धिका इति गौडभाषा प्रसिद्धायामुत्तमफलिन्याम् । युग्मफलायाम् ॥

दुग्धिनिका । स्त्री । रक्तापामार्गे ॥

दुग्धी । स्त्री । दुग्धिकायाम् । चीराव्याम् । दुद्धी इति भाषा ॥ दुग्धपाषाणे ॥

दुच्छकः । पुं । गन्धकुव्याम् । मुरामांसगन्धद्रव्ये ॥ विश्वारायवकाशके ॥

दुडिः । स्त्री । कच्छप्याम् ॥ इतिमुकुटः॥

दुण्डुकः । त्रि । दुष्टचित्ते ॥

दुण्डुभः । पुं । डुण्डुभसर्पे ॥

दुतः । त्रि । पीडिते ॥ टुदु उपतापे । स्वादिः । कर्मणि क्तः ॥

दुद्रुमः । पुं । हरितपलाशे पलाण्डौ । लतार्के ॥ दुष्टोद्रुमः ॥

दुधुचन् । त्रि । दोग्धुमिच्छति ॥ दुहेः सन्नन्ताल्लटःशत्रादेशः । घत्वधत्वे ॥

दुन्दमः । पुं । दुन्दुभौ ॥ इतिशब्दरत्नावली ॥

दुन्दुः । पुं । वसुदेवे ॥ दुन्दुभिवाद्ये ॥

दुन्दुभिः । पुं । वरुणे ॥ दैत्यभेदे ॥ दक्कायाम् । भेर्याम् । कानके ॥ वर्त्तुलश्वर्मवद्धैकाननो दुन्दुभिरुच्यते । इतिकेचित् ॥ दुन्दुइतिशब्देनोभति । उभपूरणे । दृगुपधात्किदितीन् । शकन्ध्वादिः ॥ यद्वा । दुन्दइति हलन्तस्यैवानुकरणम् ॥ यद्वा । दाम्भतिशब्देन । उभ० । सर्वधातुभ्यइन् । पृ० ॥ रचोभेदे ॥ विषे ॥ षट्

पञ्चाशत्तमे वत्सरे ॥ सुभिक्षं जायते लोकः सर्वोपद्रववर्जितः । प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि ॥ स्त्री । अक्षे । पाशके ॥ अक्षविन्दुत्रिकद्वये ॥ अर्द्धबिन्दुत्रिकद्वन्द्वे ॥ विन्दुत्रितचतुष्पार्श्वस्वर्णमृन्नादि-मयद्यूतोपकरणे पाशटी इतिगौड-भाषा प्रसिद्धे इतिकेचित् ॥

दुन्दुमारः । पुं । धुन्धुमारे ॥

दुम्बकः । पुं । मेदःपुच्छे एडके । दुम्बा इति ख्याते मेषविशेषे ॥

दुर् । अ । निषेधे ॥ दुष्टे ॥ निन्दायाम् । अवक्षेपणे ॥ दुःखे ॥

दुरक्षः । पुं । कपटपाशके ॥

दुरतिक्रमः । त्रि । दुरत्यये ॥ दुःखेन अतिक्रमोयस्य ॥

दुरत्ययः । त्रि । दुरतिक्रमे । दुर्गमनीये ॥ दुस्तरे ॥ दुःखेनअत्ययोयस्य ॥

दुरदृष्टम् । न । दुर्भाग्ये ॥

दुरधिगमः । त्रि । दुर्ग्रहे । दुःखेनाधिगन्तुमशक्ये ॥ दुष्प्रापे ॥ दुर्ज्ञेये ॥ दुःखेनाधिगमोऽस्य ॥

दुरध्ययः । त्रि । दुष्प्रापे ॥ इणगतावित्यस्मात् कृच्छ्रार्थेखल् ॥ अध्येतुमशक्ये ॥ इङ्अध्ययने । अस्मात् खलि दुरध्ययइत्येवरूपम् ॥

दुरध्वः । पुं । कुपथे । निन्द्यात्मनि ॥ दुष्टोऽध्वा । प्रादयोगताद्यर्थे इति समासः । उपसर्गादध्वनइत्यच् ॥

दुरन्तः । त्रि । मृगयादिव्यसनेषु । दुःखावसानेषु ॥ तेच आदौ सुखयन्ति अन्ते दुःखानि कुर्वन्ति । दुर्लभोऽन्तो यस्य वा । नहिव्यसनीततो निवर्त्तयितुंशक्यते ॥

दुरन्तभावः । त्रि । गभीराभिप्राये ॥

दुरभिग्रहः । पुं । अपामार्गे ॥ त्रि । दुःखग्राह्ये ॥

दुरभिग्रहा । स्त्री । कपिकच्छाम् ॥ दुरालभायाम् ॥

दुराकः । पुं । म्लेच्छभेदे ॥

दुराग्रहः । पुं । युक्तिरहितेऽभिनिवेशे ॥ त्रि । तद्वति ॥

दुराचारः । पुं । निन्द्याचरणे ॥ त्रि । निन्दिताचारवति ॥ दुर्दुष्टः शास्त्रावित्तः आचारोयस्य ॥ दुराचाराद्दुर्विचेष्टादुष्प्रज्ञाः प्रियसाहसाः । असन्तस्त्विति विख्याताः सन्तस्त्वाचारलक्षणाः इतिमहाभारतम् ॥

दुरात्मा त्रि । दुष्टचित्ते ॥

दुराधर्षः । पुं । गौरसर्षपे ॥ त्रि । अधर्षणीये ॥ दुष्प्रापे ॥ दैत्यादिभिर्धर्षयितुमशक्यायां परदेवतायाम् ॥ दुःखेन ईषदपि धर्षयितुमशक्यः । धृषप्रसहने । आङ्पूर्वादस्मादीष-

दुःसुषुक्षुच्छाकृच्छार्थेषु खलिति कर्म-णिखल् ॥

दुराधर्षा । स्त्री । कुटुम्बिनीवृक्षे ॥

दुरानमः । त्रि । आनमयितुमशक्ये ॥ नमेर्ण्यन्तात्खल् ॥

दुरापः । त्रि । दुर्लभे ॥

दुरारुहः । पुं । विल्वे ॥ नारिकेले ॥

दुरारुहा । स्त्री । खर्जूर्य्याम् ॥

दुरारोहः । पुं । शरटे ॥ त्रि । दुःखेनारोहणीये ॥

दुरारोहा । स्त्री । शाल्मलिद्रुमे ॥ श्रीवल्ल्याम् ॥ खर्जूर्याम् ॥ दुष्टो दुःखेन वा आरोहो यस्याः ॥

दुरालभा । स्त्री । यवासप्रभेदे । दुस्पर्शायाम् ॥ यवासस्य गुणैस्तुल्या वुधैरुक्ता दुरालभा ॥ त्रि । दुःखेन-स्पर्शार्हे ॥ दुःखेन आलभ्यते । दुल्लभष० । ईषद्दुःसुष्विति खल् । आगमशासनस्यानित्यत्वान्नुम् ॥

दुरालम्भा । स्त्री । दुरालभायाम् ॥ दुःखेन आलभ्यते । डुलभष० । ईषद्दुःसुष्विति खल् । नुम् ॥

दुरालापः । त्रि । गालिप्रदे ॥ पुं । दुष्टभाषणे ॥

दुराशयः । त्रि । दुष्टाभिप्राये ॥

दुरासम् । त्रि । आसितुमशक्ये ॥ आसेरकर्मकात् ईषद्दुरित्यादिना खल् ।

तयोरेवकृत्यक्तखलर्था इति नियमात् ॥

दुरासदः । त्रि । दुष्प्रापे । दुःखेनासादनीये । दुष्टजने ॥ दुर्द्धर्षे ॥

दुरितम् । न । पापे ॥ यथा । नित्यनैमित्तिकैरेवकुर्वाणोदुरितक्षयमिति ॥ दुर्णोभावेक्तः । दुष्टमितंगमनमनेन ॥

दुरितदमनी । स्त्री । पापनाशिन्याम् ॥ शम्याम् ॥ दुर्गायाम् ॥

दुरिष्टकृत् । पुं । अभिचारकर्त्तरि ॥ यथा । देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः । सयाति कृमिभक्षे वै कृमीशे च दुरिष्टकृदिति विष्णुपुराणम् ॥

दुरीशः । त्रि । दुष्टप्रभौ ॥

दुरीषणा । स्त्री । शापे ॥ इति शब्दार्थकल्पतरुः ॥

दुरुक्तम् । न । शापे ॥

दुरुच्छेदः । त्रि । दुर्वारे ॥

दुरुत्तरः । त्रि । दुस्तरे ॥

दुरुदाहरः । त्रि । दुर्वचे ॥ हरतेःखल् ॥

दुरुधरा । स्त्री । हित्वार्कं सुनफाऽनफादुरुधराम्बान्यो भयस्थैर्ग्रहैः शीतांशोरित्युक्तयोगविशेषे ॥ एतदेवस्पष्टीकृतं कल्याणवर्मणा । रविवर्ज्जं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधराके

मद्गुमसंज्ञितोतोन्य इति ॥

दुरुपसद: । त्रि । दु:सहे ॥

दुरूह: । त्रि । दुर्विज्ञेये ॥

दुरोण: । पुं । कलशे ॥ यज्ञगृहे ॥

दुरोदर: । पुं । द्यूतकारे ॥ पणे ॥ अक्षे ॥ न । द्यूतभेदे । पाशकक्रीडायाम् ॥ दुष्ट मासमन्तात् उदरमस्य ॥ दुष्ट मुदर मस्य वा । पृ० ॥

दुर्ग: । पुं । असुरभेदे ॥ यंहत्वाचण्डिकायास्तु दुर्गानामवभूवह ॥ गुग्गुलौ ॥ न । गिर्य्यादिभि दुर्गमे पुरे । कोट्टे । गढइति कोटइतिच भाषाप्रसिद्धे राज्ञां वासस्थाने ॥ तत्षड्विधं यथा । धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेवच । न्दुर्गं गिरिदुर्गञ्च समाश्रित्य वसेत् पुरम् । इत्युक्तः ॥ एषां हिवाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ तत्र । चीग्याद्यान्याश्रिता स्त्वेषां मृगगर्त्ताश्रयाप्चरा: । चीण्यत्त राणिक्रमश: प्लवङ्गमनरामरा: ॥ यथा दुर्गाश्रयानेतान् नोपहिंसन्ति शत्रव: । तथारयो न हिंसन्ति न्टपंदुर्गसमाश्रितम् ॥ एक: शतं योधयतिप्राकारस्थोधनुर्द्धर: । शतंदशसहस्राणितस्माद्दुर्गं विधीयते ॥ तत् स्यादायुधसम्पन्नं धनधान्येन वाहनै: । ब्राह्मणै: शिल्पिभि र्यन्त्रै र्यवसेनोदके न च ॥ तस्यमध्ये सुपर्य्याप्तं कारयेद्गृहमात्मन: । गुप्तंसर्वर्त्तुकं शुभ्रंजलवृक्षसमन्वितमितिमनु: ॥ अपिच । दुर्गञ्च परिखोपेतं वप्राट्टालकसंयुतम् । शतघ्नीयन्त्रमुख्यैश्चशतशश्चसमावृतम् ॥ गोपुरं सकपाटञ्च तत्र स्यात् सुमनोहरम् । सपताकं गजारूढो येन राजाविशेत् पुरमितिमात्स्ये ॥ १९१ अध्याय: ॥ अस्यावश्यकत्वं शुभाशुभञ्चोक्तं कालिकापुराणे ८५ अध्याये राजनीतिविशेषे ॥ त्रि । दुर्गमे । दुर्गमप्रदेशे । उच्छ्रिते । दु:सम्पाद्ये । कोटादौ । प्राकारे ॥ दुस्तरे ॥ कामक्रोधादिसंसार दु:खसाधने ॥ दु:खेनगच्छत्यत्रेतिविग्रहे सुदुरोरधिकरणइति दुरुपपदाद्गमेर्ड: प्रत्यय: ॥ दु:खादवाप्यते वा ॥ दु:खेनगम्यतेप्राप्यते । अन्यत्रापिदृश्यतइतिड: ॥

दुर्गकारक: । त्रि । दुर्गकर्त्तरि ॥ न । वृक्षविशेषे ॥

दुर्गत: । त्रि । दरिद्रे ॥ दुर्गच्छतिस्म । गम्लृ० । गत्यर्थेतिक्त: ॥

दुर्गति: । स्त्री । नरके ॥ नै:स्वे । दारिद्र्ये ॥ दुष्टागति: ॥

दुर्गतिनाशिनी । स्त्री । दुर्गादेव्याम् ॥

दुर्गन्ध: । पुं । पूतिगन्धे । दुष्टगन्धे ॥ प

लाण्डी ॥ न । सौवर्च्चल लवणे ॥ दुष्टो गन्धः ॥

दुर्ग्गन्धी । त्रि । दुर्गन्धयुक्ते ॥

दुर्ग्गपुष्पी । स्त्री । गौडभाषायां अश्मपुष्टा इति ख्याते वृक्षविशेषे । मानस्याम् । केशधारिण्याम् ॥

दुर्ग्गमः । त्रि । दुर्गे ॥ दुःखेनगम्यते प्राप्यते । गम्लृ० । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ दुर्गमनीयस्थानादौ ॥ यथा । दुर्गमः पन्थाः ॥ पुं । हिरण्याक्षान्वयेजाते रुरोः पुत्रेमहादैत्ये ॥

दुर्म्मलङ्घनः । पुं । उष्ट्रे ॥ दुर्गं दुःसम्पाद्यं लङ्घनं यस्य ॥ त्रि । दुःखेनलङ्घनीये ॥

दुर्म्मसञ्चरः । पुं । सङ्क्रमे । दुर्गदेशप्रवेशक्रियायाम् ॥ सञ्चरणाम् । चर० । पुंसीतिघः । दुर्गस्यसञ्चरः ॥

दुर्ग्गा । स्त्री । ओषधिविशेषे । नील्याम् ॥ अपराजितायाम् ॥ दुष्प्रापायाम् ॥ श्यामायाम् । पोतकीखगे ॥ अमरेशमहापीठदेवतायाम् ॥ उमायाम् । कात्यायन्याम् । गौर्याम् । काल्याम् । हैमवत्याम् । शिवायाम् ॥ दुःखेन गम्यते ज्ञायते ऽस्याम् । सुदुरोरधिकरणे इतिडे टाप् ॥ दुःखेनगीयतेस्तूयते । गैशब्दे । आत-



श्चोपसर्गेइत्यङ् । टाप् वा ॥ यद्वा । दुर्गं गिरिं वनंवा वासत्वेनास्या अस्तीत्यर्शआद्यच् । टाप् ॥ दुर्गनामासुरवधाद्वा । यथा । तत्रैवच वधिष्यामि दुर्गमाख्यं महासुरम् । दुर्गादेवीतिविख्यातं तन्मनामभविष्यतीति ॥ अपिचास्यानामयोव्युत्पत्तिः । दुर्गोदैत्ये महाविघ्ने भवबन्धे कुकर्मणि । शोके दुःखेच नरके यमदण्डेच जन्मनि ॥ महाभये ऽतिरोगेचाप्याशब्दो हन्तृवाचकः । एतान्हन्त्येवयादेवी सादुर्गापरिकीर्त्तिता ॥ * ॥ अपिच । दैत्यनाशार्थवचनो दकारः परिकीर्त्तितः । उकारोविघ्ननाशस्यवाचको वेदसम्मतः ॥ रेफो रोगघ्नवचनो गश्चपापघ्नवाचकः । भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः ॥ स्मृत्युक्तिश्रवणाद्यस्या एते नश्यन्तिनिश्चितम् । ततो दुर्गा हरेः शक्तिर्हरिणा परिकीर्त्तिता ॥ दुर्गेति दैत्यवचनो प्याकारो नाशवाचकः । दुर्गंनाशयति या नित्यं सादुर्गाप्रकीर्त्तिता ॥ विपत्तिवाचकोदुर्गं श्चाकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गाप्रकीर्त्तिता ॥ * ॥ अस्याःस्थानं कृष्णावेणीतुङ्गभद्रयोर्मध्यभागे सह्याद्रेरीषत्प्राच्यां प्रसिद्ध

म्। अयमवतारोऽस्मिन्कल्पेऽद्यापि न जातः। श्वेतवाराहकल्पात्प्राक्तनकल्पेषु मन्वन्तरयुगभेदेन जात एव। ततश्च तत्तत्कुलदेवतात्वेनार्च्चनमधुनातनानामपि सङ्गच्छते इति गुप्तवत्यां भास्करराव:॥ * ॥ सर्व्वस्वरूपिणी शक्तिः सा दुर्गेति च पठ्यते। यथा मुण्डमालायाम्। भूतानि दुर्गा भुवनानि दुर्गा नराः स्त्रियश्चापि सुरासुरादिकम्। यद्यद्धि दृश्यं खलु सैव दुर्गा दुर्गास्वरूपादपरं न किञ्चिदिति॥

दुर्गाध्यक्षः। पुं। दुर्गस्य रक्षके॥ तल्लक्षणं यथा। अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः। दुर्गाध्यक्षः स्मृतो राज्ञस्तद्युक्तः सर्व्वकर्म्मसु॥ इति मत्स्यपुराणम्॥

दुर्गानवमी। स्त्री। आश्विनशुक्लनवम्याम्। महानवम्याम्॥ कार्त्तिकशुक्लनवम्याम्॥ सा चेतायुगाद्या। तत्र जगद्धात्रीपूजा कर्त्तव्येति वाङ्गाः॥ कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विशेषतः। प्रगल्भाञ्च जगद्धात्रीं पूजयेद्दीपमालयेति योगिनीतन्त्रम्॥

दुर्गास्मरणम्। न। दुर्गा जगदिदं सर्व्वं दुर्गा सर्व्वस्य कारणम्। अहञ्च दुर्गेत्येवं यत् तद्दुर्गास्मरणं विदुः॥

दुर्गाह्वः। पुं। भूमिजगुग्गुलौ॥

दुर्ग्रहः। त्रि। दुरासदे॥ दुर्द्धर्षे॥ दुःखेन ग्रहोऽस्य॥

दुर्ग्रहा। स्त्री। अपामार्गे॥

दुर्घटः। त्रि। दुःसम्पाद्ये॥

दुर्घोषः। पुं। भल्लूके॥ निन्दितरवे॥ त्रि। तद्वति॥

दुर्ज्जनः। त्रि। खले॥ दुष्टो जनः। कुगतीति समासः॥ दुर्ज्जनः परिहर्त्तव्यो विद्ययाभूषितोऽपि सः। मणिना भूषितः सर्पः किमसौ न भयङ्करः॥

दुर्ज्जयः। पुं। असुरविशेषे॥ कार्त्तवीर्य्यान्वयवंशोद्भवानन्तपुत्रे॥ त्रि। दुर्ज्जेये॥ दुःखेन जीयते। जीजये। खल्॥

दुर्ज्जरः। त्रि। दुःखेन जीर्य्यति॥ जॄष्॰। अच्॥

दुर्ज्जरा। स्त्री। ज्योतिष्मतीलतायाम्॥

दुर्ज्जातम्। न। व्यसने॥ यथा। दुर्ज्जातबन्धुः आपद्बन्धुरिति तदर्थः॥ त्रि। असम्यग्जाते॥ असमञ्जसे॥

दुर्द्दर्शः। पुं। काद्रवेयविशेषे॥ दुःखेन दर्शनमस्य। दुःखेन दृश्यते इति वा॥ त्रि। दुर्विज्ञेये॥ द्रष्टुमशक्ये॥ दुःखेन द्रष्टुं योग्ये॥

दुर्द्दान्तः। पुं। कलहे॥ वत्सतरे॥ त्रि। अशान्ते॥ दुःखेन दान्तः॥

दुर्द्दिनम्। न। मेघच्छन्नेऽह्नि॥ दिवानिशि च वर्षणे॥ मेघान्धकारे॥ मे

वान्धकारिते ऽह्नीतिराजेरप्युपलक्ष णम्। तेनराजावपिततया दुर्दिनं कथ्यतेरितम् ॥ * ॥ घनान्धकारे वृष्टौचदुर्दिनं कवयोविदुरिति साभ्रः ॥ दुर्दिनं जलदध्वान्ते इतिरत्नकोषः ॥ यातितमः इतिदिनम्। दोअवखण्डने। द्यतेरिति इनच्। दुष्टंदिनं दुर्दिनम्। दुष्टत्वञ्चतमोनाशकस्य रूपहीनत्वात्। लक्षणयातुकालातिरिक्तेपिदुर्दिनपदप्रयोगः ॥ यदच्युतकथालापरसपीयूषवर्जितम्। तद्दिनं दुर्दिनं मन्ये मेघाच्छन्नं नदुर्दिनम् ॥

दुर्दुरूढः। पुं। नास्तिके॥ दुरुरुतत्वेपे। दुःपूर्वः। औणादिकः कूटप्रत्ययः। बहुलमन्यत्रापीतिणिलुक्। रलयोरेकत्वस्मरणात्। ॥ पलाण्डौ ॥

दुद्रिता। स्त्री। लताविशेषे ॥

दुर्द्दरः। पुं। नरकान्तरे ॥ रूषभौषधौ ॥ पारदे ॥ भल्लातके ॥ महिषासुरस्यसेनापतिविशेषे ॥ अर्द्धरो ॥ पृथिव्यादीनि धारकाणि कन्यैद्धारयितुमशक्यानिधारदनस्वयञ्चनकेनचिद्धारयितुंशक्यते इति दुःखेनमुमुक्षुभिर्हृदयेधार्यते वेतिनिरुक्तिः। त्रि। दुर्द्धर्षे॥ दुःखधार्ये॥ दुःखेनधियते·दुरुपपदाद्धरतेः खल् ॥

दुर्द्धर्षः। त्रि। अप्रधृष्ये। तिरस्कर्तुमशक्ये॥ अप्रक्षोभ्ये ॥

दुर्द्धर्षा। स्त्री। कन्थारीवृक्षे ॥ नागदमन्याम् ॥ त्रि। दुःखधर्षणीये ॥

दुर्द्रुमः। पुं। हरितपलाण्डौ। लताार्कें। हरिद्वर्णपलाशे पलाण्डौ ॥ दुष्टाद्रुमः ॥

दुर्धावः। त्रि। दुर्गाधे ॥

दुर्नामकम्। न। अर्शसि। गुदरोगे॥ दुष्टंनामास्य पापरोगत्वात्। वुभादित्वात्स्वार्थेकन् ॥

दुर्नाम। न। अर्शोरोगे॥ दुष्टंनामास्य पापरोगत्वात् ॥ वु० नगात्वम्॥

दुर्नामा। स्त्री। दीर्घकोशिकायाम्॥ दुर्निन्दितं नामास्याः। डाबुभाभ्यामिति डाप् ॥

दुर्नामारिः। पुं। शूरणे ॥

दुर्नाम्नी। स्त्री। दुर्नामायाम् ॥ अनउपधेति पाक्षिकोङीप् ॥ वु० नणः ॥

दुर्निमितः। त्रि। समभ्रमादुत्क्षिप्ते॥

दुर्नयपतरम्। त्रि। दुःखतरमिसरणो ॥

दुर्बलः। पुं। अनाहूतमेढूमणौ ॥ त्रि। बलशून्ये। अमांसे ॥ दुष्टंबलमस्य ॥

दुर्बला। स्त्री। अम्लुमिपरीषकायाम् ॥

दुर्बाधः। त्रि। दुर्गाह्ये॥ बोद्धुमशक्ये॥

 

दुःखेनबुध्यते । बुध । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥

दुर्भगः । त्रि । अनिष्टे ॥

दुर्भगा । स्त्री । निरक्तायाम् ॥ पतिस्नेहरहितायाम् ॥ दुष्टोभगो भाग्यं यस्याः ॥

दुर्भाग्यम् । न । दुरदृष्टे ॥

दुर्भिक्षम् । न । भिक्षायाअप्राप्तिकाले । अकाल इति काल इतिच भाषाप्रसिद्धे समयविशेषे ॥ यद्देशे यत्काले तद्देशतत्कालयोग्यसस्यादिकं न जायते तदातद्देशे यायमानद्रव्याभावात् दुर्भिक्षं जातमितिव्यवह्रियते ॥ अत्र चाणक्येन मुनिना नवनृत्तयउक्ताः । तथाहि । शकटः शाकिनी गावो जालमस्पन्दनं वनम् । अनूपं पर्वतोराजा दुर्भिक्षे नवहत्तय इति ॥ अस्यार्थः शाकिनीशब्देद्रष्टव्यः ॥ भिक्षाया अभाव इत्यर्थे ऽव्ययीभावः ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । दाता नश्यतु दुर्भिक्षे सुभिक्षे बहुईमदः ॥ दुर्भिक्षमत्यंस्मरणं चिराय ॥

दुर्म्मतिः । त्रि । विवेकप्रतिबन्धकपापेन मलिनमतौ ॥ दुष्टामतिर्यस्य ॥ वत्सरविशेषे । यथा । दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते । भवेद्दै मध्यमाहष्टिर्दुर्म्मतौ समुपस्थिते ॥ ५५ ॥

दुर्म्मदः । त्रि । अतिमत्ते ॥

दुर्म्मनाः । त्रि । अन्तर्म्मनसि । विमनसि । चिन्तादिव्याकुलचित्ते ॥ क्रियास्वस्थिरे ॥ दुःस्थितं मनोऽस्य ॥ स्त्री । भ्रताबर्याम ॥

दुर्म्मरः । पुं । दुर्म्मृतौ ॥ मरणंमरः । दुष्टोमरः ॥

दुर्म्मरा । स्त्री । श्वेतदूर्वायाम् ॥ कृष्णदूर्वायाम् ॥

दुर्म्मर्षणः । त्रि । मर्षितुमशक्ये ॥ दुःखेनमृष्यते । मृष० । भाषायांशासियुधीतियुच् ॥

दुर्म्मिलका । स्त्री । मात्रावृत्तप्रभेदे ॥ यथा । द्वात्रिंशन्मात्रं फणिपतिजल्पितसकलविभूषणवृत्तवरम् दशवसुभुवनैर्यति रवप्रभवतिकविकुलहृदयानन्दकरम् । यदष्टचतुष्कलगणनिर्मितपदमितिदुर्म्मिलकानामवरम्नरपतिवरतोषणवन्दिविभूषणभुवनविदितसन्तापहरम् ॥ यथा । यमुनाजलकेलिविलोलविलोचनगोपीजनहृतवसनवरम् तटजातविशालतमालतरुणतरुदुर्गमशाखारोहपरम् । निजभुजमदमत्तभोजपतिमानससम्भृतदम्भविनाशकरम् कारक-

मलमयूखमुषितकमलं नम लीला मानुषवेषधरम् ॥

दुर्म्मिला । स्त्री । दुर्म्मिलकाशब्दे ॥

दुर्म्मुखः । पुं । कपिविशेषे ॥ नागभेदे ॥ वाजिनि ॥ गणेशमूर्त्त्यन्तरे ॥ महिषासुरस्य सेनापतिविशेषे ॥ उत्तरद्वारे नवमगृहे ॥ वत्सरविशेषे ॥ तत्र धान्यवयोर्विसर्व्वस्य महार्घता । व्यवहाराश्च नश्यन्ति दुर्म्मुखे दुर्म्मुखाः प्रजाः ॥ त्रि । मुखरे । अवद्मुखे । अप्रियवादिनि ॥ दुर्न्निन्दितं मुखमस्य ॥

दुर्म्मेधाः । त्रि । मन्दमतौ । विवेकासमर्थे ॥ दुष्टा मेधा यस्य । नित्यमसिच् प्रजामेधयोः ॥

दुर्म्मोहः । पुं । काकतुण्ड्याम् ॥

दुर्म्मोहा । स्त्री । कौआडोडी इति भाषा प्रसिद्धे वृक्षे । काकादन्याम् ॥

दुर्य्योधनः । पुं । धृतराष्ट्रतनये । कौरव्यभूपतौ । सुयोधने ॥ दुःखेन युध्यते । युध० । भाषायां शासियुधीति युच् ॥

दुर्ल्लतिका । स्त्री । छन्दोभेदे ॥ यथा । वसुभिश्च रसै र्यदि भि रुदीरित सयतिका विहिताहि यदा सगणा ष्टकभूषितसच्चरणा जितदुर्नयदुर्ल्लतिकेति तदा । फणभृत्कुलमङ्गलना मकनागवरप्रथिता सुकृतां सुखदा यशवन्तधराधिपगौडकुलोज्ज्वलता मवधेहि हृदे हरुदा ॥

दुर्ल्लभः । पुं । कच्छुरे ॥ द्राविडके । कर्चूरे ॥ त्रि । दुष्प्रापे ॥ यथा । दुर्ल्लभं त्रयमेवैतत् देवानुग्रहहेतुकम् । मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रय इति विवेकचूडामणिः ॥ अतिप्रशस्ते ॥ प्रिये ॥ दुर्ल्लभं प्राकृतं वाक्यं दुर्ल्लभः क्षेमकृत्सुतः । दुर्ल्लभा सदृशी भार्य्या दुर्ल्लभः स्वजनः प्रियः ॥ दुःखेन लभ्यते । लभ० । ईषद्दुस्सुष्विति खल् ॥

दुर्ल्लभा । स्त्री । भक्तौ ॥ जन्मान्तरसहस्रेषु तपोध्यानसमाधिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ इति व्यासवचनम् ॥ दुरालभायाम् ॥ श्वेतकण्टकार्य्याम् ॥

दुर्व्वचः । त्रि । वक्तुमशक्ये । दुःखकथ्ये ॥

दुर्व्वचः । न । मन्दवाक्ये ॥ असह्यं दुर्वचो भ्रातेर्मेघान्तरितरौद्रवत् ॥

दुर्व्वर्णम् । न । रजते । रूप्ये ॥ सुवर्णापेक्षया दुष्टो वर्णोऽस्य ॥ एलवालुके । एलेये ॥ त्रि । असद्वर्णे ॥

दुर्व्वर्णकम् । न । रजते ॥ इति हेमचन्द्रः ॥

दुर्व्वाक् । स्त्री । दुष्टायां वाचि ॥ त्रि । कद्वदे ॥ दुष्टा वागस्य ॥

दुर्वाच्यम् । त्रि । अवक्तव्ये ॥

दुर्वादः । पुं । दुरुक्तौ । निन्दितवाक्ये ॥ दुष्टोवादः ॥ स्तुतिपूर्वकदुर्वाक्ये ॥

दुर्वासाः । पुं । अत्रितनये शङ्करांशाज्जाते मुनिविशेषे । कुशारणौ ॥ त्रि । कुत्सितवस्त्रयुक्ते ॥

दुर्विज्ञेयः । त्रि । दुर्दर्शे ॥ दुःखेनविज्ञेये ॥

दुर्विधः । त्रि । दरिद्रे ॥ दुष्टा विधाप्रकारः समृद्धिर्वास्य ॥ खले ॥ मूर्खे । वाणिशे ॥

दुर्विनीतः । पुं । शूकले । अशिक्षिताश्वे ॥ त्रि । अविनीते ॥

दुर्विभाव्यः । त्रि । अवितर्क्ये ॥

दुर्वृत्तः । त्रि । दुर्जने । दुष्टे । ऐन्द्रजालिककितवादौ ॥ दुष्टंवृत्तमस्य ॥

दुर्वृत्तिः । त्रि । दुष्टेकर्मणिवर्त्तमाने ॥ दुष्टेकर्मणिवृत्तिः दुष्टावावृत्तिर्यस्य ॥

दुर्हृत्-द् । त्रि । वैरिणि । शत्रौ ॥ दुष्टंहृदयमस्य । सुहृद्दुर्हृदौमित्रामित्रयोरितिनिपातनात् हृदयस्यहृद् भावः ॥

दुर्हृदयः । त्रि । दुष्टान्तःकरणे ॥

दुलिः । पुं । मुनिविशेषे ॥ स्त्री । कच्छप्याम् ॥ दोलति । दुलउत्क्षेपे । इगुपधात्किदितिइन् ॥

दुली । स्त्री । कमठ्याम् ॥ कृदिकारादितिङीष् ॥

दुस्वरः । पुं । भल्लूके ॥ भल्लूके ॥ त्रि । दुस्वरे ॥

दुश्चरितम् । न । श्रुतिस्मृत्यविहिते पापकर्मणि ॥ दुष्टंचरितम् ॥

दुश्चर्मा । पुं । अच्छन्नमेढ्रमणौ । छिन्नके ॥ कोठरोगे ॥ दुष्टंचर्मास्य ॥

दुश्चिक्यम् । न । लग्नात् तृतीयभवने । सहजे ॥

दुश्च्यवनः । पुं । इन्द्रे ॥ दुःखेन दुष्टं दुष्टेषुवा च्यवनंपतनमस्य ॥ च्यवनमुनिनैकदाजितत्वात् दुःसहः च्यवनो स्येति वा ॥

दुष्करम् । न । दुःखेनकरणे ॥ आकाशे ॥ त्रि । दुःखेनक्रियमाणे ॥ कर्त्तुमशक्ये ॥ अपियत् सुकरंकर्म्म तदप्येकेनदुष्करम् ॥ दुःक्रियते । ईषद्दुःसुष्विति खल् ॥

दुष्कर्म्म । न । पापे ॥

दुष्कुलम् । न । दुष्टकुले ॥ त्रि । दुष्टकुलजे ॥

दुष्कुलीनः । पुं । चोराख्यगन्धद्रव्ये ॥ त्रि । दौष्कुलेये ॥ दुष्कुलस्याऽपत्यम् । दुष्कुलाड्ढगितिपक्षे खः ॥

दुष्कृतम् । न । पापे ॥ तत् तत्कर्त्तुर्मरणानन्तरं तेनसहगच्छतीत्युक्तं वह्निपुराणे । गङ्गादर्या निवर्त्तन्ते

श्मशानादपिवान्धवाः। सुकृतं दुष्कृतं लोके गच्छन्त मनु गच्छति ॥ तस्माद् वित्तं समासाद्य दैवाद् वा पौरुषा द्य। दद्यात् सम्यग् द्विजातिभ्यः कीर्त्तनानिच कारयेदिति ॥

दुष्टंकृतं करणमनेन। इदुदुपधस्यचाप्रत्ययस्येतिषः ॥ त्रि। तद्वति ॥

दुष्कृतात्मा। त्रि। पापहृदये। पापबुद्धौ॥

दुष्कृती। त्रि। पापकारिणि। पापेन सहनित्ययोगिनि। वेदमार्गविरोधिनि ॥ दुष्कृतमस्यास्त्यस्मिन्वा। इनिः ॥

दुष्क्रीतः। त्रि। महार्घे॥ यथा। क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतमितिनारदः ॥

दुष्खम्। न। दुःखे ॥

दुष्खदिरः। पुं। खदिरभेदे। महासारे। गोरटे। क्षुद्रखदिरे ॥

दुष्टम्। न। कुष्ठौषधौ॥ त्रि। अधमे॥ दुर्बले॥ वञ्चके॥ दोषयुक्ते॥ यथा। दुष्टः शब्दः स्वरतोवर्णतोवेतिभाष्यम् ॥

दुष्टकालः। पुं। केत्वाद्युत्पातदर्शने॥ गुरुशुक्रास्तादौ ॥

दुष्टचारिणी। स्त्री। स्वैरिण्याम् ॥

दुष्टयोगः। पुं। व्यतीपातादौ॥

दुष्टवृषः। पुं। गलौ॥ शक्तोप्यधुर्वहो योऽस्मिन्वृषोगलिरुदाहृतः ॥

दुष्टा। स्त्री। दुःशीलायाम्। पुंश्चल्याम्॥ दुष्टाभार्या शठंमित्रं भृत्याश्चोत्तरदायकाः। ससर्पेचगृहेवासो मृत्युरेवनसंशयः॥ दुर्वचनायाम् ॥

दुष्टाश्वः। पुं। अदान्ताश्वे ॥

दुष्टु। अ। निकृष्टे। निन्दायाम् ॥ दुःस्थानम्। छा०। अपदुःसुषुस्थइति कुः। सु० षत्वम् ॥

दुष्टुः। त्रि। अविनीते ॥

दुष्पत्रः। पुं। चोराभिधगन्धद्रव्ये॥ चण्डाद्रुमे॥ दुष्टानिपत्राण्यस्य ॥

दुष्पूरः। त्रि। पूरयितुमशक्ये ॥

दुष्प्रधर्षणी। स्त्री। वार्त्ताक्याम्। वनभण्टा इतिभाषा॥ दुःखेनप्रधृष्यते। त्रिधृषाप्रागल्भ्ये। कर्मणिल्युट् ॥

दुष्प्रधर्षा। स्त्री। दुरालभायाम् ॥ खर्ज्जूर्याम् ॥

दुष्प्रधर्षिणी। स्त्री। वार्त्ताकौ॥ कण्टकार्याम्॥ इक्ष्वाम्॥ पुनःपनर्दुःखेनप्रधृष्यते। त्रिधृषा०। आभीक्ष्ण्येणिनिः ॥

दुष्प्रवृत्तिः। स्त्री। दुर्वार्त्तायाम् ॥

दुष्प्रवेशा। स्त्री। कन्थारीवृक्षे ॥

दुष्यन्तः। पुं। चन्द्रवंशीयनृपतिविशेषे। शकुन्तलापतौ। भरतपितरि ॥

दु ॥ अ । दुःखे ॥ कोपे ॥ दुःखभावने ॥ दोषे ॥

दुस्तरः । त्रि । दुःखेनतर्त्तुंशक्यो । तरितुमशक्ये ॥ ईषद्दुःसुष्वितिखल् ॥

दुस्तर्कः । पुं । शुष्कतर्के ॥ दुस्तर्कात् सुविरम्यताम् ॥

दुस्थः । त्रि । दुर्गते ॥ मूर्खे ॥ दुःखेन तिष्ठति ॥ छा० । सुपिस्थइतिकः ॥

दुस्पर्शः । त्रि । दुःस्पर्शे ॥

दुस्पर्शा । स्त्री । दुःस्पर्शायाम् ॥

दुहितुःपतिः । पुं । जामातरि ॥ विभाषा स्वसृपत्योरितिवा ऽलुक् ॥

दुहिता । स्त्री । सुतायाम् । कन्यायाम् ॥ दोग्धि । दुहप्रपूरणे । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृरितिदुहेस्तृच् इटगुणाभावश्च निपातितः ॥ दहतिवा । दह भस्मीकरणे । तथासाधुः । स्वस्रादित्वान्न ङीप् ॥

दूतः । पुं । सन्देशहरे । वार्त्ताहरे ॥ दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥ अमात्ये दण्डआयत्तो दण्डे वैनयिकी क्रिया । नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्ययौ ॥ दूत एव हि सन्धत्ते भिनत्त्येवच संहतान् । दूतस्तत् कुरुते कर्मभिद्यन्ते येनवा नवा ॥ सविद्या दस्यकृत्येषु निगूढेङ्गितचेष्टितैः । आकारमिङ्गितं चेष्टां भृत्येषुचचिकीर्षितम् ॥ बुद्ध्वाच सर्वं तत्त्वेन परराजचिकीर्षितम् । तथा प्रयत्नमातिष्ठेद् यथात्मानं नपीडयेदिति मनुः ॥ अस्यलक्षणं यथा । यथोक्तवादीदूतः स्याद्देशभाषाविशारदः । सक्तःक्लेशसहो वाग्मी देशकालविभागवित् । विज्ञातदेशकालश्च दूतः स्यात् समहीक्षितः ॥ वक्ता नयस्य यः काले स दूतो नृपतेर्भवेदिति मत्स्यपु० ॥ मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादीच एषदूतोभिधीयते इतिचाणक्यम् ॥ अस्यावध्यत्वं यथा । वैरूप्यमङ्गेषु कषानिपातो मौण्ड्यं तथालक्ष्मणसन्निवेशः । एतान्यवधानईतिरूक्षवादी शास्त्रेषुदूतस्यवधोनदृष्ट इति ॥ दवति । दुगतौ । दुतनि भ्यांदीर्घ श्चेतिक्तः ॥ यद्वा । दूयतेस्म । दूङ् परितापे । गत्यर्थेतिक्तः ॥ दुनोतिवा । टुदुउपतापे । पूर्ववत् ॥

दूतघ्नी । स्त्री । कदम्बपुष्पयाम् ॥

दूतागारम्। न। पचगृहे। डाक इति पोष्ट इतिचेतरभाषा॥

दूतिः। स्त्री। दूतिकायाम्॥ दूयते। दूङ्॰। क्तिच्॥

दूतिका। स्त्री। सञ्चारिकायाम्॥

दूती। स्त्री। स्त्रीपुंसोःसन्देशप्रापिकायाम्। सञ्चारिकायाम्॥ गै॰ङीष्॥

दूतीका। स्त्री। सञ्चारिकायाम्॥

दूत्यम्। न। दूतस्वभावे॥ दूतभावे॥ दूतकर्मणि॥ दूतस्यभावःकर्मवा। दूतवणिग्भ्याञ्चेतियः॥

दूनः। त्रि। अध्वादिनाश्रान्ते॥ दूयते स्म। दुगतौ क्तः। दुग्वोर्दीर्घश्चेति नत्वम्॥ अकर्मकत्वात् कर्त्तरि-वाक्तः॥ सन्तप्ते॥ पित्तेनदूने रसने सितापि तिक्तायते हंसकुलावतंसेतिनैषधम्॥

दूरः। त्रि। विप्रकृष्टे॥ महतान्तरेणावर्त्तमाने॥ अगोचरे॥ दुःखेनेयते प्राप्यते। दुरीणोलोपश्चेतिसाधुः॥

दूरदर्शनः। पुं। गृध्रे॥

दूरदर्शी। पुं। पण्डिते दूरं दूराद्वा पश्यति। दृशिर्॰। गृ॰ णिनिः। सुपीतिश्च॥ गृध्रे॥ त्रि। दीर्घदर्शके॥

दूरदृक्। पुं। पण्डिते॥ गृध्रे॥ त्रि। दीर्घदर्शके॥ दूरावलोकनार्थयन्त्रविशेषे। दूरवीक्षणे। दूरवीन इतिभाषा॥ दूरे दृक् दर्शनंयेन॥

दूरमूलः। पुं। मुञ्जतृणे॥

दूरवर्त्ती। त्रि। महतान्तरेण वर्त्तनशीले॥ यथा। किम्मया दूरवर्त्तिन्या श्रिया राक्षसपुङ्गव। अरयोयां नपश्यन्तिबन्धुभिर्या नभुज्यतइतिरामायणे विभीषणंप्रतिरामवाक्यम्॥

दूरवीक्षणम्। न। दूरवीन इतिप्रसिद्धे दूरदृशि यन्त्रे॥

दूरवेधी। पुं। दूरापातिनि। दूरनिक्षेप्यास्त्रे॥

दूरभिन्नः। त्रि। अत्यन्तविलक्षणे॥

दूरस्थः। त्रि। विप्रकृष्टस्थिते॥ योजनलक्षकोद्यन्तरिते॥ दूरेतिष्ठति। ष्ठा॰। सुपिस्थ इति कः॥

दूरापाती। पुं। दूरवेधिनि॥

दूरेत्यः। त्रि। दूरेजातादौ॥ पथिके॥ दूरादेत्यः॥

दूरेरितेक्षणः। त्रि। केकरे॥

दूष्यम्। न। वस्त्राम्॥ विष्ठायाम्॥

दूर्व्वा। स्त्री। शतपर्विकायाम्। नीलदूर्वायाम्। तिक्तपर्वायाम्॥ श्वेतदूर्वायाम्। गोलोम्याम्॥ नीलश्वेतविभेदेनदूर्वेद्वेसमुदाहृते॥ रक्तपित्तकण्डूत्वग्दोषनाशिनीयमिति राजवल्लभः॥ दूर्वति दूर्व्यतेवा। दुर्वी हिंसायाम्। अच् घञ्वा। उपधाया

श्चेतिदीर्घः ॥

दूर्वाकाण्डम् । न । दूर्वाणांसमूहे ॥ दूर्वादिभ्यः काण्डः ॥

दूर्वाष्टमी । स्त्री । भाद्रशुक्लाष्टम्याम् ॥

दूलिका । स्त्री ।
दूली । स्त्री । } नील्याम् ॥

दूषकः । त्रि । पांसने । दोषोत्पादके ॥ पुं । शालेर्जात्यन्तरे ॥ दूषयति । दुष० । णयन्तः । ण्वुल् । दोषोणा विच्यूत्वम् ॥

दूषणः । पुं । राक्षसविशेषे । रावणभ्रातृखरसेनापतौ ॥ न । दोषे ॥ दूषयति । दुषवैकृत्ये । नं० ल्युः ॥

दूषणारिः । पुं । श्रीरामे ॥

दूषिः । स्त्री । दूषिकायाम् ॥ दूषयति । दुष० । णयन्तः । दोषोणाविच्यूत्वम् । अचइः ॥

दूषिका । स्त्री । तूलिकायाम् ॥ लोचनस्थमले । पिल्लोडके । गीड इति भाषा ॥ दूषयति । दुष० । णयन्तः । ऊत्वम् । ण्वुल् ॥ यद्वा । दूषयते रचइ रिति इप्रत्ययः । ऊत्वम् । स्वार्थे कन् ॥

दूषितः । त्रि । अभिशस्ते । चारिते । वाच्ये । प्राप्तदोषे ॥

दूषिता । स्त्री । दोषप्राप्तायां कन्यायाम् । सम्बेदायाम् ॥

दूषी । स्त्री । नेत्रमले ॥ कृदिकारादक्तिनइतिङीष् ॥

दूषीका । स्त्री । दूषिकायाम् ॥ दूषयति । दुष० । णयन्तः । ऊत्वम् । कषिदूषिभ्यामीकन् ॥ स्वार्थे कन्वा ॥

दूषीविषम् । न । औषधादिभिरवीर्ये विषे । आदिना दावाग्निवायुरौद्रशोषिते विषे ॥ जीर्णं विषघ्नौषधिभि र्हतंवा दावाग्निवातातपशोषितं वा । स्वभावतोवा गुणविप्रहीनं विषं हिदूषीविषता मुपैतीतिमाधवः ॥

दूष्यम् । न । वस्त्रे ॥ वस्त्रगृहे ॥ पूये ॥ त्रि । दूषणीये ॥ यथा । दूष्यंवचो मम पुनर्निपुणं विभाव्यभावावबोधविहितोनदुनोति दोषइति ॥ दूष्यते । दुष० । णयन्तादचोयत् । दोषोणाविच्यूत्वम् ॥ दूषयितुमर्हेवा । अर्हेकृत्यतृचश्च ॥

दूष्या । स्त्री । कक्षायाम् । वरत्रायाम् । गजमध्यबन्धनरज्ज्वाम् ॥ दूष्यतेऽनया । दुष । यत् । टाप् ॥

दृकम् । न । छिद्रे ॥ इतिसंक्षिप्तसारोणादिवृत्तिः ॥

दृकाणः । पुं । द्रेक्काणे ॥

दृक्कर्णः । पुं । सर्पे ॥ दृशौकर्णावस्य ॥

दृक्काणः । पुं । द्रेक्काणे । लग्नविभागे ॥

दृक्प्रसादा । स्त्री । कुलत्थायाम् ॥ कुलत्थाञ्जने ॥

दृक्प्रिया । स्त्री । शोभायाम् ॥

दृक्श्रुतिः । पुं । सर्पे ॥

दृक्स्थितिः । स्त्री । दृष्टेःस्थैर्ये ॥ दृशःस्थितिः ॥ दृष्टिंज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् । सादृष्टिः परमोदारा न नासाग्रविलोकिनी ॥ दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् । दृष्टि स्तत्रैव कर्त्तव्या न नासाग्रविलोकिनी श्याचार्य्याः ॥

दृगध्यक्षः । पुं । सूर्ये ॥

दृग्गोलः । पुं । खगोलान्तर्गते गोलविशेषे ॥

दृग्भूः । स्त्री । सर्पे ॥ वज्रे ॥ भास्करे ॥

दृग्विषः । पुं । नागे ॥

दृढम् । न । लौहे ॥ अतिशये । नितान्ते ॥ क्रियाविशेषकत्वेऽस्लीबत्वंद्रव्यविशेषणेतुवाच्यलिङ्गता ॥ पुं । रूपकप्रभेदे ॥ यथा । दृढाख्यः स्यात्तघुदन्द्वं तालेच हंसलीलके । चतुर्दशाचरैर्युक्तः शृङ्गारे परिकीर्त्तितइति संगीतदामोदरः ॥ त्रि । स्थूले ॥ प्रगाढे । अप्रशिथिले ॥ बलवति । शक्ते ॥ कठिने ॥ दृह्यति दृंहतिस्मवा । दृहदृंहिवृद्धौ । क्तप्रत्यये । दृढः स्थूलबलयोरिति सूत्रे ढभावः तस्यढत्वम् हस्यलोपः इदितोनलोपश्चनिपात्यते ॥

दृढकण्टकः । पुं । क्षुद्रफलकवृक्षे । धौला आँकडा इतिगौडभाषा ॥

दृढकाण्डः । पुं । वंशवृक्षे ॥ न । दीर्घरोहिषके ॥

दृढकाण्डा । स्त्री । पातालगरुडीलतायाम् ॥

दृढकारी । त्रि । प्रारब्धकर्मसम्पादयितरि ॥

दृढक्षुरा । स्त्री । बल्वजायाम् ॥

दृढगात्रिका । स्त्री । मत्स्यण्ड्याम् ॥

दृढग्रन्थिः । पुं । वंशे ॥

दृढच्छदम् । न । दीर्घरोहिषके ॥

दृढतरुः । पुं । धवद्रुमे ॥

दृढतृणः । पुं । मुञ्जतृणे ॥

दृढतृणा । स्त्री । बल्वजायाम् ॥

दृढत्वक् । पुं । यावनालशरे ॥

दृढदंशकः । न । ढांगर इति प्रसिद्धे यादसि ॥

दृढनिश्चयः । त्रि । स्थिरप्रज्ञे ॥ दृढः कुतार्किकैरभिभवितुमशक्यतयास्थिरो निश्चयो ऽहमस्म्यकर्त्ताभोक्तृसंचिदानन्दाद्वितीयं ब्रह्मेत्यध्यवसायशीले संसारादुपरतेमुनौ ॥

दृढनीरः । पुं । नारिकेलवृक्षे ॥

दृढपत्रः । पुं । वंशे ॥

दृढपत्री । स्त्री । बल्वजायाम् ॥

दृढपादा । स्त्री । यवतिक्तायाम् ॥

दृढपादी । स्त्री । भूम्यामलक्याम् ॥

दृढप्ररोहः । पुं । प्लक्षवृक्षे ॥

दृढफलः । पुं । नारिकेरे ॥ दृढानि फलानि यस्य सः ॥

दृढबन्धिनी । स्त्री । श्यामालतायाम् ॥

दृढभूमिः । त्रि । विषयसुखवासनया चालयितुमशक्ये ॥

दृढमुष्टिः । पुं । खड्गादौ ॥ त्रि । कृपणे ॥ दृढामुष्टिर्यस्य ॥

दृढमूलः । पुं । मुञ्जतृणे ॥ मन्थानकतृणे ॥ नारिकेले ॥

दृढरङ्गा । स्त्री । स्फट्याम् ॥

दृढलता । स्त्री । पातालगरुड्याम् ॥

दृढलोमा । पुं । शूकरे ॥ त्रि । कठिनलोमयुक्ते ॥ दृढानि लोमानि यस्य ॥

दृढवल्कलः । पुं । पूगे ॥ लकुचे ॥

दृढवल्का । स्त्री । अम्बष्ठायाम् ॥

दृढबीजः । पुं । चक्रमर्दे ॥ बदरे ॥ बर्वुरे ॥

दृढव्रतः । त्रि । अचाल्यसङ्कल्पे । फलपर्यन्तं प्रारब्धव्रतापरित्यागशीले ॥ सर्वथाभगवानेव भजनीयः सचैवंरूपएवेतिप्रमाणजनिताऽप्रामाण्यशङ्काशून्यविज्ञाने ॥ दृढानि प्रतिपक्षैश्चालयितुमशक्यानि अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहादीनि व्रतानि नियमा यस्यसतथा । शमदमादिसाधनसम्पन्नइतियावत् ॥

दृढसन्धिः । त्रि । संहते । निश्छिद्रे ॥ दृढःसन्धिःसन्धानमस्य ॥

दृढसूत्रिका । स्त्री । मूर्वायाम् ॥

दृढस्कन्धः । पुं । क्षीरिकावृक्षे ॥

दृढाङ्गम् । न । हीरके ॥

दृता । स्त्री । जीरके ॥

दृतिः । पुं । चर्मपुटे । चर्मनिर्मितोदकादिपात्रे ॥ मत्स्ये ॥ दृणाति । दृविदारणे ॥ दृणातेर्ह्रस्वश्चेति तिः ॥ शरीरावयवविशेषे ॥ उदकनोदनचर्मयन्त्रे ॥

दृतिधारकः । पुं । आकनूपाता इति गौडभाषाप्रसिद्धे वृक्षे ॥

दृतिहरिः । पुं । पशौ ॥ दृतिंहरतीति विग्रहे दृत्युपपदाद्धरतेःपशौकर्त्तरि इन्प्रत्ययः ॥

दृन् । अ । दृढार्थे ॥ हिंसायाम् ॥

दृन्भूः । स्त्री । सर्पे ॥ चक्रसर्पे ॥ पुं । वज्रे ॥ अश्मभूपतौ ॥ तक्षसर्पजातौ ॥ कपौ ॥ सन्दर्भकर्त्तरि ॥ कथके ॥ सूर्ये ॥ दृभति । दृभीग्रन्थे । अन्दूदृन्भूजम्बितिकूप्रत्ययो निपातनान्नुम् अनुस्वाराभावोपि । हूहूवद्रूपाणि ॥ दृढशब्दउपपदेभुवःकूप्रत्ययःउप

पदरूपदृत्वादेशोनिपातनादितिमाध
वः ॥ यद्वा । दृभितिनामनमथ्यं दृढा
र्थकमुपपदम् । वर्णाभूयस्दृपमस्ये-
त्याहुः ॥

दृप्तः । त्रि । उद्धते । गर्विते ॥ दृप्यते ।
दृपहर्षविमोहनयोः । अस्मात्सृत्यर्था
कर्मकेत्यादिनाकर्त्तरि क्तः ॥

दृप्रः । त्रि । बलवति ॥ दृप्यति । दृप० ।
स्फायितञ्चीतिरः ॥

दृब्धः । त्रि । ग्रथिते ॥ दृभ्यते स्म ।
दृभीग्रन्थे । क्तः ॥

दृब्धिः । स्त्री । गुम्फे ॥

दृक् । स्त्री । दर्शने ॥ नेत्रे ॥ नेत्रेणहि
रूपं ख्याप्यते दृश्यविषादम् ॥ बुद्धौ
॥ ज्ञाने ॥ रूपंदृश्यं लोचनं दृक् त
दृश्यं दृक्तुमानसम् । दृश्याधीदृत्तयः
साक्षीदृगेव नतु दृश्यते ॥ त्रि ७ वी
क्षके ॥ अध्यक्षे ॥ ज्ञातरि ॥ पश्यति
दृशिर्प्रेक्षणे । क्विप् ॥ यद्वा । दृश्य
ते दर्शनमनयावा । सं० क्विप् । क्वि
न् प्रत्ययस्येति बहुव्रीह्याश्रयणात्
क्विप्यपिकुत्वम् । त्यदादिषुदृशः क्वि
नोविधानात् ॥ द्यक्के ॥

दृशत् । स्त्री । दृषदि ॥

दृशद्वती । स्त्री । दृषद्वत्याम् ॥

दृशा । स्त्री । चक्षुषि ॥

दृशाकाङ्क्ष्यम् । न । पद्मे ॥

दृशानः । पुं । विरोचने । सूर्ये ॥ आ
चार्ये ॥ लोकपाले ॥ न । ज्योतिषि
॥ पश्यति । दृशिर् ० । युधिबुधिदृशः
किच्चेत्यानच् ॥

दृशिः । स्त्री । चक्षुषि ॥ दर्शने ॥ गो
पीदृगुत्सवदृशिःप्रविवेशगोष्ठम् ॥

दृशिस्वरूपः । त्रि । चैतन्यघने ॥

दृशी । स्त्री । नेत्रे ॥

दृशोपमम् । न । सिताम्भोजे ॥

दृश्यम् । न । अनात्मस्वरूपे । अमेदं
शोयं ममेदंमनइत्यादिममतास्प-
दत्वेनात्मनउपसर्जनभूते स्थूलदेहा
दौ ॥ दृष्टिदर्शनंव्याप्यंदृश्यमितिप्र-
सिद्धम् ॥ त्रि । द्रष्टव्ये । दर्शनीये ॥
द्रष्टुंयोग्यम् । दृशेर्क्र्इलोपर्यंत् ॥ ऋ
दुपधाच्चाक्लृपिचृतेरितिक्यप् वा ॥

दृषत्सारम् । न । मुण्डायसे ॥

दृषद् । स्त्री । निष्पेषणशिलापट्टे । शि
ल् इति भाषा ॥ पाषाणे । प्रस्तरे ॥
दृणात्यथ । दृविदारणे । दृणातेःषु
गम्ह्रस्वश्चेत्यदिः ॥

दृषद्वती । स्त्री । नदीविशेषे ॥ दृषदः
सन्त्यस्याम् । मतुप् । झयइतिमस्यवः
॥ कात्यायन्याम् ॥

दृष्टम् । न । महीभुजां स्वपरचक्रोत्थ
भये ॥ स्वराष्ट्राच्चौराटविकादेर्भयम्
। परराष्ट्राद्दाक्षविलोपादेर्भयम् ॥ प्रति

दृष्टान्तः

विषयाध्यवसाये ॥ त्रि । साक्षात्कृते । प्रत्यक्षे । अक्षिगोचरे । ईक्षिते ॥ अग्निचित् कपिला सत्री राजा भिक्षु र्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः ॥ दृश्यते स्म । दृशिर् ० । क्तः ॥ ज्ञाते ॥ दर्शने ॥

दृष्टपृष्ठः । त्रि । पलायमाने ॥

दृष्टप्रत्ययः । त्रि । दृढविश्वासे ॥

दृष्टरजाः । स्त्री । मध्यमायाम् । प्रथमं प्राप्तरजस्कायां नार्याम् ॥ दृष्टं रजो यस्याः ॥ प्रौढायाम् ॥

दृष्टान्तः । पुं । मरणे ॥ शास्त्रे ॥ उदाहरणे ॥ प्रतिपाद्यप्रतिपादकयोर्यस्मिन्नर्थे बुद्धिसाम्यं सदृष्टान्तः ॥ तथाच गौतमसूत्रम् । लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं सदृष्टान्त इति ॥ लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षाः प्रतिपाद्यइतिफलितोर्थः । परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादकइति फलितोर्थः ॥ तथाच प्रतिपाद्यप्रतिपादकयोरितिपर्यवसन्नम् । बहुवचनंकथावहुत्वमभिप्रेत्य बुद्धेःसाध्यसाधनोभयविषयिण्याः सद्भाव विषयिण्यावा साम्य मविरोधो यस्मिन्नर्थे सोर्थोदृष्टान्तः । वादिप्रतिवादिनोःसाध्यसाधनोभयप्रकारकतद्भा-

दृष्टिः

वद्वयप्रकारकान्यतरनिश्चयविषयोदृष्टान्तइतिपर्यवसितोर्थः ॥ * ॥ अलङ्कारविशेषे । दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिविम्बनम् ॥ एतेषांसाधारणधर्मादीनां दृष्टोऽन्तोनिश्चयोयत्र सदृष्टान्तः । त्वयि दृष्ट एव तस्यानिर्वाति मनो मनोभवज्वलितम् । आलोके हि हिमांशो विकसति कुमुदं कुमुद्वत्याः ॥ एषसाधर्म्येण । वैधर्म्येणतु । तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥ * ॥ उपमाने ॥ दृष्टः अन्तोनिश्चयो यत्र ॥ दृष्टअन्तः सादृश्यबलेन प्रकृतार्थनिर्णयोयेनवा ॥

दृष्टिः । स्त्री । बुद्धौ ॥ लोचने ॥ दर्शने ॥ ज्ञाने ॥ अन्तः करणवृत्तौ ॥ चक्षुर्जन्यमनोवृत्तिश्चिद्युक्ता रूपभासिका । दृष्टिरित्युच्यते द्रष्टा दृष्टेः कर्त्तेति लौकिकैः ॥ दर्शनम् । दृशिर् ० । क्तिन् । दृश्यतेऽनयावा करणे क्तिच् ॥ * ॥ अथग्रहाणां दृष्टिकथनं यथा। तृतीये दशमेचैव पाददृष्टिरुदाहृता । अर्द्धदृष्टिस्तुनवमे पञ्चमेच प्रकीर्त्तिता ॥ चतुर्थे चाष्टमे चैवपादोना परिकीर्त्तिता । सप्तमे

परिपूर्णाच फलमेवं प्रकल्प्यते ॥ द्वितीयदशमावार्किः पश्यन् पूर्णफलप्रदः। त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमगान् कुजः ॥ सुतमदननवान्त्ये पूर्णदृष्टिः सुरारे र्युगलदशमराशौ दृष्टिपादत्रयार्कः। सहजरिपुचतुर्थेष्वऽष्टमेचार्द्धदृष्टिः स्थितिभवनमुपान्त्यं नैवदृश्यंचिराद्योः ॥ स्वस्थानञ्च द्वितीयञ्च षष्ठमेकादशं तथा। द्वादशाख्यं नपश्यन्ति शेषंपश्यन्तिते ग्रहाः ॥

दृष्टिकृत्। न। } स्थलपद्मे ॥
दृष्टिकृतम्। न। }

दृष्टिगुणः। पुं। वाणादेर्लक्ष्ये ॥

दृष्टिबन्धुः। पुं। खद्योते ॥ खाञ्जने ॥

दृष्टियोनिः। पुं। ईर्ष्यके ॥

दृष्टिविक्षेपः। पुं। कटाक्षे ॥

दृष्टिविषः। पुं। सर्पविशेषे ॥

दृष्ट्वा। अ। विलोक्येत्यर्थे ॥

दृहितः। त्रि। वृद्धिमप्राप्ते ॥

देदीप्यमानः। त्रि। जाज्वल्यमाने। अतिशयदीप्तिविशिष्टे। यःपुनःपुनरतिशयेनवा दीप्यते तत्र ॥

देयम्। त्रि। दातव्ये ॥ दातुंयोग्यम्। डुदाञ्०। अचोयत्। ईद्यतिगुणः॥ न। धनविशेषे ॥ यथा। अपरावाधमक्लेशं प्रयत्नेनार्जितं धनम्। स्वल्पं वा बहुलंवापि देयमित्यभिधीयते ॥ अपरावाधम् परपीडारहितम्। अक्लेशं पापक्लेशाजनकम् ॥

देवः। पुं। वसुरुद्रादौ। ब्रह्मविष्णुशिवसूर्याग्निगणपतिदुर्गादौ। सुरे। अमरे ॥ एतेषांवर्णायथा। आदित्याः क्षत्रियास्तेषां विशश्चमरुतस्तथा। अश्विनौचस्मृतौशूद्रौ तपस्युग्रेसमास्थितौ ॥ स्मृतास्त्वाङ्गिरसादेवा ब्राह्मणाइति निश्चयः इति ॥ ज्ञानातिशयशालिनिद्योतनात्मके आत्मनि ॥ दीव्यति क्रीडति सर्गादिभिः-विजिगीषते असुरादीन् व्यवहरति सर्वभूतेष्वात्मतया द्योतते स्तूयते स्तुत्यैः सर्वंगच्छतिवा तस्मादेवः ॥ दीव्यतेः पचाद्यच् ॥ दीव्यते स्तूयते इतिदिवेः कर्मणिघञ्वा ॥ दीव्यते क्रीडतेयस्माद्रोचते द्योततेदिवि। तस्मादेवइतिप्रोक्तः स्तूयते सर्वदैवतैः ॥ मेघे ॥ राज्ञि ॥ नाट्योक्त्याभूपाले ॥ पारदे ॥ वज्रटीके ॥ देवदारुणि ॥ न। इन्द्रिये ॥ त्रि। पूज्ये ॥ दीप्तिमति ॥

देवकः। पुं। यदुवंशीये नृपविशेषे। श्रीकृष्णस्य मातामहे ॥ दीव्यति। ण्वुल् ॥

देवकर्द्दमः। पुं। सुगन्धिद्रव्यविशेषे ॥

सनुश्रीखण्डा गुरुकर्पूरकुङ्कुमभि-श्रितैर्भवति ॥ इतिराजनिर्घण्टः ॥

देवकल्पः । त्रि । देवतुल्ये ॥ ईषदूनो-देवः । ईषदसमाप्ताविति कल्पप् ॥

देवकात्मजा । स्त्री । देवक्याम् ॥

देवकार्थ्यम् । न । देवानुद्दिश्यक्रियमाणे॥

देवकाष्ठम् । न । देवदारुणि ॥

देवकिरी । स्त्री । मेघरागस्य भार्यायाम् ॥ यथा । खण्डिता मालती गौरी नाटी देवकिरीतथा । मेघरागस्य रागिण्यो भवन्तीमाःसुमध्यमाः ॥ अस्याः स्वरूपं यथा । भ्रमन्ती नन्दने श्यामा पुष्पप्रचयतत्परा । ख्याता देवकिरीछायाकराम्बित सखीकरा ॥

देवकी । स्त्री । वसुदेवभार्यायाम् । श्रीकृष्णमातरि ॥ मथुरायां यादवेन्द्रयोः ॥ देवकामाचष्टे इति णिज न्तादचः । ततोङीष् ॥ यद्वा । देवकस्यापत्यम् । इञ् । संज्ञापूर्वकत्वात् वृद्ध्यभावः । इतोमनुष्यजाते रितिङीष् ॥ यद्वा । देवकशब्दस्तत दपत्ये लक्षणया कृत्वा पुंयोगादिति ङीष् । नचितच दाम्पत्यलक्षण एव पुंयोगः किन्त्वन्य जनक खाय पीतित्यादद्यः । अतएव प्राक्केकयीतोभरतस्ततो ऽभूदितिभट्टिः । एवं रेवतीरमणोपि ॥

देवकीनन्दनः । पुं । श्रीकृष्णे ॥ देवक्यानन्दनः पुत्रः ॥

देवकीसूनुः । पुं । श्रीकृष्णे ॥ देवक्याः सूनुः ॥

देवकुम्भा । स्त्री । महाद्रोणायाम् ॥

देवकुलम् । न । प्रासादे । देवस्य इति भाषा प्रसिद्धे आयतने ॥

देवकुल्या । स्त्री । सरिति ॥

देवकुसुमम् । न । लवङ्गे॥ देवानांकुसुमम् ॥ कुसुमेषु देवदवता । राज० ॥ देवयोग्यं कुसुमं वा । शा० ॥

देवकूटम् । न । तीर्थविशेषे ॥

देवखातः । पुं । न । अकृत्रिमजलाशये ॥ देवेनखातः ॥ देवतारस्यजलाशये । देवसम्बन्धिखेन प्रसिद्धे सरसि ॥ स्त्री । न । गुहायाम् ॥

देवखातकम् । न । अखाते देवखाते ॥ देवे न खातम् । स्वा० कः ॥

देवखातबिलम् । न । गुहायाम् ॥

देवगन्धा । स्त्री । महामेदायाम् ॥

देवगर्भा । स्त्री । कङ्कालपीठाधिष्ठात्र्यां देवतायाम् ॥

देवगान्धारी । स्त्री । श्रीरागस्य भार्यायाम् ॥ यथा । गान्धारी देवगान्धारी मालवश्रीस्तसारवी । रामकीर्यपि रागिण्यःश्रीरागस्यप्रियाइमे ॥ अस्या । गानसमयःशिशिरर्तौ तृतीयप्रहरा

वधिरात्र्यर्द्धपर्य्यन्तमिति गानविदः ॥

देवगायनः । पुं । गन्धर्व्वे ॥

देवगिरिः । पुं । भारतवर्षस्य शैलविशेषे ॥

देवगिरी । स्त्री । रागिणीविशेषे ॥ सा च सोमेश्वरमते वसन्तरागस्यभार्य्या वसन्तर्त्तौचसदा गेया । भरतमते हिन्दोलरागपुत्रस्य नागध्वने भार्य्या ॥ सङ्गीतदर्पणमतेतु नटकल्याणभार्य्या ॥ अस्याः स्वरूपं यथा । अत्यभिरामतनुः उत्तुङ्गपीनस्तनी शारकटभूषणा स्त्रीपङ्क्तिमध्यस्था मत्तचकोरनयना सुभङ्ग्यङ्गीच । अस्या गानसमयो हेमन्ते दिवाचतुर्थप्रहरावधिरात्र्यर्द्धपर्य्यन्तम् ॥

देवगुरुः । पुं । सुराचार्य्ये ॥ देवानांगुरुः॥

देवगुह्यम् । न । मरणे ॥ तद्धि प्राणिनां वैराग्यानुदयाय देवैर्गोप्यते ॥

देवगृहम् । न । देवालये ॥ सूर्य्यचन्द्रादीनां ज्योतिर्मण्डलेषु ॥

देवचिकित्सकौ । पुं । अश्विनीकुमारयोः ॥ इति हलायुधः ॥

देवच्छन्दः । पुं । शतयष्टिहारे ॥ देवैश्छन्द्यते । छदि० । घञ् ॥

देवजग्धम् । न । देवजग्धके ॥

देवजग्धकम् । न । कत्तृणे ॥ देवैरद्यते स्म । अद० । क्तः । अदोजग्धिर्ल्यप्तिकिति ॥

देवजनविद्या । स्त्री । गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानेषु ॥

देवटः । पि । शिल्पिनि ॥ दीव्यति । दिवु० । शकादिभ्योऽटन् ॥

देवट्टी । स्त्री । गङ्गाचिल्लयाम् ॥

देवतरुः । पुं । मन्दारादिवृक्षेषु ॥ पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्चपुंसिवा हरिचन्दनम् ॥ देवानां तरुः ॥ चैत्यवृक्षे ॥

देवता । स्त्री । अमरे । सुरे ॥ देवएव । स्वार्थे तल् ॥ विष्ण्वादिप्रतिमायाम् ॥ त्यज्यमानद्रव्ये उद्देश्यविशेषे ॥ ॥ मन्त्रस्तुत्यायाम् ॥ तस्याः सङ्ख्या यथा । सदाराविबुधाः सर्वेस्वानांस्वानांगणैःसह । त्रैलोक्येततत्र्यस्त्रिंशत्कोटिसंख्या यथाभवेति पाद्मोत्तरखण्डम् ॥

देवताडः । पुं । सैंहिकेये । राहौ ॥ जीमूते । खरायाम् । देताडा इति गौडभाषा प्रसिद्धे वृक्षे ॥ अग्नौ ॥ देव मिन्द्रियं ताडयति । तडआघाते । कर्मण्यण् ॥

देवताडकः । पुं । देवताडे ॥ स्वार्थेकः॥

देवताधिपः । पुं । इन्द्रे ॥

देवत्वम् । न । देवभूये । देवसायुज्ये ॥

देवस्वभाव: कर्मवा । तत्स्वभावस्वतत्वौ ॥

देवदण्डा । स्त्री । नागवल्लायाम् ॥

देवदत्त: । पुं । अर्जुनस्य शङ्खे ॥ बुद्धानुजे ॥ जृम्भणकरे वायुविशेषे ॥ विजृम्भणे देवदत्त: शुद्धस्फटिकसन्निभ: ॥ देवाएनं देयासु: । क्तिच्क्तौचसंज्ञायामिति आशिषिक्त: । दोदद्घोरिति दथादेश: ॥ चि । सुरार्पिते ॥ देवायदत्त: ॥ ग्रामविशेषे ॥

देवदत्ताग्रज: । पुं । बुद्धे । शाक्यमुनौ॥

देवदानी । स्त्री । इस्तिघोषायाम् ॥

देवदारु । न । स्वनाम्नाप्रसिद्धे वृक्षविशेषे । भद्रदारुणि । पूतिकाष्ठे ॥ देवस्यदारु ॥ देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकिच । विवन्धाध्मानशोथामतन्द्राहिक्काज्वरास्रजित् ॥ प्रमेहपीनसश्लेष्मश्वासकण्डुसमीरनुत् ॥ पुं । यथा । अमुंपुर: पश्यसि देवदारुमितिरघु: ॥

देवदालिका । स्त्री । महाकाले ॥

देवदाली । स्त्री । लताविशेषे । जीमूतके । कर्कटफलायाम् । घघरबेल इतिसोनैया इतिच भाषा ॥ देवदाली रसेतिक्ता कफार्श: शोफपाण्डुता: । नाशयेद्वामनी तिक्ता क्षयहिध्माकृमिज्वरान् ॥ देवदालीफलं तिक्तं कृमिश्लेष्मविनाशनम् । स्रंसनं गुल्मशूलघ्नं मर्शोघ्नं वातजित् परम् ॥ * ॥ देवदालीदलं तक्रे स्वेदितं खण्डितं भृशम् । वेसवारयुते साज्ये भर्जितं हिङ्गुना दृढम् ॥ पीतापराखरस्पर्शा विषघ्नीगरनाशिनी ॥ इत्यपरा देवदाली ॥

देवदासी । स्त्री । वनवीजपूरे ॥ वेश्यायाम् ॥

देवदीप: । पुं । लोचने ॥

देवदुन्दुभि: । पुं । गन्धपर्णासे । सरक्ततुलस्याम् ॥ देवानां दुन्दुभिवाद्ये ॥

देवदूती । स्त्री । अम्लयम्लायाम् । वनवीजपूरके ॥

देवदेव: । पुं । शिवे । महेश्वरे ॥ ब्रह्मणि ॥ देवानां देवेषुवादेव: ॥

देवदेवाधिप: । पुं । नैमिषेशम्भौ ॥

देवद्रोणी । स्त्री । देवयात्रायाम् ॥

देवद्र्यङ् । चि । देवपूजके ॥ देवान् अञ्चति । अच्चु० । ऋत्विगादिनाक्विन् । विष्विग्देवयोरित्यद्र्यादेश: ॥

देवधनम् । न । देवस्वे ॥

देवधान्यम् । न । जूर्णाह्वये । योनले । वीजपुष्पिकायाम् । जुन्हरी इति जुवार इतिच भाषा ॥

देवधूप: । पुं । गुग्गुलौ ॥ राले ॥

देवन: । पुं । पाशके ॥ दीव्यतेऽनेन-

। दिवु० । भावकरणादैाल्युट् ॥ न । व्यवहारे ॥ जिगीषायाम् ॥ क्रीडा याम् ॥ कीलोद्याने ॥ पद्मे ॥ दीप्तौ ॥

देवनदी । स्त्री । गङ्गायाम् ॥ यमुनायाम् ॥

देवनन्दी । पुं । शक्रद्वारपाले ॥

देवनलः । पुं । नलोत्तमे । महानले ॥

देवना । स्त्री । क्रीडायाम् ॥ सेवायाम् ॥

देवनालः । पुं । स्थूलदण्डे । देवनले ॥

देवनिर्म्मिता । स्त्री । गुडूच्याम् ॥

देवपतिः । पुं । इन्द्रे ॥

देवपत्नी । स्त्री । मध्वालुके ॥ देवनार्याम् ॥

देवपथः । पुं । सुराध्वनि । छायापथे । सोमधारायाम् ॥ देवैरर्षिरादिभि र्गमयितृत्वेनाधिकृते रूपलक्षितःपन्था देवपथउच्यते ॥ देवानांपन्थाः । ऋक्पूरित्यः ॥ न । तीर्थविशेषे ॥

देवपरः । त्रि । मूर्खे ॥ यज्ञविष्ये ॥ देवःपरःउत्कृष्टोस्य ॥

देवपर्णम् । न । सुरपर्णे ॥

देवपुत्रिका । स्त्री । पृक्कायाम् ॥

देवपुत्री । स्त्री । देवकन्यायाम् ॥ पृक्कायाम् ॥

देवपूः । स्त्री । अमरावत्याम् ॥

देवपुरी । स्त्री । अमरावत्याम् ॥ देवानांपुरी ॥

देवपुरोधाः । पुं । बृहस्पतै ॥

देवप्रश्नः । पुं । उपश्रुतै । ग्रहनक्षत्रा दिघटितजिज्ञासायाम् ॥

देवप्रियः । पुं । पीतभृङ्गराजे ॥ बकपुष्पे ॥

देवबला । स्त्री । त्रायमाणायाम् ॥ सहदेव्याम् ॥

देववल्लभः । पुं । पुन्नागवृक्षे ॥

देवब्रह्मा । पुं । नारदमुनै ॥

देवब्राह्मणः । पुं । देवपूजकेब्राह्मणे ॥ शा०मध्यमपदलोपः ॥

देवभवनम् । न । बोधिद्रुमे । अश्वत्थे ॥ नाके । स्वर्गे ॥ देवानां भवनम् ॥

देवभूः । पुं । देवे ॥ स्वर्गे ॥

देवभूतिः । स्त्री । मन्दाकिन्याम् ॥ सुरैश्वर्ये ॥

देवभूयम् । न । देवत्वे । देवसायुज्ये ॥ देवस्य भावः । भुवोभावइतिक्यप् ॥

देवमणिः । पुं । भर्गे । हरे । शिवे ॥ अश्वस्यकण्ठावर्त्ते । अश्वरोमावर्त्ते ॥ आवर्त्तोरोमजोदेवमणिस्त्वेषनिगद्यते ॥ विष्णुवक्षोमणौ । कौस्तुभे ॥ महामेदायाम् ॥

देवमाता । स्त्री । अदित्याम् ॥ देवानांमाता ॥

देवमातृकः । पुं । दृष्ट्यम्बुसम्पन्नव्री हिपालिते देशे ॥ देवो माताऽस्य

। नद्यृतश्चेतिकप् ॥

देवमानक: । पुं । कौस्तुभमणौ ॥

देवमास: । पुं । गर्भाष्टमे । गर्भस्याष्टमे मासि ॥ मनुष्यमानेनचिंशद्वर्षात्मके देवानांमासे ॥

देवयजनम् । न । यज्ञभूमौ ॥ कुरुक्षेत्रे ॥ देवा ईज्यन्ते यस्मिन् ॥

देवयजि: । पुं । देवपूजके । मुनौ ॥

देवयज्ञ: । पुं । होमे । देवोद्देश्यक यागे ॥

देवयाजी । त्रि । कामनापुरस्सरं देवान् यजमाने । य:फलकामनयादेवानयजते स: ॥ देवयाजिभ्यआत्मयाजीश्रेयान् ॥

देवयात्रा । स्त्री । देवद्रोण्याम् । देवगमने ॥ देवोत्सवादौ ॥

देवयान: । पुं । न । विद्यावतोमार्गविशेषे । तद्यइत्थंविदुरितिविद्या तया प्रतिपत्तव्येपथि ॥ न । देवरथे । देवविमाने ॥

देवयानी । स्त्री । शुक्राचार्यस्यपुत्र्याम् । ययातेर्न्वपस्यपत्न्याम् ॥

देवयु: । त्रि । धार्मिके ॥ लोकयात्रिके ॥ पुं । देवे ॥ देवान् याति । याप्रापणे । म०कु: ॥

देवयोनि: । पुं । विद्याधरादिषु ॥ तेचदश । यथा । विद्याधरोऽप्सरोयक्ष रक्षोगन्धर्वकिन्नरा: । पिशाचो गुह्यक: सिद्धो भूतोऽमीदेवयोनय: ॥ देवोयोनि: उत्पत्तिस्थानंयस्य स: इवार्थाद्यर्थ: ॥

देवर: । पुं । देवरि । पतिभ्रातरि ॥ देवते । देवृदेवने । अर्त्तिकमिभ्रमीच्यरश्चित् ॥ पत्यु:कनिष्ठभ्रातरि इतिस्वामी । ज्येष्ठस्तुश्वशुरएवेतिसुभूत्यादय: ॥ पतिश्वशुरताज्येष्ठे पतिदेवरतानुजे । इतरेषुतुपांश्वाल्याश्वितयं चितयं मतम् ॥

देवरथ: । पुं । पुष्पकादौदेवानांविमाने ॥

देवराज: । पुं । इन्द्रे । मरुत्वति ॥ देवानांराजा । राजाह:सखिभ्यष्टच् ॥

देवरात: । पुं । परीक्षिति । अभिमन्युसुते न्टपतिलके ॥

देवर्षि: । पुं । नारदादिषु ॥ देवाएवसन्तो ये मन्त्रदर्शित्वेन ऋषित्वं प्राप्ता स्तेदेवर्षयउच्यन्ते ॥ सप्तगोदावरतीर्थदेवे ॥

देवल: । पुं । मुन्यन्तरे । व्यासशिष्येधौम्यर्षेर्ज्येष्ठभ्रातरि ॥ देवरे ॥ देवाजीवे ॥ धार्मिके ॥ सुरर्षौ ॥ दीव्यति । दिव० । वृषा०कल: ॥ देवाम् जीविकार्थंलाति आदत्ते । लाआदाने । आतोनुपेतिक: ॥

देवलकः । पुं । वर्त्तनार्थत्वेनप्रतिमापरिचारके । पुजारी इतिभाषा ॥ चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा । विपणेनचजीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥ देवकोषोपजीवी चनाम्नादेवलकोभवेत् ॥ स्वा०कः ॥

देवलता । स्त्री । नवमल्लिकायाम् ॥

देवलाङ्गुलिका । स्त्री । वृश्चिकाल्याम् ॥

देवलोकः । पुं । स्वर्गे ॥ भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोथ महर्जनः । तपः सत्यञ्च सप्तैतेदेवलोकाःप्रकीर्त्तिता इतिमत्स्यपुराणम् ॥

देववक्त्रम् । न । वह्नौ ॥ देवानांवक्त्रम् ॥

देववर्द्धकिः । पुं । विश्वकर्मणि ॥

देववल्लभः । पुं । पुन्नागे । गुर्जरदेशे सन्देशरा इतिप्रसिद्धे ॥ देवानांवल्लभः ॥

देववित् । त्रि । देवताकाण्डीये ॥ सचेत्थंकल्पयति । अग्नीन्द्रादयोदेवास्तत्तत्फलदातारो नेश्वर स्तथेति । एतच्चकल्पनामात्रम् । अस्मदादिप्रयात्नमपेक्ष्य फलदातृत्वे तेषां भृत्येभ्यो विशेषाभावप्रसङ्गात् । स्वातन्त्र्येणोपकारकत्वे तदाराधनवैयर्थ्यात् । तद्भक्तानामपि विप्रतिपत्तिदर्शनात् तत् प्रसादस्याकिञ्चित्करत्वात् ॥

देवविद्या । स्त्री । निरुक्ते ॥

देववृक्षः । पुं । सप्तपर्णे ॥ मन्दारादिदेवतरौ ॥ गुग्गुलौ ॥ देवानां वृक्षः ॥

देवव्रतः । पुं । भीष्मपितामहे ॥ भीष्मोहि पितरि शन्तनौ मृते स्वस्य राज्याधिकारसत्त्वेपि पितरं शन्तनुं प्रतिनाहं राज्यं विवाहं वा करिष्यामि त्वं सत्यवतीं वृणु इतिसत्यवती विवाहसमये प्रतिज्ञातत्वाच्चित्राङ्गदं सत्यवतीज्येष्ठपुत्रमेव राज्येस्थापयामास-तादृशसत्यरूपस्य देवानां व्रतस्य परिपालनाद्देवव्रतनामा भवत् इति पुराणप्रसिद्धेः ॥ देवानां व्रते ॥

देवशेखरः । पुं । दमनके ॥

देवश्रुतः । पुं । ईश्वरे ॥ शास्त्रे ॥ नारदे ॥

देवश्रेणी । स्त्री । मूर्वायाम् ॥

देवसखः । पुं । पर्वतान्तरे ॥

देवसभा । स्त्री । सुधर्मायाम् ॥ सद्भान्यस्याम् । सभाराजेतिनिपातनादङ् । देवानां सभा आस्थानगृहम् ॥

देवसभ्यः । त्रि । क्रीडासंसक्ते । सभिके ॥

देवसर्षपः । पुं । वृक्षविशेषे । अश्वाक्षे । रक्तमूलके । सूक्ष्मदले ॥ इ०रानि० ॥

देवसहा । स्त्री । दण्डोत्पलौषधौ ॥ भिक्षासूत्रे ॥

देवसात् । अ । देवाधीने ॥ देवदेये ॥

देवसायुज्यम् । न । देवभूये । देवत्वे॥ युनक्ति । युजिर्० । इगुपधेतिकः। युजेनसह । तेनसहेति वहुव्रीहिः । वोपसर्जनस्येतिसहस्यसः ॥ यद्वा। योजनंयुक् । सं० क्विप् । सहयुजा सयुक् । सयुजस्य सयुजोवा भावः । ब्रा० ष्यञ् । देवस्य सायुज्यम् ॥

देवसृष्टा । स्त्री । मद्ये ॥ इतिहेमचन्द्रः ॥ देवेन सृष्टा ॥

देवसेना । स्त्री । मातृकाविशेषे। इन्द्रस्य सुतायाम् । षष्ठ्याम् । स्कन्दस्य पत्न्याम् ॥ षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता ॥ देवतानां सेनायाम् ॥

देवसेनापतिः । पुं । स्कन्दे ॥

देवस्वम् । न । यज्ञशीलानां धने ॥ यदुक्तं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥ प्रतिमादिदेवतार्थमुत्सृष्टधने ॥ देवानां स्वम् । ब्रह्मस्वञ्च गुरोर्द्रव्यं देवस्वञ्चापरेत्तयः । कन्यां ददातिशुल्केन सप्तेतो जायते सुत इतिमहाभारते पञ्चप्रेतोपाख्यानम् ॥

देवहूः । पुं । वामकर्णे । पितृहूर्दक्षिणः कर्णो उत्तरोदेवहूः स्मृतः ॥

देवहूतिः । स्त्री । स्वायम्भुवमनोःकन्यायाम् ॥ यथा । आकूतिः प्रथमाकन्या द्वितीयादेवहूतिका । तृतीयाचप्रसू तिर्द्विविख्याताल्लोकपाविनी ॥

देवह्रदः । पुं । तीर्थविशेषे ॥

देवा । स्त्री । चारुख्यामोषधौ ॥ अशनपर्ण्याम् ॥

देवागारिकः । त्रि । देवागारे नियुक्ते॥ अगारान्ताट्ठन् ॥

देवाजीवः । त्रि । देवले । प्रतिमापरिचारके । पुजारीब्राह्मन् इति भाषा ॥ देवआजीवो ऽस्य ॥

देवाजीवी । त्रि । देवले ॥ देवैराजीवितुंशीलमस्य । सुप्यजातौणिनिः ॥

देवाटः । पुं । हरिहरक्षेत्रे ॥ देवानामटनाच्चैवदेवाट इतिसंज्ञितम् ॥

देवात्मा । पुं । अश्वत्थवृक्षे ॥

देवानाम्प्रियः । पुं । छागे ॥ त्रि । मूर्खे ॥ मूर्खाहि देवानां प्रीतिंजनयन्ति देवपशुत्वात् ॥ षष्ठ्या अलुक् ॥

देवापिः । पुं । असुरविशेषे ॥ देवानाप्नोति । आप्लृ० । फलेग्रहिरात्मम्भरिश्चेतिचकारादिन् ॥ प्रतीपराजस्यपुत्रे ॥ ससुमेरुसमीपे कलापग्रामे योगीभूत्वा आस्ते । सकलौ सूर्यं च न्द्रवंशं पुनः सत्ययुगे भावयिष्यति ॥

देवाभीष्टा । स्त्री । ताम्बूल्याम् ॥

देवायतनम् । न । देवालये ॥ न देवायतनं गच्छेत् कदाचिद्वा ऽप्रदक्षिण

म् । नपीडवेष्टा वस्त्राणि नदेवायत नेष्वपीतिकूर्मपुराणम् ॥

देवायुधम् । न । शक्रधनुषि ॥ देवानामस्त्रे ॥

देवाराति: । पुं । दैत्ये ॥

देवार्य्य: । पुं । वर्द्धमानाख्ये ऽर्हद्भेदे ॥

देवार्हम् । न । सुपर्णे । त्रि । देवयोग्ये ॥

देवार्हा । स्त्री । सहदेवीलतायाम् ॥

देवालय: । पुं । देवगृहे ॥ देवस्यालय: ॥ स्वर्गे ॥ देवानामालय: ॥

देवाला । स्त्री । रागिणीविशेषे ॥

देवावास: । पुं । अश्वत्थवृक्षे ॥

देवाश्व: । पुं । इन्द्रस्याश्वे । उच्चै:श्रवसि ॥

देविका । स्त्री । सरिद्भेदे ॥ दीव्यति । दिवु० । ण्वुल् ॥ अर्द्धयोजनविस्तारां पञ्चयोजनमायताम् । एतावद्देविकामाहुर्देवर्षिपरिषेवितामिति-पाद्मे भूमिखण्डम् ॥ धुस्तूरे ॥

देविल: । त्रि । धार्मिके ॥ अनुकम्पितो देवदत्त: । घनिलचौचेतीलच् ॥

देवी । स्त्री । कृताभिषेकायाम् । महिष्याम् ॥ नटीक्षाभिषिक्ताऽन्यपत्न्याम् ॥ पृक्कायाम् ॥ मूर्वायाम् ॥ आदित्यभक्तायाम् ॥ लिङ्गिन्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ शालिपर्ण्याम् ॥ महाद्रोणायाम् ॥ पाठायाम् ॥ नागरमुस्तायाम् ॥ मृगेर्वारौ ॥ हरीतक्याम् ॥ अतस्याम् ॥ श्यामानामपक्षिजातौ ॥ दुर्गायाम् । पार्वत्याम् ॥ देव्या: पादोदकमाहात्म्यमुक्तं देवीभागवते । सकृत्कृत्वा महापूजां देवीपादजलं पिबन् । नजातुजननीगर्भगच्छेदिति विनिश्चयइति । दीव्यति यद्वा । देवयतिसर्वान् ॥ प्रवृत्तिनिवृत्त्युपदेशेनयथाधिकारंव्यवहारयति । दिवु० । पचाद्यौ देवडितिनिपातनान्ङीप् ॥ सामान्यतोदेवपत्न्याम् ॥ ब्राह्मणक्षत्रीनामोपपदे ॥ देवेत्यन्ताक्षत्रियोमता: ॥ देव्यन्ता क्षत्रिया: सर्वे दास्यन्ता: शूद्रयोनय: ॥

देवीकोट: । पुं । बाणपुरे ॥

देवीभक्त: । त्रि । शाक्ते ॥ यथा । अपराधं परंकृत्वा देवीभक्तस्य कोजन: । सुखं लभेत यद्दिभवेत् स्थानाच्चि व:स्वर्गमितिभागवतम् ॥

देवृ । पुं । देवरे ॥ दीव्यति । दिवु० । दिवेर्ऋ: । देवरौ देवर: इत्यादिपितृवत् ॥

देवेज्य: । पुं । बृहस्पतौ ॥ देवानामीज्य: ॥

देवेश: । पुं । श्रीसदाशिवे ॥ देवानामिन्द्रादीनामीशोनियन्ता ॥ विष्णौ ॥

देवेशी । स्त्री । दुर्गायाम् ॥

देवेष्ट: । पुं । गुग्गुलौ ॥ महामेदायाम्

। त्रि । देववाञ्छिते ॥

देवेष्टा । स्त्री । वनवीजपूरके ॥

देवोद्यानम् । न । सुपर्वणां क्रीडाकाननेषु ॥ तानिच नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमितिचत्वारि देवोद्यानानि भवन्ति ॥ देवोद्यानानि वैभ्राजं मिश्रकं सिश्रकावणम् । चैत्ररथञ्चेति त्रिकाण्डशेषः ॥

देशः । पुं । भूगोलभागविशेषे । कुरुपञ्चालादिविषये । जनपदे । नीवृति ॥ स्थानमात्रे । सचत्रिविधः । जाङ्गलोऽनूपः साधारणश्चेति । एतन्मध्येपि देवेशि देशभेदाह्यनेकशः । कोटिशःसन्तिदेवेशि एते मुख्याःप्रकीर्त्तिताः ॥ एतन्मध्येषट्पञ्चाशन्मध्ये । एतेमध्यप्राच्यादिदेशास्त्वर्थः ॥ दिशति । दिश० । पचाद्यच् ॥

देशकः । त्रि । शास्तरि ॥ इतिहेमचन्द्रः ॥

देशकारी । स्त्री । रागिणीविशेषे ॥

देशपरिच्छिन्नः । त्रि । मूर्त्तत्वेन सर्वदेशावर्त्तिनि ॥

देशरूपम् । न । उचिते । समञ्जसे ॥ दिशअतिसर्जने । घञ् । देशोरूपमस्य । दिश्यमानस्योचितस्यरूपम् ॥ यद्वा देशनम् । घञ् । प्रशस्तं देशनं वा । प्रशंसायां रूपप् ॥

देशाखी । स्त्री । रागिणीविशेषे ॥

देशान्तरम् । न । सुमेरुलङ्कयोर्मध्यरेखास्वरूपदेशस्वदेशयोरन्तरयोजने ॥ देशान्तरपरिभाषायां वृद्धमनुः । प्राचीगश्चिमिभयन्ते गिरिर्वाव्यवधायकः । महानद्यन्तरं यच्च तद्देशान्तरमुच्यते ॥ देशनामनदीभेदान्निकटोपिभवेद्यदि । तत्तुदेशान्तरं प्रोक्तंस्वयमेवस्वयम्भुवा ॥ दशरात्रेणया वार्त्ता यत्रनश्रूयतेऽथवेति वृहस्पतिः ॥ देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्येके त्रिंशदेकेतथैवचेति ॥

देशिकः । पुं । मूलमन्त्रप्रदे श्रीगुरौ ॥ यथा । शरणं नहि मम जननी न पिता न सुता न सोदरा नान्ये । परमं शरण मिदमेव चरणं मम मूर्द्ध्नि देशिकन्यस्तमित्याचार्याथो ॥ त्रि । पथिके ॥ देश्ये ॥

देशितः । त्रि । उपदिष्टे ॥

देशी । पुं । गानप्रकारे । क्वचिद्देशविशेषे गीयमाने ॥

देशिनी । स्त्री । तर्जन्याम् ॥

देशी । स्त्री । रागिणीविशेषे ॥

देश्यम् । न । पूर्वपक्षे ॥ त्रि । देशार्हे ॥

देष्णः । त्रि । दातरि ॥ दुर्दमे ॥ ददाति । डुदाञ्० । गादाभ्यामिष्णुच् ॥

देहः । पुं । न । काये । शरीरे ॥

सच स्थूलसूक्ष्मकारणभेदात् त्रिविधो भवति ॥ मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ । देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपिसः ॥ स्मृ ॥ दिह्यते । दिह० । घञ् ॥ न्यायमते पृथिव्यादेर्देहं योनिजमयोनिजञ्च । योनिजं जरायुजमण्डजञ्च । अयोनिजं स्वेदजोद्भिदादिकम् । नारकिणां शरीरमप्ययोनिजम् । जलीयंदेह मयोनिजं वरुणलोकेप्रसिद्धम् । तैजसंदेहमयोनिजं सूर्यलोके प्रसिद्धम् । वायोर्देहमयोनिजं तद्देव पिशाचादीनामितिसिद्धान्तमुक्तावली ॥

देहकः । पुं । देहे ॥ स्वार्थे संज्ञायांवा कन् ॥

देहकोषः । पुं । पक्षे । पङ्खा इतिभाषा ॥ इ० श० चं० ॥

देहक्षयः । पुं । कायनाशे ॥ रोगे ॥ देहस्यक्षयः येनवा ॥

देहदः । पुं । पारदे ॥

देहदुर्गन्धता । स्त्री । शरीरदौर्गन्ध्ये ॥ तन्नाशकौषधं यथा । अर्जुनस्यतु पुष्पाणि जम्बुपत्रयुतानिच । सलोध्राणिच तल्लेपो देहदुर्गन्धतांहरेदिति गारुडे १९४ अध्यायः ॥

देहद्वयम् । न । स्थूलसूक्ष्मलक्षणे ॥ देहयोर्द्वयम् ॥

देहधारकम् । न । अस्थि ॥

देहधिः । पुं । पक्षे । पङ्खा इतिभाषा ॥

देहभुक् । पुं । वायौ ॥

देहनाशः । पुं । प्राणे ॥

देहभृत् । पुं । जीवे ॥ मनुष्योहं ब्राह्मणोहं गृहस्थोहमित्याद्यभिमानेनावाधितेन देहंकर्माधिकारहेतुवर्णाश्रमादिरूपं कर्तृत्वभोक्तृत्वाद्याश्रयं स्थूलसूक्ष्मशरीरेन्द्रियसङ्घातं विभर्त्ति अनाद्यविद्यावासनावशात् व्यवहारयोग्यत्वेन कल्पित मसत्यमपि सत्यतया स्वभिन्नमपिस्वाभिन्नतया पश्यन् धारयति पोषयतिचेति देहभृत् । डुभृञ्० । क्विप् तुक् ॥ विवेकज्ञानशून्ये अविद्यावति कर्तृत्वाभिमानिनि ॥ सत्रिविधः । रागादिदोषप्राबल्यात् काम्यनिषिद्धादियथेष्टकर्मानुष्ठायी मोक्षशास्त्रानधिकारीकः १ । अपरस्तु यः प्राकृतः सुकृतवशात् किञ्चित्प्रक्षीणरागादिदोषः सर्वाणिकर्माणित्यक्तुमशक्नुवन् निषिद्धानि काम्यानिचपरित्यज्य नित्यानि नैमित्तिकानिचकर्माणि फलाभिसन्धित्यागेनसत्त्वशुद्ध्यर्थमनुतिष्ठन् गौणसन्न्यासी मोक्षशास्त्राधिकारीद्वितीयः २ । ततोनित्यनैमित्ति

कर्मानुष्ठानेनाप्तः करणशुद्ध्यासमुपजातविविदिषः श्रवणादिना वेदनं मोक्षसाधनं सम्पिपादयिषुः सर्वाणि कर्माणि विधितः परित्यज्य ब्रह्मनिष्ठं गुरुमुपसर्पतिविविदिषासन्न्यासि समाख्यस्तृतीयः ३ ॥

देहयात्रा । स्त्री । यमपुरीगमने । मरणे ॥ भोजने ॥ देहस्य यात्रा ॥

देहला । स्त्री । मद्ये ॥ इतिशब्दचन्द्रिका ॥

देहलिः । स्त्री । देहल्याम् ॥

देहलिकाश्रमम् । न । अश्वादेव्यधिष्ठिते पिठविशेषे ॥

देहली । स्त्री । गृहावग्रहण्याम् । द्वारपिण्ड्याम् । देहल इतिभाषा ॥ देहनम् । दिह० । भावेघञ् । देहंलाति । ला० । आतोनुपेतिकः । गौ० ङीष् ॥

देहसाम्यम् । न । अङ्गसमत्वे ॥ अङ्गानां समतां विद्यात् समे ब्रह्मणि लीयते । नोचेन्नैवसमानत्वमृजुत्वं शुष्कवृक्षवत् ॥

देहसारः । पुं । मज्जनि ॥

देहातीतः । पुं । घटादिवद्देहद्रष्टृत्वेन देहविलक्षणेआत्मनि ॥

देहात्मवादी । त्रि । चार्वाके ॥ तस्येदमतम् । शरीरमेवात्मा प्रज्वलितगृहात् स्वपुत्रं परित्यज्यापि स्वस्यनिर्गमदर्शनात् स्थूलोहं कृशोहमित्यनुभवाच्चेति ॥ देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताः । इति भाष्यम् ॥

देहाध्यासः । पुं । मनुष्योहं कृष्णोहं गौरोहमित्यादिबुद्धौ ॥ देहे अध्यासः ॥

देहिका । स्त्री । कीटविशेषे । उपादिके । उपजिह्विकायाम् ॥

देही । त्रि । देहवति । शरीरिणि । देहतादात्म्याध्यासापन्नेजीवे ॥ देहाः सर्वभूतभविष्यद्वर्त्तमाना जगन्मण्डलवर्त्तिनो ऽस्यसन्तीतितथा । एकस्यैवविभुत्वेन सर्वदेहयोगित्त्वाल्लिङ्गदेहोपाधिरात्मादेहीत्युच्यते ॥ देहभिन्नात्मदर्शिनि ॥ सच प्रवासीव परगेहे तत् पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्नहङ्कारममकारशून्यस्तिष्ठति । अज्ञोहिदेहतादात्म्याभिमानाद्देहएवनतुदेही सचदेहाधिकरणमेवात्मनो ऽधिकरणं मन्यमानो गृहे भमा वासनेवा ह्मासे इति मन्यते नतुदेहमास इति ॥ * ॥ न्यायमते अस्य गुणाययथा । बुद्ध्यादिषट्कंसङ्ख्यादि पञ्चकं भावनातथा । धर्माधर्मौ गुणाएते आत्मनः स्युश्चतुर्दश ॥ अयमिन्द्रियाद्यधिष्ठाता पुण्यपापाश्रयः । ज्ञानसुखादियोगवान

सप्रत्यक्षविषयः। पादेशादौ प्रवृत्त्यादिना ऽनुमेयः। अहमित्याकारप्रत्ययाश्रयः। मनोमात्रस्य गोचरः। विभुः परममहत्त्ववान्। इति भाषापरिच्छेदः॥

दैत्यम्। न। दीक्षायाम्भवे मौञ्ज्यादिकर्मणि॥

दैतेयः। पुं। असुरे। दैत्ये॥ दित्या अपत्यम् इत्यर्थे ङीषन्तात् स्त्रीभ्यो ढक्॥

दैत्यः। पुं। असुरे॥ दितेरपत्यमित्यर्थे दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः॥

दैत्यगुरुः। पुं। उशनसि। शुक्रे॥ दैत्यानां गुरुः॥

दैत्यदेवः। पुं। वरुणे॥ वायौ॥

दैत्यनिसूदनः। पुं। विष्णौ॥

दैत्यपुरोधाः। पुं। } शुक्रे॥
दैत्यपुरोहितः। पुं। }

दैत्यमाता। स्त्री। दितौ॥

दैत्यमेदजः। पुं। गुग्गुलौ॥ इ०रानि०॥

दैत्यमेदजा। स्त्री। भूमौ॥

दैत्ययुगम्। न। असुराणांयुगे॥ तद्देवपरिमाणेन द्वादशसहस्रवर्षाणि। मनुष्यमानेन चतुर्युगसङ्ख्यम्॥ इतिशब्दार्थकल्पतरुः॥

दैत्या। स्त्री। मुरायाम्॥ चण्डौषधौ॥ मद्ये॥ दैत्यभार्यायाम्॥ दितेरियम्। यञन्ताट्टाप्॥

दैत्यारिः। पुं। देवमात्रे॥ विष्णौ॥ दैत्यानामरिः॥

दैत्याहोरात्रः। पुं। मानवानां वर्षे॥ इतिशब्दार्थकल्पतरुः॥

दैनन्दिनम्। त्रि। दिनेदिने भवे॥

दैनिकी। स्त्री। दिनभृतौ। एकदिनकर्ममूल्ये॥ इतिशब्दमाला॥

दैन्यम्। न। दीनत्वे॥ कार्पण्ये॥

दैर्घ्यम्। न। आयामे। दीर्घत्वे॥ दीर्घस्य भावः। ष्यञ्॥

दैवम्। न। भागधेये। भाग्ये। फलाभिमुखे कर्मणि। पूर्वजन्मार्जितसदसत्कर्मविपाके॥ प्राग्जन्मनि कृतं कर्मशुभंवा यदि वा ऽशुभम्। दैवशब्देन निर्दिष्ट मिहजन्मनितद्बुधैः॥ दैवं पुरुषकारश्च द्वे बेशसदृशावुभौ। उपायस्तुविधातव्यो दैवात् फलति सर्वथा॥ अत्रोक्तं ब्रह्मवैवर्त्ते गणेशखण्डे। दैवाधीनं जगत् सर्वंजन्मकर्म शुभाशुभम्। संयोगाश्च वियोगाश्च नचदैवात् परंबलम्॥ कृष्णायत्तञ्चतद् दैवं सदैवात् परतस्ततः। भजन्ति सततं सन्तः परमात्मानमीश्वरम्॥ दैवं वर्द्धयितुं शक्तः क्षयंकर्तुं स्वलीलया। नदैववद्ध स्तद्भक्त-

शास्त्रिमार्गाश्च निर्गुण इति ॥ अस्य गतिर्विलक्षणोक्ता यथा। तृणं वज्राय ते नूनं वज्रञ्चैव तृणायते । बलवान् बलहीनः स्याद्दैवस्यगतिरी दृशीति॥ देवतीर्थे । दक्षहस्ताङ्गुलीनामग्रे॥देवताज्ञाने॥दैवश्राद्धे॥अनुग्राहकदेवताजाते। उपास्ये ॥ उत्पातविज्ञाने ॥ देवादागतम्। ततआगतइत्यण् ॥ देवानामिदम्। तस्येदमित्यण् ॥ देवोदेवतास्याः।सास्यदेवतेत्यण्। देवाद्यञञावित्यञ्वा ॥ पुं । विवाहविशेषे ॥ यथा। यज्ञेतु वितते सम्यगृत्विजे कर्मकुर्वते। अलङ्कृत्यसुतादानं दैवंधर्मं प्रचक्षते ॥ यज्ञेज्योतिष्टोमादौ । देवस्येदं वायम् । न तु देवदेवतात्वं विवाहस्य सम्भवति ॥ वृद्धभेदे ॥ देवसर्गे । त्रिधभूतादिसर्गे ॥ त्रि। होमादौदैवकर्मणि ॥ प्रमीतौ पितरौ यस्य देहस्तस्याऽशुचि र्भवेत्। नापिदैवं न वापित्र्यंयावत्पूर्णो नवत्सरः ॥ दिविभवे ॥

दैवकी । स्त्री । देवक्याम् ॥

दैवकीनन्दनः । पुं । देवकीनन्दने ॥

दैवकोविदा । स्त्री । दैवज्ञायाम् ॥ त्रि । दैवपण्डिते ॥

दैवज्ञः । पुं । गणके । ज्योतिर्विदि । पूर्वजन्मार्जितसदसत्कर्मविपाकरूपे ॥ दैवंजानाति । ज्ञा० । आतोनुपेति कः ॥ लाक्षालोहादिव्यापारी रसादिविक्रयी च यः । सयाति नागवेष्टञ्च नागैर्वेष्टित एवच॥ वसेत्स्वलोममानाब्दं तथैवनागदंशितः ।ततो भवेत्सगणको वैद्यश्चसप्तजन्मसु ॥ गोपश्च चर्मकारश्च रङ्गकारस्ततःशुचिरितिब्रह्मवैवर्ते प्रकृतिखण्डम् ॥

दैवज्ञा । स्त्री । विप्रश्निकायाम् । लक्षणादिना जनानां शुभाशुभं जानन्त्याम् ॥ दैवंशुभाशुभंजानाति । ज्ञा० । कः । टाप् ॥ दैवज्ञभार्यायाम् ॥

दैवतः । पुं । न । सुरे ॥ प्रतिमायाम् देवशब्दात्स्वा०तल् । ततःस्वा०प्र० अण् ॥ न । देवतानांसमूहे ॥ त्रि । देवतासम्बन्धिनि ॥

दैवतन्त्रः । त्रि । ईश्वराधीने ॥ दैवंतन्त्रंप्रधानंयस्य ॥

दैवदीपः । पुं । लोचने ॥

दैवपरः । त्रि । दैवसारे । यदृच्छिके । कर्मठोक्त इतिभाषा ॥ दैवंपरंश्रेष्ठंयस्य ॥

दैवप्रश्नः । पुं । उपश्रुतौ । आकाशवाण्याम् ॥ दिविभवोदैवः । सचासौ प्रश्नश्च ॥ नक्तंनिर्गत्य यत्किञ्चिच्छ,

 

भाशुभकरं वचः। श्रूयतेतद्विदुर्भी-
रा दैवप्रश्नमुपश्रुतिम्॥

दैवयज्ञः। पुं। दर्शपूर्णमासज्योतिष्टो
मादिरूपे कर्मयोगिभिरनुष्ठेये गौ
णयज्ञे॥ इष्टाख्ये श्रौतकर्मणि॥ अ-
ग्नौहोमे॥

दैवयुगम्। न। देवानांयुगे॥ तच्चदे
वमानेन द्वादशसहस्रवर्षम्॥ मनु-
ष्यपरिमाणेन चतुर्युगमानम्॥

दैवलकः। पुं। भूतसेवके। भौते॥ दृ
तिहारावल्ली॥ त्रि। देवलसम्ब-
न्धिनि॥

दैवलेखकः। पुं। मौहूर्ते। गणके॥

दैववर्जितः। त्रि। हतभाग्ये॥

दैववाणी। स्त्री। खोक्तौ। दैवप्र
श्ने॥ गीर्वाणवाग्वाणम्। संस्कृतवा-
क्ये॥ संस्कृतंनामदैवीवागन्वाख्या
तामहर्षिभिरितिदण्डी॥

दैवविन्नम्। न। दैवताज्ञाने॥

दैवसर्गः। पुं। त्रिधाभूतादिसर्गेष्वेक-
स्मिन्॥ सचब्राह्मादिभेदादष्टविक
ल्पस्त्रिधासर्गैर्द्रष्टव्यः॥

दैवसिकम्। त्रि। दिवसभवे॥

दैवाकरिः। पुं। शनौ॥ यमे॥ स्त्री।
यमुनायाम्॥

दैवागारिकः। त्रि। देवागारेनियुक्ते॥
तत्रनियुक्तइतिठक्। अगारान्ताट्ठन्

तु स्या॰ त्रण्॥

दैवात्। अ। हठादित्यर्थे॥

दैवाहोरात्रः। पुं। देवानामेकस्मिन्
दिने। मानवानां संवत्सरे॥ उत्तरा
यणंहिदेवानांदिनंभवति दक्षिणाय
नं रात्रिः॥ दैवश्चासावहोरात्रश्च॥

दैविकम्। न। दैवश्राद्धे॥ देवानुद्दि-
श्य यच्छ्राद्धं तत्तु दैविक मुच्यते। ह
विष्येण विशिष्टेन सप्तम्यादिषु यत्न
तः॥ त्रि। दैवादागते। विधिहेतौ
॥ यत्तुसम्यगुपक्रान्तं कार्यमेति विप
र्ययम्। पुमांस्तत्रानुपालभ्यो दैवा-
न्तरितपौरुषः॥ देवसम्बन्धिनि॥

दैवी। स्त्री। सात्त्विक्यांप्रकृतौ॥ देव-
सम्बन्धिन्याम्॥ चिकित्साविशेषे॥
आसुरी मानुषी दैवीचिकित्साचि
विधामतेति वैद्योक्तेः॥

दैवोदासिः। पुं। दिवोदासात्मजे। प्र
तर्दने॥ दिवोदासस्यापत्यम्। अ-
तइञ्॥

दैव्यम्। न। दैवे। भाग्ये॥ देवाना-
मिदमिति प्राग्दीव्यतीयेष्वर्थेषु दे
वाद्यञञाविति यञ्॥

दैशिकः। त्रि। देशसम्बन्धिनि॥ स-
म्बन्धविशेषे॥ देशनिष्ठविशेषणता
याम्॥

दैष्टिकः। त्रि। भाग्याधीनजाते॥ का

लेन जाते ॥ दैवप्रमाणके । दैवप रे ॥ दिष्टंभागधेय मितिमति र्यस्य । अस्तिनास्तिदिष्टंमतिरिति ठक् । नालम्बते दैष्टिकतां न निषीदति पौरुषे ॥

दैहिकः । त्रि । देहसम्बन्धिनि ॥

दोःशिखरम् । न । स्कन्धे ॥

दोःसहस्रभृत् । पुं । कार्त्तवीर्यार्जुने ॥ वाणासुरे ॥

दोग्धा । पुं । अर्थोपजीविकवौ ॥ गोपाले ॥ वत्से ॥ त्रि । दोहनकर्त्तरि ॥

दोग्ध्री । स्त्री । गवि ॥

दोधः । पुं । गोवत्से ॥

दोधकः । पुं । दोधकवृत्ते ॥

दोधकवृत्तम् । न । त्रिष्टुप्छन्दःप्रभेदे ॥ यथा । भवितयं यदिकर्णसमेतं पन्नगराजसुभाषितमेतत् । पण्डितमण्डलिकाहृतचित्तं भामिनिभावयदोधकवृत्तम् ॥ यथा । फुल्लकदम्बवलसदनमालो निर्द्दलदिन्द्रमणीरुचिजालः । एषउपैतिघनाघनकालःपान्थवधूजनदर्शितकालः ॥

दोधूयमानः । त्रि । पुनःपुनरतिशयेन वाकम्पविशिष्टे ॥ प्रलयेपिदोधूयमानाःपरमाणव स्तिष्ठन्तीतिशिरोमणिः ॥

दोरः । पुं । डोर इति भाषाप्रसिद्धायांरज्जौ ॥

दोरकः । पुं । वीणातन्तुबन्धनरज्जौ ॥

दोर्गडुः । पुं । कुण्ठितहस्ते । बाहुकुण्ठे ॥

दोर्ग्रहः । त्रि । अव्यामे । बलवति ॥ भुजस्यग्रहणे ॥ भुजस्य व्यथायाम्

दोर्दण्डः । पुं । बाहुरूपदण्डे ॥

दोर्मध्यम् । न । बाहुमध्यभागे । वाजू० इति भाषा ॥

दोर्मूलम् । न । कक्षे । भुजकोटरे । काख० इति भाषा ॥

दोलः । पुं । दोलने ॥ श्रीकृष्णस्योत्सवविशेषे । भूला इतिभाषा ॥ दुल उत्क्षेपे । भावे घञ् ॥

दोलनम् । न । आन्दोलने । कम्पने ॥

दोला । स्त्री । नील्याम् ॥ प्रेङ्खायाम् । डोली इतिभाषा ॥ उद्यानादिषुक्रीडार्थे काष्ठादिरचिते हिन्दोले । हिडोला इतिभाषा ॥ यन्त्रविशेषे । स्वेदने ॥ दोलति दोलयति दोल्यते वा । दुल० । अच् घञ्वा ॥

दोलायमानः । त्रि । दोलनविशिष्टे ॥ यथा । दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते इत्युत्कलखण्डः ॥

दोलायुद्धम् । न । अनियतजयपराजये ॥

दोलिका । स्त्री । हिन्दोलायाम् । हिंडोला इतिभाषा ॥ दोलेव । स्वा० कन् ॥

दोलिकाचक्रम् । न । दोलारोहणाम् हर्तोपयोगिनक्षत्रविचारार्थचक्रे ॥ यथा । दोलारोहे ऽर्कभात् पञ्चशर पञ्चेषुसप्तभैः । नैरुज्यंमरणां कार्श्यं व्याधिः सौख्यं क्रमाच्छिशोः ॥

दोलितः । त्रि । आन्दोलिते । कम्पिते ॥

दोली । त्रि । दोलनवति ॥ दोलोदोलनमस्त्यस्यास्मिन्वा । इनिः ॥

दोली । स्त्री । दोलायाम् । डोली इति भाषा ॥

दोलोत्सवः । पुं । चैत्रशुक्लतृतीयायां कर्त्तव्यत्वेनोक्ते उत्सवविशेषे ॥ अस्यविधिस्तुदेवीपुराणादौ द्रष्टव्यः ॥

दोः । पुं । भुजे । प्रवेष्टे ॥ दाम्यत्यनेन । दम० । दमेर्डोसिः । पञ्चत्वासिद्धत्वात् वत्वविसर्गौसिद्धौ ॥

दोषः । पुं । दूषणे ॥ एकोहिदोषो गुणासन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ पापे ॥ आचमनं विना भक्षणेदोषाभावो यथा । मधुपर्केच सोमेच ताम्बूलस्यच भक्षणे । फलमूलेचेक्षुदण्डेन दोषं प्राहवैमनुः ॥ अदातावंशदोषेण कर्मदोषाद्दरिद्रता । उन्मादोमातृदोषेण पितृदोषे

ण मूर्खता ॥ वातपित्तकफेषु ॥ वायुः पित्तं कफश्चेति त्रयोदोषाः समासतः । विकृताविकृतादेहंघ्नन्ति ते वर्द्धयन्तिच ॥ तेव्यापिनोपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥ धातवश्चमलाश्चापिदुष्यन्त्येभिर्यतस्ततः । वात पित्तकफाएते त्रयोदोषा इतिस्मृताः ॥ ऋतुभेदेन विहारादिनाचैषां च यप्रकोपप्रशमना नियया । ग्रीष्मेसञ्ची यतेवायुः प्रावृट्काले प्रकुप्यति । प्रायेणोपशमंयाति स्वयमेवसमीरणः ॥ शरत्कालेच सन्तेच पित्तं प्रावृट्सी कफः । चयकोपप्रशमान् दोषा विहाराहारसेवनैः ॥ समानैर्यान्त्यकालेपि विपरीतैर्विपर्यय इति ॥ वात पित्तश्लेष्ममलमूत्रादिपरिपूर्णत्वेन कायजुगुप्सितत्वे ॥ काव्यगुणेतरस्मिन् ॥ सचरसादपकर्षकः । यथा । मुख्यार्थहतिर्दोषो रसश्चमुख्यस्तदाश्रयाद्वाच्यः ॥ दोषं लक्षयति ॥ प्रवर्त्तना लक्षणादोषाः ॥ १८ ॥ दोषाइतिबहुवचनं रागद्वेषमोहात्मकस्यत्रयत्वापनाय । प्रवर्त्तनाप्रवृत्तिजनकत्वम् तदेवलक्षणं येषाम् । यद्यपीदं शरीरादृष्टेश्वरेच्छादावतिव्याप्तं तथापि लौकिकप्रत्यक्षत्वसविषयकत्वेसतीतिविशेषणीयम् । योगादिमोच

रवमावारवाय प्रामाद्युत्त्वेसतीति विशेषयन्ति ॥ दुष्यति अनेनवा । दुषवैकृत्ये । अच् अकर्त्तरिचकारक इत्येनकरणेवा घञ् ॥

दोषग्राही । त्रि । पुरोभागिनि । खले ॥ विसृज्य सूर्पवदोषान् गुणान् गृह्णन्ति साधवः । दोषग्राही गुणत्यागी चालनीवद्धि दुर्जनः ॥ दोषंगृह्णाति । ग्रह० । णिनिः ॥

दोषज्ञः । त्रि । विपश्चिति । पण्डिते ॥ चिकित्सके ॥ दोषविषयकज्ञानयुक्ते ॥ दोषंजानाति । ज्ञा० । आतइतिकः ॥

दोषत्रयम् । न । वातपित्तकफेषु ॥

दोषवान् । त्रि । दुष्टे ॥

दोषा । अ । रात्रौ ॥ रात्रिमुखे ॥ दुष्यत्यच । दुष० । बाहुलकात् आप्रत्ययः ॥

दोषा । स्त्री । रात्रौ ॥ भुजे ॥ दाम्यत्यनेन । दम० । दमेर्डोसिः । भागुरिमतेनटाप् ॥

दोषाकरः । पुं । चन्द्रे ॥ त्रि । दोषाणामाकरे ॥

दोषाक्लेशी । स्त्री । वनवर्बुरिकायाम् ॥ इतिराजनिर्घण्टः ॥

दोषातनः । त्रि । रात्रिभवे ॥ सायंचिरमितिण्युः ॥

दोषातिलकः । पुं । प्रदीपे ॥

दोषास्यः । पुं । प्रदीपे ॥

दोषिकः । पुं । रोगे ॥

दोषी । त्रि । अपराधिनि । दोषयुक्ते ॥

दोषैकदृक् । त्रि । पुरोभागिनि । खले ॥ दोष एवैकस्मिन् नतुगुणे दृक् ज्ञान मस्य ॥

दोस्यः । पुं । क्रीडायाम् ॥ क्रीडके ॥ सेवायाम् ॥ सेवके ॥ त्रि । दोःस्थिते ॥

दोहः । पुं । दोहनपात्रे ॥ दुग्धे ॥ दुग्धते ॥ दुहप्रपूरणे । कर्मणिघञ् ॥

दोहजम् । न । दुग्धे ॥

दोहडिका । स्त्री । मात्रावृत्ते पज्झटिकाप्रभेदे ॥ मात्रात्रयोदशकंयदि पूर्वं लघुकपरिविरामि । पठपुनरेकादशं दोहडिकाद्विगुणेन ॥ प्राकृतेप्रचारः । यथा । राईदोहडिपठन सुनि हँसिओकाह्नगोआल । वृन्दावनघनकुञ्ज चलिओकमलरसाल ॥ अस्यार्थः । हेमातः दोहडिकापाठंश्रुत्वाकृष्णोगोपालो हसित्वा कम पिरसालं चलितः कुत्र वृन्दावनघनकुञ्जे वृन्दावनस्य निविडनिकुञ्जे । मातृइतिकवितृपाठ स्तन्मतेन राधिकायादोहडिकापाठं श्रुत्वा ॥ गुरुलघुव्यत्ययेनवहुविधाभवति ॥

दोहदः । पुं । न । गर्भे ॥ गर्भिण्याश्च

भिलाषे। स्वास्वसायाम्॥ गर्भिण्यास्त स्पृहिच्छायां विशेषेण प्रयुज्यते। दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्॥ देशमप्यहितं तस्यै हितायहितल्पकम्। अत्राविघाते गर्भस्य विकृतिश्च्युतिरेव च॥ चिह्ने। गर्भलक्षणे॥ न। स्पृहायाम्॥ दोहमाकर्षं ददाति। डुदाञ्॰। आतोनुपेतिकः॥

दोहदलक्षणम्। न। वयः सन्धौ॥ गर्भे॥

दोहदवती। स्त्री। अन्नादिद्रव्यविशेषाभिलाषवत्यां गर्भवत्याम्। अमरः॥ अथात्र गर्भिण्याः कर्त्तव्याकर्त्तव्यमुक्तं मत्स्यपुराणे। दित्यां गर्भमाधत्त कश्यपः प्राह तां पुनः। त्वया यत्नो विधातव्योऽस्मिन् गर्भे वरानने॥ संवत्सरशतं त्वेकमस्मिन्नेव तपोवने। सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि॥ न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा। नोपस्करेषूपविशेन्मुषलोलूखलादिषु॥ जलञ्च नावगाहेत शून्यागारञ्च वर्जयेत्। वल्मीकेषु न तिष्ठेत न चोद्विग्नमना भवेत्॥ विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना। न शयालुः सदा तिष्ठेद् व्यायामञ्च विवर्जयेत्॥ न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत्। वर्जयेत् कलहं लोके गात्रभङ्गञ्च वर्जयेत्॥ न मुक्तकेशा तिष्ठेत नाशुचिः स्यात् कदाचन। न शयीतोत्तरशिरा न चापरशिराः क्वचित्॥ न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती। नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत्॥ कुर्य्याच्च गुरुशुश्रूषां नित्यं मङ्गलतत्परा। सर्व्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत्॥ कृतरक्षा सुभूषा च वास्तुपूजनतत्परा। तिष्ठेत् प्रसन्नवदना भर्त्तुः प्रियहिते रता॥ दानशीला तृतीयायां पार्व्वण्यां नक्तमाचरेत्। इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी॥ यस्तु तस्या भवेत् पुत्त्रः स्थिरायुर्बुद्धिसंयुतः। अन्यथा गर्भपतनमवाप्नोति न संशयः॥ तस्मात् त्वमनयावृत्त्या गर्भेऽस्मिन् यत्नमाचरेति॥ दोहदो गर्भिण्यभिलाषोऽस्त्यस्याः। मतुप्। ङीप्॥

दोहदान्विता। स्त्री। दोहदवत्याम्॥

दोहदिनी। स्त्री। दोहदवत्याम्॥ तास्त्वद्विहृदयां नारीमाहुर्दोहदिनीं बुधाः॥ दोहदोऽस्त्यस्याः। अतइनिः। ङीप्॥

दोहनम्। न। स्तनाद्दुग्धनिस्सारणे॥

दोहनी। स्त्री। दोहनपात्रे। पार्य्याम्॥

दोहलः । पुं । दोहदे ॥ इति शब्दार्थकल्पतरुः ॥

दोहलवती । स्त्री । दोहदवत्याम् ॥

दोहली । स्त्री । अशोकवृक्षे ॥

दोहा । स्त्री । भाषावृत्त विशेषे ॥ षट्कलतुरगौ चिकलमपि विषमपदे विनिधेहि । समपादान्ते चैककलमिति दोहामवधेहि ॥ यथा । चरणसरोरुह मस्तु हृदि मदवने तवनाम । चतुषिरूपं यावदमु रमयमनो ममरामेति ॥

दोहापनयः । पुं । दुग्धे ॥

दोहीयान् । त्रि । अतिशयदोहके ॥

दोह्यम् । त्रि । दोहनीये । दुग्धे ॥

दौःसाधिकः । पुं । द्वारपाले ॥

दौकूलः । पुं । दुकूलाहृतेरथे ॥ ॥ दुकूलेन परिवृतोरथः । परिवृतोरथ इत्यण् ॥

दौत्यम् । न । दूतभावे ॥ दूतकर्मणि ॥ दूतस्य भावः कर्म वा । दाप्यञ् ।

दौरात्म्यम् । न । दुरात्मनो भावे ॥ दुरात्मनः कर्मणि ॥ दुर्निन्दित आत्मा यत्नः धृतिः बुद्धिः स्वभावः शरीरं वा यस्य सदुरात्मा । तस्य भावः कर्म वा । भा० ष्यञ् ॥

दौर्ग्यम् । न । दुर्गवृत्तिधर्मे । दुर्गसम्बन्धिनि ॥ दुर्गस्य भावः । ष्यञ् ॥ दुर्गस्येदम् ॥

दौर्जन्यम् । न । दुर्जनत्वे । अनार्यतायाम् ॥

दौर्बल्यम् । न । दुर्बलत्वे ॥ भावे ष्यञ् ॥

दौर्भागिनेयः । पुं । दुर्भगापुत्रे ॥ दुर्भगाया अपत्यम् । कल्या० ढक् इनङादेशश्च । हृद्भगेत्युभयपद वृद्धिः ॥ स्त्रियां ङीपि दौर्भागिनेयी ॥

दौर्भाग्यम् । न । दुर्भगत्वे ॥ दुर्भगस्य दुर्भगायाश्च भावः । ष्यञ् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः ॥ भुक्ता पितृगृहेनारी भुक्ते स्वामिगृहे यदि । दौर्भाग्यंजायते तस्याः शपन्तिकुलदेवता इति ज्योतिस्तत्त्वम् ॥

दौर्मनस्यम् । न । दुःखनिबन्धनचित्तावसादे । इच्छाविघातादिबलवद्दुःखानुभवजनिते चित्तस्य तामसपरिणामविशेषे । चोभापरपर्याये स्तब्धीभावे ॥ सतु देषाख्यविपर्ययहेतुत्वात् कषायत्वाच्च लयवत् समाधेर्विरोधीत्युच्यते ॥ दुर्मनसो भावः । ष्यञ् ॥ बाह्याभ्यन्तरैः कारणैर्मनसो दौस्थ्ये ॥

दौर्वासमम् । न । उपपुराणान्तरे ॥

दौर्वीणम् । न । दूष्टपर्वे ॥ दूर्धारसे ॥

दौर्हृदम् । न । इच्छायाम् । लालसा

याम् । दोहदे ॥ दुर्जनत्वे ॥ दुर्हृदः कर्मभावोवा । यु० अण् ॥

दौलेयः । पुं । कच्छपे ॥ दुल्याअपत्यम् । इतश्चानिञ इति ढक् ॥

दौवारिकः । पुं । द्वाःस्थे । वेत्रधरे ॥ द्वारेनियुक्तः । तत्रनियुक्त इतिठक् ॥

दौवारिकी । स्त्री । प्रतीहार्यम् ॥ ङीप् ॥

दौष्कुलेयः । त्रि । दुष्कुलीने ॥ दुष्कुलस्यापत्यम् । दुष्कुलाड्ढक् ॥

दौष्ठव्म् । न । दुष्ठुभावे ॥ उद्०ष्यञ् ॥

दौष्यन्तिः । पुं । भरतनृपे ॥ दुष्यन्तस्यापत्यम् । अतइञ् ॥

दौहित्रः । पुं । कुतुपे । दुहितुः सुते ॥ दुहितुरपत्यम् । अनृष्यानन्तर्ये विदादिभ्योञ् ॥ न । श्रीणि श्राद्धे पवित्राणि दौहित्रं कुतप स्तिलाः । दौहित्रं खड्गमित्याहुरपत्यं दुहितुस्तिलाः ॥ कपिलायाघृतञ्चैव दौहित्रमितिचोच्यते॥ इतिमार्कण्डेयपु०॥ पौत्रदौहित्रयो र्लोके विशेषो नास्ति कश्चन । तयोर्हि मातापितरौ सम्भूतौतस्यदेहतः इति दायभागः॥ दौहित्रोपि ह्यमुत्रैनं सन्तारयति पौत्रवदितिमनुः ॥

द्य । अ । हिंसायाम् ॥ प्रातिलोम्ये ॥ पादपूरणे ॥

द्यावाक्षमे । स्त्री । द्वि० । भूदिवौः । स्वर्गपृथिव्योः ॥ द्यौश्च क्षमाच । दिवो द्यावा ॥

द्यावापृथिवीयम् । न । द्यावापृथिव्योर्हविरादौ ॥ द्यावापृथिव्यौ देवते अस्य । द्यावापृथिवी च्छ्यादिनाछः ॥

द्यावापृथिव्यम् । न । द्यावापृथिव्योर्हविरादौ ॥ द्यावापृथिव्यौ देवते अस्य । द्यावापृथिवीत्यच चायत् ॥

द्यावापृथिव्यौ । स्त्री । द्वि० । स्वर्गपृथिव्योः ॥ द्यौश्चपृथिवीच । दिवसश्च पृथिव्यामितिचादिवोद्यावा ॥

द्यावाभूमी । स्त्री । द्वि० । द्यावापृथिव्योः ॥ द्यौश्चभूमिश्च । दिवोद्यावेति देवताद्वन्द्वे द्यावादेशः ॥

द्युः । पुं । अग्नौ ॥ न । अह्नि ॥ गगने ॥ स्वर्गे ॥ अव्युत्पन्नप्रातिपदिकोयम् ॥

द्युगः । पुं । पक्षिणि ॥ इतिराजनिर्घण्टः ॥

द्युगणः । पुं । अहर्गणे ॥

द्युत् । पुं । किरणे ॥ द्युत० । क्विप् ॥

द्युतिः । स्त्री । रश्मौ ॥ शोभायाम् ॥ प्रकाशे ॥ प्रभायाम् ॥ द्युतिरङ्गनाकान्तिरित्याचार्याः ॥ द्योततेऽनया द्युतदीप्तौ । इगुपधादितीन् ॥

द्युतिकरः । पुं । ध्रुवे ॥ त्रि । शोभाकरे ॥

द्युतितम् । त्रि । दीप्तिविशिष्टे । द्योतिते ॥

द्युतिमान् । त्रि । प्रशस्तकान्तिमति ॥

द्युती । स्त्री । शोभायाम् ॥ कुदिका दिविक्तीष् ॥

द्युनम् । न । समानसम्मराओ ॥

द्युनिशम् । न । अहोरात्रे ॥ भवति किं द्युनिशं द्युनिवासिनाम् ॥

द्युनिवासी । पु । देवे ॥

द्युपतिः । पुं । आनौ । हंसे ॥

द्युभ्वाद्यायतनम् । न । दिवोभुवश्चाश्रये ब्रह्मणि ॥

द्युमणिः । पुं । हंसे । सूर्ये ॥ दिवो मणिरिव ॥ अर्कवृक्षे ॥ मणितेनाम्रे ॥

द्युमयी । स्त्री । सूर्ययोषायाम् । विश्वकर्मणःपुत्र्याम् ॥

द्युम्नम् । न । वित्ते । धने ॥ बले ॥ दिवंमनति । म्नाअभ्यासे । आतोनुपेतिकः ॥

द्युवा । पुं । मित्रे । सूर्ये ॥ द्यौति । द्यु अभिगमने । कनिन् युवृषितक्षिराज्योत्यादिना कनिन् ॥

द्युषन्द्यः । पु । अश्वमेधे ॥

द्युषत् । पुं । देवे ॥ दिविसीदति वर्त्तते । षद्लृ० । सत्सूद्विषेति क्विप् । तत्पुरुषे कृतिबहुलमितिअलुक् । सुषामादित्वात्षत्त्वम् ॥

द्युसत् । पुं । देवे ॥ दिविसीदति । स त्सूद्विषेति क्विप् । पूर्वपदादिति षत्वन्तुन भवति । छ्वसी स्यनवृत्तेः । तथाचमाघः । मनस्सुयेनद्युसदांन्यधीयतेति ॥

द्यूतः । पु । न । अक्षादिक्रीडायाम् । कैतवे । अप्राणिकरणकक्रीडायाम् ॥ अप्राणिभिर्यत् क्रियते तल्लोके द्यूत मुच्यते । जुआ इति भाषा ॥ द्यूत मे तत् पुराकल्पे दृष्टं वैरकरं मह त् । तस्माद् द्यूतं न सेवेत हास्यार्थमपिबुद्धिमान् ॥*॥ परवञ्चनसाधनानां सम्बन्धि द्यूतम अदेवनादिकम्पि सर्वस्वापहरणकरं भगवतो विभूतिः ॥ देवनम् । दिव् ० । भावे क्तः ॥

द्यूतकरः । त्रि । जुआरीइतिभाषाप्रसिद्धे । द्यूतकर्त्तरि । दुरोदरे धूर्त्ते । कितवे ॥

द्यूतकारः । त्रि । द्यूतकारयितरि । सभिके ॥ द्यूतंकारयति । डुकृञ्० । कर्मण्यण् ॥

द्यूतकारकः । त्रि । द्यूतकारे ॥ स्वार्थेकः ॥ कारयति । कृ० । ण्वुल् । द्यूतस्य कारको वा ॥

द्यूतकृत् । त्रि । अक्षधूर्त्ते । द्यूतकरे ॥ ॥ द्यूतंकरोति । डुकृञ्० । क्विप् । तुक् ॥

द्यूतपूर्णिमा । स्त्री । कोजागरपूर्णिमा-

याम् ॥

द्यूतपौर्णमी । स्त्री । कोजागरतिथौ ॥ इतिभूरिप्रयोगः ॥

द्यूतप्रतिपत् । स्त्री । कार्त्तिकशुक्लप्रतिपदि । कौमुद्याम् ॥ तद्व्युत्पत्त्यर्थं कार्त्तिके तस्य शुक्ला या प्रतिपत्तिथिः । विष्णोर्दत्ता मही तत्र कौमुदी सा स्मृता बुधैः ॥ कुशब्देन मही ज्ञेया मुदा हर्षं च वै द्विज । धातुज्ञैः सर्वशब्दज्ञैः सा च वै कौमुदी स्मृता ॥ इति प० पु० ॥ अत्र बलेर्दैत्यस्य पूजादिकं कार्य्यम् । इत्युक्तं वामनपुराणे ॥ शङ्करस्य पुरा द्यूतं ससर्ज सुमनोहरम् । कार्त्तिके शुक्लपक्षे तु प्रथमेऽह्नि भूपते ॥ जितश्च शङ्करस्तत्र जयं लेभे च पार्वती । अतोर्थाच्छङ्करो दुःखी गौरी नित्यं सुखोषिता ॥ तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः । तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ॥ पराजयो विरुद्धस्य लब्धनाशकरो भवेत् । इति ॥

द्यूतबीजम् । न । वराटके । कपर्द्दके ॥ द्यूतस्य कारणे ॥

द्यूतवृत्तिः । त्रि । सभिके ॥

द्यूनम् । न । लग्नात् सप्तमराशौ ॥ यथा । धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् । द्युं द्यूनं तथास्ताख्यं षट्-

कोणरिपुमन्दिरम् ॥ त्रि । क्षीणे ॥ अदेवीत् । दिवु० । क्तः । दिवोविजिगीषायामितितस्य नः । यस्य विभाषेति नेट् । च्छ्वोरित्यूठ् ॥

द्यौः । स्त्री । त्रिदशालये । स्वर्गे ॥ त्रिदशवर्त्मनि । आकाशे ॥ द्योतन्ते देवा अस्याम् । द्युत दीप्तौ । बाहुलकाड्डोः ॥ द्योर्गोवत् ॥

द्योतः । पुं । प्रकाशे । आतपे ॥ द्योतनम् । द्युतेर्घञ् ॥

द्योतनम् । न । दर्शने ॥ पुं । दीपे ॥ द्युतेर्ल्युट् ॥

द्योतितः । त्रि । दीप्ते ॥

द्योभूमिः । पुं । खगे । पक्षिणि ॥ द्यौर्भूमिरस्य ॥

द्योषद् । पुं । देवे ॥

द्योत्रम् । न । ज्योतिषि ॥ दीव्यन्त्यस्मिन् । दिवु । दिवेर्द्युश्चेति ष्ट्रन् तुरादेशो वृद्धिश्च ॥

द्रगडः । पुं । प्रतिपत्तूर्य्ये । दगड इति गौडभाषा प्रसिद्धे वाद्ये ॥ इ० चि० ॥

द्रङ्क्षणम् । न । तोलके । कोलके । वटके । कर्षार्द्धे ॥ इति वैद्यकपरिभाषा ॥

द्रङ्गः । पुं । पुर्य्यामिति हेमचन्द्रः ॥

द्रढिमा । पुं । दृढतायाम् ॥ दृढस्य भावः । पृथ्वादिभ्य इमनिज्वा । रऋतो

इलादेर्लघोः । टेर्लोपः ॥

द्रढिष्ठः । त्रि । द्रढीयसि ॥ अयमनयो रेषां वा अतिशयेन दृढः । इष्ठन् ॥

द्रढीयः । त्रि । दृढतरे ॥

द्रप्सम् । न । घनेतरदधिनि । द्रप्से ॥ दृप्यन्त्यनेन । दृपदर्षादौ । अनुदात्तस्येत्यम् । बाहुलकात्सः ॥

द्रप्सम् । न । द्रप्से ॥ तृप्यन्त्यनेन । तृप प्रीणने । अघन्यादयश्चेति निपातितः ॥

द्रम्मः । पुं । पणानां षोडशके ॥ वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः । ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः ॥

द्रवः । पुं । प्रद्रावे । पलायने ॥ नर्मणि ॥ रसे ॥ गतौ ॥ आसवे ॥ वेगे ॥ द्रवणम् । द्रु गतौ । ऋदोरप् ॥ त्रि । द्रववति ॥ आपोद्रवाः । सर्वाणि द्रवाणि तूद्रघ्नुलेन जुहोतीत्यादि प्रयोगात् ॥

द्रवजः । पुं । गुडे ॥ त्रि । द्रवजातवस्तुमात्रे ॥

द्रवणम् । न । अनुतापे ॥ चरणे ॥ गमने ॥ द्रु० । ल्युट् ॥

द्रवत्वम् । न । द्रवतायाम् । आद्यस्यन्दनासमवायिकारणे । तच्च पृथिवीजलतेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकनैमित्तिकभेदात् । तत्र सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् तेजसि सुवर्णादौ च ॥ तदुक्तम् । सांसिद्धिकं द्रवत्वं स्यात् नैमित्तिकमुदाहृतम् । सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥ परमाणौ जले नित्यमन्यतोऽनित्यमुच्यते । नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु ॥ द्रवत्वंस्यन्दने हेतुर्निमित्तं सङ्ग्रहे तुतत् । इतिभाषापरिच्छेदः ॥

द्रवत्पत्री । स्त्री । शिलाडीदृक्षे ॥

द्रवद्रव्यम् । न । दुग्धदध्याज्यतक्रासवजलक्षौद्रतैलमूत्रादिद्रवतोयेषु ॥

द्रवन्ती । स्त्री । नद्याम् ॥ मूषिकपर्ण्याम् । शतमूलिकायाम् ॥ द्रवति । द्रु० । लटः शतृ । उगितश्चेति ङीप् ॥ शिखरिणी प्रभेदे ॥ यथा । शुभ्रशर्करया युक्तं निर्नीरं द्विगुणं दधि । शाणामुद्गलनंदय मेतन्मानंवुधैः स्मृतम् ॥ दद्यात्सुरक्षितं पात्रे खण्डदुग्धेनगालितम् । कर्पूरमरिचोन्मिश्रं द्रवन्तीपरिकीर्त्तिता ॥ द्रवन्तीमधुरा वृष्यावल्यापुष्टिकरीहिमा । वातपित्तहराप्यर्थं किञ्चित्कफकराहिसा ॥

द्रवमूर्त्तिः । त्रि । द्रवद्रव्यकाठिन्ये ॥

द्रवस्य मूर्त्तिः ॥

द्रवरसा । स्त्री । लाक्षायाम् ॥

द्रवाधारः । पुं । चुलुके ॥ द्रवद्रव्यरक्षा पात्रे ॥

द्रविडः । पुं । देशविशेषे ॥ जल्लाख्यसङ्करजातौ ॥ द्रविडदेशोद्भवे आद्यौ क्षत्रिये पश्चाद्विहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये ॥

द्रविडी । स्त्री । रागिणीविशेषे ॥

द्रविणम् । न । वित्ते ॥ काञ्चने ॥ पराक्रमे । बले ॥

द्रविणनाशनः । पुं । शोभाञ्जने ॥

द्रविणोदाः । पुं । अग्नौ ॥ यथोक्तम् । द्रविणं बलमित्युक्तं धनञ्चद्रविणं ततः । ददातितद्भवानेव द्रविणोदास्ततो भवेति वराहपुराणम् ॥ सान्तः ॥

द्रवीकरणम् । न । अद्रवस्य द्रवकरणे । गलावना इतिभाषा ॥

द्रव्यम् । न । पित्तले ॥ वित्ते ॥ विलेपने ॥ भेषजे ॥ भव्ये ॥ जतुनि ॥ विनये ॥ मद्ये ॥ लिङ्गसङ्ख्यान्विते ॥ गुणानामाश्रये ॥ द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋतेघृतगुडक्षौद्रधान्यकृष्णाविडङ्गतः इति वैद्यकपरिभाषा ॥ समवायिकारणं द्रव्यमितितार्किकैर्लक्षिते । पृथिव्या-



दौ ॥ तानिच पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसिनवैव ॥ * ॥ रसो गुणस्तथावीर्यं विपाकः शक्तिरेवच पञ्चानांयः समाहारस्तद्द्रव्यमितिकीर्त्यते ॥ इतिभिषग्वराः । पुनः पञ्चविधम् । अत्यन्तकठिनकठिनार्द्रवस्तुद्रवद्रव्यभेदात् ॥ * ॥ द्रव्याणां गुणवत्तावधिः । गुणहीनं भवेद्वर्षादूर्ध्वं तद्रूपमौषधम् । मासद्वयात् तथाचूर्णं लभते हीनवीर्यताम् ॥ हीनत्वं गुटिका लेहौ लभते वत्सरात् परम् । हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिका स्तथा ॥ घृततैलाद्याइतियोग विशेषणम् । चतुर्मासाधिकाः संवत्सरादुपरि चत्वारोमासा अधिका येषुते ॥ घृतमब्दात् परं पक्वं हीनवीर्यत्व माप्नुयात् । तैलं पक्व मपक्वं वा चिरस्थायिगुणाधिकम् ॥ तदपिषोडशमासाभ्यन्तरे पक्वतैलं गुणाधिकं वोद्धव्यम् । ओषध्यो लघुपाकाः स्युर्निर्वीर्या वत्सरात् परम् । ओषध्योधान्यादयः । लघुपाकाः शीघ्रपाकाः । निर्वीर्याः स्युः गुणैर्युक्ता आसवा धातवो रसाः ॥ त्रि । द्रोर्विकारे ॥ द्रोरिदम् । द्रोर्विकारोवा । द्रव्यञ्चभव्ये इतिसाधु ॥ द्रुरिववा । द्रोर्विकारे द्रो

यचेति यदा ॥

द्रव्यकः । त्रि । द्रव्यं हरति वहति आवहति वा । वस्नद्रव्याभ्यांठन् कनावि-त्याहींयः कन् ॥

द्रव्यकल्कः । पुं । वैद्यशास्त्रप्रसिद्धेषु कल्कादिपञ्चसु ॥ द्रव्यकल्कः पञ्चधा-स्यात् कल्कं चूर्णं रस स्तथा । तैलमर्कः क्रमाज्ज्ञेयं यथोत्तरगुणं प्रिये॥

द्रव्यनिश्चयः । पुं । द्रव्याणां मेषाद्यधिपतिज्ञानेन शुभाशुभनिश्चये ॥ त-चाह बेशागमप्रदर्शनार्थमाह । येषां द्रव्याणा मधिपतयो राशयः समुद्दिष्टाः । मुनिभिः शुभाशुभार्थं नानागमतः प्रवच्यामि ॥ १ ॥ वस्त्राविककुतपानां मसूरगोधूमरालकयवानाम् । स्थलसम्भ वौषधीनां कनकस्यच कीर्त्तितो मेषः ॥ २ ॥ गविवस्त्रकुसुमगोधूमशालियवमहिष-सुरभितनयाः स्युः । मिथुनेपिधान्यशारदवल्लीशालूककार्पासाः ॥ ३ ॥ कर्किणि कोद्रवकदलीदूर्वाफलक-न्दपत्रचोचानि । सिंहे तुषधान्यर-साः सिंहादीनांत्वचः सगुडाः ॥ ४ ॥ षष्ठे ऽतसीकलायाः कुलत्थगोधूममुद्गनिष्पावाः सप्तमराशौ माषायवगोधूमाः ससर्षपास्तैव ॥ ५ ॥ अ-ष्टमराशाविक्षुःसैक्यं लोहा न्यजाविकञ्चापि । नवमेतु तुरगलवणाम्ब-रास्त्रतिलधान्यमूलानि ॥ ६ ॥ मकरे तरुगुल्माद्यं सैक्षेचुसुवर्णकृष्ण-लोहानि । कुम्भे सलिलजफलकुसुमरत्नचित्राणि रूपाणि ॥ ७ ॥ मीने कपालसम्भवरत्नान्यम्बुद्भवानि वज्राणि । स्नेहाश्च नैकरूपा व्याख्याता मत्स्यजातञ्च ॥ ८ ॥ एतेषां द्रव्याणां शुभाशुभज्ञानार्थमाह । राशेस्तद्दशार्थायसप्तनवपञ्चमस्थितो ४ । १० । २ । ११ । ७ । ९ । ५ । जीवः । द्येकादशदश पञ्चाष्टमेषु २ । ११ । १० । ५ । ८ । शशिजश्च वृद्धिकरः ॥ ९ ॥ षट्सप्तमगो ६ । ७ । हानिं वृद्धिं शुक्रःकरोतिशेषेषु । उपचयसंस्थाः ३ । ६ । ११ । १० । क्रूराःशुभदाःशेषेषु १ । २ । ४ । ५ । ७ । ८ । ९ । १२ । हानिकराः ॥ १० ॥ * ॥ अथैवविशेषमाह । राशेर्यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः १ तस्मात्तद्द्रव्याणां महार्घता दुर्लभत्वञ्च ॥ ॥ ११ ॥ दुष्टस्थाने सौम्याबलिनो येषां भवन्ति राशीनाम् । तद्द्रव्याणां वृद्धिः सामर्थ्यं वल्लभत्वञ्च ॥ १२ ॥ गोचर पीडायामपि राशिर्बलिभिः शुभग्रहै र्दृष्टः । पीडां न करोति तथा क्रूरैरेवं विपर्यासः ॥ इति वारा

च्याम् ३८ ऽध्यायः॥

द्रव्यमययज्ञः । पुं । ज्ञानभिन्नोनेयज्ञे॥ द्रव्यमयः द्रव्योपलक्षितो ज्ञानशून्यो योयज्ञः ससंसारफलः ॥

द्रव्ययज्ञः । त्रि । पूर्त्तदत्ताख्यस्मार्त्तकर्मपरे ॥ द्रव्यस्यागएव यथाशास्त्रं यज्ञोयस्य ॥

द्रष्टव्यः । त्रि । दृश्ये । दर्शनार्हे ॥

द्रष्टा । त्रि । विचारकुशले ॥ साक्षिचेतने ॥ चेतनोऽपिद्रष्टा भवति नाचेतनः ॥ दृशेःकर्त्तरि । दृष्टिमति । कात्मनि ॥ चक्षुर्जन्यमनोवृत्ति विशेषु रूपभासिका । दृष्टिरित्युच्यते- द्रष्टादृष्टेः कर्त्ता लौकिकैः ॥ पश्यति । दृशिर् ७ । तृन् ॥

द्रष्टृता । स्त्री । शब्दादिविषयप्रकाशतायाम् ॥ भावे तल् ॥

द्राक् । अ । द्रुते । शीघ्रे । झटित्यर्थे ॥ ॥ द्राति । द्राकुत्सायांगतौ । वा ७ कः ।

द्राचा । स्त्री । मृद्वीकायाम् । गोस्तन्याम् । मनक्कादाख इतिभाषा ॥ द्राचामाचे ॥ द्राचा पक्का सरा शीता च क्षुष्या बृंहिणी गुरुः । स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट् ॥ कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातास्रकामलान् ॥ कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । आमा साऽल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत् ॥ वृष्या स्याद् गोस्तनीद्राचा गुर्वीच कफपित्तनुत् । अबीजान्यास्वल्पतरा गोस्तनीसदृशी गुणैः ॥ द्राचा पर्वतजा लघ्वी साम्ला श्लेष्माम्लपित्तकृत । द्राचापर्वतजा यादृक् तादृशी करमर्द्दिकेतिभावप्रकाशः ॥ द्राचायाः फलम् । हरीतक्यादिभ्यश्चेतिविकारावयवप्रत्ययस्यलुप् ॥ यद्वा । द्राङ्क्ष्यते । द्राक्षिकाङ्क्षायाम् । कर्मणि घञ् । आगमशासनमनित्यम् ॥ यद्वा । गुरोश्चहलइत्य प्रत्ययः । यवादिगणेपाठान्नलोपः । अतएव द्राक्षामान् इत्यमतोर्नत्वंन भवति । अयवादिभ्यइत्युक्तेः ॥

द्राक्षासवः । पुं । माधव्याम् ॥ यथा । पीत्वा द्राक्षासवं मिष्टं शूलमादायसत्वामिति ॥

द्राघिमा । पुं । दीर्घत्वे । दैर्घ्ये ॥ दीर्घस्यभावः । पृथ् ७ इमनिच् । प्रियस्थिरेत्यादिनादीर्घस्यद्राघ्यादेशः ।

द्राघिष्ठः । त्रि । दीर्घतमे । अतिदीर्घे ॥ अतिशयेन दीर्घः । इष्ठन् । प्रियस्थिरेतिसाधुः ॥

द्राघीयान् । त्रि । दीर्घतरे ॥ अयमनयो रतिशयेन दीर्घः । ईयसुन् । प्रि

यस्थिरेति साधुः ॥

द्राणः । त्रि । सुप्ते ॥ पलायिते ॥ द्रातेः कर्त्तरिक्तः ॥

द्रापः । पुं । पङ्के ॥ आकाशे ॥ कपर्दिनि ॥ मूर्खे ॥ इतिशब्दार्थकल्पतरुः ॥

द्रामिलः । पुं । चाणक्यमुनौ ॥ इति हेमचन्द्रः ॥

द्रावः । पुं । गमने ॥ स्रवणे ॥ अनुतापे ॥ द्रवणम् । द्रुगतौ । घञ् ॥

द्रावकः । पुं । ग्रावप्रभेदे । चन्द्रकान्तमणौ ॥ विदग्धे ॥ घोषके ॥ विटे । चिट्ठे ॥ रसभेदे ॥ न । सिक्थके ॥ स्त्री हरोगस्यौषधे ॥ त्रि । हृदयग्राहिणि ॥ द्रवकारके ॥

द्रावककन्दः । पुं । तैलकन्दे ॥

द्रावकरम् । न । श्वेतटङ्कणे ॥

द्रावणम् । न । कतकफले । निर्मली इतिभाषा ॥ विद्रावणे ॥ पुं । कामबाणविशेषे ॥

द्राविका । स्त्री । लालायाम् । लाल इतिभाषा ॥

द्राविडः । पुं । द्रविडदेशजे ॥ संख्यान्तरे ॥ वेधमुख्ये । कर्चूरे ॥ स्वनाम्नाप्रसिद्धे देशे ॥ द्राविडाः पञ्च । तेयथा । कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः । आन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः इतिस्कन्दपु



राम् ॥ त्रि । तद्देशजाते ॥ द्रविडेजातः । अण् ॥

द्राविडकः । पुं । द्राविडार्थे ॥ वेधमुख्यके । जिआंचपष्ठी इतिगौड भाषा । कचूर इतिभाषा ॥ न । विड्लवणे ॥ स्वार्थेकन् ॥

द्राविडभूतिकः । पुं । वेधमुख्ये । काल्पके । कचूर इतिप्रसिद्धे ॥

द्राविडी । स्त्री । सूक्ष्मैलायाम् ॥ द्रविडेजाता । अण् । ङीप् ॥

द्रावितः । त्रि । द्रवीकृते ॥

द्राव्यः । त्रि । अवश्यद्रु गमनीये क्षरणीये अनुतपनीये ॥

द्रिमीतीर्थम् । न । भौमेतीर्थप्रभेदे ॥

द्रुः । पुं । पादपे । वृक्षे ॥ द्रवत्यूर्द्धम् । द्रुगतौ । मित० डुः ॥ वा० कुर्णा ॥ स्त्री । गतौ ॥ शाखायाम् ॥

द्रुकिलिमम् । न । देवदारुवृक्षे ॥ किलति । किलश्वैत्यक्रीडनयोः । बाहुलकात् किमच् । द्रुश्चासौकिलिमश्च ॥

द्रुघणः । पुं । मुद्गरे ॥ लौहमुद्गरे । स्वधारादीनां मुद्गराकारे लौहमयास्त्रप्रभेदे ॥ द्रुहिणे । ब्रह्मणि ॥ परश्वधे ॥ भूमिचम्पके ॥ द्रुः संसारवृक्षोवा हन्यते ऽनेन । करणे ऽयेविद्रुप्वितिवक्तेः करणे ऽप् घनादेश

श्च । पूर्वपदादितिणत्वम् ॥

द्रुणः । पुं । वृश्चिके ॥ भृङ्गे ॥ त्रि । पिशुने ॥ न । चापे ॥ कृपाणे ॥ द्रुणति । द्रुण हिंसागतिकौटिल्येषु । इगुपधेतिकः ॥

द्रुणसः । त्रि । दीर्घनासिकायुक्ते ॥

द्रुणाहः । पुं । खड्गपिधाने ॥ इतिशारावली ॥

द्रुणा । स्त्री । ज्यायाम् ॥ इतिहेमचन्द्रः ॥

द्रुणिः । स्त्री । कूर्म्याम् ॥ जलद्रोण्याम् ॥ द्रुणाति । द्रुण० । इगुपधात् किदितीन् ॥

द्रुणी । स्त्री । अम्बुद्रोण्याम् ॥ कच्छप्याम् ॥ कर्णजलौकायाम् ॥ द्रुणेरिन्नन्तात् कृदिकारादक्तिन इति ङीष् ॥ इगुपधेतिके जातेरितिङीषि गौरादित्वाद्वा ॥

द्रुतः । पुं । द्रुमे ॥ न । ओघे । नृत्यविषयकशीघ्रगमने ॥ नृत्यगीतवाद्येषु द्रवन्तिशीघ्रं गच्छन्ति समुदायमतिप्रदर्शनार्थं कालादयोऽत्र तत् द्रुतम् । अधिकरणेक्तः ॥ शीघ्रलये ॥ त्रि । शीघ्रे ॥ विलीने । जातद्रवीभावेघृतसुवर्णादौ ॥ विद्राणे ॥ पलायिते ॥ द्रवतिस्म । द्रु० गत्यर्थेतिक र्त्तरिक्तः ॥ द्रूयतेस्मवा । कर्मणिक्तः ॥ शीघ्रार्थे क्रियाविशेषणत्वात् कस्त्वे वर्त्तमानं क्लीवम् । द्रव्येतुविलिङ्गम् ॥

द्रुतविलम्बितम् । न । जगती छन्दोभेदे ॥ द्रुतविलम्बित माह नभौभरौ । यथा । तरणिजापुलिने नववल्लवीपरिषदा सह केलिकुतूहलात् । द्रुतविलम्बितचारुविहारिणं हरि महं हृदयेन सदा वहे ॥ सुन्दरीत्यप्यस्यैवसंज्ञा ॥

द्रुनखः । पुं । कण्टके ॥ द्रोर्वृक्षस्यनखः ॥

द्रुपदः । पुं । चन्द्रवंशीये नृपविशेषे । शिखण्डिधृष्टद्युम्नद्रौपदीनांजनके । पञ्चालदेशाधिपतौ ॥

द्रुपदपुत्रः । पुं । धृष्टद्युम्ने ॥ शिखण्डिनि ॥

द्रुपदपुत्री । स्त्री । द्रौपद्याम् ॥

द्रुमः । पुं । महीरुहे । वृक्षे ॥ पारिजाते ॥ कुबेरे ॥ द्रुर्वृक्षःसोऽस्यास्ति जनकतया । यद्वा । समुदायेहृत्ताः शब्दा अवयवेष्वपि वर्त्तन्तइतिन्यायात् द्रुःशाखा सा स्यास्ति । द्युद्रुभ्यांमः ॥

द्रुमनखः । पुं । कण्टके ॥ द्रुमस्यनखइव ॥

द्रुमरः । पुं । कण्टके ॥

द्रुमव्याधिः । पुं । लाक्षायाम् ॥

द्रुमशीर्षम् । न । कुट्टिमप्रभेदे ॥ कपिशीर्षं द्रुमशीर्षं तथा चाखेटशीर्षकम् । इतिकुट्टिमभेदाः स्युः शाब्दिकैःसमुदाहृताः इति शब्दरत्नाव

स्त्री ॥ वृक्षाग्रे ॥

द्रुमश्रेष्ठः । पुं । तालवृक्षे ॥

द्रुमामयः । पुं । लाक्षायाम् ॥

द्रुमारिः । पुं । गजे । हस्तिनि ॥

द्रुमाश्रयः । पुं । सरटे ॥ त्रि । वृक्षाश्रितमात्र ॥

द्रुमिणी । स्त्री । द्रुमाणां समूहे ॥ खलादिभ्यइनिर्वक्तव्यः ॥

द्रुमेश्वरः । पुं । चन्द्रमसि ॥ इतिहरिवंशः ॥ तालतरौ ॥ इतिशब्दार्थकल्पतरुः ॥

द्रुमोत्पलः । पुं । कर्णिकारे । कठचम्पा इतिभाषा ॥ द्रुमे उत्पलं तदाकारं पुष्पमस्य ॥

द्रुवयम् । न । पाच्ये । पौतवे । मानार्थे परिमाणे ॥ द्रोर्विकारभूतं प्रस्थादिपरिमाणम् । मानेवयः ॥

द्रुसल्लकः । पुं । पियाले ॥

द्रुषः । पुं । पुत्रे ॥ इति शब्दार्थकल्पतरुः ॥

द्रुहणः । पुं । ब्रह्मणि । सुरज्येष्ठे ॥ इति द्विरूपकोषः ॥

द्रुहिणः । पुं । स्रष्टरि । प्रजापतौ । ब्रह्मणि ॥ कामक्रोधादिभ्योदुष्टेभ्यो वा द्रुह्यति । द्रुहजिघांसायाम् । बहुलमन्यत्रापीति इनन् । बाहुलकाद् गुणाभावः ॥

द्रुही । स्त्री । दुहितरि ॥ इतिशब्दार्थकल्पतरुः ॥

द्रूः । पुं । हिरण्ये । स्वर्णे ॥ द्रवति । द्रुगतौ । क्विब्वचीति क्विब्दीर्घौ ॥

द्रूघणः । पुं । द्रुघणे ॥ इतिद्विरूपकोशः ॥

द्रूणः । पुं । द्रुणे ॥ इतिशब्दार्थकल्पतरुः ॥

द्रेक्कः । पुं । द्रेक्काणे ॥

द्रेक्काणः । पुं । लग्नविभागे ॥

द्रेक्काणाधिपः । पुं । लग्नविभागाधीशे ॥ स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः । ते द्रेक्काणाधिपा राशौ द्रेक्काणा स्त्रय एवहि ॥

द्रोणः । पुं । द्रोणाचार्ये । पार्थगुरौ । पुराणप्रसिद्धे धनुर्विद्यासम्प्रदायप्रवर्त्तयाचार्यविशेषे ॥ दग्धकाके ॥ वृश्चिके ॥ पर्वतविशेषे ॥ चतुःशतधनुष्परिमिते जलाशये ॥ मेघनायकविशेषे ॥ यथा । चियुते शाकल्पेतु चतुर्भिःशेषितःक्रमात् । आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥ आवर्त्तो निर्जलोमेघः संवर्त्तश्चबहूदकः । पुष्करोदुष्करजलो द्रोणःसस्यप्रपूरकः ॥ श्वेतवर्णक्षुद्रपुष्पवृक्षविशेषे । घलघसियाइति हलकसियाइतिचगौडभाषा ॥ पुं । न । आढकपरिमाणे ॥ आढकाप चतुष्ट

ये। आढकचतुष्टये॥ ३२ सेर इति लौकिकमाने। घटे। कलसे। उन्माने। इति वै० प०॥ खार्याःषोडशांशे॥ द्रोणस्तु खार्याः खलु षोडशांशः। इति ली०॥ अष्टाढको भवेद्‌द्रोण इति केचित्॥ द्विशतंद्रोण इति कुल्लूकभट्टः॥ द्रुणति। द्रुण०। पचाद्यच्॥ द्रवति। द्रु०। छृदृजृसिद्रुपन्यनिस्वपिभ्योनिदिति नः॥

द्रोणकाकः। पुं। दण्डकाके। कृष्णकाके॥ द्रोणाख्यःकाकः॥

द्रोणक्षीरा। स्त्री। द्रोणदुघायांगवि॥ द्रोणपरिमितं क्षीरमस्याः॥

द्रोणगन्धिका। स्त्री। रास्नायाम्॥

द्रोणघा। स्त्री। द्रोणक्षीरायाम्॥

द्रोणदुग्धा। स्त्री। } द्रोणक्षीरायाम्॥
द्रोणदुग्धिका। स्त्री। }

द्रोणदुघा। स्त्री। द्रोणमितदुग्धायां गवि। द्रोणक्षीरायाम्॥ द्रोणं दोग्धि। दुह०। दुहःकप्घश्चेति कप् घश्चान्तादेशः॥

द्रोणपर्णी। स्त्री। भूमिकन्दल्याम्॥

द्रोणपुष्पी। स्त्री। गुम्मा इति ख्याते क्षुपे। कुम्भयोनौ। खर्वपत्रायाम्॥ द्रोणपुष्पी गुरुः स्वादू रूक्षोष्णा वातपित्तकृत्। सक्षारलवणा स्वादुपाका कट्वीच भेदिनी॥ कफामकामलाशोथतमकश्वासजन्तुजित्॥ घलघसिया इति गौडेषु प्रसिद्धेगोशीर्षकक्षुपे॥ कफार्शः कामलाकृमिशोथमाभिस्त्वमिश्यस्याः गुणाः॥

द्रोणपुष्पीदलम्। न। गुम्माख्यशाके॥ द्रोणपुष्पीदलं स्वादु रूक्षं गुरुच पित्तकृत्। भेदनंकामलाशोथमेहज्वरहरं कटु॥

द्रोणमाना। स्त्री। द्रोणदुघायाम्॥

द्रोणमुखम्। न। चतुःशतग्राममध्येमनोहरग्रामे॥ इतिहारावली॥

द्रोणा। स्त्री। द्रोणपुष्पिकायाम्॥

द्रोणाचार्य्यः। पुं। भारद्वाजे। कीर्त्तिभाजि। अश्वत्थाम्नःपितरि। कृपीपतौ। पाण्डवानामस्त्रशिक्षागुरौ॥ द्रोणश्चासावाचार्य्यश्च॥

द्रोणिः। स्त्री। द्रोण्याम्॥ द्रवति। द्रुगतौ। वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदिति निः॥

द्रोणिका। स्त्री। नीलीवृक्षे॥

द्रोणी। स्त्री। देशविशेषे॥ शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः॥ काष्ठाम्बुवाहिन्याम्। काष्ठादिकृतक्षुद्रनौकाकृत्यम्बुसेचन्याम्॥ गवादन्याम्॥ नौकाप्रभेदे॥ शैलविशेषे॥ नीलीवृक्षे॥ नदीविशेषे॥ शैलयोः सन्धौ॥ इन्द्रचिर्भिट्याम्-

॥ द्रोणीलवणे ॥ द्विसूर्पपरिमाणे । गोण्याम् । १२८ सेर इति भाषा । इति वै प० ॥ काष्ठरचितेजलमपात्रे ॥ यथा । ह्रीवेरपद्मकोशीरचन्दनाम्बुजवारिणा । सम्पूर्णामवगाहेतद्रोणीं दाहार्दितोनरः इति ॥ निम्नत्वयाम्नाद्गृह्यतेः कृदिकारादितिङीष् । गौरादित्वाद्वा ॥

द्रोणीदलः । पुं । केतकीपुष्पे ॥

द्रोणीमुखम् । न । द्रोणमुखे ॥ इतिभूरिप्रयोगः ॥

द्रोणीलवणम् । न । उपकर्णाटदेशप्रसिद्धे लवणविशेषे । त्रिकूटलवणे । वार्द्धिभवे ॥

द्रोमिणः । पुं । चाणक्ये मुनौ । अंशुले ॥

द्रोहः । पुं । जिघांसायाम् । अनिष्टचिन्तने । अपक्रियायाम् ॥ देवद्रोहाद्गुरोर्द्रोहः कोटिकोटिगुणाधिकः इति कूर्मपुराणम् ॥ परजिघांसया शस्त्रग्रहणादौ ॥ छद्मवधे ॥ हिंसातु द्रोहजन्या परेतु हिंसामेवद्रोहंमन्यन्ते ॥

द्रोहचिन्तनम् । न । परानिष्टविभावने । व्यापादे ॥ द्रोहस्यचिन्तनम् । ल्युट् चेति भावे ल्युट् ॥

द्रोहाटः । पुं । गाथाप्रभेदे ॥ मृगलुब्धके ॥ वैडालव्रतिके ॥ इतिमेदिनी ॥

द्रोही । त्रि । द्रोहके । परानिष्टचिन्तके ॥

द्रौणायनः । पुं । अश्वत्थाम्नि ॥ द्रोणस्यापत्यम् । फक् । द्रोणपर्वतेतिसूत्रे अनादिरिहद्रोणशब्दयुक्ते भारतप्रसिद्धे ऽनन्तरापत्ये ऽश्वत्थाम्नि द्रौणायन इति प्रयोगस्तु पचारात्बोध्यः ॥

द्रौणिः । पुं । अश्वत्थाम्नि ॥ द्रोणस्यापत्यम् । अतइञ् ॥ एकोनविंशतसम्प्राप्ते द्रौणिर्व्यासो भविष्यति ॥

द्रौणिकः । पुं । कटाहे ॥ द्रोणं स्वस्मिन् समावेशयतीत्यर्थात् ॥ त्रि । द्रोणवापक्षेत्रे । द्रोणपरिमितव्रीह्यादिवापयोग्यक्षेत्रे ॥ द्रोणस्यवापः । तस्य वापइतिठञ् ॥ त्रि । द्रोणम् पचति । सम्भवत्यवहरति पचति इतिठञ् ॥ द्रोणेनक्रीते ॥ निष्कादित्वाट्ठक् ॥

द्रौपदी । स्त्री । कृष्णायाम् । नित्ययौवनायाम् । पाञ्चाल्याम् । याज्ञसेन्याम् । पाण्डवानां स्त्रियाम् ॥ अस्याः पञ्चस्वामित्वे हेतुर्व्यासैवर्णयथा । राजा ददौ फाल्गुनाय कन्यायाश्च स्वयं वरे । पप्रच्छ मातरं वीरो वस्तु प्राप्तंमयाधुना ॥ तमुवाच स्वयंमाता गृहाण भ्रातृभिः सह । शश्वोत्तरेणपूर्वञ्च परचमातु राज्ञया ॥ द्रौपद्याः स्वामिनस्तेनहेतुना पञ्चपा-

यद्वा इति ॥ द्रुपदस्यापत्यं स्त्री। अ
ण्। ङीप् ॥

द्रौपदेयः। पुं। प्रतिविन्ध्यादिपञ्चसु
द्रौपदीतनयेषु ॥ द्रौपद्याः अपत्यम्
पुमान्। स्त्री भ्योढक् ॥

द्वन्द्वः। पुं। रोगविशेषे ॥ उभयपदार्थ
प्रधाने समासे। अव्ययीभावतत्पु
रुषबहुव्रीहिसमासभेदानामुभयप-
दार्थसाम्याभावेनापकृष्टत्वात् द्वन्द्व
समासो भगवद्विभूतिः॥ सद्विधा। इ
तरेतरयोगसमाहारभेदात् ॥ पर
स्परविरुद्धे सम्मानावमानादौ। शी
तोष्णादौ ॥ यथा क्षुत्पिपासे शोक
मोहौ। रागद्वेषौ तथैवच। कामक्रो
धप्रभृतयो द्वन्द्वशब्देनवर्णिताइति ॥
न। रहस्ये॥ कलहे। आहवे॥ मि
थुने। युग्मे॥ द्वौद्वौ सहाभिव्यक्तौ
इति द्वन्द्वम्। द्वन्द्वंरहस्यमर्यादाव
चनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्य
क्तिष्विति द्विशब्दस्य द्विर्वचनं पूर्वप
दस्याम् भावो ऽत्वञ्चोत्तरपदस्य न
पुंसकत्वञ्च निपात्यते एष्वर्थेषु। चा
र्थेद्वन्द्वइतिनिर्देशात् पुंस्त्वमपि ॥ दुर्गे ॥
यथा। राज्ञोवलंनहिवलं द्वन्द्वमेव-
वलंवलम्। अप्यल्पवलवान् राजा-
स्थिरोद्वन्द्ववलाद्भवेदिति ॥

द्वन्द्वगदः। पुं। रागद्वेषादिरूपेद्वन्द्वरोगे
॥ यथा। अहं हरिः सर्वमिदं जनार्द
नोनान्यंततः कारणकार्यजातम्।
ईदृङ्मनोयस्य न तस्य भूयोभवोद्भवा
द्वन्द्वगदाभवन्तीतिविष्णुपुराणम् ॥

द्वन्द्वचरः। पुं। } चक्रवाके॥ द्वन्द्वंच
द्वन्द्वचारी। पुं। } रति। चर०। प-
चाद्यच् ॥ ताच्छील्येणिनिः ॥

द्वन्द्वजः। पुं। द्विदोषजरोगे ॥ अस्यपू
र्वरूपम्। रूपै रन्यतराभ्यान्तुसंसृ-
ष्टं द्वन्द्वजं विदुरिति। अन्यतराभ्यां
अन्यानेवदाहाभ्यां अन्याभ्याक्षिभ्यां
नेत्रदाहाभ्याक्षिभ्यांवा संसृष्टैरूपैः
अमादिभि र्द्वन्द्वजं पूर्वरूपंविदुर्जा-
नीयुः ॥

द्वन्द्वयुक्तिः। पुं। दुर्गविचारग्रन्थे ॥ स
यथा। राज्ञो वलं नहि वलं द्वन्द्व
मेव वलं वलम्। अप्यल्पवलवान्
राजास्थिरो द्वन्द्ववलाद् भवेत्॥ त-
थाच। एकः शतं योधयति प्राकार
स्थो धनुर्द्धरः। शतं दशसहस्राणि
तस्माद् दुर्गं विशिष्यते ॥ अकृत्रिमं
कृत्रिमञ्च तत् पुन र्द्विविधं भवेत्।
यद् दैवसृष्टितं द्वन्द्वं गिरिनद्यादिसं
श्रितम् ॥ अकृत्रिम मिदं ज्ञेयं दुर्लं
घ्य मरिभूभुजाम्। प्राकारपरि
खाद्यसंश्रयं यद् भवेदिह। कृ
त्रिमं नाम विज्ञेयं लङ्घ्यालङ्घ्य

न्तु वैरिणाम् ॥ तत्राकृत्रिमदुर्गयुक्ति र्यथा । अत्युच्चविस्तीर्णगिरा दुरारोहः सकाननः । सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः ॥ सुखनिःसरणो दुर्गः पर्वताख्यो महीभुजाम् । नद्यो गभीरविस्तीर्णा स्ततुर्दिक्षु व्यवस्थिताः ॥ तन्मध्ये भूप्रदेशो यो नदीदुर्गः स उच्यते । यदन्यत्र चिरकालीनं दुर्लङ्घ्यविपिनादिकम् ॥ तन्मध्यरचिता भूमि र्दुर्गत्वेनो पतिष्ठते । वनदुर्गमितिख्यातं यथा पूर्वं महत्तरम् ॥ * ॥ कृत्रिमदुर्गयुक्तिर्यथा । यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः । तस्यमध्ये महीपालः कृत्रिमं दुर्ग मारभेत् ॥ गजैरलङ्घ्या विस्तीर्णा गम्भीराःपूर्णवारयः । दुर्गत्वेन समादिष्टाः परिखा वहुयादसः ॥ विशालशालं सुघनं वहुकण्टकिसङ्कटम् । दुर्गत्वेन समादिष्टं विस्तीर्णं विषमं वनम् ॥ अधोधो वध्यमानोपि कन्दराल्पजलस्रवम् । दुर्गत्वेन समुद्दिष्टः स दुर्लङ्घ्यो हि भूभुजाम् ॥ सर्वतः परिखां कृत्वा निरन्ध्रोपरिकन्दरम् । तज्जलप्लुतदेशत्वात् जलदुर्गं तदुच्यते ॥ एषा मभावे निम्नस्य भूप्रदेशस्य दन्धनात् । वर्षासु



प्लवते वारि जलदुर्गं ततो भवेत् ॥ एतयो रपि संमिश्रात् संमिश्रं दुर्ग माचरेत् । आश्रित्य कृत्रिमं दुर्गं वलवद्वैरिणो दिशि ॥ अन्यत्र कृत्रिमं दुर्गं कृत्वा नरपति र्वसेत् । रथपति र्यदावैरी स्थलदुर्गं तदाचरेत् ॥ गजाश्वनाथस्ते वैरी जलदुर्गं तदाचरेत् । गिरिदुर्गं नृपः सेवेत् यस्य स्याद् विविधो रिपुः ॥ सर्वोहि त्रिविधो युद्धः समासा दुपदिश्यते । प्रतिराजस्य राज्यान्ते प्रकटे गुप्तएव च ॥ राज्यान्ते सैनिकान् रचेत् प्रकटे निवसेत् स्वयम् । गुप्ते स्वीकोषसम्भारं संरक्षे दिति निश्चयः ॥ * ॥ अथसामान्यतो गुणाः । तथा हिनीतिशास्त्रम् । सप्रवेशापसरणं दुर्ग मुत्तम मुच्यते । अन्यत्र वन्दिशालेव न तादृग् वद्ध माश्रयेत् ॥ धनुर्दुर्गं महीदुर्गं गिरिदुर्गं तथैव च । मनुष्यदुर्गसंसर्गं वनदुर्गञ्च तानि षट् ॥ * ॥ अन्येतु । न दुर्गं दुर्ग मित्याहुर्या दुर्दुर्गं प्रकीर्त्तितम् । योऽदृशून्यं हि यद् दुर्गं मृतकायसमं हि तत् ॥ * ॥ अथान्यत्रापि । यावत् प्रमाणं नगरं हि राज्ञां ततो भवे दुत्तममध्यमाभ्याम् । त्रिंशत्तद्दर्शितगुणोत्तरेणाच्चदेशजानां धरि

णीपतीनाम् ॥ गर्गस्तु । यद्दम्पतद्वि विधं द्वन्द्वं प्रोच्यते धरणीभुजाम् । ताभ्या मेवातिरिच्येत मन्त्रद्वन्द्वं वि शेषतः ॥ अन्येषु दैवाद् भिन्नेष्वम-न्त्रद्वन्द्वाज् जयेन् नृपः । मन्त्रद्वन्द्वे हि भिन्ने हि नचान्यत् कार्यकारक म् ॥ भोजस्तु । यद्दैववैरिदुर्लङ्घ्यं विस्तीर्णं विषमञ्च तत् । सप्रवेशा पसरणं तद् द्वन्द्वमुत्तमं विदुरिति ॥

द्वन्द्वातीतः । त्रि । द्वन्द्वैरक्षुभितचित्ते ॥ द्वन्द्वानि क्षुत्पिपासाशीतोष्णवर्षादी नि अतीतोऽतिक्रान्तः । समाधिद शायां तेषामस्फुरणात् व्युत्थानद शायां स्फुरणेपि परमानन्दाद्वितीया कर्त्रभोक्तात्मप्रत्ययेन बाधात् तैर्द्व न्द्वैरुपहन्यमानोप्यक्षुभितचित्तउ-च्यते ॥

द्वन्द्वाभयः । पुं । अग्निभयादिजातश स्त्रप्रवेशे ॥ अग्निकृतदाहेन मरुा दिजलप्लावनेन अनवरतवृष्टिपातेन् वा क्रुद्धेन राज्ञा पातितत्वेनवा योश स्त्रनाश स्तत्कृतं यदापुनः सम्पाद्य-तस्मिन् यः प्रवेशः सद्वन्द्वाभय इत्यु च्यते । अन्वर्थसंज्ञेयम् । शीतोष्ण रूपद्वन्द्वात् पुनरुत्थापनेन यदभयं तत् द्वन्द्वाभयं विद्यतेयस्मिन्निति म त्वर्थीयः प्रत्ययः ॥



त्र्यम् । न । द्वितये । युग्मे ॥ द्वावयवा यस्य । सङ्ख्याया अवयवेतयप् । द्वि त्यस्यांतयस्यायज्वा ॥

द्वयाग्निः । पुं । पाठिद्रुमे । चित्रके । चीता इतिभाषा ॥

द्वयातिगः । त्रि । रजस्तमोविहीने । वि रजस्तमसि । सत्त्वगुणयुक्ते ॥ द्वयम तिगच्छति । गम्लृ० । ड्म्ये० डः ॥

द्वाःस्थः । पुं । प्रतीहारे ॥ नन्दीश्वरे ॥ द्वारितिष्ठति । ष्ठा० । सुपीतिकः ॥

द्वाःस्थितः । त्रि । दर्शके । द्वारपाले ॥ द्वारितिष्ठतिस्म । ष्ठा० । गत्यर्थाक र्मकेति क्तः ॥

द्वाःस्थितदर्शकः । पुं । } द्वारपाले ।
द्वाःस्थितदर्शी । पुं । } प्रतीहारे ॥

द्वाचत्वारिंशत् । स्त्री । द्विचत्वारिंशति । बेयालीस इतिभाषा ॥

द्वात्रिंशत् । स्त्री । सङ्ख्याविशेषे । बत्ती स इतिभाषा ॥ तत्सङ्ख्येये ॥ द्वौ चत्रिंशच्च । द्व्यधिकाः त्रिंशद्वा । द्व्यष्ट नः सङ्ख्यायामित्यात्त्वम् ॥

द्वात्रिंशदक्षरी । स्त्री । ग्रन्थे ॥ द्वात्रिंशदक्षरापदौ । अनुष्टुप्छन्दसि ॥ विद्याविशेषे ॥

द्वात्रिंशल्लक्षणोपेतः । पुं । महापुरुषे ॥ तल्लक्षणानियथा । रागः सप्तसुनख षट्स्वपिशिषोरङ्गेष्वलंतुङ्गता वि-स्तारस्त्रिषु खर्वता त्रिषु तथागम्भीर

तावचिषु। दैर्घ्यंपञ्चसु किञ्चपञ्चसु सखे सम्प्रेच्यते सूच्मता द्वात्रिंशद्दरलचणः कथमसौगोपेषुसम्भाव्यते इतिश्रीहरिभक्तिरसामृतसिन्धुः ॥ सप्तसु नेत्रान्तपादकरतलतालधरोष्ठजिह्वानखेषु। षट्सु वचःस्कन्धनखनासिकाकटिमुखेषु। त्रिषुकटिललाटवक्षस्सु। केचित्कटिस्थानेशिरः पठन्ति। त्रिषु ग्रीवाजङ्घामेहनेषु। पुनस्त्रिषु नाभिस्वरसत्त्वेषु। पञ्चसु नासाभुजनेत्रहनुजानुषु। पुनः पञ्चसु त्वक्केशरोमदन्ताङ्गुलिपर्वसु॥ द्वात्रिंशद्राणि तत्तल्लचणेभ्योऽन्येभ्योपिश्रेष्ठानि लचणानि यस्य सः गोपेषु कथमिति भगवदवतारादिष्वप्येतादृशत्वाश्रवणादितिभावः। इति श्रीमद्व्रजेश्वरं प्रतिकस्यचित्सवयसे गोपस्याश्चर्यसूचकंवचनम् ॥

द्वादशः। त्रि। द्वादशानां पूरणे॥ तस्य पूरणेडट्॥

द्वादश। त्रि। सङ्ख्याप्रभेदे॥सङ्ख्येये॥ द्वौचदशच। द्यधिकादशेतिवा। द्यष्टनङ्स्यात्वम्॥

द्वादशकरः। पुं। षडानने। कार्त्तिकेये॥ वृहस्पतौ॥ द्वादशकरा अस्य॥

द्वादशपत्रकम्। न। वामनपुराणोक्ते देवस्य योगविशेषे॥

द्वादशलोचनः। पुं। कार्त्तिकेये॥ द्वादशलोचनान्यस्य॥

द्वादशांशः। पुं। मयद्वादशांशे॥ मेषादीनान्तुराशीनां स्वराशेर्द्वादशांशकाः। यथा। मेषे प्रथमद्वादशांशेकांशोमेषस्य। द्वितीयोवृषस्य। तृतीयोमिथुनस्य। तथा कर्कसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनानां क्रमादेकैकांशाज्ञेयाः॥ वृषादिष्वप्येवं स्वराशिमारभ्यद्वादशांशाज्ञेयाः॥

द्वादशांशाधिपः। पुं। राशीना मधिपा येच द्वादशांशाधिपास्तुते॥ ये मेषादीना मधिपा स्तएव द्वादशांशाधिपा ज्ञेयाः॥

द्वादशांशुः। पुं। वृहस्पतौ॥

द्वादशात्मः। पुं। अर्के॥ बुद्धमुनौ॥ इति हेमचन्द्रः॥

द्वादशाख्यः। पुं। बुद्धे॥ इतित्रिकाण्डशेषः॥

द्वादशाङ्गः। पुं। धूपविशेषे॥यथा। गुग्गुलुश्चन्दनं पत्रं कुष्ठञ्चागुरुकुङ्कुमम्। जातीकोषञ्चकर्पूरं जटामांसीच वालकम्॥ त्वगुशीरञ्च धूपो ऽसौद्वादशाङ्गः प्रकीर्त्तितइति॥

द्वादशाङ्गुलः। पुं। वितस्तौ॥ द्वादशअङ्गुलयः प्रमाणमस्य। तद्धितार्थेद्विगुः। द्विगोर्नित्यमिति मात्रचोलु

क । तत्पुरुषस्याङ्गुलेरित्यथ ॥

द्वादशात्मा । पुं । दिवाकरे ॥ द्वादशआत्मानो मूर्त्तयो यस्य ॥ अर्कवृक्षे ॥

द्वादशायुः । पुं । कुक्कुरे ॥

द्वादशार्च्चिः । पुं । बृहस्पतौ ॥

द्वादशी । स्त्री । तिथिविशेषे ॥ सा च सूर्य्यस्य द्वादशकलाक्रियारूपा । सा च विष्णोस्तिथिः ॥ मार्गशीर्षशुक्लद्वादशी मत्स्यद्वादशी । पौषी कूर्मद्वादशी । माघी वराहद्वा० । फाल्गुनी नृसिंहद्वा० । चैत्री वामन द्वा० । वैशाखी जामदग्न्यद्वा० । ज्यैष्ठी रामद्वा० । आषाढी कृष्णद्वा० । श्रावणी बुद्धद्वादशी । भाद्री कल्किद्वा० । आश्विनी पद्मनाभद्वा० । कार्त्तिकी नारायणद्वादशी ॥ एतासां नाम धरणीव्रतम् ॥ इति वाराह पुराणम् ॥ द्वादशीजातस्य फलम् । बहुप्रजः सर्वजनानुरागी भूपालमान्य स्वतिथिप्रियः स्यात् । चेद्द्वादशी यस्य जनस्य सूतौ प्रवासहीनो व्यवहारदक्षः ॥

द्वापरः । पुं । संशये । सन्देहे ॥ त्रेतायुगानन्तरयुगे ॥ भाद्रकृष्णत्रयोदश्यां गुरुवारे ऽस्योत्पत्तिः ॥ अस्य परिमाणं यथा । अष्टौ शतसहस्राणि वर्षाणां द्वापरं युगमिति ॥ तद्धर्मा मत्स्यपुराणादौ द्रष्टव्याः ॥ ततोपि द्वापरे प्राप्ते मृत्युक्तसुकृतोज्झिते । धर्मार्द्धलोपे मनुजे आधिव्याधिसमाकुले ॥ संहितायुपदेशेन त्वयैवोद्धारिता नरा इति श्रीमहानिर्वाणतन्त्रे प्रथमोल्लासः ॥ तत्र तारकब्रह्मनाम । हरे मुरारे मधुकैटभारे गोपाल गोविन्द मुकुन्द सौरे । यज्ञेश नारायण कृष्ण विष्णो निराश्रयं मां जगदीश रक्षेति ॥ द्वौ परौ प्रकारौ यस्याम वा । सर्वं नाम सङ्ख्ययोरिति द्विशब्दस्य पूर्वनिपातः । पृ० आत्वम् ॥ द्वाभ्यां परो वा ॥ द्वापराये ॥

द्वापरावः । पुं । द्यूतक्रीडासाधनीभूतासस्य यत्र भागे द्वावङ्कौ भवतस्तस्मिन्भागे ॥ द्वापरनामको ऽयः ॥

द्वामुष्यायणः । पुं । औद्दालकौ । गौतमे ॥

द्वाः । स्त्री । निर्गमने । प्रतीहारे ॥ उपाये ॥ यथा ज्ञानद्वारा भवेन्मुक्तिरिति ॥ द्वारयति । दृवरणे । णिजन्तः । विच् ॥ यद्वा । द्वार्यते । सं क्विप् ॥

द्वारम् । न । अभ्युपाये ॥ निर्गमने ॥ यथा । गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च । न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ॥ मुखे ॥ बाह्येन्द्रियैरुपनीतं विषयं समनोद्धारा बुद्धिर्यस्मात् तद्विषयमवगा

हते ऽ ध्यवस्यति तस्माद् बाह्यानी न्द्रियाणि द्वाराणि भवन्ति । द्वारयति । दृ । अच् । द्वार्यतेवा ॥

द्वारकः । पुं । द्वारकापुर्याम् ॥ इतिशब्दरत्नावली ॥ रवेःपार्श्वेणाम्भरे ॥

द्वारकण्टकः । पुं । कपाटे ॥

द्वारका । स्त्री । द्वारवत्याम् । अब्धिनगर्याम् ॥ सर्वतीर्थपराश्रेष्ठा द्वारका वहुपुण्यदा । यस्याः प्रवेशमात्रेण नराणां जन्मखण्डनम् ॥ दानञ्च द्वारकायाञ्च श्राद्धञ्चदेवपूजनम् । चतुर्गुणञ्चतीर्थानां गङ्गादीनाञ्चभूमिपेति ब्र० वै० पु० ॥

द्वारकेशः । पुं । श्रीकृष्णे ॥ द्वारकाया ईशः ॥

द्वारताली । स्त्री । द्वारयन्त्रे ॥

द्वारदातुः । पुं । वरदातौ । भूमीसहचे ॥ इति भावप्रकाशः ॥

द्वारदुर्गक्रिया । स्त्री । कीलखननजलौघवनादिभिर्दुर्गमत्वकरणे ॥

द्वारपः । त्रि । प्रतीहारे । द्वास्थे ॥ द्वारंपाति । पा० । आत इति कः ॥

द्वारपालः । पुं । द्वाररक्षके । प्रतीहारे ॥ द्वारं पालयति । पालरक्षणे । कर्मण्यण् ॥

द्वारपालकः । पुं । दौवारिके । द्वारपे ॥ स्वार्थे कन् ॥

द्वारपिण्डी । स्त्री । देहल्याम् ॥

द्वारयन्त्रम् । न । द्वारताल्याम् । ताला के । ताला इति भाषा ॥ द्वारस्य द्वारेवा यन्त्रम् ॥

द्वारवती । स्त्री । अब्धिपुर्याम् । द्वारकायाम् ॥ साम्तःकरणायां वुद्धौ ॥ मनोवत् वाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं वुद्धिः अपितु ये अपि अहङ्कारमनसी द्वारे ते अप्यपेक्ष्य वुद्धिः प्रधानम् ॥

द्वारवलिभुक । पुं । वके ॥

द्वारस्थः । पुं । वेत्रिणि । दौवारिके ॥ द्वारेतिष्ठति । ष्ठा० । कः ॥

द्वारावती । स्त्री । वनमालिन्याम् । द्वारिकायाम् ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरीद्वारावतीचैव सप्तैतामोक्षदायिकाः ॥ एतास्तुपृथिवीमध्ये न गण्यन्ते कदाचन । पुरीद्वारावती विष्णोः पाञ्चजन्योपरिस्थिता ॥ मुक्तिदा एताः सर्वाश्च एकत्र गणिताः सुरैः । यानि यानिच क्षेत्राणि काशीप्राप्तिकराणि षडिति भूतशुद्धितन्त्रम् ॥

द्वारि । न । प्रधाने । प्रकृतौ ॥ साम्तःकरणा वुद्धिः सर्वं विषय मवगाहते यस्मात् । तस्मात् त्रिविधं करणं द्वारि द्वाराणिशेषा णीति साङ्ख्याः ॥

द्वारिका। स्त्री। द्वारावत्याम्॥ इ० श्रम्०॥

द्वारी। त्रि। द्वारपाले॥ द्वारमस्यास्य। इनिः॥

द्वात्रिंशतिः। स्त्री। द्व्यधिकविंशतौ॥

द्वासप्ततिः। स्त्री। द्विसप्ततौ॥ द्व्यधिकासप्ततिः॥

द्वास्थः। त्रि। प्रतीहारे॥ द्वारितिष्ठति। ष्ठा०। सुपीतिकः। खर्परे शरि वा विसर्गलोपो वक्तव्यः॥

द्वास्थितः। त्रि। द्वारपाले॥ द्वारितिष्ठति। ष्ठा०। गत्यर्थाकर्मकेति क्तः। पाक्षिको विसर्गलोपः॥

द्वास्थितदर्शकः। त्रि। दौवारिके॥

द्वि। त्रि। दो इति भाषाप्रसिद्धायां सङ्ख्यायाम्॥ सङ्ख्येये॥ यथा। द्वौविप्रौ॥

द्विकः। पुं। काके॥ कोके॥ द्वौ कौ वर्णविशेषौ यस्यनाम्नीत्यर्थः॥ द्वितीयके॥ द्वितीयेनरूपेण ग्रहणं ग्रन्थस्य। तावतिथं ग्रहणमितिलुग्वेति कन् पूरणप्रत्ययस्यच वा लुक्। ग्रन्थ एवप्रयोगः॥ न। द्वये॥

द्विककारः। पुं। वायसे। काके॥ द्वौ ककारौ नाम्नियस्य॥

द्विककुत्। पुं। उष्ट्रे॥ इति हेमचन्द्रः॥

द्विगुः। पुं। सङ्ख्यापूर्वे तत्पुरुषावान्तरसमासविशेषे॥ सचित्रिविधः। त



द्धितार्थः समाहारः उत्तरपदपरश्चेति भेदात्। तद्धितार्थोऽपिद्विविधः। तद्धितप्रत्ययमात्रस्यलुगादेशसादेशार्थे विषये इत्येकः। अपत्याद्यर्थप्रत्ययादिकं त्यक्त्वा अन्यादेस्तद्धितस्यार्थे वाच्ये इत्यपरः। तद्धितार्थविषयो यथा। द्वयोर्मात्रोरपत्यं द्वैमातुरः। पञ्चानां नापितानामपत्यम् पाञ्चनापितिः॥ तद्धितार्थवाच्योयथा। पञ्चभिर्गोभिःक्रीतः पञ्चगुः॥ समाहारो यथा। त्रयाणां सखीनांसमाहारः त्रिसखम्। समाहारे अदन्तानां स्त्रीत्वं पात्रादेस्तुक्लीवत्वम्॥ उत्तरपदपरो यथा। पञ्चगावोधनं यस्यस पञ्चगवधन इत्यादिः॥ इति मुग्धबोधटीकायां दुर्गादासः॥

द्विगुणः। त्रि। द्वाभ्यां पूरणे। अङ्कद्वयाभ्यांघाते॥ द्वौगुणौ आवृत्तीयस्यसः॥

द्विगुणाकृतम्। त्रि। द्विःकृष्टक्षेत्रे। वारद्वयकृष्टक्षेत्रे॥ द्विगुणं कृतम्। सङ्ख्यायाश्च गुणान्तायाः इतिडाच्॥

द्विगुणितः। त्रि। द्विरावृत्तकृते॥

द्विजः। पुं। ब्राह्मणे॥ क्षत्रिये॥ वैश्ये॥ जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेनच। एभिर्युक्तोहि य स्तिष्ठे न्नित्यं स द्विजउच्यते॥ नजाति र्नैकुलं राजन् नस्वाध्यायः श्रुतंनच। का

रयाणि द्विजत्वस्य हेत्तमेवतु कारणम्॥ इतिवह्नि पुराणे वशिष्ठ वाक्यम्॥ दन्ते॥ अण्डजे॥ द्विर्जायते। जनी°। अन्येष्वपीतिडः॥ तुम्बुरुवृक्षे॥

द्विजकुत्सितः। पुं। श्लेष्मवृक्षे। श्लेष्मातके॥ द्विजैः कुत्सितः॥

द्विजदासः। पुं। शूद्रे॥ त्रि। द्विजानां दासे॥

द्विजदेवः। पुं। ब्राह्मणे॥ द्विजेषु देव इव॥ न्नृषो॥ इति श्रीधरस्वामी॥

द्विजन्मा। पुं। विप्रे॥ दशने॥ द्वेजन्मनी अस्य॥ ब्राह्मणादित्रये॥ खगे॥

द्विजपतिः। पुं। चन्द्रे॥ द्विजानांपतिः॥

द्विजप्रपा। स्त्री। पक्षिणां जलपानार्थं विहितकूपाद्यन्तिकखाते। तत्ने। आलवाले॥ द्विजानां प्रपा॥

द्विजप्रिया। स्त्री। सोमलतायाम्॥ त्रि। द्विजस्यप्रियवस्तुनि॥

द्विजबन्धुः। पुं। त्रैवर्णिकाधमे॥ द्विजा बन्धवोयस्य सः॥

द्विजब्रुवः। पुं। जातिमात्रोपजीविनि ब्राह्मणे। ब्राह्मणब्रुवे॥

द्विजराजः। पुं। चन्द्रे॥ अनन्ते॥ गरुडे॥ द्विजानांराजा। राजाहः सखिभ्यष्टच्॥ कर्पूरे॥

द्विजलिङ्गी। पुं। क्षत्रिये॥ त्रि। विप्रचिह्नधारिणि॥

द्विजवरः। पुं। द्विजोत्तमे॥ द्विजेषु द्विजानांवा मध्ये वरः॥ चतुष्कलस्यप्रथमे (।।।।) पर्याये॥

द्विजवर्य्यः। पुं। विप्रश्रेष्ठे॥

द्विजव्रणः। पुं। दन्तार्वुदे॥

द्विजशप्तः। पुं। राजमाषे। वरवटी इति गौडभाषा प्रसिद्धे॥ त्रि। द्विजैः शप्ते॥

द्विजसेवकः। पुं। शूद्रे॥ त्रि। द्विजानां सेवाकर्त्तरि॥

द्विजा। स्त्री। भार्ग्याम्॥ हरेणौ। रेणुकानामगन्धद्रव्ये॥ टाप्॥

द्विजाङ्गी। स्त्री। कटुकायाम्॥

द्विजातिः। पुं। विप्रे॥ वेदाध्ययनादितुल्यधर्मत्त्वाद् ब्राह्मणादित्रिके॥ ब्राह्मणः क्षत्रियो वैश्य स्त्रयोवर्णाद्विजातयः। चतुर्थएकजातिस्तुशूद्रो नास्तितु पञ्चम इतिमनुः॥ शूद्रादिजातिभिर्जातो न भूमेर्भोगमर्हतीतिस्मृतिः॥ द्वे जाती जन्मनी यस्य सः॥ मातुरग्रेधिजननं द्वितीयं मौञ्जिबन्धने इत्युक्तेः॥ पक्षिसर्पाण्डजेषु॥

द्विजायनी। स्त्री। यज्ञोपवीते॥ इति शब्दरत्नावली॥

द्विजालयः। पुं। कोटरे॥ द्विजानां गृहे॥

द्विजावलिः । स्त्री । दन्तपङ्क्तौ ॥

द्विजिह्वः । पुं । सर्पे ॥ त्रि । खले ॥ द्वे जिह्वेयस्यसः ॥ चौरे ॥

द्विजोत्तमः । पुं । ब्राह्मणे ॥

द्विट्सेवी । त्रि । शत्रुसेविनि ॥

द्वितयम् । न । युग्मे । द्वये ॥ द्वाववयवौ अस्य । सङ्ख्याया अवयवेतयप् ॥

द्वितयी । स्त्री । युग्मायाम् ॥ टिड्ढे-ङीप्

द्वितीयः । त्रि । द्वयोः पूरणे । द्विपूरके ॥ द्वयोः पूरणः । द्वेस्तीयः ॥ द्विती येभागे ॥ पूरणाद्भागेतीयादन् ॥ पुं । पुत्रे ॥

द्वितीयकः । पुं । ज्वरविशेषे ॥ द्वितीये अहनि भवः । कालप्रयोजनाद्रोग इतिकन् ॥ द्विके ॥ द्वितीयेनरूपेण ग्रहणम् । तावतिथं ग्रहणमितिलुग्वे तिकन् ॥

द्वितीया । स्त्री । तिथिप्रभेदे । चन्द्र मसोद्वितीयकलाक्रियारूपायाम् ॥ सा अश्विनीकुमारयोर्जन्मतिथिः ॥ अत्रजातस्य फलम् । निखिलगुणग-भीरो दानशीलो दयालुः स्वकुलकु मुदचन्द्रः स्वच्छचित्तोतिशूरः । नि जभुजबलगर्वाच्छादितारातिवर्गो भ वतिविपुलकीर्त्तिर्योद्वितीयाप्रसूतः ॥ अनध्यायद्वितीया यथा । प्रे कोचै चा द्वितीयास्ताः प्रेतपक्षेगते तदा । याच कोजागरेजाते चैत्रावल्याःपरे पिया ॥ चातुर्मास्येसमाप्तेच द्विती-या या भवेत्तिथिः । परास्वेतास्वन ध्यायःपुराणैःपरिकीर्त्तितः ॥ पक्ष-योर्माघमासस्यद्वितीयांपरिवर्जयेदि ति ॥ सहधर्मिण्याम् । पत्न्याम् ॥ अ मश्चौट् शस् इतित्रिके ॥ टाप् ॥

द्वितीयाकृतम् । त्रि । द्विगुणाकृते । वा रद्वयकृष्टे क्षेत्रे ॥ द्वितीयं कृतम् । कृ ञोद्वितीयेतिडाच् ॥

द्वितीयाभा । स्त्री । दारुहरिद्रायाम् ॥

द्विदन् । त्रि । दन्तद्वययुक्तेशिशौ ॥ द्वौदन्तावस्य । वयसिदन्तस्यदतृ ॥

द्विदाम्नी । स्त्री । रज्जुद्वययुक्तायांगवि ॥

द्विदेहः । पुं । श्रीगणेशे । विनायके ॥ द्वाभ्यांदेहोऽस्य ॥

द्विदैवः । पुं । विशाखानक्षत्रे ॥

द्विद्वादशम् । न । योगविशेषे ॥ कन्या या द्वादशेभर्त्ता भर्त्तुः कन्या द्विती यगा । द्विद्वादशं विजानीया द्वर्जितं त्रिदशैरपि ॥

द्विधा । अ । द्विप्रकारे ॥

द्विधागतिः । पुं । कुम्भीरे ॥ त्रि । द्विप्र कारगतिविशिष्टे ॥

द्विधातुः । पुं । गजानने । हेरम्बे ॥ न । धातुद्वये ॥

द्विधात्मकम् । न । जातीकोषे । आय फल इतिभाषा ॥

द्विधालेख्यः । पुं । छिन्नालहचे ॥ चि । द्विप्रकारलेखनीये ॥

द्विनग्नकः । पुं । दुश्चर्मणि ॥

द्विपः । पुं । इभे । हस्तिनि ॥ द्वाभ्यां मुखशुण्डाभ्यां पिवति । पा० । सुपीतियोगविभागात्कः ॥ नागकेशरे ॥

द्विपग्राहः । पुं । हस्तिवन्धके ॥

द्विपथम् । न । चारुपथे । पथद्वये ॥ द्वयोः पथोः समाहारः । तद्धितार्थेति समासः । ऋक्पूरितिसमासान्तोऽच् ॥

द्विपदः । पुं । मनुजे ॥ देवे ॥ पक्षिणि ॥ राक्षसे ॥ यथा । द्विपदेपिचतुर्भेदा न्वदेवपक्षिराक्षसाः ॥ द्विपदाख्ये ॥

द्विपदराशिः । पुं । द्विपदाख्ये ॥

द्विपदा । स्त्री । ऋग्विशेषे ॥ द्वौपादावस्याः । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः । टाबृचीतिटापि पादःपत् ॥

द्विपदाख्यः । पुं । द्विपदराशौ ॥ मिथुन तुलाघटकन्या द्विपदाख्याश्चापपूर्व भागश्च ॥

द्विपदी । स्त्री । मात्रावृत्तान्तरे ॥ आदौ षट्कलसङ्गतमेतत् तदनु पञ्च चतुष्कलम् । गुर्वन्तं द्विपदी भवतीह-विंशत्यष्टकलंदलम् ॥ यथा । यथा मपिमथिविनिधेहिमिलासिनि मधुकरमदविमोचने । विषमायुधविषमायुधशासनविकले सुमुखिलोचने ॥ द्वौपादावस्याः । सङ्ख्यासुपूर्वस्येतिपादस्यान्तलोपः । पादोन्यतरस्यामितिङीपिभत्वात् पादःपत् ॥

द्विपमदः । पुं । हस्तिमदे ॥

द्विपरार्द्धावसानम् । न । परान्तकाले ॥ द्वितीयस्यपरार्द्धस्य अवसानम् ॥

द्विपर्णी । स्त्री । वनकोल्याम् ॥ माषपर्णीपृश्निपर्ण्योः ॥ चि । पर्णद्वययुक्ते ॥

द्विपात् । चि । पादद्वययुक्ते ॥ द्वौपादौ यस्य ॥

द्विपाद्यम् । न । द्विगुणदण्डे ॥ द्वौपादौ परिमाणमस्य । पणपादमाषशताद्यत् । इह पादः पदितिन । यस्येतिलोपस्यस्थानिवत्त्वात् । पद्यतदर्थे इत्यपि न । प्राण्यङ्गार्थस्य वतचग्रहणात् ॥

द्विपायी । पुं । हस्तिनि । गजे ॥

द्विपुटः । पुं । सुगन्धिश्वेतपुष्पे । दूडा इति पर्वतीय भाषा प्रसिद्धे ॥

द्विपृष्ठः । पुं । राजप्रभेदे । ब्रह्मसम्भवे ॥

द्विमातृकः । पुं । गणेशे ॥

द्विमुखः । पुं । राजसर्पे ॥ चि । मुखद्वय युक्ते ॥ द्वौमुखौयस्य ॥

द्विमुखा । स्त्री । कर्कर्याम् । गडुआ गाडू जारी वधनी इत्यादि भाषा ॥

अशोक्षायाम् ॥ द्वौमुखौयस्याः ॥

द्विमुखाहिः । पुं । सर्पभुजि । राजसर्पे ॥ द्विमुखश्चा सावहिश्च ॥

द्विमुखोरगः । पुं । राजसर्पे ॥

द्विमूर्द्धः । त्रि । मस्तकद्वययुक्ते असुरविशेषे ॥ द्वौ मूर्द्धानौ यस्य । द्विविभ्यांष मूर्द्धः इतिषः ॥

द्विमूर्द्धा । पुं । असुरविशेषे ॥

द्विरः । पुं । भ्रमरे ॥ द्वौरौनाम्नियस्य ॥

द्विरदः । पुं । गजे । हस्तिनि ॥ द्वौरदौ यस्य ॥ स्त्रियांटापिद्विरदा ॥

द्विरदान्तकः । पुं । सिंहे ॥

द्विरशनम् । न । वारद्वयभोजने ॥ मुनिभि र्द्विरशनं प्रोक्तं विप्राणां मर्त्त्यवासिनां नित्यम् । अहनिच तमस्विन्यां सार्द्धप्रहरयामान्तः इतितिथ्यादितत्त्वम् ॥

द्विरसनः । पुं । सर्पे ॥ द्वे रसने यस्य सः ॥

द्विरागमनम् । न । वधूप्रवेशानन्तरं परावृत्त्या पितृगृहप्राप्ताया वध्वाः पुनर्भर्त्तृगृहप्रवेशे ॥ तदुक्तम् । इत्ते पाणिग्रहे गेहात् पितुः पतिगृहं प्रति । पुनरागमनं वध्वा स्तद्विरागमनं विदुरिति ॥

द्विरापः । पुं । हस्तिनि ॥ इतिशब्दमाला ॥

द्विराषाढः । पुं । मिथुनस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासद्वये ॥ स चाषाढमलमासे भवति । यथा । मिथुनस्थो यदाभानु रमावास्याद्वयं स्पृशेत् । द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ अपिच । माधवादिषु षट्केषु मासि दर्शद्वयं यदा । द्विराषाढः सविज्ञेयः शेतेतस्माविष्णु ऽच्युत इतिमलमासतत्त्वम् ॥

द्विरुक्तः । त्रि । विषादादिना द्विवारमुच्चारिते ॥ विषादे विस्मये हर्षे खेदे दैन्ये ऽवधारणे । प्रसादने सम्भ्रमे ऽपि द्विस्त्रिरुक्तं न दुष्यतीति ॥

द्विरुक्तिः । स्त्री । द्विवारकथने ॥

द्विरूढा । स्त्री । पुनर्भ्वाम् । द्विवारविवाहितायाम् ॥

द्विरूपः । पुं । कोषविशेषे ॥ द्वे रूपेयस्मिन्नः ॥ त्रि । रूपद्वयविशिष्टे ॥

द्विरेफः । पुं । भ्रमरे ॥ त्रि । वर्वरे ॥ द्वौरेफौनाम्नि यस्य ॥

द्विवचनम् । न । येनपदेन द्वावर्थावुच्येते तस्मिन् ॥ द्वयोरर्थयोर्वचनम् । वचेः करणेल्युट् । कर्मणिषष्ठ्या समासः ॥

द्विवर्षा । स्त्री । द्विहायन्याम् ॥ द्वेवर्षे वयः प्रमाण मस्याः । आर्हीयष्ठक् । अस्यार्द्धेतिलुक् ॥

द्विवर्षिका । स्त्री । द्विवर्षायाङ्गवि ॥

 

द्वेवर्षे वयो यस्याः सा द्विवर्षा । द्विवर्षैव । स्वार्थकः । प्रत्ययस्यादितीत्वम् ॥

द्विवार्षिकः । त्रि । द्विवर्षभवे ॥

द्विवाहिका । स्त्री । दोलायाम् ॥

द्विविदः । पुं । वानरविशेषे ॥ यो बलरामेण हतः ॥ समुद्रस्योत्तरेतीरे द्विविदोनाम वानरः । ऐकाह्निकज्वरं हन्ति तस्य नामानुकीर्त्तनात् ॥

द्विवेशरा । स्त्री । लघुरथे । लध्वन्नाम् ॥

द्विशफः । पुं । द्विखुरेपशौ ॥ यथा । गौरजोमहिषः कृष्णः शूकरोगवयोरुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्चसप्तमः ॥ इति श्रीभागवतम् ॥

द्विश° । अ । द्वयोर्द्वयोः ॥ द्वौ द्वौददातीतिद्विशः । संख्यैकवचनाच्चवीप्सायामितिशस् ॥

द्विट् । पुं । शत्रौ ॥ त्रि । द्वेष्टरि ॥ द्वेष्टि । द्विष अप्रीतौ । क्विप् ॥

द्विषन् । त्रि । शत्रौ ॥ द्वेष्टि । द्विष° । द्विषोऽमित्रे इति शतृ ॥

द्विषन्तपः । त्रि । शत्रुतापने ॥ द्विषन्तं तापयति । तप° । शयन्तः । द्विषत्परयोस्तापेरितिखच् । खचिह्रस्वः । मुम् ॥

द्विष्टः । त्रि । द्वेषविषये ॥

द्विष्ठः । त्रि । उभयस्थे ॥ संयोगस्तुद्विष्ठतयेति जगदीशः ॥ द्वयोस्तिष्ठति । ष्ठा° । कः ॥

द्वि° । त्रि । क्रियाद्वयगणने ॥ यथा । द्विः शरंनाभिसन्धत्ते द्विःस्थापयति नाश्रितान् । द्विर्ददातिनचार्थिभ्यो रामो द्विर्नाभिभाषत इति ॥ द्विवारमित्यर्थे द्वित्रिचतुर्भ्यः सुच् ॥

द्विसप्ततिः । स्त्री । द्यधिकसप्तत्याम् ॥

द्विसहस्राक्षः । पुं । अनन्ते । नागराजे ॥

द्विसीत्यम् । त्रि । द्विगुणाकृते । द्विवार कृष्टेक्षेत्रे ॥ द्विवारं सीतया सम्मितम् । नौवयोधर्मेत्यादिनायत् ॥

द्विस्विन्नान्नम् । न । सिद्धतण्डुले । उशानाचाउर इतिभाषा ॥ द्विः स्विन्नमन्नं पृथक् शुद्धदेशविशेषके । नात्यन्तशस्तं विप्राणां भक्षणेचनिवेदने ॥ अभक्ष्यं तद्यतीनाञ्च विधवाब्रह्मचारिणाम् । ताम्बूलञ्चयथा ब्रह्मन् तथैते वस्तुनी ध्रुवमिति ब्र° वै° ब्रह्मखण्डम् ॥

द्विहा । पुं । गजे । हस्तिनि ॥ नान्तः ॥ इतिशब्दरत्नावली ॥

द्विहल्यम् । त्रि । द्विसीत्ये । द्विगुणाकृते ॥ द्विवारं हलेन कृष्टम् । मतजन्हलादितियत् ॥

द्विहायनी । स्त्री । द्विवर्षायाङ्गवि ॥ द्वौहायनौ यस्याः । दामहायनान्ता

इति ङीप् ॥

द्विहृदया । स्त्री । दोहदिन्याम् ॥ स्व-हृदयेन गर्भहृदयेनच द्विहृदयाग-र्भिणी भवति ॥

द्वीन्द्रियग्राह्यः । पुं । इन्द्रियद्वयग्रहणी येगुणे ॥ सनसङ्ख्यादिसप्तद्रवत्वस्ने हरूपः । यथा । सङ्ख्यादि रपर त्वान्तो द्रवत्वं स्नेह एवच । एतेतु द्वीन्द्रियग्राह्या अथस्पर्शान्तशब्दकाः ॥ इति भाषापरिच्छेदः ॥ द्वीन्द्रिय ग्राह्याः ॥ चाक्षुषप्रत्यक्षत्वाचप्रत्य क्षयो विषया इत्यर्थः ॥

द्वीपः । पुं । न । जलमध्यस्थस्थले । अन्त रीपे ॥ पुराणादिप्रसिद्धेषु सप्तसु ॥ तेचयथा । जम्बूशाककुशक्रौञ्चशा ल्मगोमेदपुष्कराः । लक्षादिद्विगु-णा द्वीपाः क्षाराद्यब्धिभिरावृताः ॥ द्विर्गता आपोऽत्र । ऋक्पूरित्यः समासान्तः । द्व्यन्तरुपसर्गेभ्योपईत् इ त्यपईत् ॥ भूमेरर्द्धं क्षारसिन्धोरु दक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्य्याः ॥ अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः ॥ शा कं ततः शाल्मलमत्रकौशं क्रौञ्च ञ्च गोमेदकपुष्करेच । द्वयोर्द्वयो रन्तरमेकमेकं समुद्रयोर्द्वीपमुदाह रन्ति ॥ इति सिद्धान्तशिरोमणिः ॥

द्वीपकर्पूरजः । पुं । चीनकर्पूरे ॥

द्वीपखर्ज्जूरम् । न । }
द्वीपजम् । न । } महापारेवते ॥

द्वीपवान् । पुं । नदे ॥ अब्धौ ॥ द्वीपम स्त्यस्य । मतुप् ॥

द्वीपवती । स्त्री । भूमौ ॥ नद्याम् ॥ द्वी पमस्त्यस्याम् । मतुप् । ङीप् ॥

द्वीपशत्रुः । पुं । शतावर्याम् ॥

द्वीपान्तरवचा । स्त्री । चोपचीनी इति भाषा प्रसिद्धे द्रव्ये ॥

द्वीपिका । स्त्री । शतावर्याम् ॥

द्वीपी । पुं । व्याघ्रे । वघेरा इतिभा षा ॥ चित्रके । चीता इति भाषा द्वावर्णावीयते । ईङ् गतौ । वा० पः । द्वीपं चर्मास्त्यऽस्य । अतइनिठ नावितीनिः ॥

द्वीपिनखः । पुं । व्याघ्रनखे ॥

द्वीपिशत्रुः । पुं । शतमूल्याम् ॥

द्वीशः । पुं । विशाखानक्षत्रे ॥ द्वौ इन्द्रा ग्नी ईशौयस्यसः ॥

द्वेधा । अ । द्विप्रकारे ॥ सङ्ख्यायावि धार्थे धा । एधाच्चेतितस्य एधाजादेशः ॥ द्वेधा द्वेधा भ्रमं चक्रे कान्तासु . क नकेषुच । तासु तेष्वऽप्यऽनासक्तः साक्षाद्भर्गो नराकृतिः ॥

द्वेषः । पुं । शत्रुतायाम् । द्वेषणे । वैरे । विरोधे । दुःखसाधने विद्यमाने

किमपि दुःखं मे माभूदिति विपर्य्ययविशेषे तामिस्रे ॥ स चाष्टादशविधस्तामिस्रो द्रष्टव्यः ॥ दुःखमनुशेते यश्चित्तवृत्तिविशेषस्तमोऽनुगतरजःपरिणामः । ईदृशं सर्व्वं सर्व्वदा मे माभूदिति । तच्च शत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम् । न च सर्व्वे ते दुःखहेतवो हन्तुं शक्यन्ते अतः स द्वेषः सदा हृदयं दहति । यदा तु स्वस्येव परेषां सर्व्वेषामपि दुःखं माभूदिति करुणां दुःखिषु भावयेत् तदा वैर्य्यादिद्वेषनिवृत्तौ चित्तम्प्रसीदति । यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत् तदा तद्वासनाभावात् स्वयमेवाप्रमत्तोऽशुक्लाकृष्णे पुण्ये प्रवर्त्तते । तथा पापपुरुषेषूपेक्षां भावयन् स्वयमपि तद्वासनाभावात् पापान्निवर्त्तते । ततश्च पुण्याकरणपापकरणनिमित्तस्य पश्चात्तापस्याभावे चित्तं प्रसीदति । एवं सुखिषु मैत्रीं भावयतो न केवलं रागो निवर्त्तते किन्त्वसूयेर्ष्यादयोऽपि निवर्त्तन्ते । तथा दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्त्तते तदा दुःखिप्रतियोगिकत्त्वसुखित्त्वप्रयुक्त दर्पोऽपि निवर्त्तते ॥ एवं दोषान्तरनिवृत्तिरप्यूहनीया ॥ दुःखे तत्साधने च इदं मे माभूदिति-स्पृहाविरोधिनी चित्तवृत्तिः क्रोध इति ईर्ष्येति चोच्यते द्वेषणम् । द्विष० । घञ् ॥ * ॥ द्वेषश्चात्मनो विशेषगुण इति सि० मु० ॥ द्वेषवशवर्त्तित्वनिषेधो यथा । इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ । इति भगवद्गीता ॥ अस्यकारणं द्विष्टसाधनता ज्ञानम् । इति भाषा प० ॥

द्वेषणः । त्रि । शत्रौ ॥ द्वेषशीलः । क्रुधमण्डार्थेभ्यश्चेति युच् ॥ न । द्वेषे ॥

द्वेषपक्षः । पुं । क्रोधेर्ष्यासूयाद्रोहामर्षाभिमानेषु ॥ द्वेषस्य पक्षः ॥

द्वेषी । त्रि । वैरिणि । शत्रौ ॥ द्वेष्टि तच्छीलः । द्विष० । सम्पृचेति घिनुण् ॥

द्वेष्टा । त्रि । विद्वेषकर्त्तरि ॥

द्वेष्यः । त्रि । द्वेषविषये । द्वेषकर्म्मणि स्वकृतापकारमपेक्ष्यापकारकर्त्तरि ॥ अप्रियगते ॥ द्वेष्टुमर्हः ॥ यत् ॥

द्वै । भ्व । वितर्के ॥

द्वैगुणिकः । त्रि । वार्द्धुषौ । वृद्ध्याजीवे ॥ द्विगुणार्थं द्रव्यं द्विगुणम् । तत्प्रयच्छति द्विगुणं ग्रहीतुमेकगुणं ददाति । प्रयच्छति गर्ह्यमिति ठक् ॥

द्वैतम् । न । युगले । द्वये । द्वैधीभावे ॥ द्विधा इतं द्वीतम् । तस्य भावः । युवादित्वादण् स्वार्थे वा ॥ द्वैताद्वैतयोः प्रमाणभूतवेदप्रतिपाद्यत्वात् कस्य सत्यत्वं कस्यासत्यत्वमित्याऽकांक्षायामाहुराचार्याः ॥ अद्वैतमेव सत्यं तस्मिन् द्वैतं न सत्यमध्यस्तम् । रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ॥ आरोपितं यदिस्यादद्वैतं वस्त्ववस्तुनि द्वैते । युक्तं नैव तदा स्यात् सत्ये ध्यासो भवत्यसत्यानाम् ॥ यद्वारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिदभावः । आरोपणं न शून्ये तस्मादद्वैतसत्यता ग्राह्या ॥ प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् । द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वादिति ॥ प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थत इति ॥

द्वैतवनम् । न । शोकमोहादिरहिते तपोवने ॥ द्वे इते गते यस्मात् तद्द्वीतम् । द्वीतमेव द्वैतम् । तच्च तद्वनञ्च ॥

द्वैतवादी । पि । जीवेश्वरयोर्भेदवादिनि । ईश्वरातिरिक्तजीववक्तरि ॥ तस्य मतं यथा । परमात्मनो जीवात्मा पृथक् तन्मध्ये केषाञ्चिन्मते प्रकृतिरतिरिक्ता केषाञ्चिन्मते प्रकृतिरदृष्टमात्रे पर्यवसिता एवं जीवश्च पृथक् । अत्र प्रमाणम् । जन्मकर्ममरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैवेति साङ्ख्यार्या ॥ अस्यार्थः । पुरुषबहुत्वं सिद्धम् । कस्मात् । जन्ममरणकरणानां प्रतिनियमात् निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् । तेषामेव च देहादीनामुपात्तानां परित्यागो मरणम् न त्वात्मनोऽपि नाशस्तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश । तेषां जन्ममरणकरणानाम् प्रतिनियमो व्यवस्था । सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते । तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन् म्रियमाणे वा म्रियेरन् । अन्धादौ चैकस्मिन् सर्व एवान्धाः एकस्मिन् विचित्ते सर्व एव विचित्ताः स्युरित्यव्यवस्था प्रतिक्षेत्रं पुरुषभेदे तु भवति व्यवस्था । न चैकस्यापि पुरुषस्य देहोपधानभेदाद् व्यवस्थेति युक्तम् । पाणिस्तनाद्युपधानभेदेनापि जन्ममरणादिव्यवस्थासम्भवात् ।

नद्यिपाणौ कृत्ते जाते वा स्तनादौ अम
ङ्गल्यवयवे युवतिर्जाता मृता वा भ
वतीति । इतश्च प्रतिज्ञेवं पुरुषभेद
इत्याह । अयुगपत् प्रवृत्तेश्चेति । प्रवृ
त्तिश्च प्रयत्नलक्षणा यद्यप्यन्तः कर
णवर्त्तिनी तथापि पुरुष उपचर्यते ।
तथा च तस्मिन्नेकशरीरे प्रयतमाने
स एव सर्वशरीरेष्वेक इति सर्वत्र प्र
यतेत । ततश्च सर्वाण्येव शरीराणि
युगपच्चालयेत् । नानात्वे तु नायं दो
ष इति । इतश्च पुरुषभेद इत्याह ।
त्रैगुण्यविपर्ययाच्चैवेति । एवकारो
भिन्नक्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः
। सिद्धमेव नासिद्धम् । त्रयो गुणास्त्रै
गुण्यम् । तस्य विपर्ययोऽन्यथात्वम्
। केचित् खलु सत्त्वनिकायाः सत्त्व
बहुलाः यथोर्द्ध्वस्रोतसः । केचिद् रजो
बहुलाः यथा मनुष्याः । केचित् त-
मोबहुलाः यथा तिर्यग्योनयः । सो
ऽयमीदृशस्त्रैगुण्यविपर्ययोऽन्यथा
भावस्तेषु तेषु सत्त्वनिकायेषु न भ
वेत् यद्येकः पुरुषः स्यात् । भेदे त्व-
यमदोष इति ॥*॥ तत्रेश्वरः सर्वज्ञः
परमात्मा एक एव । जीवः प्रतिशरी
रं भिन्नो विभुर्नित्यश्चेति गोतममत
म् ॥ इह ब्रह्मणो जीवेतरत्वप्रतिपाद
नात् तयोरद्वैतं नाभिमतम् ॥ नेतरो



ऽनुपपत्तेः । १ । १ । १६ । भेदव्यपदेशा
च्च । १ । १ । १७ । मुक्तोपसृप्यव्यप
देशात् । १ । ३ । २ । आकाशोऽर्था
न्तरत्वादिव्यपदेशात् । १ । ३ । ४१ ।
भोगमात्रसाम्यलिङ्गाच्च । ४ । ४ ।
२१ । इति सूत्रैर्मोक्षेऽपि तयोर्द्वैत
निरूपणाच्च । इति गोविन्दभाष्यम
तम् ॥ यतो द्वैतमते युक्तिरेव प्र
माणं युक्त्यायत् फलितं तदेव सर्वाध्या
त्मविद्याप्रतिपादकश्रुतीनां तात्पर्य
मिति रामानुजमतञ्च ॥*॥ सूत्रार्थ
स्तु । इतर ईश्वरादन्यः संसारी जीवो
नानन्दमयः । कस्मात् स तपस्तप्त्वा इ
दं सर्वमसृजत यदिदं किञ्चेति विज
गत्सर्गश्रवणानुपपत्तेः सर्वविकारसृष्टि
श्च न परस्मादात्मनोऽन्यत्रोपपद्यते
॥*॥ रसं ह्येवायं लब्ध्वानन्दी भवती
ति श्रुतौ प्राप्यप्रापकत्वभेदोक्तेर्न जी
वश्चानन्दमयः ॥*॥ अथ मर्त्योऽमृ
तो भवत्यत्र ब्रह्म समश्नुते इति मु-
क्तानामुपसृप्यत्वस्य प्राप्यत्वस्योक्तेः
॥*॥ आकाशो वै नाम नामरूपयो
र्निर्वहितेत्यादौ भूताकाश इति चेन्न
। ते यदन्तरा तद्ब्रह्मेत्यत्र । ते नाम
रूपे यदन्तरा यतोऽभिन्ने इति नामा
द्यन्तःपातिगगनरूपार्थभिन्नत्वेन ।
आदिमा ब्रह्मत्वेनाकाशस्य व्यपदे

मात् ॥ * ॥ एष आनन्दमय आत्मा न मनुविश्य नजायते नम्रियते न ह्रसते नवर्द्धते यथाकामं चरति यथा कामंपिबति यथाकामं रमते इति भो गमात्रेणेश्वरसाम्यलिङ्गात् जीवस्य जगत्कृतिः। चकारादश्रुतत्वात् जगद्व्यापारार्थोपास्त्यभावादिति ॥ * ॥ विकल्पोविनिवर्त्तेत कल्पितोयदिकेनचित् । उपदेशादयं वादोज्ञाते द्वैतं न विद्यते इत्यागमविदः ॥

द्वैती । त्रि । भेदवादिनि ॥ कपिलकाणादबुद्धार्हतादिदृष्ट्यनुसारिणि ॥ यथा । स्वसिद्धान्तव्यवस्थासुद्वैतिनोनिश्चिता दृढम् । परस्परं विरुद्धन्ते तैरयं नविरुध्यत इति ॥ व्यवस्थासु स्वसिद्धान्तरचनासु । निश्चिताः एवमेवैषपरमार्थो नान्यथेति तत्र तत्रनिरूढाः । स्वसिद्धान्तदर्शननिमित्तमेवान्योन्यं विरुध्यन्ते तैरस्मदीयो वैदिकः सर्वानन्यत्त्वादात्मैकत्वदर्शनपक्षो नविरुध्यते यथा स्वहस्तपादादिभिः ॥ अद्वैतं परमार्थोहिद्वैतं तद्भेदउच्यते। तेषामुभयथाद्वैतं तेनायंन विरुध्यते ॥ द्वैतनानात्वं तस्माद्वैतस्यभेदः कार्यम् ॥

द्वैतीयीकः । त्रि । द्वितीये ॥ तीयाट्टीकक् स्वार्थे वा वाच्यः ॥

द्वैधम् । अ । द्विप्रकारे ॥ द्विस्त्र्योश्च धमुञ् ॥ सैन्यद्विधास्थितौ ॥ एकेनसन्धि रपरेण विग्रह इत्येवं द्विप्रकारौ द्वैधम् ॥ विवादे ॥ धमुञन्तात् स्वार्थेड दर्शनम् ॥ पञ्चिद्वैधानितृणानि ॥

द्वैधीभावः । पुं । द्वैधे । नीतिवेदिनां राज्ञांगुणविशेषे ॥ बलिनो द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षित इतिनीतिः ॥

द्वैपः । पुं । द्वीपचर्माष्टतेरथे । वैयाघ्रे ॥ द्वीपिनोविकारः । प्राणिरजतादिभ्योऽञ् । द्वैपेनचर्मणापरिवृतोरथः । द्वैपवैयाघ्रादञ् ॥ न । व्याघ्रचर्मणि ॥ द्वीपिनोविकारः । प्राणिरजतादिभ्योञ् ॥ त्रि । द्वीपिसम्बन्धिनि ॥ व्याघ्रचर्मसम्बन्धिनि ॥ द्वीपसम्बन्धिनि ॥ अण् ॥

द्वैपदिकः । पुं । द्विपदामधीते वेदवेत्त्यर्थे ॥ उ॰ ठक् ॥

द्वैपायनः । पुं । व्यासे ॥ द्वीप मयनं स्थानं जन्मभूमिर्यस्य सद्वीपायनः । स एव। प्र॰ अण् ॥ द्वीपेन्यस्तस्तयांवालस्तस्माद्द्वैपायनोभवदिति पुराणम् । तयासत्यवत्या ॥

द्वैप्यः । त्रि । द्वीपवासिनि । समुद्रसमीपवर्त्तिद्वीपभवे ॥ द्वीपादनुसमुद्रंयञ् ॥

॥ द्विवर्गादयाः ॥

द्वैमातुरः । पुं । गणाधिपे । विघ्नराजे ॥ द्वयोर्मात्रोरपत्यम् । मातुरुत्स ङ्ख्येत्यपि उत्वं रपरत्वञ्च । दुर्गाया मुण्डाभ्यां पालितत्वात् । गजमुखत याहस्तिन्याश्चाप्यपत्यत्वात् ॥ गङ्गाया अपत्यत्वाद्वा ॥ जरासन्धे ॥ त्रि । द्वि मातृजे ॥

द्वैमातृकः । पुं । नदीवृष्टिजलोद्भूतधा न्यभृतदेशे ॥

द्वैपणीया । स्त्री । नागवल्ली प्रभेदे ॥

द्व्यङ्गः । पुं । द्विस्वभावराशौ ॥

द्व्यङ्गुलम् । त्रि । अङ्गुलिद्वयपरिमिते ॥ द्वे अङ्गुली परिमाणमस्य ॥ न । अ ङ्गुलिद्वयमात्रे ॥ द्वयोरङ्गुल्योः समा हारः ॥

द्व्यञ्जलः । त्रि । अञ्जलिद्वयपरिमिते ॥ द्वावञ्जली परिमाणमस्य ॥ न । अ ञ्जलिद्वयमात्रे ॥ द्वयोरञ्जल्योः समा हारः ॥

द्व्यणुकम् । न । परमाणुद्वयसंयोगा दु त्पन्ने । परमाणुसमवेतद्रव्ये । पर माणुद्वयात्मके ॥ तच्च प्रत्यक्षादिवि षयम् । यथा । विषयो द्व्यणुकादि स्तु ब्रह्माण्डान्त उदाहृतः ॥ तस्य प रिमाणम् नित्यम् । यथा । अनि त्यं द्व्यणुकादौ तु सङ्ख्याजन्यमुदा

हृतमितिभाषापरिच्छेदः ॥

द्व्यन्यः । त्रि । द्वाभ्यामन्यस्मिन् ॥ द्वेअ न्ये यस्य वा ॥ न । द्वयोरन्ययोः समा हारे ॥

द्व्यर्थः । त्रि । अर्थद्वययुक्ते शब्दादौ ॥

द्व्यष्टम् । न । ताम्रे । शुल्वे ॥ द्वेष्टमऋ ण्ये अंशुतेस्य । अमृ० । गत्यर्थे- ति क्तः ॥

द्व्यहः । पुं । अहर्द्वये ॥ द्वेअहनीसमा हृते । राजाहःसखिभ्यष्टच् । रात्राह्नाहाःपुंसिः ॥

द्व्यात्मकः । पुं । मिथुनकन्याधनुर्मीन- राशिषु ॥ यथा । चरस्थिरद्व्यात्मक नामधेया मेषादयोऽमीक्रमशःप्र दिष्टाः । इति ॥

द्व्यामुष्यायणः । पुं । तवममचायमिति परिभाषया धर्मतःपरिगृहीते ॥ अ मुष्यप्रसिद्धस्यापत्यमामुष्यायणः । द्व योरामुष्यायणः ॥ उभयोरप्यसौपि ण्डदाताभवति । यतःसुतोजायतेये नचायं धर्मतोगृह्यते तयोः । उभ योरप्यसौरिक्थी पिण्डदाताचधर्म तः । इति स्मृतेः ॥

द्व्याह्निकः । त्रि । दिनद्वयभवे ॥ द्व्यह्ने भवः ॥

धः

धः । पुं । धकारे ॥ धर्म्मे ॥ कुबेरे ॥ ब्रह्मणि ॥ न । वसुनि । धने ॥

धटः । पुं । दिव्यतुलायाम् । तुलापरीक्षायाम् ॥ तुलायाम् । तराजू इति भाषा ॥ तुलाराशौ ॥

धटकः । पुं । चतुर्द्दशशतपरिमाणे । द्विचत्वारिंशद्रक्तिकासु ॥

धटपरीक्षा । स्त्री । तुलापरीक्षायाम् ॥

धटी । स्त्री । वाससश्चीरे । धज्जी इति भाषा ॥ कौपीने ॥

धटीदानम् । न । गर्भाधानानन्तरं स्त्रीसम्प्रदानकचीरवस्त्रदाने ॥ यथा । मूलश्रवणहस्तेषु पुष्यादित्युत्तरासु च । मृगेपौष्णे धटीदेया सौम्यवारे शुभेतिथाविति ज्योतिःसारसंग्रहः ॥

धत्तूरः । पुं । उन्मत्ते । धुस्तूरे ॥ धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत् । कषायो मधुरस्तिक्तो यूकालिक्षाविनाशनः ॥ उष्णो गुरुर्व्रणश्लेष्मकण्डूकृमिविषापहः ॥ * ॥ धयति धातून् । धेट् ० । वा० ऊरच् । पृषोदरादित्वात् साधुः ॥

धनम् । न । गोधने ॥ वित्ते । स्वापतेये । ऋक्थे । अर्थे । द्रविणे ॥ यदेतद् द्रविणं नाम प्राणा एते बहिश्चराः । स तस्य हरते प्राणान् यो यस्य हरते धनम् ॥ इति कूर्मपुराणम् ॥ श्रीभागवते तु । राजन् यमनुगृह्णामि हरिष्ये तद्धनं शनैः । ततो ऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम्मिति ॥ दानं भोगस्तथा नाशो धनस्य गतिरीदृशी । दानभोगौ कृतौ मास्य नाशः पापात्मनां किलेति देवी भागवतम् ॥ धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते । नाधनस्य भवेद्धर्मः काम श्चैव कथञ्चनेति च ॥ तत् त्रिविधमुक्तं गारुडे २१० अध्याये । यथा । धनं तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च । कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पृथक् ॥ * ॥ क्रमायातं प्रीतिदायं प्राप्तञ्च सह भार्यया । अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनम् ॥ * ॥ वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम् । याजनाध्यापने नित्यं विशुद्धाच्च प्रतिग्रहः ॥ त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् । युद्धार्थलब्धं करजं दण्डलब्धापहारतः ॥ वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम् ॥ कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् ॥ कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयंकृतम् । आपत्काले स्वयंकु-

वेनैनसायुज्यते हिनस्ति ॥ धनति । धनधान्ये । पचाद्यच् ॥ क्षेपार्थे ॥ धनिष्ठा नक्षत्रे ॥

धनकेलिः । पुं । कुबेरे । राजराजे ॥

धनच्छूः । स्त्री । पक्षिविशेषे । करेट व्याघ्राम् ॥ इ०चि० ॥

धनञ्जयः । पुं । अर्जुने । युधिष्ठिरराजसूयार्थं दिग्विजये सर्वान् राज्ञोजित्वा धनमाहृतवति महाप्रभावे पाण्डवानां मध्येभगवद्विभूतौ ॥ वह्नौ ॥ धनमिच्छेद्दुताशनात् ॥ नागप्रभेदे ॥ अयञ्च जलाशयाधिपतिः ॥ पेषणकरे देहवर्त्तिवायौ ॥ नजहाति मृतञ्चापि सर्वव्यापीधनञ्जयः ॥ ककुभतरौ ॥ चित्रकद्रुमे ॥ प्रलेहप्रभेदे ॥ यथा । मांसकूष्माण्डकदली मूत्रैराभिः साधयेत् । प्रलेहविधिना चायं प्रलेहोयं धनञ्जयः ॥ धनञ्जयति । जिजये । अस्मात् । संज्ञायां भृत्वृजिधारिसहितपिदमः इतिखच् । अरुर्द्विषदिति मुम् ॥

धनदः । पुं । कुबेरे ॥ धनं दयते । देङ्पालने । आतइति कः ॥ हिज्जलवृक्षे ॥ चि । धनदातरि ॥ धनं ददाति । डुदाञ्० । आतइति कः ॥

धनदा । स्त्री । देवीविशेषे ॥ टाप् ॥

धनदाची । स्त्री । जताकरञ्जे ॥

धनदानुचरः । पुं । यक्षे ॥ धनदस्यानुचरः ॥

धनदानुजः । पुं । दशास्ये । रावणे ॥ धनदस्य अनुजः ॥

धनदायी । पुं । अग्नौ ॥ आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ज्ञानञ्च शङ्करादिच्छे न्मुक्तिमिच्छेज्जनार्दनात् ॥ त्रि । रिक्थप्रदे ॥

धनदा । स्त्री । जिनशक्तिविशेषे ॥

धनपतिः । पुं । कुबेरे । त्र्यम्बकसखे ॥ धनस्य धनानां वा पतिः ॥ त्रि । धनान्विते ॥

धनपिशाचिका । स्त्री । } धनाशायाम्

धनपिशाची । स्त्री । } । तृष्णायाम् । धनलोभे ॥

धनप्रिया । स्त्री । काकजंघाम् ॥

धनमानमदान्वितः । त्रि । धननिमित्तो योमानः आत्मनि पूज्यत्वाध्यासः तन्निमित्तोयोमदः परस्मिन् गुर्वादावप्यपूज्यत्वाभिमानस्ताभ्यामन्विते ॥

धनलोलुपः । त्रि । धनविषये अतिलुब्धे ॥ यथा । यदास्लेच्छजातीया राजानोधनलोलुपाः । भविष्यन्ति महाप्राज्ञे तदैवप्रबलः कलिरिति श्री महानिर्वाणतन्त्रम् ॥

धनवान् । त्रि । धनिनि । धनविशिष्टे ॥ धनमस्त्यस्मिन्वा । तदस्यास्तीति

मतुप् ॥ धिगस्त्वेता विद्या धिगपि कवित्वं धिक् सुजनता वयोरूपं चाधिक् धिगपि च यशो निर्धनवताम् । अयैा जीयादेकः सकलगुणहीनोपि धनवान् वहिर्द्वारे यस्य तृणलवसमाः सन्ति गुणिन इति विवेकिनः खेदोक्तिः ॥

धनवती । स्त्री । धनिष्ठानक्षत्रे ॥ ङीप् ॥

धनस्यकः । पुं । गोक्षुरे ॥ इति शब्दचन्द्रिका ॥

धनस्वामी । त्रि । उत्तमर्णे ॥

धनहरी । स्त्री । चण्डाद्रुमे । चोरनामगन्धद्रव्ये । गणहासके ॥ त्रि । धनहारिणि ॥ धनं हरति । हृञ् । हरतेरनुद्यमनेऽच् । गौ० ङीष् ॥

धनहारी । त्रि । धनहारके ॥

धनागारम् । न । भाण्डागारे ॥

धनाढ्यः । त्रि । धनसंयुक्ते ॥ धनेनाढ्यः ॥

धनाधिकृतः । त्रि । धनाध्यक्षे । खजाञ्ची इति भाषा ॥

धनाधिपः । पुं । कुवेरे । गुह्यकेश्वरे । धनदे ॥ धनानामधिपः ॥

धनाधिपतिः । पुं । कुवेरे ॥ धनानामधिपतिः ॥

धनाध्यक्षः । पुं । कुवेरे । धनदे ॥ धनाऽधिकृते । खजाञ्ची इति भाषा ॥ अस्यलक्षणं यथा । लोहवस्त्राजिनादीनां रत्नानाञ्च विधानवित् । विज्ञाता फल्गुसाराणां मनाहार्यः शुचिः सदा ॥ निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः ॥ आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः । व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता ॥ इति मत्स्यपुराणम् ॥

धनाशा । स्त्री । धनलोभे ॥ जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । जीविताशा धनाशा च जीर्यतोपि न जीर्यति ॥

धनाश्रीः । स्त्री । रागिणी विशेषे ॥

धनिकः । पुं । धन्याके ॥ अस्मिन्नर्थे क्लीवमिति राजनिर्घण्टः । पुल्लिङ्ग इति मेदिनी ॥ धवे ॥ त्रि । साधौ ॥ धनिनि ॥ धनमस्यास्ति । अतइनिठनाविति ठन् ॥

धनिका । स्त्री । साधुनार्याम् ॥ वध्वाम् ॥ युवत्याम् ॥ प्रियङ्गुवृक्षे ॥

धनी । त्रि । आढ्ये ॥ वहुधनमस्यास्ति । अतइनिठनाविती निः ॥

धनिष्ठा । स्त्री । श्रविष्ठायाम् । त्रयोविंशतितमेनक्षत्रे ॥ अतिशयेनधनवती । इष्ठन् । विन्मतुपोर्लुगिति मतुपोलुक् ॥ अथजातस्यफलम् । आचारज्ञाताद्दरचारुशीलो धनाधिशाली वलवान् दयालुः । यस्यप्रसूतौ च भवेद्धनिष्ठा महत् प्रतिष्ठा सहितो नरः

स्यात् ॥

धनीका । स्त्री । युवत्याम् ॥

धनीयकम् । न । धान्याके ॥

धनुः । पुं । पियालद्रौ ॥ राशिभेदे ॥ शरासने ॥ हस्तचतुष्टयमाने ॥ दधन्ति । धारयति । धमति वा । धन° । भृमृशीङ्तृचरित्सरितनिधनिमिमसज्जिभ्यउरिति उः ॥

धनुःपटः । पुं । पियालतरौ ॥ धनुषइवपटोविस्तारोऽस्य ॥

धनुःशाखा । स्त्री । मूर्वायाम् ॥

धनुःश्रेणी । स्त्री । मूर्वायाम् ॥ महेन्द्रवारुण्याम् ॥

धनुरधिपः । पुं । बृहस्पतौ ॥ धनुषः अधिपः ॥

धनुर्गुणः । पुं । ज्यायाम् । मौर्व्याम् ॥ धनुषोगुणः ॥

धनुर्गुणा । स्त्री । मूर्वायाम् ॥

धनुर्द्रुमः । पुं । वंशे ॥

धनुर्धरः । त्रि । धनुष्मति । धन्विनि ॥ धरति । धृञ्° । अच् । धनुषोधरः ॥

धनुर्द्धारी । त्रि । धनुर्द्धरे । निषङ्गिणि । चापिनि ॥ तल्लक्षणं यथा । शूरश्च बलयुक्तश्च गजाश्वरथकोविदः । धनुर्द्धारी भवेद्राज्ञः सर्वक्लेशसहःशुचिरिति मत्स्यपुराणम् ॥

धनुर्भृत् । पुं । धनुर्द्धरे । धानुष्के ॥

धनुर्ब्रह्मम् । न । चन्दने ॥ धनुषोमध्यम् ॥

धनुर्मध्या । स्त्री । मूर्वायाम् ॥

धनुर्मासः । पुं । यवासे ॥

धनुर्लता । स्त्री । सोमवल्ल्याम् ॥

धनुर्वृक्षः । पुं । धन्वनवृक्षे ॥ भल्लातके ॥ वंशे ॥ अश्वत्थे ॥

धनुर्वेदः । पुं । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादके मन्त्रसहिते पादचतुष्टयात्मके यजुर्वेदस्योपवेदे ॥

धनुष्करः । पुं । धानुष्के ॥ धनुःकरेऽस्य ॥ यद्वा । धनुःकरोति । दिवाविभेतिटः ॥

धनुष्पटः । पुं । पियालवृक्षे ॥ धनुषइव पटो विस्तारोऽस्य ॥

धनुष्मान् । पुं । धानुष्के । धनुर्द्धारिणि ॥ धनुरस्यास्ति । मतुप् । तदस्यास्त्यस्मिन्निति मतुप् ॥

धनुष । पुं । पियाले ॥ पुं । न । राशिविशेषे । तौषिके ॥ तत्रजातफलं यथा । बहुकलाकुशलः प्रगल्भो महान् विमलताकलितः सरलोक्तिभाक् । शशधरेऽपि धनुर्द्धरगे नरो । धनकरो नकरोति धनव्ययम् ॥ तन्नक्षत्रजातफलम् । धनुर्लग्नेसमुत्पन्नो नीतिमान् धनवान् सुखी । कुलमध्येप्रधानश्च प्राज्ञः सर्वस्यपोषकः ॥

शरासने । कोदण्डे । कार्मुके ॥ अ-स्यलक्षणं यथा । धनुस्त्रिविधं प्रोक्तं शार्ङ्गं शृङ्गं तथैवच । कोशजंव र्षदृढता तयोर्गुण उदाहृतः ॥ सुखस म्पत्तिकारणं सममुष्ट्यायतं धनुः । विपदेरोगुष्टिवैषम्ये तदङ्गभङ्गमाषहे दितियुक्तिकल्पतरुः ॥ * ॥ धनुषा कार्यमेतावद्दार्त्तोणामभिरक्षणम् ॥ * ॥ हस्तचतुष्टयपरिमाणे । काठा । इति गौड़भाषा ॥ यथा । चतुर्विंशा ङ्गुलोहस्तश्चतुष्कं धनुःस्मृतम् ॥ त्रि । धनुर्द्धरे ॥ इधन्ति धारयति । धन० । उसिः प्रत्ययः ॥ यद्वा । धनति । धनशब्दे । ऋत्तिपवपियजित निधनितपिभ्योनिदित्युसिः ॥

धनूः । पुं । धनुषि ॥ नवमराशौ ॥ इधन्ति । धन्यते वा । धन० । कृषि चमितनिधनिसर्जिखर्जिभ्यऊः ॥

धनेश्वरः । पुं । कुबेरे ॥ धनानामीश्वरः ॥

धन्धधन्यम् । न । अपाटवे ॥

धन्यः । पुं । अश्वकर्णवृक्षे ॥ त्रि । श्ला-घ्ये ॥ स्वनामा पुरुषोधन्यः पितृनामा च मध्यमः । अधमो भ्रातृनामा च मा तृनामाधमाधमः ॥ कृतार्थे ॥ पुण्य वति । सुकृतिनि ॥ वार्हस्पत्यौशन साद्यावर्षशास्त्रे ॥ धनायहिते ॥ धन मर्हति ॥ धनंलब्धा । धनगर्भं इत्यर्थेतियत् ॥ धनस्य निमित्तं संयोग उत्पातोवा । गोद्यचइत्यादिनायत् ॥ धनंप्रयोजनमस्यवा ॥

धन्यव्रतम् । न । धनजनके व्रतविशेषे ॥

धन्या । स्त्री । आमलक्याम् ॥ धात्र्याम् । उपमातरि । धाय इति भाषा ॥

धन्याके ॥ पिण्डारकवनदेश्याम् ॥ टाप् ॥

धन्याकम् । न । छत्रायाम् । कुस्तुम्बुरुणि । वितुन्नके । धनिआ इति भाषा ॥ शिलायां साधुसम्पिष्टं धन्याकं वस्त्र गालितम् । शर्करोदकसम्मिश्रं कर्पूरादि सुसंस्कृतम् । नवीने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥ धन्यते भक्षार्थिभिः । धनशब्दे । पिनाकादयश्च ॥

धन्यासरस्वती । स्त्री । तीर्थविशेषे ॥

धन्वम् । न । चापे ॥ इत्यमरटीकायां भरतः ॥

धन्वङ्गः । पुं । धामिन् इति भाषाप्रसिद्धे धनुर्वृक्षे । गोत्रवृक्षे ॥ धन्वङ्गः कफ पित्तास्रकासहृत् तुवरोलघुः । संग्राही वलकृद्रूक्षःसन्धिकृद्वायुरोपणः ॥ इति भावप्रकाशः ॥

धन्वदुर्गम् । न । मरुवेष्टिते चतुर्दिक्षु पञ्चयोजनमनुदके ॥

धन्वा । पुं । अल्पोदकदेशे ॥ मरुदेशे ॥ न । चापे ॥ स्थले ॥ धन्वतेऽस्मा

त् । धन्विः सैयोगस्यर्थः । कनिन्युवृ षीतिकनिन् । धन्वति । अन्तर्भावित ण्यर्थो वा ॥

धन्वनः । पुं । धामनि इति भाषा प्रसिद्धे धनुर्वृक्षे । रक्तकुसुमे । मरुवके ॥

धन्वन्तरिः । पुं । देववैद्यविशेषे । नारायणांशे ॥ नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान् । पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥ सर्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः । शिष्योहि वैनतेयस्य शङ्करस्योपशिष्यकः ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥ काशिराजे । दिवोदासे ॥ यथा । अहंहि धन्वन्तरिरादिदेवो जराहजामृत्युहरो ऽमराणाम् । शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥ धन्वं शल्यशास्त्रम् तस्यान्तं पारमियर्त्ति गच्छति । ऋगतौ । अचइः ॥ विक्रमादित्यसभास्थे वैद्यान्तरे ॥

धन्वन्तरिग्रस्ता । स्त्री । कटुक्याम् ॥

धन्वयवासः । पुं । दुरालभायाम् । धमासे । औरजवासा इति भाषा ॥ धन्वनो मरुभूमेर्यवासः । तत्रोत्पन्नत्वात् ॥

धन्वयवासकः । पुं । दुरालभायाम् ॥

धन्वयासः । पुं । दुरालभायाम् । यवासे । जवासा इतिभाषा ॥ धन्वनोयासः मरुभवत्वात् ॥

धन्वी । पुं । अर्जुने । पार्थे ॥ ककुभद्रुमे ॥ दुरालभायाम् ॥ बकुले ॥ त्रि । छेके । विदग्धे ॥ चापिनि । धनुर्द्धरे ॥ लोलार्ककेशवौ कोटी गङ्गाज्या नगरं धनुः । कलि लक्ष्यः शरो धर्म्मः शिवो धन्वी पुनातु माम् ॥ धनुश्चापोऽस्यास्ति । ब्रीह्यादित्वादिनिः ॥

धन्विस्थानम् । न । प्रत्यालीढादिषु ॥ वैशवं समपादञ्च वैशाखं मण्डलं तथा । प्रत्यालीढ मथालीढं स्थानान्येतानि धन्विनाम् ॥ धन्विनां युद्धकाले स्थानम् ॥

धमः । त्रि । अग्निसंयोगकर्त्तरि ॥ शब्दकर्त्तरि ॥ धमतेः पचाद्यच् ॥

धमकः । पुं । कर्मकारे ॥ धमति । ध्मा शब्दाग्निसंयोगयोः । ध्मोधमश्चेति क्वुन् ॥

धमनः । पुं । नले । नडे । नरकट इति नरसल इति च प्रसिद्धे तृणे ॥ त्रि । भस्त्राध्मापके ॥ क्रूरे ॥ धमति धम्यते वा । धमध्माने सौत्रः । बहुलमिति युच् ॥

धमनिः । स्त्री । धमन्याम् ॥ धम्यते । धमिः सौत्रो ध्माने । अर्त्तिसृधृधम्यम्यश्यवितृभ्यो ऽनिरित्यनिः प्रत्ययः ॥

धमनी । स्त्री । शिरायाम् । नाड्याम् ॥

कन्धरायाम् ॥ स्फूर्तिविलासिन्याम् ॥ हरिद्रायाम् ॥ धम्यते । धमि:सौत्र:। अनिप्रत्यय:। तत: कृदिकारादक्तिन इतिङीष् ॥ नलिकायाम् ॥ पृश्निपर्ण्याम् ॥

धम्मिल्ल: । पुं । संयतकचेषु । बद्धकुन्तलेषु । खोपा इतिगौड भाषा ॥ सचकुसुमगर्भो मौक्तिकपद्मरागलतिकादिना बहि:संयतोबद्ध: केशकलाप इतिभरत: । जूडा इतिभाषा ॥ धमति । धमध्माने सौत्र: । विच् । मिलति । मिलसङ्गमे । कच् । धम्चासौमिलश्च । मोनेधास्तोरिति सौत्रेषु न भवति । पृषोदरादि: ॥

धर: । पुं । गिरौ । पर्वते ॥ कार्पासतूले ॥ कूर्मराजे ॥ वसुविशेषे ॥ धरति । धृञ्० । पचाद्यच् ॥

धरट्ट: । पुं । अद्रिपतौ ॥ लोके ॥ स्तने ॥ धाम्ये ॥ दिवाकरे ॥ सेतौ ॥ न । चतुर्विंशतिरक्तिकारूपे मानभेदे । वस्त्रे ॥ दशपलमाने । पलंसुवर्णाश्चत्वार: पलानिधरणंदशेतिमनु: ॥ पलदशमांशे । इतिवैद्यकम् ॥ धारणे ॥ षोडशरूप्यमाषकै: परिमिते । पुराणे ॥

धरणि: । स्त्री । भूमौ ॥ धरति । धृञ्० । ध्रियते विश्वमनया । धृङ् अवस्थानेवा । अर्त्तिसृधृधमीत्यनि: ॥

धरणिधर: । पुं । विष्णौ ॥ धरण्या: धर: ॥ नगे ॥

धरणिस्थ: । त्रि । भूतलचारिणि ॥ धरण्यांतिष्ठति । ष्ठा० । क: ॥

धरणी । स्त्री । भुवि ॥ धरणी पतितंतोयं चातकानां रुजाकरम् ॥ शाल्मलिद्रुमे ॥ धरति विश्वम् । धृञ्० । अर्त्तिसृभ्रिस्यादिना ऽनि: । कृदिकारादितिङीष् ॥ नाड्याम् ॥ कन्दविशेषे । कन्दालौ । वनकन्दे ॥

धरणीकन्द: । पुं । धरणीनाममूलविशेषे ॥

धरणीकीलक: । पुं । नगे । पर्वते ॥

धरणीधर: । पुं । विष्णौ ॥ पर्वते ॥ कच्छपे ॥ शेषदिग्गजादिरूपेण धरणींधत्ते । धृञ्० । अच् ॥ धरण्या:धरो वा ॥

धरणीपुरम् । न । चतुरस्रमण्डले ॥ पुं । अब्धौ ॥ धरण्या: पुरम् । धरणीपुरंयस्य ॥

धरणीपूर: । पुं । सिन्धौ । समुद्रे ॥

धरणीप्लव: । पुं । समुद्रे ॥ धरणीप्लवो ऽस्मिन् ॥

धरणीश्वर: । पुं । ईश्वरे । शिवे ॥ धरण्याईश्वर: ॥ नृपे ॥

धरणीसुत: । पुं । भौमे ॥ धरण्या:-

सुतः ॥

धरणीसुता । स्त्री । सीतायाम् । जान क्याम् ॥ धरण्याःसुता ॥

धरसंस्थः । त्रि । पर्व्वताकारे । गिरिस दृशे ॥ धरइव संस्था सादृश्यं यस्य ॥

धरा । स्त्री । भुवि । पृथिव्याम् ॥ गर्भा शये । जरायौ ॥ मेदसि ॥ नाड्याम् ॥ महादानविशेषे ॥ धरतिविश्वम् । धृञ्० । धराः शैलाः सन्त्यस्यांवा । यद्वा । ध्रियते । धृङ्० । अच् ॥ तीर्थविशेषे ॥ यत्स्नानात् शोकनाशो भवति ॥

धराकदम्बः । पुं । धाराकदम्बवृक्षे । प्रा वृष्ये । भृङ्गवल्लभे ॥

धराकदम्बकः । पुं । धराकदम्बे ॥

धरात्मजः । पुं । भौमे । मङ्गलग्रहे ॥ धरायाः आत्मजः ॥

धराधरः । पुं । वराहरूपे विष्णौ ॥ अं शैरशेषैः शेषादिरशेषां धरां धारय ति तथा ॥ धरायाधरः ॥ पर्व्वते ॥

धरामरः । पुं । भूमिदेवे । ब्राह्मणे ॥ यथा । धरामरेन्द्रपाणिषु प्रधातुमी हसे धरांयदित्थमादरात् सदा प्रदे शितनतफलप्रदाम् । पयस्विनीं स्व लङ्कृतांसुवंशभुक्तिमुक्तिदां यदात दाभवेच्छ्रियानिमेदकानिमेषकामि- ति वीरभद्रः ॥

धरित्री । स्त्री । भूमौ ॥ धरतिविश्वम् । धृञ्० । अशि० त्रन् । गौ० ङीष् ॥

धरिमा । पुं । रूपे ॥ तुलायाम् ॥ यथा । तथा धरिममेयानां शतादभ्यधिके वधः ॥ ध्रियते । धृञ्० । हृभृधृसृस्तृ श्रुभ्यइमनिच् ॥

धरिममेयः । त्रि । तुलापरिच्छेद्ये ॥

धर्त्तव्यः । त्रि । धारणीये ॥

धर्त्तम् । न । आलये । गृहे ॥ धरतिध्रि यते वा । धृञ्० । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥

धर्म्मः । पुं । न । शास्त्रविहितकर्म्मानुष्ठा नजन्येऽपूर्व्वेपूर्व्वमीमांसा प्रसिद्धे भा विफलाधारभूते गुणे । श्रेयसि । सु कृते । वृषे ॥ यथा । श्रुतिस्मृतिभ्यामु दितं यत् सधर्मः प्रकीर्त्तित इति देवीभगवतम् ॥ सचवर्णाश्रमादिध र्म्मरूपः । युक्तोभविष्यपुराणे । वर्ण धर्मःस्मृतस्त्वेकआश्रमाणामतःपरम् । वर्णाश्रमस्तृतीयस्तुगौणोनैमित्तिक स्तथेति ॥ तत्रवर्णधर्म्मोनित्यंमद्यं ब्राह्मणोवर्जयेदित्यादिः । आश्रमध र्म्मोऽग्नीन्धनभैक्ष्यब्रह्मचर्य्यादिः । व र्णाश्रमधर्म्मः पालाशोदण्डो ब्राह्म णस्येत्येवमादिः । गुणधर्म्मः शास्त्री याभिषेकादिगुणयुक्तस्यराज्ञः प्रजा पालनादिः । निमित्तधर्म्मो विहि

ताकरणप्रतिषिद्धसेवननिमित्तंप्रा। यश्चित्तम् ॥ * ॥ साधारणधर्मोपि । तत्राह्निकं तादिः । न हिंस्यात् सर्वाभूतानीत्याचाण्डालं साधारणो धर्मः ॥ * ॥ मनुस्तु । विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः । हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधतेत्याह । अस्यव्याख्यायां कुल्लूकभट्टप्रणीताःश्लोकाः । यथा । वेदविद्भिर्ज्ञात इति प्रयुक्तानो विशेषणम् । वेदादेरपरिज्ञातो धर्मं इत्युक्तवान् मनुः ॥ हृदयेनाभिमुख्येन ज्ञातइत्यपिनिर्द्दिशन् । श्रेयःसाधनमित्याह तत्त्वाभिमुखं मनः ॥ वेदप्रमाणकः श्रेयःसाधनं धर्मइष्यतः । मनुक्तमेवमनयःप्राणिन्युर्धर्मलक्षणमिति ॥ अदृष्टार्थो। चोदनालक्षणो। वेदोक्ताभ्युदयनिःश्रेयसहेतौ ॥ तत्रयागदानाद्यनुष्ठानजनितो धर्मो ऽभ्युदयहेतुः। अष्टाङ्गयोगानुष्ठानजनितस्तु निःश्रेयसहेतुर्भवति ॥ वेदविहिते प्राणिना मभ्युदयनिःश्रेयससाधने प्रवृत्तिनिवृत्तिलक्षणे ॥ वर्णाश्रमतदाचारव्यङ्ग्ये ॥ विहितक्रियया साध्यो धर्मः पुंसांगुणो मतः । प्रतिषिद्धक्रियासाध्यःसगुणो ऽधर्म उच्यते ॥ धर्मस्याचरणंकार्यंपुरुषेणविजानता।

सञ्चिन्त्येन्द्रियवर्गं वैयथनमरकं व्रजेत् ॥ मानुष्यं दुर्लभं प्राप्तःखण्डेऽस्मिन् भारतेशुभे। आहारादिसुखं नित्यंभवेत् सर्वासुयोनिषु ॥ प्राप्य तं मानुषं देहंकर्त्तव्यं धर्मसाधनम्। स्वर्गमोक्षप्रदं नृणां दुर्लभं चान्ययोनिषु ॥ इतिश्रीदेवीभागवते ३ स्कन्धे २५ ऽध्यायः ॥ धर्मस्य चत्वारः पादायथा। धर्मस्य प्रथमः पादः सत्यमेतत्कृते वचः । द्वितीयस्तुतथाशौचं दयापादस्तृतीयकः ॥ दानपादश्चतुर्थश्च पुराणाज्ञावदन्तिवैइति ॥ चतुष्पात् सकलोधर्मइतिमनुः । तत्रापिसत्यंवतवत्पः खल्वंदयापिच । सत्यपादेकृते लोपेधर्मलोपः प्रजायत इत्यागमः ॥ * ॥ आत्मनि ॥ कल्पितस्य सर्वस्य स्वस्मिन् धारणात् ॥ जीवे॥ देहस्य धारणात् ॥ आचारे ॥ स्वभावे ॥ उपमायाम् ॥ क्रतौ ॥ अहिंसायाम् ॥ उपनिषदि ॥ न्याये ॥ यमराजस्यत्वष्टप्रभेदे (ऽ॥) ॥ पुं। धनुषि ॥ यमे ॥ सोमपे ॥ सत्सङ्गे ॥ अर्हति ॥ ब्रह्मणोदक्षिणस्तनाज्जातेदेवताविशेषे ॥ न्यूनदेशवृत्तौ ॥ * ॥न। दानादौ ॥ धर्मंशनैः सञ्चिनुया द्वल्मीकमिवपुत्तिका। परलोक सहायार्थं भास्वन्तं खशरीरिणाम् ॥ धर्मं

मति भवतु यः सततोत्थितानां स लोक एव परलोकगतस्य बन्धुः । अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवात्मभाव मपियान्ति नचस्थिरत्त्वम् ॥ खनामाख्यमस्थाने ॥ धरतिविश्वम् ध्रियतेवाधारयतिवा । धृञ्० । अर्त्तिस्तुसुहुसृधृक्षि क्षुभायावापदियक्षि नीभ्योमन्नितिमन् ॥

धर्म्मकर्म्म । न । धर्म्मकार्ये । शुभादृष्टप्रतिपादकक्रियायाम् ॥ वेदप्रणिहितं धर्म्मकर्म्म तन्मङ्गलं परमिति ब्रह्मवैवर्त्त पुराणम् ॥

धर्म्मकथादरिद्रः । त्रि । भारतेकलिजन्मनिमानवे ॥ इतिहेमाद्रिः ॥

धर्म्मकायः । पुं । वुद्धे ॥ इतित्रिकाण्डशेषः ॥ धर्म्मोय कायोयस्य ॥

धर्म्मकीलः । पुं । राजशासने ॥ इ०त्रि० ॥

धर्म्मकीलकः । पुं । ब्रह्मशासने ॥ इतिशब्दरत्नावली ॥

धर्म्मकेतुः । पुं । वुद्धे ॥

धर्म्मक्षेत्रम् । न । धर्म्मभूमौ । धर्म्मस्य पूर्व्वे मविद्यमानस्योत्पत्ते र्विद्यमानस्यवृद्धे र्निमित्ते ॥ धर्म्मस्यक्षेत्रम् ॥ कुरुक्षेत्रे ॥ यथा । ब्रह्मवेदिः कुरुक्षेत्र पञ्च रामह्रदान्तरम् । धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि ॥ * ॥ अपिच । तरन्तुकारन्तुकयो र्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्र समन्तपञ्चकं प्रजापते रुत्तरवेदिरुच्यते ॥ त्रि । धर्म्माधारे ॥

धर्म्मगुप् । त्रि । धर्म्मरक्षके ॥ धर्म्मंगोपायति । गुपू० । क्विप् ॥

धर्म्मघटः । पुं । वैशाखे प्रत्यहदातव्येसुगन्धोदकपूर्णकलसे ॥

धर्म्मचक्रः । पुं । वुद्धे ॥

धर्म्मचक्रभृत् । पुं । जिने ॥ इतिध० ॥

धर्म्मचारिणी । स्त्री । भार्य्यायाम् ॥

धर्म्मचिन्तनम् । न । धर्म्मचिन्तायाम् । पुण्यभावनायाम् ॥

धर्म्मचिन्ता । स्त्री । उपाधौ । धर्म्मचिन्तने ॥ धर्म्मस्यचिन्ता ॥

धर्म्मजीवनः । पुं । ब्राह्मणविशेषे । याजनप्रतिग्रहादिना परस्य धर्म्ममुत्पाद्य यो ब्राह्मणो जीवति तस्मिन् ॥

धर्म्मज्ञः । त्रि । धर्म्मज्ञानविशिष्टे ॥

धर्म्मणः । पुं । वृक्षभेदे । धामिनिया इति गौडभाषाप्रसिद्धे ॥ सर्पप्रभेदे । ढेमना इतिगौडभाषा ॥

धर्म्मतीर्थम् । न । तीर्थविशेषे ॥

धर्म्मत्वम् । न । वृत्तिमत्त्वे । आधेयत्त्व इतियावत् ॥ यथा । गगनादे र्वृत्तिमत्त्वलक्षणधर्म्मत्त्वाभा वादिति जगदीशः ॥

धर्म्मदानम् । न । प्रयोजनमनपेक्ष्यके

वत्सधर्मवुद्ध्यापात्रेभ्योदाने ॥ यथा हरिश्चन्द्रः । पात्रेभ्योदीयते नित्य-मनपेक्ष्य प्रयोजनम् । केवलं धर्म-बुद्ध्यायत् धर्मदानं प्रचक्षत इति ॥

धर्म्मदुघा । स्त्री । हविर्दोग्ध्र्याम् ॥ धर्मान् दोग्धीतिविग्रहे दुहेःकप् घश्चान्तादेशः ॥

धर्म्मद्रवा । स्त्री । } गङ्गायाम् । सिद्धौ

धर्म्मद्रवी । स्त्री । } सिन्धौ ॥ यथा । विष्णुपादार्घसम्भूते गङ्गेत्रिपथगामिनि । धर्मद्रवीतिविख्याते पापंमेहर जाह्नवीति ॥

धर्म्मधातुः । पुं । खसमे । बुद्धे ॥

धर्म्मध्वजी । त्रि । जीविकार्थं जटादि-धारिणि । लिङ्गवृत्तौ ॥ यो बहुजनसमक्षं धर्ममाचरति स्वतः परतश्चलोके ख्यापयति तस्य धर्मो ध्वजं चिह्नमिवेति धर्मध्वजी । धर्मस्यध्वजश्चिह्नम् । धर्मोध्वजइववा ॥ धर्मध्वजो ऽस्यास्ति । अतइनिः ॥

धर्म्मनैपुण्यकामः । त्रि । गृहीतवेदा-ध्ययननियमजन्यादृष्टेच्छौ ॥

धर्म्मपत्तनम् । न । मरिचे ॥ धर्मपत्तने जातम् । तत्रजातइत्यण् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ आवन्त्याम् । धर्मपुर्याम् ॥

धर्म्मपत्नी । स्त्री । प्रथमोढायां सवर्णायाम् ॥ कीर्त्तौ ॥ श्रियि ॥ वाचि ॥ स्मृतौ ॥ मेधायाम् ॥ धृतौ ॥ क्षमायाम् ॥ नारीणां मध्ये कीर्त्याद्याः सप्तधर्मपत्न्यो भगवद्विभूतयः । या सामाभासमात्रसम्बन्धेनापि जनः-सर्वलोकादरणीयो भवति तासां सर्वस्त्रीपूत्तमत्त्वमतिप्रसिद्धमेव ॥

धर्म्मपत्रम् । न । यज्ञोदुम्बरे ॥ धर्मार्थ पत्रे ॥

धर्म्मपालः । पुं । वर्णाश्रमधर्मपालके ॥ धर्मम् पालयति । पाल० । कर्मण्यण् ॥

धर्म्मपुत्रः । पुं । युधिष्ठिरेनृपे । अजातशत्रौ ॥ धर्मस्यपुत्रः ॥ नरनारायणयोर्ऋष्योः ॥ धर्मतःकृतेपुत्रे । धरम्बेटा इति भाषा ॥

धर्म्मप्रधानः । पुं । धार्मिके ॥ धर्मःप्रधानोयस्य ॥

धर्म्मभाणकः । पुं । भारतादिपाठके ॥

धर्म्ममूलम् । न । अद्रोहादिषु ॥ यथा अद्रोहश्चाप्यलोभश्च दमोभूतदया तपः । ब्रह्मचर्यं ततः सत्यमनुक्रोशःक्षमाधृतिः । सनातनस्यधर्मस्यमूलमेतद्दुरासदमिति मत० पु० ॥

धर्म्ममेघः । पुं । असम्प्रज्ञातसमाधौ ॥ सर्वतो विरक्तस्य समाधिफलमपि-सुख मनपेक्ष्यमाणस्य योगिनोदृढभूमिः सन् धर्ममेघ इत्युच्यते । उ

कम्म। प्रसङ्ख्यानेप्यकुसीदस्य सर्वथाविवेकख्यातेर्धर्ममेघःसमाधिस्ततः क्लेशकर्मनिवृत्तिरिति ॥

धर्म्मयुक्तः। त्रि। नित्यनैमित्तिकस्वधर्मोत्थागिनि ॥

धर्म्मयुक्। त्रि। धार्मिके। धर्मयुक्ते ॥

धर्म्मयूपः। पुं। श्रीहरौ ॥ यूपे पशुवत् भगवत्समाराधनात्मका धर्मास्तत्रव ध्यन्ते ऽतो धर्माणांयूपः ॥ यथायूपः पशूनांनियोजनस्थानमेवं विष्णुःस्वसमाराधनात्मकानां धर्माणां स्थानमित्यर्थः ॥

धर्म्मराजः। पुं। यमे ॥ बुद्धे ॥ युधिष्ठिरनृपे ॥ धर्मेणराजते। राजृ०। पचाद्यच्॥ धर्मस्यराजा वा। राजाहःसखिभ्यष्टच् ॥ धर्मश्चासौराजाचेति वा ॥

धर्म्मराजपरीक्षा। स्त्री। धर्म्माधर्मपरीक्षणे ॥ यथाह वृहस्पतिः। पत्रद्वये लेखनीयौ धर्म्माधर्मौ सितासितौ। । जीवदानादिकैर्मन्त्रै र्गायत्र्याद्यैश्च सामभिः ॥ आमन्त्र्यपूजयेद्गन्धैः कुसुमैश्चसितासितैः। अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥ समौकृत्वा नवेकुम्भे स्थाप्यौचानुपलक्षितौ। ततःकुम्भात् पिण्डमेकं गृह्णीयाद्विलम्बितः ॥ धर्मेगृहीतेशुद्धःस्यात् सम्पूज्यश्चपरीक्षकैरिति ॥ जीवदानमन्त्रादिकं शारदायां द्रष्टव्यतत्त्वेचद्रष्टव्यम् ॥

धर्म्मलक्षणम्। न। धर्मस्वरूपे ॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्य मक्रोधो दशकं धर्मलक्षणम् ॥ इति मनुः ॥ अपि च। पात्रेदानं मतिःकृष्णे मातापित्रोश्चपूजनम्। श्रद्धा बलि र्गवांग्रासः षड्विधं धर्मलक्षणम् ॥

धर्म्मवाणिजिकः। पुं। पुण्यकर्म्मफलकामिनि ॥

धर्म्मवान्। त्रि। पुण्यवति। धर्मविशिष्टे ॥ धर्मोस्त्यस्यास्मिन् वा। मतुप् ॥

धर्म्मवर्गः। पुं। चतुर्वर्गे ॥ धर्मघटितो वर्गः ॥

धर्म्मवासरः। पुं। पूर्णिमायाम् ॥

धर्म्मवाहनः। पुं। श्रीसदाशिवे ॥ धर्मो वाहनमस्य ॥ न। धर्मस्ययाने ॥

धर्म्मवित्। त्रि। धर्मज्ञे ॥

धर्म्मविप्लवः। पुं। धर्म्मव्यतिक्रमे। अधर्मे ॥

धर्म्मवैतंसिकः। पुं। पापकर्मणा धनमासाद्यात्मनो धार्म्मिकत्वख्यापनाय दानकर्त्तरि ॥

धर्म्मव्याधः। पुं। पापपुरुषविशेषे ॥

धर्म्मशास्त्रम्। न। मन्वाद्युक्तस्मृतौ। धर्मसंहितायाम् ॥ धर्मप्रतिपादकं शास्त्रम् ॥ धर्मशास्त्रप्रयोजका यथा

। मन्वत्रिविष्णुहारीतयाज्ञवल्क्योश नोऽङ्गिराः । यमापस्तम्बसंवर्त्ताःकात्यायनबृहस्पती ॥ पराशरव्यासशङ्खलिखिता दक्षगौतमौ । शातातपो वशिष्ठश्च धर्मशास्त्र प्रयोजकाः इतियाज्ञवल्क्यः ॥ उशनश्शब्दपर्य्यन्तो द्वन्द्वैकवद्भावः । नेयं परिसङ्ख्या किन्तु प्रदर्शनार्थमेतत् । अतोबौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम् । एतेषां प्रत्येकं प्रामाण्ये पि साकाङ्क्षाणां साकाङ्क्षापरिपूरणं मन्यतः क्रियते । विरोधेतु विकल्पः ॥

धर्म्मशील: । त्रि । धर्मयुक्ते । धार्मिके ॥ धर्मःशीलमस्य ॥

धर्म्मशुद्धिः । स्त्री । अधर्मान्निष्कृत्यनिर्द्धारणे ॥

धर्म्मसंस्थापनम् । न । वेदमार्गपरिरक्षणे ॥ धर्मस्य सम्यक् अधर्मनिवारणेन स्थापनम् ॥

धर्म्मसंहिता । स्त्री । मन्वाद्युक्तस्मृतौ ॥ धर्मबोधार्थं रचिता । सम्भूयोक्तधातेःकर्मणिक्त दधातेर्हिः ॥

धर्म्मसम्मूढचेताः । त्रि । धर्मे विषये-निर्णायकप्रमाणादर्शनात् संशयैर्व्याप्तचित्ते ॥ धर्मे सम्मूढं चेतो ऽस्य ॥

धर्म्मसावर्णिः । पुं । एकादशमनौ ॥

धर्म्मसुतः । पुं । युधिष्ठिरे ॥ धर्मस्यसुतः ॥

धर्म्मसूः । पुं । कलिङ्गे । धूम्याटपक्षिणि ॥

धर्म्मस्थः । पुं । प्राड्विवाके ॥ धर्मेतिष्ठति । ष्ठा० । कः ॥

धर्म्मस्थानम् । न । लग्नान्नवमभवने ॥

धर्म्माङ्गम् । न । ब्रह्मचर्यादिदशसु ॥ यथा । ब्रह्मचर्येणसत्येनतपसाच प्रवर्त्तते । दानेन नियमेनापि क्षमा शौचेनवल्लभ ॥ अहिंसयासुशान्त्या च अस्तेयेनापिवर्त्तते । एतैर्दशभिरङ्गैस्तुधर्ममेवप्रसूचयेदिति पा० भू० ॥

धर्म्मात्मजः । पुं । युधिष्ठिरे ॥

धर्म्मात्मा । पुं । धर्मस्वभावे । धर्मानुगतचित्ते ॥ धर्मआत्मायस्य ॥ स्तु निविषेशे ॥

धर्म्माधर्म्मपरीक्षणम् । न । मिताक्षरोक्तपरीक्षाविशेषे ॥

धर्म्माधर्म्मवित् । पुं । मीमांसके ॥ धर्माऽधर्मौ विधिनिषेधचोदनागम्यौपरमार्थाविति मीमांसकस्यकल्पनामात्रम् । देशकालादिषु धर्मा ऽधर्मयोर्विप्रतिपत्तिदर्शनात् ॥

धर्म्माधिकरणः । पुं । धर्माध्यक्षे ॥ तल्लक्षणं यथा । समःशत्रौचमित्रेच सर्वशास्त्रविशारदः । विप्रमुख्यःकुलीनश्च धर्माधिकरणो भवेत् ॥ इतिमत० पु० ॥ न । राज्ञोविचारस्थाने ॥ यथा । धर्मशास्त्रानुसारेण अर्थशास्त्र

निरूपणम् । यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि तत् ॥ इति वी० मि० ॥ पुरुषान्तरतत्त्वज्ञाः प्राज्ञव श्चाप्यलोलुपाः । धर्म्माधिकरणे कार्य्या अनाह्वानकरानराः ॥ इति मत्स्य पु० ॥

धर्म्माधिकरणी । पुं । धर्म्माधिकरणवि शिष्टे । धर्म्माध्यक्षे । प्राड्विवाके ॥

धर्म्माध्यक्षः । पुं । धर्म्माधिकरणि ॥ कुलशीलगुणोपेतः सर्वकर्म्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्म्माध्यक्षो विधीयते ॥ परमेश्वरे ॥ धर्म्मपदं लक्षणयाधर्म्माधर्म्मप्रतिपादकम् । तथाच धर्म्माधर्म्मौ फलदानाय अध्यक्षावस्येति तौ अध्यक्षयतीतिवा ॥

धर्म्माभासः । पुं । श्रुतिस्मृतीतरशास्त्रोक्ते सुकृते ॥ यथा । श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्म्माभासःसउच्यत इति देवीगीता ॥

धर्म्मारण्यम् । न । पुण्यवनविशेषे ॥ तीर्थविशेषे ॥

धर्म्मासनम् । न । राज्ञोधर्म्मदर्शनार्थमासने । विचारासने । व्यवहारासने ॥

धर्म्मास्तिकायः । पुं । पुद्गलास्तिकायादन्यस्मिन्नभ्युदयहेतौ ॥

धर्म्मिणी । स्त्री । रेणुकायाम् ॥

धर्म्मी । त्रि । पुण्ययुते । धर्म्मवति ॥ धर्म्मो विद्यतेऽस्य । इनिः ॥ अधिकदे प्रवृत्तौ ॥ धर्म्मा यागादिरूपाः श्रौताः स्मार्त्तास्तान्त्रिकाश्च भगवत्समाराधनरूपाःग्राह्यत्वेनस्थाप्यत्वेनचसन्त्यस्येतिधर्म्मी । इनिः ॥ धर्म्येश सर्वमश्रान्तं प्रकारेतु विपर्य्ययः ॥

धर्म्मिष्ठः । त्रि । धार्म्मिके ॥

धर्म्मोत्तरः । त्रि । धर्म्मप्रधाने ॥

धर्म्मोपदेशकः । पुं । श्रीगुरौ ॥

धर्म्यम् । त्रि । धर्म्मयुक्ते ॥ धर्म्मादनपेतम् । धर्म्मपथ्यर्थन्यायादनपेत इति यत् ॥ धर्म्मेणप्राप्ये ॥ नौवयोधर्म्मेत्यादिनायत् ॥

धर्म्यविवाहः । पुं । ब्राह्मदैवार्षगान्धर्वप्राजापत्यरूपे विवाहविशेषे ॥

धर्षः । पुं । प्रागल्भ्ये ॥ अमर्षे ॥ शक्तिवन्धने ॥ संहतौ ॥ हिंसायाम् ॥ धर्षणम् । धृषेर्भावे घञ् ॥

धर्षकः । त्रि । अभिभवकर्त्तरि ॥ नटे ॥

धर्षकारिणी । स्त्री । दूषितायां कन्यायाम् ॥

धर्षणम् । न । परिभवे ॥ रते ॥ धृषेल्युट् ॥ धर्षशब्दार्थे ॥

धर्षणी । स्त्री । अभिसारिकायाम् । असत्याम् ॥ धर्षति । ञिधृषा० । ल्युट् । ङीप् ॥

धर्षणीयः । त्रि । अभिभवनीये । धृष्ये ॥

धर्षिणी । स्त्री । पुंश्चल्याम् ॥

धर्षितम् । न । रतौ । मैथुने ॥ इति त्रिकाण्डशेषः ॥ त्रि । कृतधर्षणे । परिभूते । तिरस्कृते ॥ धृषेः क्तः । इड्गुणौ ॥

धर्षिता । स्त्री । असत्याम् ॥ तिरस्कृतायाम् ॥

धलखण्डः । पुं । हठकण्टकवृक्षे । धलआँकडा इति गौड भाषा ॥

धलखण्डकः । पुं । धलखण्डे ॥

धवः । पुं । नरे ॥ धूर्त्ते ॥ पत्यौ ॥ स्वनामख्यातेवृक्षे । मधुरसवृक्षे । पीतफले । गौरे । शुक्लवृक्षे ॥ अस्यगुणाः । धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुर स्तुवर स्तस्य फलञ्च मधुरं मनागिति भावप्रकाशः ॥ धवति धुवति धुनोति धुनाति वा । धूञ् । धुञ्कम्पने धविधूनने वा । पचाद्यच् ॥ यद्वा । धूयते । ऋदोरप् ॥

धवलः । पुं । वृषश्रेष्ठे । महोक्षे ॥ चीनकर्पूरे ॥ धववृक्षे ॥ रागविशेषे ॥ वीरवृक्षे ॥ पाण्डुप्रभेदेखगे । धौला इति भाषा ॥ धवलः पाण्डु र्बहिष्ठो रक्तपित्तहरो हिमः । रसे पाके च मधुरः सग्राही वातशान्तिकृत् ॥ न । श्वेतमरिचे ॥ छन्दोभेदे ॥ यथा । द्विजवरगणयुगसगणगणनगणयुगमकलं विमलवलयमपिच कलयसकलजनसुखम् । फणिपतिवरभणित ममलधवल मिह हितं विमलकविसुहृदिव खलित मिति भुविविदितम् ॥ यथा ॥ उपगतइहसुरभिसमयइतिसुमुखिवरे निधुवनमधिपिव सहमधुजिद्वृषमपदे । कमलनयन मनसरसखि तवरभसपरं प्रियतमगृहगमनमुचितमनुचित मपरम् ॥ त्रि । शुक्ले । सितवर्णाख्ये ॥ सुन्दरे ॥ धाञ् । बाहुलकात् कलः धातोर्ह्रस्वश्च ॥

धवलपक्षः । पुं । हंसे ॥ शुक्लपक्षे ॥

धवलपाटली । स्त्री । सितपाटलिकायाम् ॥

धवलमृत्तिका । स्त्री । खटिकायाम् ॥

धवलयावनालः । पुं । यावनालविशेषे । तारतण्डुले । पाण्डुरे ॥

धवला । स्त्री । शुक्लवर्णायाङ्गवि ॥ धवलवर्णयोगात् अनुदात्तत्वाभावान्नङीष् ॥

धवलाङ्कः । पुं । प्रतापसे ॥ धवलश्चासावर्कश्च ॥

धवली । स्त्री । धवलवर्णायाङ्गवि । धवलायाम् ॥ गौरादित्वान् ङीष् ॥

 

धवलोत्पलम् । न । कुमुदे ॥

धवाणकः । पुं । समीरणे । वायौ ॥ धुनाति । धूञ्० । आणकोणू धूशिङ्खि धाञ्भ्यः ॥

धवित्रम् । न । यज्ञज्वलनज्वालनव्यजने । अग्नेः सन्धुक्षणाय मृगत्वचारचिते व्यजने ॥ धूयते ऽनेन । धूञ्० । अर्त्तिलू धूसूइति इत्रः ॥

धाः । पुं । ब्रह्मणि ॥ धारके ॥ वृहस्पतौ ॥

धाकः । पुं । वृषे ॥ भोजने । आहारे ॥ आधारे ॥ दधाति । डुधाञ्० । कृदाधाराचिंकलिभ्यः कः । इति कः ॥

धाटी । स्त्री । अभ्यवस्कन्दे । प्रपाते । शत्रोः सम्मुखगमने ॥

धाणकः । पुं । दीनारभागे । स्वर्णभूषाभागे ॥ दधाति । डुधाञ्० । आणकोणू धूशिङ्खिधाञ्भ्यः ॥

धातकी । स्त्री । मद्यपुष्पायाम् । धाटपुष्प्याम् । धाइ इतिप्रसिद्धे गुल्मे ॥ धातकी कटुका शीता मदकृत् तुवरा लघुः । तृष्णातीसारपित्तास्रविषकृमिविसर्पजित् ॥ अस्याः पुष्पाणि ग्राह्याणि ॥ धातुं करोति । तत्करोतीतिणिच् । टिलोपः । कुन् । पिप्पल्यादित्वात् ङीष् ॥

धातुः । पुं । इन्द्रियेषु ॥ शब्दयोनौ । श्लेषस्पर्शादौ ॥ अत्रार्थनिर्णयार्थमयं यथा । क्रियावाचित्व माख्यातुं प्रसिद्धोर्थः प्रदर्शितः । प्रयोगतो ऽन्येऽनुमन्तव्या अनेकार्था हि धातवइति ॥ सकर्मकाकर्मकभेदेन धातवो द्विविधाः । तथाहि । सत्ताजीवनदर्पभीतिशयनक्रीडानिश्वासक्षयाव्यक्तध्वाननभोगतिस्थितिजरालज्जाप्रमादोदये । मोहक्ष्वेटनवेगयुद्धदहनख्यातिक्षरोन्मादकेशवृद्धिस्वेदपलायनभ्रमणक्लेशाग्लानौ शुतौ मज्जने ॥ इतौ जागरणोपचक्रगमनोत्साहेस्मृतौ संशयेग्लानौ मन्दगतौ चक्षयपतने चेष्टाक्रुधौ रोदने । इच्छौ हाबकृतौ च सिद्धिविरतौ हर्षोपवेशे बलेकम्पोद्वेगनिमेषभञ्जयतनाद्ये धातवो ऽकर्मकाः ॥ दैवल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः । वाचकाभावमात्रस्य यतस्तस्मादकर्मकाः ॥ कौटिल्यादिषु चार्थेषु प्रोक्ता येते तु धातवः । तद्भावे ऽकर्मकाः स्युस्तदत्कृत्यां सकर्मका इति ॥ * ॥ आकाशादि महाभूतेषु ॥ शब्दाद्याकाशादिगुणेषु ॥ रसादिषु । रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातव इत्युक्तेषु ॥ गैरिकमनः शिलाद्यश्मविकारे ॥ श्लेष्मादौ ॥ तेषा तत्रापि विद्वद्भिर्गदिता देहधारणात् । अत्राहसुश्रुतः । विसर्गादानविक्षे-

पैःसोमसूर्यानिला यथा। धारयन्ति जगद्देहं कफपित्तानिलास्तथेति॥ अस्थि॥ स्वर्णादौ॥ सुवर्णरूप्यता म्राणिहरितालंमनःशिला। गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः। गन्धकोऽभ्रकमित्याद्या धातवोगिरिसम्भवाः॥ * ॥ नवधातवोयथा। हेमताराऽरनागाश्च ताम्रङ्गेच तीक्ष्णकम्। कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिताः॥ * ॥ अष्टधातवोयथा। हिरण्यं रजतं कांस्यं ताम्रं सीसकमेवच। रङ्गमायसरैत्यञ्च धातवोष्टौप्रकीर्त्तिता इतिदानसागरः॥ अपिच। सुवर्णं रजतं ताम्रं लौहं कुप्यञ्च पारदम्। वङ्गञ्च सीसकञ्चैवइत्यष्टौदेवसम्भवा इतिवैद्यकम्॥ * ॥ सप्तधातवो यथा। स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यसदमेवच। सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः इतिभावप्रकाशः॥ * ॥ वलीपलितखालित्यकार्श्यावल्यजरामयान्। निवार्यदेहंदधतिन्दृणांतद्धातवोमताः॥ * ॥ सप्तोपधातवो यथा। माक्षिकंतुत्थिकाभ्रेचनीलाञ्जनशिलाऽलकाः। रसकश्चेतिविज्ञेयाएतेसप्तोपधातवः॥ * ॥ शरीरस्थसप्तधातुभवसप्तोप धातवो यथा। स्तन्यं रजश्च नारीणां कालेभवति गच्छति। शुद्धमांसभवःस्नेहो यःसा सङ्कीर्त्त्यतेवसा। स्वेदोदन्तास्तथाकेशा स्तथैवोजश्चसप्तमम्। इतिधातुभवाज्ञेयाएतेसप्तोपधातवः॥ इतिसुखबोधः॥ * ॥ लोकेषु॥ वसुनि॥ धीयते सर्वंनिःक्षिप्यते सुष्याद्यावस्मिन्निति व्युत्पत्त्या आत्मनि॥ दधाति शोभां धीयते वा। डुधाञ्॰। सितनिगमिमसीतितुन्॥ शरीरदूषणाद्दोषा मलिनी करणान्मलाः। धारणाद्धातव स्तेषु वातपित्तकफास्त्रयः॥ * ॥ हरितालं हरे वींर्यंलक्ष्मीवीर्यं मनःशिला। पारदं शिववीर्यंस्याद्गन्धकं पार्वतीरजः॥

धातुकाशीशम्। न। } द्रव्यविशेषे।
धातुकासीसम्। न। } कासीसे॥

धातुघ्नम्। न। काञ्जिके॥

धातुद्रावकम्। न। टङ्कणे॥

धातुनाशनम्। न। काञ्जिके॥

धातुपः। पुं। शरीरस्थप्रथमधातौ। रसइतिख्याते॥

धातुपुष्पिका। स्त्री। धातुपुष्प्याम्। धाइफूल इतिभाषा॥

धातुपुष्पी। स्त्री। धातुपुष्पिकायाम्। धातक्याम्॥

धातुभृत्। पुं। पर्वते॥ त्रि। धातुपो

पके ॥

धातुमाक्षिकम् । न । माक्षिके । पीतके ॥

धातुमारिणी । स्त्री । सर्जिकायाम् ॥

धातुराजकम् । न । रेतसि ॥

धातुवल्लभम् । न । टङ्कणे ॥

धातुवादी । पुं । कारन्धमिनि । धातुवादरते ॥

धातुवैरी । पुं । गन्धके ॥ इति शब्दं० ॥

धातुशेखरम् । न । कासीसे ॥

धातूपलः । पुं । कठिनिकायाम् ॥

धाता । पुं । अब्जयोनौ । ब्रह्मणि ॥ उपादानत्वात् सर्वस्य कर्म्मफलजातस्य विचित्रतया प्राणिभ्योविभक्तरि । पोषयितरि । कर्मफलविधातॄणां मध्ये विश्वतोमुखोधाता सर्वकर्मफलदाते श्वरविभूतिः ॥ धातुर्गतिर्विचित्रास्य दुर्ज्ञेयाभुवनत्रये ॥ विष्णौ । अीपतौ ॥ अनन्तादिरूपेण विश्वं दधाति धारयति । दधाते स्तृच् ॥ भृगुमुनेः पुत्रे ॥ दशमेवत्सरे ॥ यथा । निष्पत्तिः सर्वशस्यानां मध्याधातरिकीर्त्तिता । इक्षुक्षीरगुडादीनां प्रबलत्वंवरानने ॥ षष्ट्याब्दस्याष्टमेभेदे (॥।ऽ।) ॥ त्रि । पालके ॥ धारणपोषणसामर्थ्ययुक्ते ॥ धारके ॥ दधाति । डुधाञ् । तृच् ॥

धातृपुत्रः । पुं । सनत्कुमारे ॥ ब्रह्मणः सुतमात्रे ॥

धातृपुष्पिका । स्त्री । धातक्याम् ॥ धातृपुष्पमस्याः । शैषिकःकप् ॥

धातृपुष्पी । स्त्री । धातक्याम् ॥ धातृपुष्पमस्याः । पाक्षिकःकबभावः ॥

धात्रिका । स्त्री । आमलक्याम् ॥

धात्री । स्त्री । जनन्याम् । मातरि ॥ आमलक्याम् ॥ वसुमत्याम् । भुवि ॥ उपमातरि ॥ धीयते । धेट्० । धः कर्मणिष्ट्रन् ॥ दधातिवा । डुधाञ्० । सर्वधातुभ्यःष्ट्रन् । षित्त्वान् ङीष् ॥

धात्रीपत्रम् । न । आमलकीदले ॥ तालीशपत्रे ॥

धात्रीपुत्रः । पुं । नटे ॥ उपमातुः सुते ॥ धात्र्याः पुत्रः ॥

धात्रीफलम् । न । आमलकीफले । आँवला इतिभाषा ॥ धात्र्याःफलम् ॥ हरीतकीसमंधात्रीफलं किन्तु विशेषतः । रक्तपित्तप्रमेहघ्नं परं हृष्यं रसायनम् ॥ हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः । कफंरूक्षकषायत्वात् फलंधात्र्यास्त्रिदोषजित् ॥ अङ्गारपाकमृदुयत्नसुपाचितानि सिद्धानिहिङ्गुमरिचादिसमन्वितानि । तप्तेघृतेपुनरपिप्रतिभर्जितानि धात्रीफलानि जनयन्ति हिजाठरा-

ख्रिम् ॥

धायेयिका । स्त्री । धात्र्याम् । धाय इति भाषा ॥ यथा । पठेद्धायेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुख इति ॥

धायेयी । स्त्री । धायेयिकायाम् ॥

धानम् । न । पोषणे ॥ निधाने ॥ धीयते ऽस्मिन् । ल्युट् ॥

धानकम् । न । धन्याके ॥

धाना । स्त्री । । बहुरी इतिभाषाप्रसिद्धे भृष्टयवे॥धन्याके ॥ अभिनवोद्भिन्ने । अङ्कुरे ॥ चूर्णसक्तुषु ॥ धानाः । स्त्री । धाना भृष्टयवे स्त्रिय इतिब हुवचननिर्देशात् बहुवचनान्तोपि ॥ यथास्तुनिस्तुषाभृष्टाः स्मृताधाना इतिस्त्रियाम् । धानाः स्यु र्दुर्जरा रूक्षा स्तृट्प्रदा गुरवश्च ताः॥ तथामेदः कफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः ॥ दधाति दधति वा । डुधाञ्० । धापृवस्यज्यतिभ्योनः । टाप् ॥

धानाकाः । स्त्री । धानासु ॥ नित्यंबहुवचनान्तोयमितशब्दरत्नावली ॥

धानाचूर्णम् । न । भृष्टयवचूर्णे । सक्तुषु ॥

धानी । स्त्री । पीलुवृक्षे ॥ आधारे ॥ यथा । राजधानीततःसाभूत् सर्वयादवभूभुजामिति ॥ धीयते ऽस्याम् ॥ करणा ऽधिकरणयोश्चेतिल्युट् । ङीप् ॥

धानुष्कः । त्रि । धनुर्द्धरे । धन्विनि ॥ धनुः प्रहरण मस्य । तदस्येत्यधिकृत्य प्रहरणमिति ठक् । इसुसुक्तान्तात्कः ॥ यद्वा । धनुषाजीवति । वेत० ठञ् ॥ लग्नात् तृतीयभवने ॥

धानुष्का । स्त्री । अपामार्गे ॥

धानुष्यः । पुं । वंशे ॥ इति राजनि० ॥

धानेयम् । न । } धन्याके । धनिआ-

धानेयकम् । न । } इति भाषा ॥

धान्या । स्त्री । एलायाम् । पृथ्वीकायाम् । एलायची इतिभाषा इतिशब्दचन्द्रिका ॥

धान्यम् । न । धन्याके॥ परिपेले ॥ चतुस्तिलपरिमाणे ॥ पूर्वद्वारगृहे ॥ व्रीहिसामान्ये नीवारादौ ॥ धान इति भाषाप्रसिद्धे सतुषतण्डुलादौ । भोगार्हे । अन्ने ॥ धान्यं त्रिविधम् आशुषष्टिकशालिभेदात् । तत्रप्रावृट्काल भवमाशुः । ग्रीष्मजं षष्टिकः । हेमन्तोद्भवं शालिः ॥ * ॥ धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम् । तत्तुवर्षोषितं पथ्यं यतो लघुतरं हितम् ॥ वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति । न तु त्यजति वीर्यत्वं क्रमान्मुञ्चत्यतः परम् ॥ एतेषु यवगोधूमतिलमाषा नवा हिताः । पुराणा






विरसा रूक्षा न तथागुणकारिणः ॥ पुराणावर्षद्वयादुपरिस्थिताः । यवादयो नवा स्वस्थानप्रति हिताः । पथ्याशिनान्तु पुराणाहिताः । पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति श्लोके वाग्भटेनोक्तत्वात् ॥ धाने पोषणे साधु । तत्रसाधुरिति यत् ॥ यद्वा । दधाति । डुधाञ् । दधाते र्यन् नुट्चेति यन्नुटौ ॥

धान्यकम् । न । धान्याके ॥ इ०रानि०॥

धान्यकोष्ठकम् । न । धान्यरक्षार्थगृहे । गोला इतिभाषा ॥

धान्यचमसः । पुं । चिपिटके ॥

धान्यत्वक् । स्त्री । तुषे ॥ धान्यस्यत्वक् ॥

धान्यधेनुः । स्त्री । दानार्थं धान्यनिर्मितधेनौ ॥

धान्यपञ्चकम् । न । शालिधान्यादिपञ्चसु ॥ यथा । शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् । शिम्बिधान्यं क्षुद्रधान्यमित्युक्तंधान्यपञ्चकम् ॥ शालयोरक्तशाल्याद्या व्रीहयः षष्टिकादयः । यवादिकं शूकधान्यंमुद्गाद्यंशिम्बिधान्यकम् ॥ कङ्ग्वादि क्षुद्रधान्यं स्यात्तृणधान्यञ्चतत्स्मृतमिति ॥ अतीसारेपाचनविशेषे ॥ यथा । धान्यवालकबिल्वाब्दनागरैः पाचितं जलम् । आमशूलविबन्धघ्नंपा



चनंनित्यसेवितमितिभावमिश्रः ॥

धान्यमायः । पुं । धान्यविक्रयिणि ॥

धान्यराजः । पुं । यवे ॥

धान्यवर्द्धनम् । न । वार्द्धुष्ये । धान्यवृद्धौ ॥

धान्यवीजम् । न । धन्याके ॥

धान्यवीरः । पुं । माषे ॥

धान्यवृद्धिः । स्त्री । धान्यवर्द्धने । मह्यमेतावद्धान्यंदेहि ततोमासानन्तरं वर्षानन्तरंवा सपादं सार्द्धं द्विगुणंवा दास्यामीत्येवंरूपायां वृद्धौ ॥

धान्यशीर्षकम् । न । धान्यमञ्जर्याम् ॥

धान्याकम् । न । धन्याके । कुस्तुम्बुरुणि ॥ धान्याकं तुवरं स्निग्ध मवृष्यं मूत्रलं लघु । तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम् ॥ ज्वरघ्नं रोचनं ग्राहि स्वादुपाके त्रिदोषनुत् । तृष्णादाहवमिश्वासकासामार्शः कृमिप्रणुत् ॥ आर्द्रन्तुतद्गुणं स्वादुविशेषात्पित्तनाशनम् ॥ धान्य मकति । अककुटिलायाङ्गतौ । अण् ॥

धान्याग्रम् । न । व्रीहिमञ्जर्याम् ॥

धान्याचलः । पुं । दानार्थंधान्यनिर्मितेपर्वते ॥

धान्याभ्रम् । न । अभ्रकमारणोपयोगिवस्तुनि ॥ पादांशशालिसंयुक्तमभ्रं बद्धाथ कम्बले । त्रिरात्रं स्थापयेन्नीरे तत्क्लिन्नं मर्दयेत्करैः ॥ क










स्खलाद्गालितं सूक्ष्मं वास्तुकार्याच्छ तच्चयत् । तद्धान्याम्लमिति प्रोक्तं म अमारणसिद्धये इतिभावप्रकाशः ॥

धान्याम्लम् । न । काञ्जिके ॥ धान्याम्लं शालिचूर्णोच्छकोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात् प्रीणनं- लघुदीपनम् । अरुचौ वातरोगेषु सर्वेष्वास्थापनेहितम् ॥ धान्येष्वभि षुतमम्लम् । शाकपार्थिवादिः ॥

धान्यारिः । पुं । मूषिके ॥

धान्योत्तमः । पुं । शालिधान्ये ॥

धामकः । पुं । माषकपरिमाणे ॥ इति वैद्यकपरिभाषा ॥

धाम । न । देहे ॥ गृहे ॥ रश्मौ ॥ स्थाने । आश्रये ॥ जन्मनि ॥ प्रभावे ॥ त्विषि ॥ ज्योतिषि । स्वयम्प्रकाशे । स्वस्वरूपे ॥ दधाति धीयते वा । डुधाञ्० । मनिन् ॥

धामनिधिः । पुं । सूर्ये ॥ धाम्नांनिधिः ॥

धामनी । स्त्री । धमन्याम् ॥

धामवान् । त्रि । तेजस्विनि ॥

धामार्गवः । पुं । अपामार्गे ॥ घोषके । तोरञी इतिप्रसिद्धे शाके ॥ नेनुवाँख्ये । पीतघोषाख्येपि ॥ धाम्नोर्गः । धामार्गं वाति । वा० । आतोनुपेसिकः ॥ यद्वा । धाम ऋच्छति । ऋ० । अन्ये०वि च । धामार्गवाश्वोगोश्च । गोरतद्धितलुकीति टच् ॥

धायः । त्रि । धारणकर्त्तरि ॥

धायाः । त्रि । धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥ यथाविश्वस्य धायाइति ॥

धाय्यः । पुं । पुरोहिते ॥

धाय्या । स्त्री । वह्निसन्धालनार्थायामृचि । सामिधेन्याम् ॥ धीयते पुष्यते ऽग्निरनया धीयते ऽनया समिदितिवा । पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीष्विति धाञोण्यत् युगागमश्च ॥

धारः । पुं । जलधरासारवर्षणे ॥ ग्रावान्तरे ॥ ऋणे ॥ प्रान्ते ॥ गम्भीरे ॥

धारम् । न । दिव्यपानीयप्रभेदे ॥ धाराभिः पतितं तोयं गृहीतं स्फीत वाससा । शिलायां वसुधायांवा धौतायां पतितञ्चयत् ॥ सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते । भाजने मृन्मयेवापि स्थापितं धार मुच्यते ॥ धारं नीरं त्रिदोषघ्न मनिर्देश्यरसं लघु । सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ॥ पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् । तृष्णां हरति तत्पथ्यं विशेषात् प्रावृषिस्मृतम् ॥ * ॥ धाराजलञ्चद्विविधं गाङ्गसामुद्रभेदतः ॥ यदाश्वा दाश्विनेमासि सूर्यः स्वातीविशाखयोः

। तद्दाम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥ अन्यदाश्वयुगशीर्षादिकन्येषु यदाम्बुदैः । अभिवृष्टमिदं तोयं सामुद्रमितिसंज्ञितम् ॥ * ॥ गाङ्गं जलं स्वादु सुशीतलञ्च रुचिप्रदं पित्तकफापहञ्च । निर्दोषमिष्टं लघु तच्च नित्यं गुणाधिकं व्योमनिरुक्तमाहुः ॥ सामुद्रसलिलं शीतं कफवातकरं गुरु । चित्राया माश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥ पतितं भुवि तत्तोयं गाङ्गं सामुद्रमेववा । स्वस्वाश्रयवशाद् गच्छेदन्यदन्यद्रसादिकम् ॥ इतिराजनिर्घण्टः ॥

धारकः । पुं । कलसे ॥ त्रि । धारणकर्त्तरि ॥

धारणः । पुं । सम्पाते ॥ नीरे ॥ स्वर्लोके ॥ परमेष्ठिनि ॥ धृतौ ॥ न । विधारणे । धरणा इति भाषा ॥ धारयति । धृञ् । नन्द्यादित्वाल्ल्युः ॥

धारणा । स्त्री । योगाङ्गे ॥ देशबन्धश्चित्तस्य धारणा ॥ १ ॥ देशे नाभिचक्रनासाग्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत् स्थिरीकरणं सा चित्तस्य धारणेत्युच्यते । अयमर्थः । मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणेन यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्बाधे प्रदेशे ऋजुकायेन जितद्वन्द्वेनयोगिना नासाग्रादौ सम्प्रज्ञातस्य समाधेरभ्यासायचेतसः स्थिरीकरणं कर्त्तव्यमिति ॥ * ॥ यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः ॥ तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः । कुर्वीत संस्थितिं सातु विज्ञेया शुद्धधारणेति वि॰ पु॰ ॥ ध्येयेचित्तस्यस्थिरबन्धने ॥ अद्वितीयवस्तुन्यन्तरिन्द्रियवृत्तिधारणे ॥ यत्र यत्र मनोयाति ब्रह्मणस्तत्र दर्शनात् । मनसो धारणञ्चैव धारणा सा परामता ॥ मर्यादायाम् । संस्थायाम् । न्याय्यपथस्थितौ ॥ बुद्धौ ॥ निश्चये ॥ धारयति धर्मम् । धृञ् । णिच् । युच् ॥ युच्वा ॥

धारणी । स्त्री । नाडिकायाम् ॥ बुद्धोक्तमन्त्रविशेषे ॥ श्रेण्याम् । पङ्क्तौ ॥

धारणीयः । त्रि । धार्ये । धारयितुं शक्य ॥ धृञो ऽनीयर् ॥

धारणीया । स्त्री । धरणीकन्दे ॥

धारयित्री । स्त्री । धरित्र्याम् ॥ त्रि । धारयितरि ॥

धारा । स्त्री । सैन्याग्रिमस्कन्धे ॥ घटादिच्छिद्रे ॥ सन्ततौ ॥ द्रवद्रव्यस्य प्रपाते ॥ खड्गादेर्निशितमुखे ॥ इति

मे० ॥ उत्कर्षे ॥ इतिहेमचन्द्रः ॥ यशसि ॥ अतिवृष्टौ ॥ समूहे ॥ घनासारवर्षणे ॥ सहये ॥ इतिविश्वः ॥ पुरीविशेषे ॥ तुरङ्गगतिपञ्चके ॥ अश्वानान्तुगति धारा विभिन्ना सा च पञ्चधा । आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ धौरितंवल्गितं धाराप्लुतमुत्तेजितंक्रमात् । उत्तेरितश्चेति पञ्चशिचयेत् तुरगं गती: ॥ उत्तेरितेनातिवेगान्यो नशृणोति न पश्यति । धौरितंगतिमात्रे यत्योजितं वल्गितंपुरः ॥ अग्रकायः समुल्लासाकुञ्चिताख्यं नततचिकम् । उत्तेजितं मध्यवेगं योजनंस्याच्छ्लाघया ॥ पूर्वापरो न्नमनतः क्रमादुत्तारणं प्लुतम् ॥ अश्वशास्त्रे तु संज्ञान्तरेणोक्ताः । गतिः पुलाचतुष्काचतदन्मध्यजवापरा । पूर्णवेगातथाचान्या पञ्च धाराः प्रकीर्त्तिताः ॥ एकैका त्रिविधा धारा त्र्यशिक्षाविधिर्धीमता । लघ्वी मध्या तथादीर्घाचाश्वेतायोजयेत् क्रमादिति ॥ धार्यन्ते अश्वा अया ऽनयावा । धृञ्० । युग्मतः । भि०कङ् । ऋदृशोङोतितिगुणनिपातनाद्दीर्घोवा ॥

धाराकदम्बः । पुं । केलिकदम्ब इति गौडभाषा प्रसिद्धे कदम्बविशेषे । प्रावृषेण्ये । मेघाभे ॥

धाराङ्कुरः । पुं । नाशीरे ॥ शीकरे ॥ घनोपले ॥ इति मेदिनी ॥

धाराङ्गः । पुं । असौ । खङ्गे ॥ तीर्थे ॥ इति हेमचन्द्रः ॥

धाराटः । पुं । चातके ॥ अश्वे ॥ मेघे ॥ मत्तमातङ्गे । मत्तगजे ॥ इतिशब्दरत्नावली ॥

धाराधरः । पुं । जलधरे । मेघे ॥ धाराणां धरः ॥ खङ्गे ॥

धारापूपः । पुं । अपूपविशेषे ॥ घृतमिश्रा कनिक्या या दुग्धेनालोडिताप्लुता । धाराख्या पूपकं स्वाज्ये पक्वं खण्डेन योजयेत् ॥ आपूपकं सुमधुरं हृष्यं पित्तहरंपरम् । सुस्निग्धं रोचनं हृद्यमत्यर्थं वातनाशनम् ॥

धाराफलः । पुं । मदनवृक्षे ॥

धारावनिः । पुं । वायौ ॥ इतित्रिकाण्डशेषः ॥

धाराविषः । पुं । खङ्गे ॥ इतित्रिकाण्डशेषः ॥

धारासम्पातः । पुं । आसारे । महावृष्टौ ॥ धाराणां सम्पातः सम्भृयपतनम् । पतेर्भावे घञ् ॥

धारास्नुही । स्त्री । त्रिधारस्नुह्याम् ॥

धारिणी । स्त्री । धरायाम् ॥ शाल्मलिद्रुमे ॥

धारितः । त्रि । धृते ॥

धारी । पुं । पीलुवृक्षे ॥ त्रि । धारवि शिष्टे ॥

धारु: । त्रि । पानकर्त्तरि ॥ धयति तच्छील:। धेट्० । दाधेट् सिशदस दोरु: ॥

धारेश्वरी । स्त्री । देवीविशेषे ॥

धारोष्णम् । न । दोहनेनोष्णधारया सद्य: पतिते दुग्धे ॥ धारोष्णन्त्वमृतं पयोभ्रमहरं निद्राकरं कान्तिदं वृष्यं वृंहण मग्निवर्द्धनमतिस्वादुत्रि दोषापहमितिराज निर्घण्ट: ॥

धार्त्त: । त्रि । धूर्त्ते । द्यूतकृति ॥ धावनम् । धाव० । सं० क्विप् । वाहुलका त् वलोप: । धा धावने आर्त्ति: । धार्त्ति रस्यास्ति । ज्यो० अण् ॥ यद्वा । धा धावनेन आर्त्त: ॥

धार्त्तराष्ट्र: । पुं । असिताश्चञ्चुचरण कृष्णवर्णेतरहंसे। गेंडिहाँस इतिगौडभाषा ॥ सर्पविशेषे । अहौ ॥ कौरवे । धृतराष्ट्रापत्येषु दुर्योधनादिषु ॥ धृतराष्ट्रसम्बन्धिभीष्मद्रोणादौ ॥ धृतराष्ट्रे भव: । तत्रभव इत्यण् । तस्येदमित्यण्वा ॥

धार्त्तराष्ट्रपदी । स्त्री । हंसपद्याम् ॥

धार्त्ता । पुं । धारके । धारणकर्त्तरि ॥ आगमजस्यानित्यत्वात् आर्द्धधातुक स्येड्वलादेरितिनेडागम: ॥

धार्म्मिक: । त्रि । देवयौ । धर्मशीले ॥ धर्मयुक्ते ॥ धर्ममधीते वेदवा । धर्मञ्चरतिवा । उ०ठक् । चरतिरिह आसेवायाम् तत्त्वमनुष्ठानमात्रे । तेन दैवयशाद्धर्मेप्रवृत्तोऽपिदुर्वृत्तोधार्मिक इतिनोच्यते ॥

धार्य्य: । त्रि । धारणीये ॥

धार्ष्ट्यम् । न । सामर्थ्ये ॥ प्रागल्भ्ये ॥ धृष्टस्यकर्म भावोवा । ष्यञ् ॥

धावक: । पुं । रजके ॥ स्मृतौतुभिन्नावेतौ ॥ त्रि । धावनकर्त्तरि । शीघ्रगामिनि । धाउड़िया इतिभाषा ॥ धावति । धाव० । ण्वुल् ॥

धावन् । त्रि । द्रुतंगच्छति ॥ धाव० । शतृ ॥

धावनम् । न । गमने ॥ शुद्धौ ॥ धावुगतिशुद्ध्यो: । ल्युट् ॥

धावनि: । स्त्री । पृश्निपर्ण्याम् ॥ धावति । धावुगतिशुद्ध्यो: । वाहुलकादनि: ॥ कण्टकार्य्याम् ॥

धावनिका । स्त्री । कण्टकारिकायाम् ॥

धावनी । स्त्री । पृश्निपर्ण्याम् ॥ कण्टकार्य्याम् ॥ कृदिकारादिति ङीष् ॥ धातक्याम् ॥

धावित: । त्रि । गते ॥ मार्जिते ॥ धोया इतिभाषा ॥

धिक् । अ । अपकारशब्दैर्भयोत्पादने । निर्भर्त्सने ॥ निन्दायाम् ॥ यथा । धिक् भस्मरहितंभालं धिक्ग्रामम शिवालयम् । धिगनीशार्चनंजन्म धिग्विद्यामशिवाश्रयामिति ॥ धक्कयति । धक्कनाशने । बाहुलकात् डिकप्रत्ययः । दधातेर्वा ॥

धिक्कार: । पुं । निकारे । तिरस्कारे ॥ धिक्करणम् । कृञ् । घञ् ॥

धिक्कृत: । त्रि । अपध्वस्ते ॥ निन्दिते ॥ धिगितिकृत: । धिगकारिवा । क्त: ॥

धिक्क्रिया । स्त्री । निन्दायाम् ॥ इति हेमचन्द्र: ॥

धिग्वण: । पुं । शूद्रेण वैश्यायामुत्पन्ना आयोगवी तस्यांब्राह्मणादुत्पन्नेसङ्कीर्णजातिविशेषे ॥ तस्यचर्मकार्यम् ॥

धिशाम्पति: । पुं । मञ्जुघोषे । पूर्वजिनविशेषे ॥ इतित्रि० । आत्मनि ॥

धिषण: । पुं । त्रिदशाचार्ये । बृहस्पतौ ॥ प्रशस्ता धिषणा अस्य ॥ धृष्णोति । ञिधृषा० । धृषेर्द्धिष् चसंज्ञायामिति क्युर्वा ॥

धिषणा स्त्री । बुद्धौ । मनीषायाम् ॥ धृष्णुवन्त्यनया । ञिधृषा० । क्यु: । टाप् ॥

धिष्ण्य: । पुं । अग्निविशेषे ॥ शुक्रे ॥ न । स्थाने ॥ अग्निसामान्ये ॥ सद्मनि ॥ शक्तौ ॥ ऋक्षे । उडुनि ॥ धिष्यते धृष्णोति वा । धिषशब्दे ञिधृषा०वा । सानसिवर्णसिपर्णसीति साधु । धृषेर्ऋकारस्येकारोरपरत्वाभावोगण्यप्रत्ययश्चतेनैव निपातनात् ॥

धी: । स्त्री । प्रज्ञायाम् । मतौ ॥ शास्त्रादितत्त्वज्ञाने ॥ ज्ञानभेदे ॥ ध्यायन्त्यनया । ध्यै० । ध्यायते:सम्प्रसारणञ्चेतिक्विप् । हलश्चेतिदीर्घ: ॥

धीगुण: । पुं । शुश्रूषाद्यष्टसु ॥ तेयथा । शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा इति ॥ धियोगुणा: ॥

धीत: । त्रि । पीते । पीया इतिभाषा ॥

धीति: । स्त्री । पिपासायाम् ॥ इतिहेमचन्द्र: ॥

धीदा । स्त्री । कन्यायाम् ॥ बुद्धौ । मनीषायाम् ॥ धियं ददाति । डुदाञ्० । क: । टाप् ॥

धीन्द्रियम् । न । ज्ञानेन्द्रियेषु । मन आदिषु समस्तेषु व्यस्तेषुच ॥ मन: कर्णौ तथानेत्रे रसनाचत्वचासह । नासिकेचेतिषड्तानि धीन्द्रियाणिप्रचक्षते ॥ धीसाधकमिन्द्रियम् ॥

धीमान् । पुं । बृहस्पतौ ॥ त्रि । पण्डि

ते ॥ धीर्विद्यते यस्य । मतुप् ॥ ऊहापोहकुशले ॥

धीमती । स्त्री । बुद्धिमत्याम् । प्रशस्तबुद्धियुक्तायाम् ॥ धीरस्यस्याः । मतुप् । उगित्त्वान्ङीप् ॥

धीरः । पुं । ऋषभौषधे ॥ बलिराजे ॥ धियमीरयतीतिव्युत्पत्त्या चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरके । धीसाक्षिणि ॥ न । कुङ्कुमे ॥ त्रि । धैर्यान्विते ॥ स्वैरे ॥ पण्डिते ॥ मन्दे ॥ विनीते ॥ बलयुते ॥ विवेकिनि ॥ धियंराति । रा० । आतोनुपेतिकः ॥ धियमीरयति । ईर० । अण् ॥ दधति धीयते वा । डुधाञ्० । सुसूधागृधिभ्यः क्रन् । घुमास्थेतीत्वम् ॥ दधात्यापत्सु चित्तमिति वा ॥ स्त्रीसन्निकर्षात् धीरोपि विक्रियां भजते खलु ॥ * ॥ विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ * ॥ गतस्वार्थमिमं लोकं विमुक्तो मुक्तबन्धनः । अविज्ञातगतिर्जज्ञात् सर्वैर्धीर उदाहृतः ॥ धीरोद्धृं वह्नचोवृते ॥

धीरत्वम् । न । धीरतायाम् ॥ यथा । प्रागल्भ्यौदार्यमाधुर्यशोभा धीरत्वकान्तयः । दीप्तिश्चायत्नजाभावहावहेलाः स्त्रियोऽङ्गजाः ॥ इति हेमचन्द्रः ॥

धीरपत्नी । स्त्री । धरणीकन्दे ॥

धीरस्कन्धः । पुं । महिषे ॥ इति हेमचन्द्रः ॥

धीराः । पुं । ज्ञानदेगुरौ ॥ धियंराति ददाति । रा० । क्विप्चेतिक्विप् ॥

धीरा । स्त्री । नायिकाप्रभेदे ॥ पण्डितायाम् ॥ काकोल्याम् ॥ महाज्योतिष्मत्याम् ॥ स्थिरायांचित्तोन्नतौ ॥ श्रवणतुल्यायाम् ॥

धीराधीरा । स्त्री । नायिकाप्रभेदे ॥

धीलटिः । स्त्री । दुहितायाम् ॥ इति हारावली ॥

धावा । पुं । कर्मकरे । धीवरे ॥ ध्यायति । ध्यैचिन्तायाम् । ध्याप्योः सम्प्रसारणञ्चेतिक्वनिप् ॥

धीवरः । पुं । दासजातौ । कैवर्त्ते ॥ दधातिमत्स्यान् । डुधाञ्० । छित्वरच्छत्वरधीवरेत्यादिनाष्वरजन्तोनिनिपातितः ॥

धीवरी । स्त्री । धीवरभार्यायाम् ॥ धीवरशब्दात्स्त्रियांषित्त्वाम्ङीष् । दधातेःक्वनिपि वनोरश्चेति ङीब्रौवा ॥

धीव्याप्यता । स्त्री । वृत्तिव्याप्यत्वे ॥

धीशक्तिः । स्त्री । निष्क्रमे । बुद्धिसामर्थ्ये । शुश्रूषाद्यष्टविधधीगुणेषु ॥ धियःशक्तिः ॥

धीसखः । पुं । अमात्ये । मन्त्रिणि ॥ इ

तिहेमचन्द्रः ॥ धियःसखा । टच् ॥

धीसचिवः । पुं । धीसखे ॥ इत्यमरः ॥ धिया धियां वा सचिवः सहायः । धी प्रधानःसचिवोवा ॥

धुः । स्त्री । कम्पने ॥ इत्येकाक्षरकोषः ॥

धुतः । त्रि । त्यक्ते ॥ कम्पिते । विधूते ॥ धुयतेस्म । धुञ् कम्पने । क्तः ॥

धुनानः । त्रि । कम्पयति ॥ धुनोतेः कर्त्तरि शानच् ॥

धुनिः । स्त्री । नदीमात्रे ॥

धुनी । स्त्री । नदीमात्रे ॥ धुनोति चेतसादीन् । धुञ्० । क्विप् । पृषोदरादित्वात् नक् । नान्तत्वात् ङीप् ॥

धुनीनाथः । पुं । समुद्रे ॥ धुनीनां सरितांनाथः ॥

धुन्धुमारः । पुं । इन्द्रगोपे ॥ गृहधूमे ॥ पद्मालिके ॥ कुवलयाश्वे । राज्ञो वृहदश्वसुते ॥

धुन्धुरी । स्त्री । वाद्यप्रभेदे ॥

धूः । स्त्री । भारे ॥ चिन्तायाम् ॥ रथाद्यग्रभागे । यानमुखे ॥ धूर्वति । धुर्वीहिंसायाम् । भ्राजभासेति क्विप् । र्वोरितिदीर्घः ॥

धुरन्धरः । पुं । धवद्रुमे ॥ त्रि । धुर्वहे । धुर्ये । भारवोढरिवृषादौ ॥ धुरंधारयति । संज्ञायां भृतॄवृजिधारीति खच् । इति स्वामी ॥ वाचंयमपुरन्दरौ चेति चकारस्यानुक्तसमुच्चयार्थत्वात्सः इति नव्याः । खचि ह्रस्वः । अरुर्द्विषदिति मुम् ॥

धुरा । स्त्री । भारे ॥

धुरीणः । त्रि । श्रेष्ठे ॥ धुर्ये । धौरेये ॥ धुरंवहति । खः सर्वधुरादित्यत्र ख इतियोगविभागात्खः ॥

धुरीयः । पुं । अनडुहि ॥ इतिराजनि० ॥

धुर्य्यः । त्रि । श्रेष्ठे ॥ भारवोढरि । धौरेये ॥ कार्यनिर्वाहके ॥ धुरं वहति । धुरोयड्ढकावितियत् ॥ पुं । अनडुहि ॥ ऋषभौषधौ ॥

धुर्वहः । त्रि । भारवोढरिवृषे । धुर्ये ॥ वहतीति वहः । अच् । धुरोवहः ॥

धुवका । स्त्री । ध्रुवकायाम् । धुया इति गौड भाषा ॥ धूञ्० । कः । ततोऽज्ञातादौकः । क्षिपकादित्वान्नेत्वम् ॥

धुवनः । पुं । वह्नौ ॥ धुनोति धुनाति वा । धुञ्० धूञ्० वा । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

धुवित्रम् । न । वह्नेः सन्धुक्षणाय मृगत्वचारचिते याज्ञिकानां व्यजने ॥ धुवित्रंतालवृन्तं स्यादुत्क्षेपव्यजनञ्चतत् ॥ धूयतेऽनेन । धूविधूनने । अर्त्तिलूधूसू इति इत्रः । कुटादित्वेन ङित्वाद्गुणाभावादुवङ् ॥

धुस्तुरः । पुं । धुस्तूरे ॥

धुस्तूरः । पुं । धतूरा इतिप्रसिद्धे क्षुपे । उन्मत्ते । कांचनपुष्पे । धूस्तूरे ॥

धूः । स्त्री । धूनने ॥ इति मेदिनी ॥

धूकः । पुं । पवने । वायौ ॥ धुनोतिधुनातिवा । धुञ्० धूञ् वा । अजियुधूनीभ्योदीर्घश्चेतिकन् ॥

धूतः । त्रि । त्यक्ते ॥ कम्पिते ॥ भर्त्सिते ॥ तर्किते ॥ धूयतेस्म । धूविधूनने । धूञ्० वा । क्तः ॥

धूनकः । पुं । यक्षधूपे । राले । वह्निवल्लभे ॥ इति त्रिकाण्डशेषः ॥

धूननम् । न । कम्पने । कंपाना इति-भाषा ॥ धूञोणयन्ताल्ल्युट् । धूञ् प्रीञोर्नुग्वक्तव्य इतिनुक् ॥

धूपः । पुं । गुग्गुल्वादि गन्धद्रव्यविशेषोत्थधूमे तद्वर्त्तिकायाञ्च । गन्धपिशाचिकायाम् ॥ सचषडङ्गदशाङ्गादिभेदभिन्नो ऽनेकप्रकारः ॥ विषघ्नधूपो यथा । सक्तुः सर्ज्जरसोपेतः सर्षपाएलवालुकैः । सुवर्णातस्करतरोः कुसुमैरर्जुनस्यतु ॥ धूपोवासगृहे हन्ति विषंस्थावरजङ्गमम् । नतत्रकीटा नविषं न दर्दुरसरीसृपाः ॥ नकृत्या कर्मणाम्लानधूपोयं यत्रदह्यते ॥ * ॥ सर्पनिर्मोचनधूपोयथा । कार्पासास्थिभुजङ्गस्य तथा निर्मोचनं भवेत् । सर्पनिर्मोचनोधूपः प्रशस्तः सततं गृहे ॥ इति मत्० पु० ॥ अष्टाङ्ग धूपोयथा । गुग्गुल्वगुरुकं तेजपत्रं मलयसम्भवम् । कर्पूरं वालकं कुष्ठं नूतनं कुङ्कुमंतथा ॥ अष्टाङ्गः कथितोधूपो गोविन्दप्रीतिदोमत इति ॥ * ॥ पञ्चाङ्गोयथा । चन्दनं-कुङ्कुमं नूतनकर्पूरोगुग्गुलो ऽगुरु । धूपोयं घृतसंयुक्तः पञ्चाङ्गः समुदाहृत इति ॥ * ॥ अदत्त्वागन्धमाल्यानि योमेधूपं प्रयच्छति । कुणपोजायते भूमे यातुधानो न संशयइति भूमिं प्रतिवराहवाक्यम् ॥ * ॥ रोगनाशकोधूपोयथा । कूर्ममत्स्याखुमहिषगोमृगालाश्ववानराः । विडालबर्हि-काकाश्च वराहोलूककुक्कुटाः ॥ छंस एषाञ्च विण्मूत्रं मांसंवारोमशोणितम् । धूपं दद्याज्ज्वरार्त्ताय उन्मत्तेभ्यश्च शान्तये ॥ एतान्यौषधजातानि धूपितानि महेश्वर । निघ्नन्तिरोगजातानि वृत्रमिन्द्राशनिर्यथेतिगारुडे १९९ अध्यायः ॥

धूपनः । पुं । शालवृक्षस्य निर्यासे । शालवेष्टे । सर्जरसे । राल इतिभा ॥ न । धूपे ॥

धूपवृक्षः । पुं । सरलद्रुमे ॥

धूपागुरु । न । दाहागुरुणि ॥

धूपाङ्गः । पुं । श्रीवेष्टे । सरलरसे ॥

धूपायितः । चि । अध्वादिनाश्रान्ते । सन्तप्ते ॥ दत्तधूपगृहादौ ॥ धूप्यतेस्म । धूपसन्तापे । आयादय इतिवाआयः । क्तः । अकर्मकत्वात् कर्त्तरि-वा क्तः ॥

धूपार्हम् । न । कृष्णागुरुणि ॥ चि । धूपयोग्ये ॥

धूपितः । चि । दत्तधूपे ॥ सन्तापिते । अध्वादिनाश्रान्ते ॥ धूप्यतेस्म । धूप० । क्तः । इट् । अकर्मकत्वात् कर्त्तरिवा क्तः ॥

धूमः । पुं । आर्द्रेन्धनप्रभवे । मेघाञ्जनयोर्जनके । अग्निध्वजे । भस्मे । धूंवाँ इतिभाषा ॥ सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः । जलधरपदवीमवाप्य धूमोज्वलनविनाशमनु प्रयाति नाशमिति श्रीकृष्णमिश्रः ॥ धुनीते । धूञ० । इषियुधीतिमक् ॥

धूमकेतनः । पुं । केतुग्रहे ॥ हुताशे ॥

धूमकेतुः । पुं । उत्पातविशेषे ॥ वह्नौ ॥ ग्रहप्रभेदे ॥ धूमः केतुश्चिह्नमस्य ॥

धूमगन्धिकम् । न । रोहिषतृणे ॥

धूमजाङ्गजम् । न । वज्रक्षारे ॥

धूमध्वजः । पुं । अग्नौ ॥

धूमप्रभा । स्त्री । धूमान्धकारनरके ॥

धूममहिषी । स्त्री । कुज्झटिकायाम् ॥

धूमयोनिः । पुं । मेघे ॥ धूमो योनिरस्य । उक्तञ्चाभ्राणां धूमकार्यत्वं पौराणिकैः । यत्तधूमोद्भवंत्वभ्रं द्विजानाञ्चहितंसदा । दावाग्निधूमसम्भूतमभ्रंवनहितं स्मृतम् ॥ मृतधूमोद्भवंत्वभ्रमशुभायभविष्यति । अभिचाराग्नि धूमोत्थंभूतनाशायवैद्विजाः ॥ इति ॥ मुस्तके ॥

धूमलः । पुं । कृष्णलोहितवर्णे ॥ त्रि । तद्विशिष्टे ॥ धूमंलाति । ला० । कः ॥

धूमसी । स्त्री । धुवाँस इतिप्रसिद्धे माषाणांचूर्णे ॥ यथा । माषाणां दालय स्तोये स्थापिता स्त्यक्तकञ्चुकाः । आतपेशोषितायन्त्रे पिष्टा सा धूमसीस्मृता ॥ इतिभावप्रकाशः ॥

धूमाग्निः । पुं । अर्कनिष्कासनोपयोगिन्यग्निविशेषे ॥ विज्वालो यो धूमशिखो धूमाग्निः स उदाहृतः ॥

धूमाभः । चि । धूम्रवर्णे ॥

धूमावती । स्त्री । दशमहाविद्यान्तर्गतविद्याविशेषे ॥ तीर्थविशेषे ॥

धूमिका । स्त्री । कुज्झटिकायाम् ॥

धूमितः । चि । सञ्जातधूमे ॥

धूमोत्थम् । न । वज्रक्षारे ॥

धूमोर्णा । स्त्री । यमपत्न्याम् ॥ इति त्रिकाण्डशेषः ॥

धूमोर्णापतिः । पुं । यमे ॥ इतिहारा

वस्त्री ॥

धूम्या । स्त्री । धूमसमूहे ॥ धूमानां समूहः । पाशादिभ्यो यः ॥

धूम्याटः । पुं । पक्षिविशेषे । कलिङ्गे । भृङ्गे । फिङ्गा इतिगौडभाषा ॥ धूम्या इवअटति । अट० । अच् ॥

धूम्रः । पुं । कृष्णरक्तमिश्रितवर्णे । धूमले । खरलोमनिभेवर्णे ॥ तुरुष्के । सिल्हके ॥ त्रि । तद्वति ॥ धूमं राति । रा० । कः । पृषोदरादिः ॥

धूम्रकः । पुं । उष्ट्रे ॥

धूम्रकेशः । पुं । असुरविशेषे

धूम्रधीः । त्रि । मलिनबुद्धौ ॥ धूम्राधीर्यस्य ॥

धूम्रपत्रा । स्त्री । क्षुपविशेषे । धूम्राह्वायाम् । स्वशक्षुवायाम् ॥

धूम्रमूलिका । स्त्री । शूलीतृणे ॥

धूम्रलोचनः । पुं । शुम्भासुरस्यसेनापतौ ॥ कपोते ॥

धूम्रवर्णः । पुं । तुरुष्के । सिल्हके ॥ श्यामरक्तमिश्रितवर्णे । धूमले ॥ त्रि । तद्वर्णविशिष्टे ॥

धूम्रवर्णा । स्त्री । वह्निजिह्वाविशेषे ॥ धूम्रोवर्णोऽस्याः ॥

धूम्रा । स्त्री । शशाण्डुल्याम् ॥

धूम्रिका । स्त्री । शिंशपावृक्षे ॥

धूर्ज्जटिः । पुं । शिवे । गङ्गाधरे ॥ धूर्भारभूता जटिर्यस्य ॥ यद्वा । जटति । जट० । सर्वधातुभ्यइतीन् । धूर्गङ्गा जटिष्वस्येति ॥ धुरस्त्रैलोक्यचिन्तायाः जटिः सङ्घातोऽथवा ॥

धूर्त्तः । पुं । धूस्तूरे । उन्मत्ते ॥ चोरके ॥ न । खण्डलवणे ॥ लौहकिट्टे ॥ त्रि । विटे ॥ वञ्चके । मायिनि ॥ यथा । स्वर्णकारः स्वर्णवणिक् कायस्थ शूद्रजेश्वर । नरेषुमध्येते धूर्त्ताः कृपाहीना महीतले ॥ हृदयंक्षुरधाराभं तेषांच नास्तिसादरम् । शतेषुसज्जनःकोपिकायस्थो नेतरौचतौ ॥ सुबुद्धिः शिवयुक्तिश्च शास्त्रबोधर्ममानसः । नविश्वसेत् तेषुतात स्वात्मकल्याणहेतवे ॥ इतिब्रह्मवैवर्त्तेश्रीकृष्णजन्म ८५ ऽध्यायः ॥ धूर्त्तकृति ॥ धूर्वेति । धुर्वी० । हसिमृग्रिण्वितितन् । राल्लोपः । छ्वोःशूडितिदीर्घः ॥ धूर्व्यतेस्म । कर्मणिक्तो वा ॥ धूर्वति । मतिबुद्धिपूजार्थेभ्यश्चेतिचकारात्कर्त्तरि वाक्तः ॥ यद्वा । धूर्वनम् । भावेक्तः ॥ तदस्यास्तीत्यर्शआद्यच्वा ॥

धूर्त्तकः । पुं । धूर्त्ते ॥ शृगाले ॥

धूर्त्तकृत् । पुं । धूस्तूरे ॥

धूर्त्तजन्तुः । पुं । मानुषे ॥ इतिशब्दचन्द्रिका ॥

धूर्त्तमानुषा । स्त्री । रास्नायाम् ॥ इ० शब्द ॥

धूर्व्वहः । त्रि । धुरन्धरे । भारवोढरि ॥

धूर्वी । स्त्री । रथाग्रभागे । यानमुखे ॥

धूलकम् । न । विषे ॥ इतिशब्दचन्द्रिका ॥

धूलिः । स्त्री । रजसि । रेणौ । पांशौ । धूल इतिभाषा ॥ धुवति धूयते वा । धूञ्विधूनने । वाहुलकात्लिः ॥ धवनम् । धूञ्० । सं० क्विप् । धुवा लीयते । इकक्रुष्यादिभ्यः ॥ संख्याविशेषे ॥

धूलिका । स्त्री । कुज्झटिकायाम् ॥

धूलिकेदारः । पुं । चेये । वप्रे ॥ इतित्रिकाण्डशेषः ॥

धूलिगुच्छः । पुं । } फल्गुचूर्णे ।
धूलिगुच्छकः । पुं । } पटवासके ॥
इतित्रिकाण्डशेषः ॥

धूलिध्वजः । पुं । पवने ॥ इतित्रिकाण्डशेषः ॥

धूलिपुष्पिका । स्त्री । केतक्याम् ॥

धूली । स्त्री । धूलौ । पांशौ ॥ ङीप् ॥

धूलीकदम्बः । पुं । तिनिशे ॥ नीपे ॥ वरुणपादपे ॥

धूलीपटलः । पुं । उड्डीयमानधूलीसमूहे ॥

धूसरः । पुं । गर्दभे । खरे ॥ उष्ट्रे ॥ कपोते ॥ तैलकारे ॥ ईषत्पाण्डुरवर्णे । शुक्लपीतमिश्रितवर्णे ॥ कृष्णश्वेतवर्णे ॥ त्रि । तद्वर्णविशिष्टे ॥ धुनाति । धूञ्० । कृधूमदिभ्यःक्विदितिसरः ॥

धूसरच्छदा । स्त्री । श्वेतवुह्नायाम् ॥

धूसरपत्रिका । स्त्री । हस्तिशुण्डीक्षुपे ॥

धूसरा । स्त्री । पाण्डुफलीवृक्षे ॥

धूसरी । स्त्री । किन्नरीभेदे ॥

धूस्तुरः । पुं । धूस्तूरे । कितवे । धतूरा इतिभाषा ॥ धूसयति । धूसकान्तिकरणे । क्विप् । ततोर्त्ति । तुरत्वरणे । इगुपधज्ञाप्रीकिरः कः । धूश्चासौतुरश्च ॥

धूस्तूरः । पुं । उन्मत्तवृक्षे । धत्तूरे । काञ्चनाह्वये ॥ धूसयति । धूस० । क्विप् । तूर्यति । तुरीगतित्वरणहिंसयोः । इगुपधत्वात्कः । धूश्चासौतूरश्च ॥ धूस्तूर धूर्त्त तवाग्रेन्दुनिवासयोग्यस्थाने पिशाचपतिना विनिवेशितोसि । किंकैरवाणि विकसन्ति तमः प्रयाति किं वार्द्धि रुल्लसति किं दृषदः स्रवन्ति ॥

धृतः । त्रि । गृहीते । कृतधारणे । धरा इतिभाषा ॥ अवलम्बिते । धृञ्० । क्तः ॥

धृतकः । त्रि । भरण्यायत्तजीवने ॥

धृतराष्ट्रः । पुं । सुराज्ञि ॥ नागभेदे ॥ दुर्योधनस्य पितरि ॥ पक्षिविशेषे ॥ धृतःराष्ट्रोयेन ॥

धृतराष्ट्री । स्त्री । हंसपत्न्याम् ॥

धृतात्मा । पुं । नारायणे ॥ एकरूपेण ज न्मादिषड्भावविकाररहिततयाधृत: आत्मायेन । यद्वा । धृङ् अवस्थाने । गत्यर्थाकर्मकेत्यादिना कर्त्तरिक्तः । धृतः एकरूपेणावस्थितः आत्मा स्व रूपमस्येति ॥ त्रि । परमात्मनिनि- श्चितचित्ते ॥ यथा । किं दुःसहन्तु साधूनां विदुषांकिमपेक्षितम् । कि मकार्य्यं कदर्य्याणां दुस्त्यजं किं धृता त्मनामिति ॥

धृतिः । पुं । अध्वरे । इष्टौ ॥ स्त्री । तुष्टौ । सन्तोषे ॥ योगविशेषे ॥ तद्योगजातफ लंयथा । धृतियोगसमुत्पन्नः प्राज्ञःस न्तुष्टमानसः । वावदूकः सभायाञ्चसु शीलो विनयान्वित इति ॥ सुखे ॥ धा रणायाम् ॥ धैर्य्ये । अखिन्नताया- म् । अवसादेपिशरीरेन्द्रियसङ्घा- ते स्तम्भनशक्तौ ॥ अवसन्नानां देहे न्द्रियाणा मवष्टम्भहेतुभूतप्रयत्ने । देहेन्द्रियेषु अवसाद प्राप्तेषु तदुत्त म्भके प्रयत्नविशेषे । येनोत्तम्भितानि करणानि शरीरञ्च नावसीदन्ति ॥ साचकपिलपत्नी । यथा । धृतिः क पिलपत्नीच सर्वैः सर्वत्र पूजिता । स र्वलोकाश्चधैर्य्याश्चजगत्सुचयया वि नेतिदेवी भागवतम् ॥ चानस्य भा र्य्यायामपि ॥ चानस्य तिस्रोभार्य्यास्बु द्धिर्मेधाधृतिस्तथेतिदेवी भागवतम् ॥ उच्छृङ्खलप्रवृत्तिकारणेन चापल प्राप्तौ तन्निवर्त्तनशक्तौ ॥ * ॥ सत्त्वा दिगुणभेदाद्धृतिस्त्रिविधा । यथा । धृ त्यायया धारयते मनः प्राणेन्द्रियक्रि याः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ययातुधर्मका मार्थान् धृत्या धारयतेर्जुन । प्रसङ्गे नफलाकाङ्क्षी धृतिः सापार्थराज- सी ॥ ययास्वप्नं भयंशोकं विषादं म दमेवच । नविमुञ्चति दुर्मेधा धृतिः सापार्थतामसीति ॥ मनस्थामपिवि पदि देहेन्द्रियसङ्घातस्यानवसादे ॥ अष्टादशाक्षरायां वृत्तौ ॥ अष्टादशा ङ्के ॥ धरणम् । धृञ्० । क्तिन् ॥ पाञ्च भौतिके मनसिधृत्यंशोभूमेर्गुणः ॥

धृतिमत् । न । सुपार्श्वाख्यविष्कम्भशैल मूले उद्याने ॥ त्रि । सुखदुःखयोरे करूपे ॥ धृति रस्यास्ति । मतुप् ॥

धृत्वा । पुं । धर्मे ॥ विष्णौ ॥ ध्रियन्तेस्मि न् भूतानि । धृङ् अवस्थाने । धा ति वा । धृञ्० । शीङ्क्रुशीत्यादिनाक्व निप् । तुक् ॥ अन्तरीक्षे ॥ विप्रे ॥ समुद्रे ॥ मेधाविनि ॥

धृत्वरी । स्त्री । भुवि ॥

धृषुः । त्रि । दक्षे ॥ प्रगल्भे ॥ पुं । सङ्घा ते ॥ धृष्णोति । ञिधृषा० । पृभि दि

ञधिगृधिधृषिभ्य इतिक्नुः ॥

धृष्टः । त्रि । वियाते । निर्लज्जे ॥ प्रगल्भे ॥ निर्दये ॥ नायकप्रभेदे ॥ अत्ताङ्गोनिर्भयोधृष्ट इत्यस्य लक्षणम् । भूयोनिः शङ्कः कृतदोषोपि भूयोनिवारितोपि भूयःप्रश्रयपरायणो धृष्ट इतिच ॥ धृष्णोतिस्म । ञिधृषा० । गत्यर्थेतिक्तः । धृषिशसीतीड भावः ॥

धृष्टद्युम्नः । पुं । द्रुपदपुत्रे । पाण्डवानां सेनापतौ ॥ धृष्टंद्युम्नंबलमस्य ॥

धृष्टा । स्त्री । असत्स्याम् । वन्धक्याम् ॥

धृष्णक् । त्रि । धृष्टे । वियाते ॥ धृष्णोति । धृषेश्चेतिनजिङ् ॥

धृष्णिः । पुं । किरणे ॥ धृष्णोति । ञिधृषा प्रागल्भ्ये । बाहुलकात् निप्रत्ययोगुणा भावश्च ॥

धृष्णुः । पुं । कश्चिकायाम् ॥ त्रि । धृष्टे ॥ धृष्णोति । ञिधृषा० । त्रसिगृधि धृषि क्षिपेःक्नुः ॥

धेनः । पुं । समुद्रे ॥ नदे ॥ धयन्तियम् । धेट् पाने । धेटइच्चेतिनन् धातोरिदादेशः ॥

धेना । स्त्री । नद्याम् ॥ भारतीप्रभेदे ॥

धेनिका । स्त्री । } धन्याके ॥
धेनी । स्त्री । }

धेनुः । स्त्री । गोमात्रे ॥ गवां जातीस्तु वक्ष्यामिशृणुष्वैकमना द्विज । प्रथमा गौरकपिला द्वितीया गौरपिङ्गला । तृतीया रक्तकपिला चतुर्थीनीलपिङ्गला ॥ पञ्चमी शुक्लपिङ्गाक्षी षष्ठीतु शुक्लपिङ्गला । सप्तमी चित्रपिङ्गाक्षी अष्टमी बभ्रुरोहिणी ॥ नवमीश्वेतपिङ्गाक्षी दशमीश्वेतपिङ्गला । तादृशास्त्वप्यनड्वाहः कपिलास्तु प्रकीर्त्तिता इति वृहद्धर्मपुराणे उत्तरखण्डे १५ अध्यायः ॥ नवप्रसूतायां माहेय्याम् । नवसूतिकायाम् ॥ धयतिसुताम् । धीयते वा । धेट्० । धेटइच्चेतिनुः ॥ दानीया दशधेनवो यथा । यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः । तासां स्वरूपं वक्ष्यामिनामानिच धनाधिप ॥ प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथापिवा । तिलधेनुस्तृतीयाच चतुर्थीजलसंज्ञिका ॥ क्षीरधेनुश्चविख्याता मधुधेनुस्तथापिवा । सप्तमीशर्कराधेनुर्दधिधेनुस्तथाष्टमी ॥ रसधेनुश्चनवमी दशमी स्यात्स्वरूपतः ॥ कुम्भाःस्युर्द्रवधेनूनामितरासान्तु राशयः ॥ सुवर्णधेनुमप्यत्र केचिदिच्छन्तिमानवाः ॥

धेनुकः । पुं । असुरविशेषे ॥ धेनुरिव । इवेप्रतिकृता वितिकन् ॥ रतिबन्धविशेषे । तल्लक्षणंयथा । न्यस्त

णयुगला निजेपदे योषिदेति कटि
स्थवल्लभा। अग्रतो यदि शनै रधो-
मुखी धेनुकं वृषवदुन्नतेप्रिये ॥ अ
परञ्च। सुप्तांस्त्रियं समालिङ्ग्य स्व
यं सुप्तोरमेत् पुनः। लघुलिङ्गं चा
लयेद्योवन्धोयं धेनुकः स्मृतः॥ इति
रतिमञ्जरी ॥

धेनुकसूदनः। पुं। श्रीकृष्णे ॥धेनुकं
सूदयति। सूद०। ल्युः॥

धेनुका। स्त्री। करिण्याम्। हस्तिन्या
म्॥ धेनौ। गवि॥ धेनुरिव। इवे-
तिकन्। धेनुरेव। स्वार्थे कन्वा॥

धेनुकारिः। पुं। श्रीकृष्णे ॥ धेनुकस्य-
अरिः॥

धेनुकासुरसूदनः। पुं। श्रीकृष्णे॥

धेनुदुग्धम्। न। गोक्षीरे॥ चिर्भटे॥

धेनुदुग्धकरः। पुं। गर्ज्जरे॥

धेनुष्या। स्त्री। बन्धकेस्थितायां सौर
भेय्याम्॥ संज्ञायां धेनुष्येति धेनुश
ब्दस्य षुगागमोयत् प्रत्ययश्च स्वार्थे
निपात्यते संज्ञायाम्। ऋणप्रत्य
र्पणाय याधेनुर्दोहनार्थं मुत्तमर्णा
यदीयते तस्याःसंज्ञेयम्॥

धेयः। त्रि। विधेये। प्रयोज्ये॥

धैनुकम्। न। स्त्रीणां करणे॥ धेनूनां
संहतौ॥ अचित्तहस्तिधेनोष्ठगिति-
धेनुशब्दात् समूहार्थेठक्। इसुसुक्ता

न्तात्कः॥

धैर्य्यम्। न। धृतौ। धीरतायाम्॥ स्थि
रा चित्तोन्नति र्यातु तद्धैर्यमिति सं
ज्ञितमितिभूपालकोषः॥ अप्रमादे
। अव्याकुलत्वे॥ विघ्नाद्युपस्थितावपि
पि प्रारब्धापरित्यागहेतावन्तःकर-
णवृत्तिविशेषे॥ निर्विकारचित्तत्वे
॥ मनसोनिर्विकारत्वं धैर्यं सतस्वपि
हेतुषु। इतिरसिकाः॥ धीरस्य क
र्मभावोवा। ष्यञ्॥

धैवतः। पुं। तन्त्रीकण्ठोत्थितस्वर-
विशेषे॥ सप्तस्वरान्तर्गतषष्ठस्वरे-
॥ अश्वस्तुधैवतं रौति॥ गत्वा नाभे
रधोभागं वस्तिं प्राप्योर्द्ध्वगःपुनः।धा
वन्निव च यो याति कण्ठदेशं सधैव
तः॥ धीमतामयंधैवतः। पृ०॥

धैवत्यम्। न। धीव्रोभावे॥ ष्यञ्
। दाण्डिनायनेतिनिपातनात्तकारा-
देशः॥

धोडः। पुं। डुण्डुभे। राजिले। धो-
डासाँप इतिगौडभाषा॥

धोरणम्। न। हस्त्यश्वरथदोलादौ वा
हनमात्रे॥ धोरति अनेन वा। धो
रयति वा। धोरुगतिचातुर्ये। ल्युः
ल्युट्वा॥ अश्वाद्यप्रथमगतौ। धो-
रिते॥

धोरणिः। स्त्री। परम्परायाम्॥

धोरितम् । न । अश्वप्रथमगतौ । धोरणे । धौरितके ॥ धोरितं गतिमात्रं यद्योजितं वल्गितं पुरः । अग्रकायःसमुल्लासाकुञ्चिताख्यं नतत्रिकम् ॥ धोरणम् । धोर्क्क० । भावे क्तः ॥

धोरितकम् । न । अश्वगतिभेदे । धौरितके ॥ स्वार्थे कन् ॥

धौतः । त्रि । मार्जिते । मृष्टे । निर्णिक्ते । प्रक्षालिते । धोया इतिभाषा ॥ धाव्यतेस्म । धाव्० । क्तः ॥ उत्तेजिते ॥ शुभ्रे ॥ ईषद्धौतं स्त्रियाधौतं यद्धौतं रजकेनच । अधौतं तद्विजानीयादितिकर्मलोचनः ॥ न । रूप्ये ॥

धौतकटः । पुं । स्योने । प्रसेवके । सूत्रनिर्मितभाण्डे । धोकडा इतिगौडभाषा ॥

धौतकोषजम् । न । पत्रोर्णे ॥

धौतकौशेयम् । न । पत्रोर्णे । मुकुटा इतिभाषाप्रसिद्धे वस्त्रे ॥ धौतञ्चतत् कौशेयञ्च ॥

धौतशिलम् । न । स्फाटिके । शालिपिष्टे ॥

धौम्यः । पुं । देवलस्यर्षेःकनिष्ठभ्रातरि । पाण्डवानांपुरोहिते ॥

धौम्रः । पुं । धूम्रवर्णे ॥ न । धूम्रत्वे ॥ वास्तुस्थानभेदे ॥

धौरः । पुं । धवष्टक्षे ॥ इ०भा०प्र० ॥

धौरितम् । न । धौरितके ॥ धोरणम् । धोर्क्क० । भावे क्तः । इट् । प्रज्ञादित्वादण् ॥

धौरितकम् । न । तुरङ्गगतिचातुर्य्ये ॥ धौरितमेव । स्वार्थे कन् ॥

धौरेयः । त्रि । भारवाहे । धुर्य्यवृषे ॥ धुरंवहति । धुरोयड्ढकाविति ढक् ॥ पुं । अनडुहि ॥

धौर्य्यम् । न । धोरिते । अश्वस्यप्रथमगतौ ॥

ध्माकारः । पुं । लोहकारके ॥ इतिहलायुधः ॥

ध्मातः । त्रि । सन्धुक्षिते । धमाया इति भाषा ॥ श्वासभूयिष्ठतयादीर्घइवलक्ष्यतेयोवर्णःसध्मातइष्यते ॥

ध्मापनम् । न । इन्धने ॥

ध्मापितः । त्रि । इन्धिते ॥

ध्यातः । त्रि । ध्यानविषयीकृते । चिन्तिते ॥ ध्यैचिन्तायाम् । क्तः । नध्याख्येति न तस्य नत्वम् ॥

ध्यानम् । न । चिन्तने ॥ अद्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहे ॥ शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितःप्रत्ययसन्तान एकाग्रतेतियमाहुरितिभाष्यम् ॥ ध्येयप्रत्ययैकतानतायाम् ॥ एकत्रधृतस्यचित्तस्य भगव

दाकारवृत्तिप्रवाहोत्तरोत्तरा ऽ न्याकारप्रत्ययाव्यवहिते निदिध्यासनसंज्ञे ॥ चित्तस्यात्माकारप्रत्ययावृत्तौ ॥ ब्रह्मैवास्मीतिसद्वृत्त्यानिरालम्बतयास्थितिः । ध्यानशब्देनविख्यातापरमानन्ददायिनी ॥ परमात्मचिन्तने ॥ धारणानिबद्धस्य चित्तस्य विनेत्रपञ्चवक्त्राद्याकारविषयायां चिन्तायाम् ॥ चिन्तातद्विषयाध्यानमित्युक्तेः॥ तत्रप्रत्ययैकतानताध्यानम् ॥ तत्रतस्मिन् देशे यत्र चित्तंधृतं तत्रप्रत्ययस्यज्ञानस्ययैकतानता विसदृशपरिणामपरिहारेण यदेवधारणायामवलम्बनीकृतं तदालम्बनतयैवनिरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥ ध्यानपदार्थमुक्तंतन्त्रे। यथा । ध्यै चिन्तायांस्मृतोधातु श्चिन्तातत्त्वेन निश्चला । एतद्ध्यानमिहप्रोक्तंसगुणं निर्गुणंद्विधा॥ सगुणंमन्त्रभेदेननिर्गुणंकेवलंमतमिति ॥ अपिच । ध्यानंतुद्विविधं प्रोक्तंसरूपारूपभेदतः। अरूपंतवयद्ध्यानमवाङ्मनसगोचरम्॥ अव्यक्तंसर्वतोव्याप्तमिदमित्थंविवर्जितम् । अगम्यंयोगिभिर्गम्यंकृच्छ्रैर्बहुसमाधिभिः॥ मनसोधारणार्थाय शीघ्रंस्वाभीष्टसिद्धये। सूक्ष्मध्यानप्रबोधायस्थूलध्यानंवदामिते॥ अरूपायाः

कालिकायाःकालमातुर्महाद्युतेः । गुणक्रियानुसारेण क्रियतेरूपकल्पने तिश्रीमहानिर्वाणतन्त्रेपञ्चमोल्लासः ॥ ध्यायते यत् । ध्यै० । बाहुलकात्कर्मणिल्युट् ॥

ध्याननिष्ठः । त्रि । ध्यायिनि ॥

ध्यानयोगः । पुं । ध्यानरूपयोगे ॥ यथा । विविक्तसेवीलघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरोनित्यं वैराग्यंसमुपाश्रितः इतिश्रीभगवद्गीता ॥ ध्यानयोगश्चपरशक्तिसाक्षात्काहेतुःश्वेताश्वतरशाखायामुक्तः । ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥

ध्यामम् । न । दमनकवृक्षे ॥ गन्धतृणे ॥ त्रि । श्यामले । दग्धसमानवर्णे ॥ ध्यायते पशुभिः । ध्यै० । बाहुलकान्मक् ॥

ध्यामकम् । न । रोहिषतृणे ॥

ध्यामा । पुं । परिणामे ॥ न । चिन्तायाम् ॥ तेजसि ॥ ध्यायति । ध्यै० । नामन्सीमन्निति साधुः ॥

ध्यायी । पुं । योगिनि ॥

ध्येयः । त्रि । उपास्ये । चिन्तनीये । ध्यातव्ये ॥ ध्येयं सदापरिभवघ्न मभीष्टदोहं तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपाल

भवाब्धिपोतं वन्देमहापुरुष ते चरणारविन्दम् ॥

ध्राजिः । स्त्री । वातसंहतौ ॥

ध्राडिः । पुं । पुष्पचये ॥

ध्रुवः । पुं । शङ्कौ ॥ हरे ॥ विष्णौ ॥ वटे ॥ उत्तानपादजे । प्रसिद्धेनक्षत्रविशेषे ॥ वसुभेदे ॥ योगविशेषे ॥ तज्जातस्य फलम् । नरीनर्त्ति वाणी सदा वक्त्रपद्मे चरीकर्त्ति काव्यं वरीभर्त्ति वस्तून् । ध्रुवाख्ये प्रसूतिर्धुवा तस्य कीर्त्ति र्दिगन्ते नितान्तं भवे चारुमूर्त्तिरिति ॥ * ॥ नासाग्रे ॥ स्थाणौ ॥ ध्रुवके ॥ शरारिपक्षिणि ॥ न । निश्चिते ॥ तर्के ॥ खे । आकाशे ॥ षण्मात्रस्यैकादशभेदे (।ऽ।।) ॥ त्रि । सन्तते ॥ शाश्वते ॥ अपरिणामिनित्ये । स्थिरे ॥ निश्चिते ॥ यो ध्रुवाणि परित्यज्य अध्रुवाणिचसेवते । ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेवच ॥ पुं । ऊर्द्ध्वमुखग्रहे ॥ न । उत्तराचयरोहिणीनक्षत्रेषु ॥ ध्रुवति स्थिरो भवति । ध्रुगतिस्थैर्ययोः । अच् । कु० ङित्त्वम् । उवङ् ॥ ध्रुवति । ध्रुवस्थैर्ये । इगुपधेतिकोवा ॥ गाने ॥ यदाह । ध्रुवाहिनाम्यस्तुप्रथमेप्राणादिति ॥ पुं । आवर्त्ते । आवर्त्तसाम्या द्रोमसंस्थाने ॥ तदुक्तम् । आवर्त्तसाम्या दावर्त्ती रोमसंस्थानं मङ्गिनामिति ॥ तेचदशयथा । द्वा वुरस्यौ शिरस्यौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एकोभाले ह्यपानेच दशावर्त्ताध्रुवाः स्मृताइति ॥



ध्रुवकः । पुं । स्थाणौ ॥ गीताङ्गविशेषे ॥ सचोक्तः सङ्गीतदामोदरे । उत्तमः षट्पदःप्रोक्तोमध्यमः पञ्चमःस्मृतः । कनिष्ठश्च चतुर्भिःस्याद्ध्रुवकोयं मयोदितः ॥ उक्तंद्विखण्डमुद्ग्राहे द्विखण्डं ध्रुवके मतम् । ततोद्विखण्डमाभोगेतालमानरसैःसह ॥ आभोगेकविनामस्यात्तथानायकनामच । उद्ग्राहं प्रथमं गीत्वाध्रुवंगायेत्ततः परम् ॥ ततोऽन्तराध्रुवस्तस्मादाभोगध्रुवकौततः । उद्ग्राहःप्रथमःपादः कथितःपूर्वसूरिभिः ॥ गीत्वापूर्वपदंन्यासोयत्र स ध्रुवको मतः । यत्रैव कविनामस्यात्सआभोगइतीरितः ॥ ध्रुवकादिषुसर्वेषुभवेदेवं विधःक्रमः । सतुषोडशविधोयथा । जयन्तःशेखरोत्साहौमधुरोनिर्मलस्तथा । कुन्तलःकमलश्चैव सानन्दश्चन्द्रशेखरः ॥ सुखदःकुमुदोजायीकन्दर्पो जयमङ्गलः । तिलकोललितश्चेतिध्रुवकाःषोडशस्मृताः ॥ एकादशाक्षरपदादेकैकाक्षरवर्द्धितैः । खण्डैर्ध्रुवाःषोडश-

स्युःषड्विंशच्चचरावधिः॥ द्विगुणैर क्षरैरेव पदमेकमिहेष्यते । उद्ग्रा हध्रुवकाभोगैरित्थंषट्पदनिर्णयः॥ षष्ठपादेतु ध्रुवकेपदेनैकेनतद्ध्रुवः । चतुष्पादेतुध्रुवकेपृथङ् नास्त्येवतद् ध्रुवइति॥

ध्रुवका । स्त्री । आस्थायाम्॥ध्रुवकाया म्॥ ध्रुवति । ध्रुव० । इगुपधलक्षेति कः। ततोऽज्ञातार्थेकः। क्षिपकादि त्वान् नेत्त्वम्॥

ध्रुवा । स्त्री । मूर्वायाम्॥ आख्याम्। श ालपर्ण्याम्॥ ध्रु वा इतिगौडभाषाप्रसिद्धे स्रुग्भेदे । वटपत्राकृतियज्ञपात्रे । जुह्वाम्॥ वैकङ्कतीध्रुवेत्याषलम्बः॥ध्रुवति । ध्रुव० । इगुपधेतिकः। ध्रु०। अचि कुटादित्वान्ङित्वम् । उवङ्॥ साध्वग्राम् ॥ गीतभेदे॥

ध्रौव्यम् । न । स्थैर्ये॥

ध्वंसः । पुं । विनाशे । जन्याभावत्वे॥ जगद्योनाशुपसंहारे॥

ध्वंसनम् । न । अधःपतने॥ गमने॥ ध्वंसे॥

ध्वंसितः । त्रि । खण्डिते॥

ध्वंसी । पुं । गिरिजपीलौ॥ त्रि । ध्वंस विशिष्टे॥

ध्वंसी । स्त्री । त्रसरेणुपरिमाणे॥ यथा । जालान्तरगते सूर्यकरे ध्वंसीविलो क्यते। त्रसरेणुस्तुविज्ञेयस्त्रिंशतापर माणुभिरितिवैद्यकपरिभाषा॥

ध्वजः। पुं । शौण्डिके॥ गर्वे । दर्पे॥ पुं । न । पताकायाम्॥ खट्वाङ्गे॥ मेढ्रे॥ चिह्ने॥ पूर्वदिशोगृहे॥ ध्वज ति । ध्वजगतौ । अन्तर्भावितण्यर्थो वा । पचाद्यच्॥ वहुपटविरचिता पताका ध्वजः॥ तत्रविशेषःश्रीमत्स्या निर्वाणतन्त्रेयथा । पताकाध्वजदाने न देवप्रीतिःशतं समाः । ध्वजदण्ड स्तुकर्त्तव्योद्वात्रिंशद्धस्तसम्मितः॥ सु दृढश्छिद्ररहितः सरलःशुभदर्शनः। वेष्टितोरक्तवस्त्रेणकोटौचक्रसमन्वि तः॥ पताकातत्रसंयोज्यातत्तद्वाहन चिह्निता । प्रशस्तमृत्सूक्ष्माग्रादि व्यवस्त्रविनिर्मिता । शोभमानाध्वजा ग्रेयापताकासाप्रकीर्त्तितेति॥ *॥ से नाचिह्नञ्चितीशानां दण्डोध्वजइति स्मृतः।सपताकोनिष्पताकः सत्रयो द्विविधोवुधैरित्यादिविशेषोयुक्तिक ल्पतरौमत्स्यादिपुराणेषुचद्रष्टव्यः॥

ध्वजद्रुमः। पुं । तालवृक्षे॥ माडवृक्षे॥

ध्वजप्रहरणः। पुं । वायौ॥

ध्वजभङ्गः। पुं । क्लीवत्वजनकेरोगवि शेषे॥

ध्वजवान्। त्रि। केतनयुक्ते। सपताके॥

ध्वजाहृतः । पुं । सङ्ग्रामे स्वामिसकाशाज्जिते दासविशेषे ॥ न । अविभाज्यधनविशेषे ॥ सङ्ग्रामादाहृतं यस्तु विजित्य द्विषताङ्कुलम् । स्वाम्यर्थं जीवितं त्यक्ता तद्ध्वजाहृतमुच्यते ॥

ध्वजी । पुं । पृथिवीधरे ॥ रथे ॥ ब्राह्मणे ॥ भुजङ्गमे ॥ तुरङ्गे ॥ मद्यविक्रयजीविनि । शौण्डिके ॥ मयूरे ॥

ध्वजिनी । स्त्री । सेनायाम् ॥ ध्वजाःसन्त्यस्याम् । अतइनिठनाविति इनिः ॥

ध्वजिनीपतिः । पुं । सेनापतौ ॥

ध्वजोत्थानम् । न । इन्द्रमहोत्सवे । भाद्रशुक्लद्वादश्यां विधीयमाने शक्रोत्सवे ॥

ध्वनः । पुं । शब्दे ॥ इतिद्विरूपकोषः ॥

ध्वनमोदी । पुं । षट्पदे । भ्रमरे ॥

ध्वनिः । पुं । शब्दमात्रे ॥ ध्वननम् । ध्वनशब्दे । खनिकष्यज्यसीति इः ॥ कोयं ध्वनिर्नाम योदूराद्दाकर्णयतो वर्णविवेक मप्रतिपद्यमानस्य कर्णपथमवतरति प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयतीति शारीरकभाष्यम् ॥ स्त्री । शङ्कुकर्णस्थानं स्थायां देव्याम् ॥

ध्वनिग्रहः । पुं । कर्णे । श्रोत्रे ॥ ध्वनिं गृह्णाति । ग्रह० । विभाषा ग्रहइति पचे ऽप् ॥

ध्वनितः । त्रि । शब्दिते । कृतस्वनमृदङ्गादौ । स्वनिते ॥ स्तनिते ॥ ध्वन्यतेस्म । ध्वन० । क्तः ॥

ध्वनिनाला । स्त्री । वीणायाम् ॥ वेणौ ॥ काहलायाम् । काहलीति हिमवत्प्रान्तप्रसिद्धे धत्तूरपुष्पसदृशे वाद्यविशेषे ॥

ध्वनिविकारः । पुं । काक्वाम् । शोकभयादिना शब्दविकृतौ ॥

ध्वस्तः । त्रि । स्रस्त । गलिते । च्युते ॥ ध्वस्यतेस्म । ध्वंसु अवस्रंसने । क्तः । गत्यर्थाकर्मकेति कर्त्तरि क्तोवा ॥

ध्वाङ्क्षः । पुं । काके ॥ मत्स्यात्खगे । बके ॥ तक्षाटे ॥ भिक्षुके । अर्थिनि ॥ गृहे ॥ ध्वाङ्क्षति । ध्वाक्षिघोरवासितेच । चात् काङ्क्षायाम् । पचाद्यच् ॥

ध्वाङ्क्षजङ्घा । स्त्री । काकजङ्घायाम् ॥

ध्वाङ्क्षजम्बूः । स्त्री । काकजम्ब्वाम् ॥

ध्वाङ्क्षतुण्डी । स्त्री । काकनासायाम् ॥

ध्वाङ्क्षदन्ती । स्त्री । } काकतुण्ड्याम् ॥
ध्वाङ्क्षनखी । स्त्री । }

ध्वाङ्क्षनाम्नी । स्त्री । काकोदुम्बरिकायाम् ॥

ध्वाङ्क्षनाशिनी । स्त्री । हवुषायाम् ॥

ध्वाङ्क्षनासा । स्त्री । } काकनासा-
ध्वाङ्क्षनासिका । स्त्री । }

याम् ॥

ध्वाङ्क्षपुष्टः । पुं । कोकिले ॥

ध्वाङ्क्षमाची । स्त्री । काकमाच्याम् ॥

ध्वाङ्क्षवल्ली । स्त्री । काकनासायाम् ॥

ध्वाङ्क्षादनी । स्त्री । काकतुण्ड्याम् ॥

ध्वाङ्क्षारातिः । पुं । पेचके । उलूके ॥

ध्वाङ्क्षी । स्त्री । कक्कोलिकायाम् ॥ रवेःसङ्क्रान्तिविशेषे ॥ लघाविन्दुवारेभवेद्ध्वाङ्क्षनाम्नी तदात्वस्तसौख्यं लभेदेववैश्यः ॥

ध्वाङ्क्षोली । स्त्री । काकोल्याम् ॥

ध्वान । पुं । शब्दे ॥ ध्वननम् । ध्वन० । भावेघञ् ॥

ध्वान्तम् । न । अन्धकारे ॥ ध्वन्यते । ध्वन० । क्तः । क्षुब्धस्वान्तेतिनिपातितम् ॥ नरकविशेषे ॥

ध्वान्तवित्तः । पुं । खद्योते ॥

ध्वान्तशत्रुः । पुं । ध्वान्तशात्रवे ॥

ध्वान्तशात्रवः । पुं । अर्के ॥ चन्द्रे ॥ वह्नौ ॥ श्योनाकवृक्षे ॥ ध्वान्तस्यशात्रवः ॥

ध्वान्तारातिः । पुं । सूर्ये ॥ चन्द्रे ॥ वह्नौ ॥

ध्वान्तोन्मेषः । पुं । खद्योते ॥ ध्वान्तेउन्मेषोऽस्य ॥

न

---

न । अ । निषेधे ॥ यथा । न मिथ्याभाषणं कुर्यान्न परानिष्टचिन्तनम् । परस्त्रीगमनञ्चैव ब्रह्मचारी विवर्जयेदिति ॥ उपमायाम् ॥ नह्यति । णहबन्धने । डप्रत्ययः ॥

नः । पुं । सुगते ॥ बन्धे ॥ दिरण्डे ॥ प्रस्तुते ॥ रत्ने ॥ नकारे ॥

नंशुकः । त्रि । नाशके ॥ नश्यत्यल्पेन वायुना । णश अदर्शने । पचिनशोर्णुकन् कनुमौचेतिसाधुः ॥

नंष्टा । त्रि । नाशाश्रये ॥

नःक्षुद्रः । पुं । क्षुद्रनासिके ॥

नकिम् । अ ।
नकिर् । अ । } वर्ज्जने ॥
नकीम् । अ ।

नकुटम् । न । नासिकायाम् ॥

नकुलः । पुं । चतुर्थे पाण्डुसुते ॥ बभ्रौ । सर्पहणि । सूचिवदने ॥ शिवे ॥ त्रि । निष्कुले ॥ नास्तिकुलमस्य । नभ्राणनपादितिनञ् प्रकृत्या ॥

नकुलाढ्या । स्त्री । गन्धनाकुल्याम् ॥

नकुली । स्त्री । कुक्कुट्याम् ॥ मांस्याम् ॥ शङ्खिन्याम् ॥ कुङ्कुमे ॥ नकुलभार्यायाम् ॥

नकुलीशः । पुं । कालीपीठस्थभैरवे ॥

नकुलेश्वरी । स्त्री । देवीविशेषे ॥

नकुलेष्टा । स्त्री । रास्नायाम् ॥ नकुलाना मिष्टा ॥ नाँई इति प्रसिद्धे रास्ना

भेदे ॥

नक्तम् । न । निशि । रात्रौ ॥ लक्षणयानक्तव्रतेपि । यथा । उपवासात्प्रं भैक्षं भिक्षापरमयाचितम् । अयाचितात् परंनक्तं तस्मान्नक्तेनवर्त्तयेत् ॥ देवैस्तुभुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा । पराह्णेपितृभिर्भुक्तं सन्ध्यायां गुह्यकादिभिः ॥ सर्ववेलामतिक्रम्य नक्तभुक्त मभोजनम् । वामाचारोमहादेवो नक्तेनैवोद्गुरे न्वरम् ॥ इतिदेवी पु० ॥ अस्यलक्षणायुक्तं मात्स्ये । दिवसस्याष्टमे भागेमन्दीभूतेदिवाकरे । नक्तं तच्च विजानीयान्ननक्तं निशि भोजनम् ॥ नक्षत्रदर्शनान्नक्तं गृहस्थेतु विधीयते । यतेर्दिनाष्टमे भागे रात्रौ तस्यनिषेधनमिति ॥

नक्तक: । पुं । लक्तके । कर्पटे । लत्ता इतिभाषा ॥ नजते । ओनजी व्रीडे । बाहुलकात् तन् । स्वार्थे कन् । नक्तं कं सुखमस्माद्वा । पृ० मलोपः ॥

नक्तचारी । पुं । उलूके । पेचके ॥ बिडाले ॥ त्रि । रात्रिचरमात्रे ॥

नक्तञ्चर: । पुं । राक्षसे ॥ चौरे ॥ पेचके ॥ वृषदंशादौ ॥ नक्तं चरति । चर० । चरेष्टः ॥ गुग्गुलौ ॥

नक्तन्दिवम् । अ । अहोरात्रे ॥ नक्तञ्च दिवाच । अचतुरेत्यादिना सूत्रस्य थेष्टच्यो रव्ययये र्द्वन्द्वेनिपातनाद्च् समासान्तः ॥

नक्ताम् । अ । निशि । रजन्याम् ॥ नजते । ओनजीव्रीडे । तम् प्रत्ययः ॥

नक्तमाल: । पुं । करञ्जवृक्षे ॥ नक्तंमालो धारणमस्य । नक्त मा अलति वा । अल० । पचाद्यच् ॥

नक्तमुखा । स्त्री । रात्रौ ॥ इतिहलायुधः॥

नक्तव्रतम् । न । दिवाभोजनाभावविशिष्टे रात्रिभोजने ॥ हविष्यभोजनंस्नानं सत्य माहारलाघवम् । अग्निकार्यं मधः शय्यां नक्तभोजीषडाचरेत् ॥ इति भविष्यपुराणम् ॥ नक्तं निशायां कुर्वीत गृहस्थोविधिसंयुत: । यतिश्चविधवाचैव कुर्यात् तत् सदिवाकरम् ॥ सदिवाकरन्तु तत् प्रोक्त मन्तिमेघटिकाद्वये । निशानक्तन्तु विज्ञेयं यामार्द्धे प्रथमे सदा ॥ मार्कण्डेय: । एकभक्तेन नक्तेन तथैवायाचितेनच । उपवासेन दानेन नैवाद्वादशिको भवेदिति ॥

नक्ता । स्त्री । कलिकार्याम् ॥

नक्तान्ध: । त्रि । रात्र्यन्धे ॥

नक्तान्ध्यम् । न । रात्र्यन्धतायाम् ॥

नक्र: । पुं । कुम्भीरे । नाँका इति तंदुआ इतिच भाषाप्रसिद्धेजलजन्तौ ॥ न ।

अग्रदावधि। फाणकाठ इतिगौड भाषा ॥ नासायाम् ॥ नक्रामतिदूरस्थम् । क्रम्० । अन्यत्रापीतिडः । नभ्राडितिनलोपेन ॥

नक्रराट् । पुं । } ग्राहे । जलाटके ।
नक्रराजः । पुं । } गाह इतिभाषा प्रसिद्धे यादोविशेषे ॥

नक्रा । स्त्री । नासिकायाम् ॥

नक्षत्रम् । न । कृत्तिकादितारकासु । भे ॥ अत्रलिङ्गस्थानंयथा । हस्तास्वाती श्रवणा अक्लीबे मृगशिरा न पुंसिस्यात् । पुंसिपुनर्वसु पुष्यौ मूलन्त्वस्त्री स्त्रियांशेषाः ॥ शेषाः ताराइतिसम्बन्धः ॥ मुक्तायाम् ॥ नक्षदते हिनस्ति । नक्षदेतिसौत्रोधातुर्हिंसार्थ आत्मनेपदी । ष्ट्रन् । नभ्राण्नपादितिनलोपेन ॥ यद्वा । णक्षगतौ । नक्षति । अमिनक्षियजीत्यत्रन् ॥ नक्षणोति वा । क्षणहिंसायाम् । ष्ट्रन् । बाहुलकान्नलोपः ॥ क्षीयतेः क्षरतेर्वाक्षमिति निपात्यते । नक्षत्रमिति वा । नलोपाभावः पूर्ववत् ॥

नक्षत्रकान्तिविस्तारः । पुं । धवलयावनाले ॥ इतिराजनिर्घण्टः ॥

नक्षत्रचक्रम् । न । मन्त्रग्रहणोक्तषट्चक्रान्तर्गतचक्रे ॥

नक्षत्रनेमिः । पुं । ध्रुवे ॥ चन्द्रे ॥ विष्णौ ॥ स्त्री । रेवत्याम् ॥ इति मेदिनी ॥

नक्षत्रपः । पुं । उडुपे । चन्द्रे ॥

नक्षत्रपदयोगः । पुं । यात्रायोगान्तरे ॥ यथा । मेषगे भास्करे षष्ठे लाभगे स्वोच्चगे यमे । नक्षत्रपदयोगोयं शत्रुमेधानिलो रणे ॥

नक्षत्रपुरुषः । पुं । चैत्रेमासिसिताष्टम्यां यदा मूलगतः शशी । भगवन्तं सह लक्ष्म्या पूजयेच्च विधानत इत्यादिना वामनपुराणोक्ते व्रतविशेषे ॥

नक्षत्रमाला । स्त्री । सप्तविंशतिमौक्तिकैर्निर्मिते एकावलीहारे ॥ नक्षत्राणांमालेव ॥ नक्षत्रश्रेण्याम् ॥

नक्षत्रविद्या । स्त्री । ज्योतषे ॥

नक्षत्रशूलः । पुं । ज्येष्ठापूर्वाभाद्रपदारोहिण्युत्तरफाल्गुनी । पूर्वादिषु क्रमाच्छूला यात्रायां मरणप्रदाः ॥

नक्षत्रसूचकः । पुं । निन्दिते ज्योतिर्विदि ॥ यथा । अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । सपङ्क्तिदूषकः पापोज्ञेयो नक्षत्रसूचकः ॥ अपिच । तिथ्युत्पत्तिं नजानन्ति ग्रहाणां नैवसाधनम् । परवाक्येन वर्त्तन्ते तेवै नक्षत्र सूचकाः ॥

नक्षत्रसूची । पुं । नक्षत्रसूचके ॥ गहेणान्तरेण वृत्तस्यैव नक्षत्राणामुपस्थित्या

दीनि शुभाशुभसूचकानि सूचयतीति तथा ॥

नखचेशः । पुं । चन्द्रे ॥ नखषायामीशः ॥ कर्पूरे ॥

नखः । पुं । न । पुनर्भवे । कररुहे ॥ पुं । खण्डे ॥ इतिहेमचन्द्रः ॥ न । व्याघ्रनखाख्येगन्धद्रव्ये । शुक्तौ । कोलदले ॥ द्विधा शङ्खनखाख्या ऽन्याशुक्त्याख्याबदरीछदा इतिरत्नमाला ॥ नखद्वयंग्रहरक्षोमवातास्रज्वरकुष्ठहृत् ।...घृष्णंशुक्लवर्ण्यंस्वादुव्रणविषापहम् ॥ अलक्ष्मीमुखदैार्गन्ध्यहृत्पाकरसयोःकटुः ॥ नखनति खन्यते वा । खनुअवदारणे । अन्ये०डः ॥ नखमस्येति वा । नभ्राडितिसाधुः ॥ यद्वा । नह्यति । णहबन्धने । नहेर्हलोपश्चेति खः ॥ स्वल्पपत्रस्त्वसौ शुक्ति र्नखरी बदरच्छदा । महांस्त्वसौ शङ्खनखः शङ्खाख्यो गन्धसारणः ॥

नखकुट्टः । पुं । नापिते ॥ इतित्रिकाण्डशेषः ॥

नखनिकृन्तनम् । न । नखच्छेदनार्थंनापितशस्त्रविशेषे । नहेर्नो इतिभाषा ॥

नखनिष्पावः । पुं । निष्पावीभेदे । अशुक्तिफलायाम् । ग्राम्यायाम् ॥

नखपर्णी । स्त्री । वृश्चिकाक्षुपे ॥

नखपुष्पी । स्त्री । पृक्कायाम् ॥

नखमुचम् । न । धनुषि ॥

नखम्पचा । स्त्री । यवाग्वाम् ॥ नखम्पचतीतिविग्रहे मितनखेचेति नखकर्मोपपदात्पचेःकर्त्तरि खश् । अरुद्विषदितिमुम् । पचिश्चात्रतापवाची ॥

नखरः । पुं । नखे । करकण्टके । कररुहे ॥ नखंराति । रा० । कः ॥

नखरञ्जनी । स्त्री । ओषधिविशेषे ॥ तस्याःफले ॥ हरीतक्यादिभ्यश्चेतिफलप्रत्ययस्यलुप् ॥ नखच्छेदनास्त्रविशेषे । नहेर्नो इतिभाषा ॥ यथा । अनन्तचरणोपान्तधारिणी मलहारिणी । पुनर्भवच्छेदकरीगङ्गेव नखरञ्जनीति ॥

नखरायुधः । पुं । कुक्कुटे ॥ व्याघ्रे ॥ सिंहे ॥

नखराह्वः । पुं । करवीरवृक्षे ॥ इति राजनिर्घण्टः ॥

नखरी । स्त्री । नख्याम् ॥ क्षुद्रनख्याम् ॥

नखविष्किरः । पुं । पक्षिविशेषेषु ॥ नखै र्विकीर्य्य ये भक्षयन्ति । तेचश्येनादयः ॥

नखवृक्षः । पुं । नीलवृक्षे ॥

नखशङ्खः । पुं । शम्बूके । क्षुद्रशङ्खे ॥

नखाघातः । पुं । रतिक्रीडायांस्त्र्यामर्दि

शेषेषु नखपाते ॥ स्थानानि यथा । नखाघातः प्रदातव्यो यथास्थानानि कर्मसु । पार्श्वयो स्तनयोश्चैव ऊरौ चैव नितम्बके ॥ कच्चस्थलेषक र्णान्तिकपालेषाहुमूलके । ग्रीवायां कण्ठदेशेच नखाघातंसमाचरेत् ॥ तथा सर्वशरीरेषु नखं दद्याच्छनैः शनैरितिकामशास्त्रम् ॥

नखाङ्कः । पुं । न । व्याघ्रनख्याम् ॥

नखायुधः । पुं । व्याघ्रे ॥ सिंहे ॥ कुक्कुरे ॥

नखालिः । पुं । चुद्रशङ्खे ॥ नखपङ्क्तौ ॥

नखालुः । पुं । नीलवृक्षे ॥

नखाशी । पुं । पेचके ॥ त्रि । नखभक्षके ॥

नखी । पुं । सिंहे ॥ विदारणक्षमनखयुक्तपशुमात्रे ॥

नखी । स्त्री । नखनामगन्धद्रव्ये । शुक्तौ ॥ बह्वादित्वात् ङीष् ॥

नगः । पुं । पर्वते ॥ वृक्षे ॥ नगच्छति । गम्लृ० । अन्येभ्योपीति अन्येष्वपीति वा डः । नगोप्राणिष्वितिनञ्वा प्रकृत्या ॥

तीर्थविशेष ॥ भास्करे ॥ पवनाशने ॥

नगजः । त्रि । पर्वतजातवस्तुमात्रे ॥

नगजा । स्त्री । चुद्रपाषाणभेदायाम् ॥

नगणः । पुं । त्रिलघो (।।।) ॥

नगणा । स्त्री । पारावतपद्याम् । नयाफट्की इतिगौडभाषाप्रसिद्धलतायाम् । मालकाँगणीतिभाषा ॥

नगतीर्थम् । न । पुण्यक्षेत्रविशेषे ॥ नगस्य नगानां वा तीर्थम् ॥

नगनन्दिनी । स्त्री । पार्वत्याम् ॥

नगपतिः । पुं । हिमालये । गिरीन्द्रे ॥ नगानाम् पतिः ॥

नगभित्-त् । पुं । पाषाणभेदने ॥ इन्द्रे ॥

नगभूः । पुं । चुद्रपाषाणभेदायाम् ॥ त्रि । पर्वतजाते ॥

नगरम् । न । राजस्थितिस्थाने । पुरि । पत्तने ॥ यत्राष्टशतग्रामीयव्यवहारस्थानं मध्यवर्त्तितन्नगरम् । पण्यक्रियादिनिपुणै श्चातुर्वर्ण्यजनै र्युतम् । अनेकजातिसम्बन्धं नैकशिल्पिसमाकुलम् । सर्वदैवतसम्बन्धंनगरन्त्वभिधीयते ॥ नगाःइवाःपर्वता वा सन्त्यस्मिन् । नगपांशुपाण्डुभ्यश्चेति रः । पत्वेक्लीवत्वम् ॥ नगाइवप्रासादाद्यःसन्तियत्रवा ॥

नगरघातः । पुं । हस्तिविशेषे ॥ नगरं हन्ति । हन० । कृत्यल्युटोबहुलमिति अण् ॥

नगरन्ध्रकरः । पुं । क्रौञ्चदारणे ॥ रन्ध्रं करोतीतिरन्ध्रकरोरन्ध्रहेतुः । कृञो हेतुताच्छील्यानुलोम्येष्विति कृञष्ट

प्रत्ययः। नगस्य रन्ध्रकरः॥

नगरसम्भवम्। न। सिद्धपीठान्तरे॥

नगरी। स्त्री। पुर्याम्। नगरे॥ जाति लक्षणोङीष्॥

नगरीवकः। पुं। काके॥ इतिचिका ण्डशेषः॥

नगरोत्था। स्त्री। नागरमुस्तायाम्। नागरमोथा इतिभाषा॥

नगरौषधिः। स्त्री। कदल्याम्॥

नगस्वरूपिणी। स्त्री। प्रमाणिकाछन्दसि॥

नगाटनः। पुं। वानरे॥ नगेष्वटनंयस्य॥

नगाधिपः। पुं। हिमालये॥ नगाना मधिपः॥ सुमेरौ॥

नगाधिराजः। पुं। हिमालये॥

नगानिका। स्त्री। चतुरक्षरावृत्तिप्रभेदे॥ यथा। द्वितूर्यके गुरु र्यदा। न गानिका भवेत्तदा॥ यथा। विलो कये कदा च्युतम्। हरिं सरोरुहे क्षणमिति॥

नगाश्रयः। पुं। हस्तिकन्दे। हस्तिपर्णे॥ त्रि। नगवासिनि॥

नगौकाः। पुं। शरभे॥ पक्षिणि॥ प ञ्चास्ये॥ काके॥ नगे वृक्षेऽगे वा ओक आश्रयो यस्य॥

नग्नः। पुं। वन्दिनि॥ क्षपणे। निर्ग्रन्थे। अदन्ते॥ त्रि। विवाससि। दिगम्बरे॥ नग्नः काषायवस्त्रः स्यान्नग्नः कौपीनकावृतः। इतिकाश्यपसंहिता॥ नजतेस्तः। ओलजीडीङे। अ कर्मकत्वात्कर्त्तरिक्तः। ओदित्त्वान्नत्वम्॥ द्विकच्छःकच्छशे षश्चमुक्तकच्छस्तथैवच। एकवा साअवासाश्चनग्नःपञ्चविधः स्मृतः॥ पारिभाषिकनग्नो यथा। येषां कुले नवेदोस्ति न शास्त्रं नैवच व्रतम्। ते नग्नाः कीर्त्तिताः सद्भि स्तेषा मन्नं विगर्हितम्॥ इतिमार्कण्डे यपुराणम्॥ ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृतिर्द्विज। एतामुज्झति यो मोहात् सनग्नः पातकीस्मृतः॥ त्रयी समस्तवर्णानां द्विज संवरणं यतः। नग्नो भवत्युज्झितायां यतस्त स्यामसंशयम्॥ यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते। परिव्राडपि मैत्रेय सनग्नः पापकृन्नरः॥ इतिविष्णुपुराणम्॥

नग्नकः। पुं। नग्ने॥ नग्नएव। स्वार्थेकन्॥

नग्नजित्। पुं। नाग्नजित्याः पितरि नृपतिविशेषे॥

नग्नहूः। पुं। नानाद्रव्यकृते सुरावीजे। किण्वे॥ स्त्रानमहूयते वा। ह्वेञ्॥ सं० क्विप्। नग्नहूः॥

नग्ना। स्त्री। नग्नयोषिति। विवस्त्रायां नार्याम्। कोटव्याम्॥ नग्नायां स्त्रिय

मीयेत पुरुषं वाकदाचन । नचमूत्रं पुरीषं वा नवै संस्पृष्टमैथुनमिति कूर्मपुराणम् ॥

नग्नाटः । पुं । दिगम्बरे ॥

नग्नाटकः । पुं । दिगम्बरयोगिनि ॥

नग्निका । स्त्री । अनागतार्त्तवायाम् । अप्राप्तरजस्कायाम् ॥ विवस्त्रायाम् ॥ नजतेस्म । ओनजी० । गत्यर्थेति क्तः । ओदितश्चेतिनः । स्वार्थेकन् ॥

नचेत् । अ । निषेधे ॥

नञ् । अ । नञभावे निषेधेच स्वरूपार्थे व्यतिक्रमे । ईषदर्थेच साहृश्ये तद्विरुद्धतदन्ययोः ॥ इतिमेदिनी ॥ अपिच । तत् साहृश्य मभावस्तु तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ साहृश्ये यथा । अब्राह्मणः ॥ अभावे । यथा । अपापम् ॥ अन्यत्वे यथा । अघटःपटः ॥ अल्पत्वे यथा । अनुदरा कन्या ॥ अप्राशस्त्ये यथा । अकेशी ॥ विरोधेयथा । असुरः ॥ अकारो न लोपोनञितिविशेषणार्थः ॥ द्वौनञौ प्रकृतमर्थं गमयतः । यथा । नाविष्णुः कीर्त्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् । नाविष्णुः संस्मरे द्विष्णुं नाविष्णुर्विष्णु माप्नुयादिति महाभारतम् ॥

नटः । पुं । शैलूषे । कृशाश्विनि । नवरसाभिनयचतुरे नर्त्तकविशेषे । जायाजीविनि ॥ वर्णसङ्करजातिविशेषे यथा । शौण्डिक्यां शौण्डिका ज्जातो नटो वरुड एवचेति पराशरपद्धतिः ॥ ब्राह्मण्यां क्षत्रियाज्जात इति मनुः ॥ अशोकवृक्षे ॥ श्योनाकवृक्षे ॥ नले । किष्कुपर्वणि ॥ गोदन्तहरिताले ॥ व्राह्मयात् क्षत्रियात् सवर्णाया मुत्पन्न आरव्यकारे । जने ॥ नटति । नटन्त्ती । पचाद्यच् ॥ यद्वा । नमति । णम० । अनिदेच्याहिंनानमेर्टः । । डित्वाट्टिलोपः ॥

नटनम् । न । नर्त्तने । नाट्ये । अभिनये ॥ नट अवस्कन्दने । ल्युट् ॥ भावरत्ने ॥

नटनारायणः । पुं । रागविशेषे ॥

नटभूषणम् । न । } हरिताले ॥
नटमण्डनम् । न । }

नटवरः । पुं । नटश्रेष्ठे ॥

नटसञ्ज्ञकः । पुं । गोदन्तहरिताले ॥ नटे ॥

नटाग्निका । स्त्री । लज्जायाम् ॥ इति हारावली ॥

नटी । स्त्री । नल्योषधौ ॥ वेश्यायाम् ॥ नटयोषायाम् ॥ गौरादित्वात् ङीष् ॥

नटेश्वरः । पुं । शिवे ॥ इतिहेमचन्द्रः ॥

नड्या । स्त्री । नडसमूहे ॥ पाशा०यः ॥

नडः । पुं । मत्स्यदृशे । पेोटगले ॥ नड
ति । नडगहने । अच् ॥
नडकीयः । त्रि । नड्वले ॥ नडाः सन्त्य
स्मिन् । नडादीनां कुक् चेतिछः ॥
नडप्रायः । त्रि । नडबहुलदेशे । नड्वति ॥
नडसंहतिः । स्त्री । नड्यायाम् ॥ नडा
नां संहतिः ॥
नडहः । त्रि । कान्ते । खनिते ॥ इति
भूरिप्रयोगः ॥
नडहा । स्त्री । विलासिन्याम् ॥
नड्या । स्त्री । नडसंहतौ ॥ नडानां स
मूहः । पाशादिभ्यो यः ॥
नड्वान् । त्रि । नडप्रायदेशे ॥ नडाः प्रा
याश्च । कुमुदनडवेतसेभ्योड्मतु
प् । जय इति मादुपधाया इतिवा
वत्वम् ॥
नड्वलः । त्रि । नडप्रायदेशे ॥ नडाः स
न्त्यस्मिन् । नडशादाड्ड्वलच् ॥
नड्वाभूः । स्त्री । गृहविशेषे । कुट्टिमे ॥
इति भूरिप्रयोगः ॥
नतः । पुं । जन्मनाडिकाविशेषे ॥ न ।
तगरपादाम् । तगरमूले ॥ त्रि । कु
टिले ॥ नम्रे ॥ नमति स्म । क्तः ॥
नतद्रुमः । पुं । लताशाले ॥ इतिरत्न० ॥
नतनासिकः । त्रि । चिपिटनासे । अ-
वटीटे ॥ नता नम्रा नासिका ऽस्य ॥
नताङ्गी । स्त्री । नार्याम् ॥ इतिराजनि० ॥

नतिः । स्त्री । नमस्कारे ॥ नमने ॥ क्ति
न् ॥ अथ सप्त प्रकारायानतेर्लक्षणा
नि । त्रिकोणमथषट्कोण मर्द्धच
न्द्रं प्रदक्षिणम् । दण्डमष्टाङ्गमुग्रञ्च
सप्तधानतिलक्षणम् ॥ ऐशानीवाथ
कौवेरीदिक् कामाग्या प्रपूजने । प्र
शस्ता स्थण्डिलादौच सर्वमूर्त्तैस्तु स
र्वतः ॥ त्रिकोणादिव्यवस्थाञ्च यदि
पूर्वमुखोयजेत् । पश्चिमाच्छाम्भवी
गत्वा व्यवस्थां निर्दिशेत् तदा ॥ य
दोत्तरामुखः कुर्यात् साधकोदेवपूज
नम् । तदायाम्यान्तु वायव्यांगत्वाकु
र्यान्तु संस्थितिम् ॥ दक्षिणाद्वायवीं
गत्वादिशं तस्याश्चशाम्भवीम् । ततो
ऽपिदक्षिणं गत्वा नमस्कार स्त्रिको
णवत् ॥ त्रिकोणो यो नमस्कार स्त्रि
पुरा प्रीतिदायकः ॥ १ ॥ दक्षिणाद्वा
यवीं गत्वा वायव्याच्छाम्भवींततः । त
तोपिदक्षिणां गत्वा तांत्यक्त्वाग्नी
प्रविश्यच ॥ अग्नितो राक्षसीं गत्वा
ततश्चाप्युत्तरांदिशम् । उत्तराच्च त
थाग्नेयीं भ्रमणं द्विस्त्रिकोणवत् ॥ षट्
कोणोयो नमस्कारः प्रीतिदःशिव-
दुर्गयोः ॥ २ ॥ दक्षिणाद् वायवीं ग
त्वातस्माद्याहस्य दक्षिणाम् । गत्वा
यो ऽसौनमस्कारः सोर्द्धचन्द्रः प्रकी
र्त्तितः ॥ ३ ॥ सकृत् प्रदक्षिणं कृत्वा

वर्त्तुलाकृतिसाधकः । नमस्कारः क
थ्यतेऽसौ प्रदक्षिण इति द्विजैः ॥ ४ ॥
त्यक्ता स्व माननस्थानं पश्चाद्गत्या
नमस्कृतिः । प्रदक्षिणं विनायातु नि
पत्य भुवि दण्डवत् ॥ दण्डइत्युच्यते
देवैः सर्वदेवौघमोदकः ॥ ५ ॥ पूर्व्व
वद् दण्डवद् भूमौ निपत्य हृदयेन तु
। चिबुकेन मुखेनाथ नासया लिके-
न च ॥ ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भू
मिस्पर्शनं क्रमात् । तदष्टाङ्ग इति-
प्रोक्तो नमस्कारो मनीषिभिः ॥ ६
॥ प्रदक्षिणत्रयं कृत्वा साधको वर्त्तुला
कृतिः । ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः
स्यान्नमस्कृतौ ॥ स उग्र इति देवौघै
रुच्यते विष्णुतुष्टिदः ॥ ७ ॥ नदानां
सागरो यादृग् द्विपदां ब्राह्मणो यथा ।
नदीनां जाह्नवी यादृग् देवानामिव
चक्रधृक् ॥ नमस्कारेषु सर्व्वेषु तथै
वोग्रः प्रशस्यते । त्रिकोणाद्यैर्नमस्का
रैः कृतैरेव तु भक्तितः । चतुर्वर्गं ल
भेद् भक्तानचिरादेव साधकः ॥ नम
स्कारो महायज्ञः प्रीतिदः सर्वदा स-
दा । सर्व्वेषामपि देवानामन्येषामपि
भैरव ॥ येनासावुग्रो नमस्कारः प्रीति
दः सततं हरेः । महामायाप्रीतिक
रः सन्नमस्कारयोत्तमः ॥ इति कालि
पुराणम् ॥

नदः । पुं । पुनर्व्वहे । भिद्य । शोणसि
न्धुभैरवदामोदरब्रह्मपुत्रादौ ॥ अ-
ब्धौ ॥ निनदे ॥ नदति । नद० ।
पचाद्यच् ॥

नदनः । पुं । मेघे ॥ सिंहे ॥ नदति ।
नदअव्यक्तेशब्दे । अनुङ्नदेश्चेति
अनुङ् ॥

नदी । स्त्री । सरिति । तरङ्गिण्याम् ।
तटिन्याम् ॥ अस्या लक्षणम् । धनुः
सहस्राण्यष्टौ च गतिर्यासां न विद्यते
। न ता नदीशब्दवहा गर्त्ता स्ताः प
रिकीर्त्तिताः इति ॥ सर्वा गुर्व्वी-
प्राङ्मुखी वाहिनीस्था लघ्वी पश्चा
द्वाहिनी निश्चयेन । देशे देशे तद्गु
णा सा विशेषा ज्ञेवाधत्ते गौरवं ला
घवञ्च ॥ प्रायो मृदुवहा गुर्व्वी ल-
घ्व्यः शीघ्रवहाः स्मृताः । नद्यः पाषा
णसिकतावाहिन्यो विमलोदकाः ॥
हिमवत्प्रभवा याश्च जलं तास्वमृतो
पमम् । विन्ध्यात् प्राचीप्राच्यवाची
प्रतीची याचोदीची स्यान्नदी सा
क्रमेण । वातारोपं श्लेष्मपित्तानिलो
पं पित्तोद्रेकं पथ्यपाकञ्च धत्ते ॥ पा
रिपात्रभवा याश्च विन्ध्याद्यप्रभवा-
श्च याः । शिरोहृद्रोगकुष्ठानां ता हे
तुः श्लीपदस्य चेति राजनिर्घण्टः ॥ प
चादिषु नदट् इति टित्त्वनिपातनात्-

टिड्ढेतिङीप्॥नदीनाञ्चविशेषोयः सवराहे निरूपितः। तथामत्स्यपुराणादौ द्रष्टव्योवेत्तुमिच्छुभिः॥

नदीकदम्बः। पुं। महाश्रावणिकायाम्। मुण्ड्याम्॥ न। नदीसमूहे॥

नदीकान्तः। पुं। समुद्रे॥ नद्यःकान्ता यस्य॥ इज्जले। निचुलद्रुमे॥ सिन्धुवारके॥

नदीकान्ता। स्त्री। जंब्वाम्॥ काकजङ्घौषधौ॥ लतायाम्॥

नदीकूलम्। न। सरित्तटे॥ नद्याःकूलम्॥

नदीकूलप्रियः। पुं। अम्बुवेतसे॥ नदीकूलं प्रियं यस्य॥

नदीजः। पुं। अर्जुनवृक्षे॥ यावनालशरे॥ हिज्जलवृक्षे॥ न। स्रोतोञ्जने॥ त्रि। नद्यां जाते॥

नदीजा। स्त्री। अग्निमन्थवृक्षे॥

नदीतरस्थलम्। न। } घट्टे॥ नदी
नदीतरस्थानम्। न। } भिन्नस्थाने॥

नदीनः। पुं। वरुणे॥ समुद्रे॥ नदीना मिनःस्वामी॥

नदीनिष्पावः। पुं। धान्यप्रभेदे। कटुनिष्पावे। कर्बुरे॥

नदीमातृकः। त्रि। नद्यम्बुसम्पन्नब्रीहिपालितेदेशे॥ नदी माताऽस्य। नद्यृतश्चेतिकप्॥

नदीवङ्कः। पुं। वङ्कुरे। वाँकइतिभाषा॥ इतिशब्दमाला॥

नदीवटः। पुं। वटीवृक्षे॥

नदीष्णः। त्रि। नदीस्नानकुशले॥ नद्यांस्नाति। ष्णाशौचे। सुपीतिकः। निनदीभ्यामितिषत्वम्॥ नदीष्णे॥ इतिपुरुषोत्तमः॥

नदीसरः। न। इन्द्रक्रीडासरोवरे॥

नदीसर्ज्जः। पुं। वीरतरौ। अर्जुनवृक्षे॥

नदेयी। स्त्री। नारङ्ग्याम्। भूमिजम्ब्वाम्॥

नद्धः। त्रि। बद्धे॥ उद्वृत्ते॥ नह्यते। णहबन्धने। कर्मणि क्तः। नहोधइतिधत्वम्॥

नद्ध्री। स्त्री। चर्ममयरज्जौ। वरत्रायाम्॥ नह्यतेऽनया। णह०। दाम्नीतिष्ट्रन्॥

नद्याम्रः। पुं। समष्ठिलावृक्षे॥

नद्यावर्त्तकः। पुं। यात्रायोगान्तरे। मन्द्यावर्त्तके॥ यथा। स्वराशिगेबुधे लग्ने सिते वा सुरवन्दिते। नद्यावर्त्तकयोगोयं यातुरिष्टार्थसिद्धिदः॥ अन्योपि। भूसुते स्वोच्चगे लाभे मृगकुम्भगते यमे। नद्यावर्त्तकयोगोयं रणेशत्रुकुलानलः॥

ननन्दा। स्त्री। नन्दिन्याम्। स्वभर्त्तृभगिन्याम्। ननंद इतिभाषा॥ नन

न्दति कृतायामपिसेवायां न तुष्यति । न नन्दयति भ्रातृजायामिति वा । नञिचनन्देरिति ऋन् ॥

ननान्दा । स्त्री । ननन्दायाम् ॥ न नन्दति नतुष्यति । ननन्दयति भ्रातृजायामिति वा । टुनदि० । नञिचनन्देरिति ऋन् हृद्विश्चेतिकेचित् ॥

ननु । अ । विनिग्रहे ॥ अनुप्रश्ने ॥ परकृतौ ॥ अधिकारे ॥ संभ्रमे ॥ आमन्त्रणे ॥ अनुनये ॥ प्रश्ने ॥ अनुज्ञायाम् ॥ अवधारणे ॥ दुष्टोक्तौ ॥ सम्यग्वादे ॥ स्तुतौ ॥ वाक्यारम्भे ॥ आक्षेपे ॥ प्रत्युक्तौ ॥ उत्प्रेक्षाऽलङ्कारव्यञ्जके ॥ यथा । मन्ये शङ्के ध्रुवं नूनं किंवा प्रायो नु वेत्थिच । ननु ना नहि जानामि उत्प्रेक्षाव्यञ्जकानिचेतिकाव्यचन्द्रिका ॥ न नुदति । नुद० । मित०डु: ॥

ननुच । अ । विरोधोक्तौ ॥ ननुच चेतिनिपातद्वयस्य समाहारद्वन्द्व: ॥ प्रश्ने ॥

नन्द: । पुं । गोपविशेषे । श्रीकृष्णस्य पितरि ॥ नृपविशेषे । महानन्दिसुते । क्षत्रियवंशान्ते ॥ आनन्दे ॥ निधिप्रभेदे ॥ प्रान्दक्षिणद्वारगृहे ॥ वेणुविशेषे ॥ यथा । महानन्दस्तथानन्दोविजयोयजयस्तथा । चत्वारउत्तमावंशामातङ्गमुनिसम्मता: ॥ दृशाङ्गुलोमहानन्दोनन्दएकादृशाङ्गुलः । कृतसङ्गीतदामोदर: ॥ त्रि । सर्वाभिष्टपदार्थैभि:समृद्धे ॥ नन्दति हृष्यति नन्द: । टुनदि० । पचाद्यच् ॥

नन्दक: । पुं । हरे:खड्गे ॥ भेके ॥ त्रि । हर्षके ॥ कुलपालके ॥ नन्दयति देवान् । टुनदि० । ण्वुल् ॥ नन्दतात् । आशिषिचेति वुन्वा ॥

नन्दकि: । स्त्री । पिप्पल्याम् ॥

नन्दकी । पुं । विष्णौ ॥ विद्यामयो नन्दकाख्योऽसिरस्य । अतइनिठना-वितीनि: ॥

नन्दगोपिता । स्त्री । रास्नायाम् ॥

नन्दथु: । पुं । आनन्दे । सुखे ॥ टुनदि० । द्वितोऽथुच् ॥

नन्दन: । पुं । सुते ॥ भेके ॥ कामाख्यायां पर्वतविशेषे ॥ षड्विंशतितमेवत्सरे । सुभिक्षं क्षेम मारोग्यं शस्यं भवति शोभनम् । बहुक्षीरा स्तथा गावो नन्दनं नन्दने प्रिये ॥ न । इन्द्रस्योद्याने । गन्धमादनमूले गन्धर्वसुरसिद्धाप्सरोरतोद्याने ॥ धृतिसंज्ञकच्छन्द:प्रभेदे ॥ यथा । नजभजरै स्तुरेफसहितै: शिवै र्हयै र्नन्दनम् । यथा । तरणिसुतातरङ्गपवनै: सलक्ष्मीमान्दोलितम् मधुरिपुपादपङ्कजरजः






अ:सुपूतपृथ्वीतलम् । मुरहराचिच चेष्टितकलाकलापसंस्मारकङ् चिंतितजननन्दनं व्रज सखे सुखायहन्दावनम् ॥ त्रि । हर्षके ॥ आनन्दकारके ॥ नन्दयति । टुनदि० । नं०ल्युः ॥

नन्दनजम् । न । हरिचन्दने ॥

नन्दनन्दनः । पुं । श्रीकृष्णे ॥ नन्दस्य नन्दनः ॥

नन्दनन्दिनी । स्त्री । दुर्गायाम् ॥

नन्दनमाला । स्त्री । श्रीकृष्णप्रीतिकुसुममालिकाविशेषे ॥

नन्दना । स्त्री । दुहितरि ॥ इतिजटाधरः ॥

नन्दन्तः । पुं । पुत्रे ॥ नन्द्यात् । टुनदि० । दृषिनन्दिजीविप्राणिभ्यःषिदाशिषीति झच् ॥

नन्दपालः । पुं । वरुणे ॥

नन्दपुत्री । स्त्री । पार्वत्याम् ॥ इतित्रिकाण्डशेषः ॥

नन्दयन्तः । त्रि । अर्भके ॥ नन्दयति । टुनदि० । हृभूवहिवसिभासीत्यादिनाझच् षित् ॥

नन्दा । स्त्री । गौर्याम् ॥ नन्दते सुरलोकेषु नन्दने वसते ऽथवा । हिमाचले महापुण्ये नन्दादेवी ततःस्मृता ॥ संस्थाप्य नन्दिता यस्मात् तस्मान्नन्दा तु साऽभवत् । इतिवचनामकारगम् । संस्थाप्य ब्रह्मादिभिर्हिमगिराविति शेषः ॥ अलिञ्जरे । नाँदइतिभाषा ॥ सम्पदि ॥ तिथिविशेषे ॥ यथा । प्रतिपदेकादशी षष्ठी नन्दा प्रोक्ता मनीषिभिः ॥ अर्कसङ्क्रमविशेषे । स्थिरे जीववारे तु नन्देति संज्ञा तदा विप्रवर्गः सुखी मासमेकम् ॥ न । नन्दरि ॥ तीर्थविशेषे ॥

नन्दात्मजः । पुं । श्रीकृष्णे ॥ नन्दस्य आत्मजः ॥

नन्दात्मजा । स्त्री । दुर्गायाम् ॥

नन्दिः । पुं । नन्दिकेश्वरे । पिनाकिनः प्रतीहारे ॥ पुं । न । द्यूताङ्गे ॥ आनन्दे ॥ नन्दति । टुनदि० । इन् ॥

नन्दिकः । पुं । नन्दिवृक्षे ॥

नन्दिका । स्त्री । इन्द्रक्रीडास्थाने ॥ अलिञ्जरे ॥

नन्दिकेश्वरः । पुं । शालङ्कायने । ताण्डवतालिके । शिवद्वारपाले ॥ पुराणविशेषे ॥

नन्दिघोषः । पुं । अर्जुनस्यरथे ॥ वन्दिजनस्य घोषे ॥

नन्दितरुः । पुं । धवद्रुमे ॥

नन्दी । पुं । हरप्रतीहारे । गिरिशवेश्मनि ॥ सन्निविधउक्तोपङ्क्तिपुराणे ॥ यथा । आद्यः कनकनन्दी च गिरिकाख्यो द्वितीयकः । सोमनन्दी तृती




यस्य विज्ञेयास्तन्दिनस्तु यइति ॥ गरुड़े भ.षण्डे ॥ वटद्रुमे ॥

नन्दिनी । स्त्री । उमायाम् ॥ गङ्गायाम् ॥ ननान्दरि ॥ वशिष्ठधेनौ ॥ वशिष्ठाश्रयदेव्याम् ॥ व्याडिमातरि ॥ रेणुकाख्यौषधौ ॥ तीर्थविशेषे ॥ नन्दयति । टुनदि॰ । णिनिः । ङीप् ॥

नन्दिनीतनयः । पुं । अभिधानविशेषस्य कर्त्तरि । व्याडिमुनौ ॥

नन्दिनीसुतः । पुं । व्याडिमुनौ ॥ नन्दिन्याः सुतः ॥

नन्दिपुराणम् । न । उपपुराणप्रभेदे ॥

नन्दिवर्द्धनः । पुं । भर्गे । शिवे ॥ पक्षान्ते ॥ तनये ॥ मित्रे ॥ त्रि । आनन्दवर्द्धके ॥

नन्दिवृक्षः । पुं । नन्दीद्रुमे ॥ नन्दनम् । टुनदि॰ । इन् । नन्द्याः वृक्षः ॥

नन्दी । स्त्री । दुर्गायाम् ॥

नन्दीमुखी । स्त्री । पक्षिविशेषे ॥ यथा । स्थूलाकठोरा दृष्टाश्च यस्याः श्वश्चूपरिस्थिता । गुटिका चञ्चुसदृशी चेया नन्दीमुखीति सा ॥ तन्द्रायाम् ॥ इतिहेमचन्द्रः ॥

नन्दीवर्त्तः । पुं । सामुद्रमत्स्यविशेषे ॥

नन्दीवृक्षः । पुं । नन्दिवृक्षे । स्थालीवृक्षे । वेलिआपीपर इति प्रसिद्धे ऽश्वत्थभेदे । कामरूपकादम्बोयम् ॥ नन्दीवृक्षो लघुः स्वादु स्तिक्त स्तुवरउष्णकः । कटुपाकरसोग्राही विषपित्तकफास्रनुत् ॥ अश्वत्थाकारः क्षीरवान् स्वनामप्रसिद्धोवृक्षः इति भरतः ॥ कोङ्कणदेशप्रसिद्धे सुगन्धिवृक्षविशेषे । तूणीके । पीतके । कुठेरके ॥ तून इतिभाषाप्रसिद्धे वृक्षविशेषे । तुन्ने । कुबेरके । कामलके । नन्दिवृक्षे ॥ गान्धीरास्त्रवृक्षे ॥ इतिशब्दाम्बुधिः ॥ नन्दनम् । टुनदि॰ । इन् । कृदिकारादिति ङीष् ॥ नन्द्याः वृक्षः ॥

नन्दीशः । पुं । नन्दिनि । शिवद्वारपाले ॥ भरतोक्ततालप्रभेदे ॥

नन्दीश्वरः । पुं । महादेवे । शिवे ॥ सदाशिवद्वारपाले ॥ नन्दीशाख्येताले ॥ यथा । गोलघुर्गौ लघुः प्लुतस्ताले नन्दीश्वरेमताः इति सङ्गीतदामोदरः ॥

नन्दीसरः । न । इन्द्रसरोवरे ॥

नन्द्यावर्त्तः । पुं । पश्चिमद्वाररहितोनन्द्यावर्त्ताह्वयस्तयेच्छुभकामोराजवेश्मप्रभेदे ॥ लक्षणान्तरञ्च । दक्षिणानुगतालिन्दचयं यत् पश्चिमामुखम् । पूजनीयोत्तरच्छायं नन्द्यावर्त्तं वदन्तितदिति भरतधृतः साम्बः ॥ तगरद्रुमे ॥ मत्स्यविशेषे ॥ यथा

षण्ढाख्ये याचायोगे ॥ नन्दयतीति नन्दी । नन्दी आवर्त्ता ऽच ॥

नपात् । चि । अरचके ॥ नपाति । न पात् शचन्त: ॥

नपुंसक: । पुं । न । क्लीवे ॥ नस्त्री नपुमानित्यस्य पुंसकभावो नभ्राडित्यत्रनिपातनात् ॥ नपुंसकोऽभवेद्दितिभाष्यात् पुंस्यप्ययम् ॥ अस्य लक्षणं यथा । स्तनकेशवती स्त्री स्याल्लोमश: पुरुष: स्मृत: । उभयो रन्तरं यच्च तदभावेन पुंसकमिति ॥ * ॥ नपुंसकविशेषानाह भावप्रकाश: । यथा । आसेक्यश्च सुगन्धश्च कुम्भीक श्चेर्ष्यक स्तथा । अमीसशुक्रा बोद्धव्या अशुक्रो भूगसंज्ञक: ॥ तेषांलक्षणानि यथा । पित्रोरत्व स्वल्पवीर्यत्वादासेक्य: पुरुषो भवेत् । सशुक्रं प्राश्यलभते ध्वजोन्नति मसंशयम् ॥ य: पूतियोनौ जायेत स हि सौगन्धिको भवेत् । स्वेगुदे ऽब्रह्मचर्या य: स्त्रीषुपुंवत् प्रवर्त्तते । स कुम्भीकइतिज्ञेयो गुदयोनिस्तुसम्भृत: ॥ दृष्ट्वा व्यवाय मन्येषां व्यवायेय: प्रवर्त्तते । ईर्ष्यक: सतु विज्ञेयो दृष्टियोनिश्च सम्भृत: ॥ योभार्यायामृतौ मोहा दङ्गनेव प्रवर्त्तते । तत्र स्त्रीचेष्टिताकारो जायते शण्ढ संज्ञक: ॥ इति भावप्रकाश: ॥

नप्ता । पुं । पौत्रे ॥ दौहित्रे ॥ नपतन्त्यिपितरो ऽनेन । पतल्ट° । नप्तृनेष्ट्रत्वष्ट्रितिसाधु: । नञ: प्रकृतिभाव: पतेरच्छब्दलोपश्चनिपातनात् ॥

नप्त्री । स्त्री । पौत्र्याम् ॥ दौहित्र्याम् ॥ न पतन्त्यिपितरो ऽनया नप्तृवत् साधु: । ऋन्नेभ्योङीप् ॥

नभ: । पुं । श्रावणमासे ॥ व्योम्नि ॥ नभते । णभहिंसायाम् । पचाद्यच् ॥

नभ:क्रान्ती । पुं । सिंहे ॥ इतिशब्दमाला ॥

नभ:प्राण: । पुं । पवने ॥ इतित्रिकाण्डशेष: ॥

नभ:सत् । पुं । निर्जरसि । देवे ॥

नभ:सरित् । स्त्री । मन्दाकिन्याम् ॥

नभ:स्थित: । पुं । नरकविशेषे ॥ चि । आकाशस्थिते ॥

नभ:स्पृक् । त्रि । अन्तरीक्षव्यापिनि ॥ नभ: स्पृशति । स्पृश° । क्विप् ॥

नभश्चक्षु: । पुं । सूर्य्ये ॥ इतिशब्दमाला ॥

नभश्चमस: । पुं । चन्द्रे ॥ पिष्टपूपे ॥ इन्द्रजाले ॥ इतिमेदिनी ॥

नभश्चर: । पुं । विहङ्गमे ॥ विद्याधरे ॥ मेघे ॥ वाते ॥ ग्रहे ॥ देवे ॥ राक्षसे ॥ त्रि । व्योमचारिणि ॥

नभा: । पुं । घने । मेघे ॥ घ्राणे ॥ आ

वद्यमासे ॥ विरहिणो नश्यति नभ्ना ति नभते वा । णभ० । असुन् ॥ वर्षायाम् ॥ विसतन्तौ ॥ पतद्ग्रहे ॥ त्रि । घ्राणितशीर्षे ॥ नह्यते मेघैः । णह्बन्धने । नहेर्दिविभश्चेत्यसुन् भश्चान्तादेशः ॥

नभः । न । व्योम्न । आकाशे ॥ नह्यते मेघैः । णह० । नहेर्दिविभश्चेत्यसुन् भश्चान्तादेशः ॥ नभमस्मिवा । भसदीसौ । क्किप् ॥ नभनम् नभ्यते ऽनेनावश्य ॥

नभसः । पुं । न । व्योम्नि ॥ नभते नभ्नाति वा । अत्यविचमितमी त्यादिना असच् प्रत्ययः ॥

नभसङ्गमः । पुं । खगे ॥ पक्षिणि ॥ नभसं गच्छति । गम्लृ० । गमेः सुपीति खच् ॥

नभस्यः । पुं । भाद्रमासे ॥ नभाः अभ्रम् । तत्र साधुः । यत् ॥

नभस्वान् । पुं । वायौ ॥ नभोऽस्त्यस्य यत्रेन अस्ति । मतुप् । तसौमत्वर्थ इति भत्वाद्रुत्वाभावः । वत्वम् ॥

नभसत् द् । पुं । देवे । सुरे ॥ नभस्याकाशे सीदति गच्छति । सदॢ० । सत्सूद्विषेत्यादिना क्किप् ॥

नभाकम् । न । तमे ॥ नभ्नाति । णभ० । पिनाकादित्वादाकः ॥



नभोगजः । पुं । वारिदे । मेघे ॥ इति त्रिकाण्डशेषः ॥

नभोगतिः । स्त्री । आकाशगमने । खगतौ ॥ यथा । प्रडीनोड्डीनसण्डी-नडयनानि नभोगतौ ॥ त्रि । खचरे ॥ नभसि गतिर्यस्य ॥

नभोद्वयः । पुं । ⎫
नभोदीपः । पुं । ⎬ वारिदे । मेघे ॥ इ
नभोधूमः । पुं । ⎭ ति शब्दमाला ॥

नभोनदी । स्त्री । स्वर्गङ्गायाम् ॥

नभोमणिः । पुं । रवौ । सूर्ये ॥

नभोमण्डलदीपः । पुं । चन्द्रे ॥

नभोम्बुपः । पुं । चातकखगे ॥

नभोरजः । न । अन्धकारे ॥

नभोरेणुः । स्त्री । कुज्झटिकायाम् ॥

नभोलयः । पुं । धूमे ॥

नभ्यः । पुं । चक्रे ॥ नाभये हितः । रथाङ्गस्यच्छिद्रं नाभिः । तदनुप्रविष्टः काष्ठविशेषो वा । स च तदनुगुणत्वात् तस्मै हितः । अत्र नैभाभक्तः तदपि स्नेहनत्वान्नाभये हितम् । उगवादिभ्यो यत् । नाभनभञ्च ॥ त्रि । नभसम्बन्धिन ॥

नभ्राट् । पुं । मेघे ॥ नभ्राजते दीप्यते । भ्राजृ० । क्किप् । नभ्राण्नपादिति साधुः ॥

नमत् । त्रि । प्रणते ॥

नमतः । पुं । प्रह्वे ॥ धूमे ॥ नटे ॥ नमति । णम० । भृमृदृशीत्यादिना ऽतच् ॥

नमनम् । न । वाङ्मनःकायप्रणिधाने न प्रह्वीभवने ॥ त्रि । नमयितरि ॥ कर्त्तरि ल्युट् ॥

नमयिता । त्रि । नमनकर्त्तरि ॥

नमऽ । अ । नतौ ॥ नमनम् । णमप्रह्वत्वे शब्दे च । असुन् ॥

नमसः । पुं । अनुकूले ॥ नमति । णम० । अत्यविचमीत्यादिना ऽसच् ॥

नमसितः । त्रि । अर्चिते । पूजिते । कृतनमस्कारे ॥ नमः कृतम् । नमोवरिवइति नमसः क्यच् । क्तः । क्यस्य विभाषेति यलोपः ॥

नमस्कारः । पुं । नमस्कृतौ । करयोः शिरस्संयोगेन नतिकरणे । स्वापकर्षबोधकव्यापारविशेषे ॥ सर्वत्रापि नमस्कुर्युः सर्वावस्थासु सर्वदेतिव्यवहारः । नाप्रयतायाप्रयतोऽभिवादयेदितिशङ्खः । देवविप्रगुरुंदृष्ट्वा ननमेद्यस्तु संभ्रमात् । स कालसूत्रं व्रजति यावच्चन्द्रदिवाकरौ ॥ ब्राह्मणं गुरुं दृष्ट्वा न नमेद्योनराधमः । यावज्जीवनपर्यन्तमशुचिर्यवनोभवेदिति ब्रह्मवैवर्त्तपुराणम् ॥ देवतायतनं दृष्ट्वा दृष्ट्वातु हरिलिङ्गं तथा । नमस्कारं नकुर्याद्यः प्रायश्चित्ती भवेन्नरः ॥ सभायां यज्ञशालायां देवतायतनेषु च । प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतम् ॥ उपविश्य नमेच्छूद्रो दीर्घायुर्ब्राह्मणोवदेत् । सशूद्रो नरकं याति ब्राह्मणोयाश्च योनतिम् ॥ * ॥ अष्ठावनुत्तमं ज्ञानिनं धावन्तं धनगर्वितम् । अपत्यंजपमानश्च स्त्रंपङ्क्तिप्राजाभिवादयेत् ॥ * ॥ पुष्पहस्तोवारिहस्तस्तैलाभ्यक्तोजलाश्रितः । आशीःकर्त्तानमस्कर्त्तोभयोनरकंभवेदिति कर्मलोचनः ॥ * ॥ मातुः पितुः कनीयांसंननमेद्वयसाधिकः । नमस्कुर्याद्गुरोः पत्नीं भ्रातृजायां विमातरम् ॥ नमः । अभिवादयतः पूर्वमाशिषं न प्रयच्छति । यद्दुष्कृतं भवेत्तस्य तस्माद्भागं प्रयच्छते ॥ स्वस्तीति ब्राह्मणे ब्रूया दायुष्मानिति राजनि । वर्द्धतामितिवैश्ये च शूद्रेचारोग्यमेवचेतिशब्दकल्पद्रुमेमलमासतत्त्वम् ॥ विषभेदे ॥ इति शब्दचन्द्रिका ॥ नमःकरणम् । कृञ० । घञ् ॥

नमस्कारी । स्त्री । खदिर्याम् । इत्या जोडीतिख्यातौषधौ ॥ नमस्कारणशीला । सुपीताच्छील्ये णिनिः ॥

नमस्कृतिः । स्त्री । नमस्कारे ॥ नमः

करणम् । नमः क्रियते ऽनयावा । डुकृञ्० । स्त्रियां क्तिन् ॥

नमस्यः । त्रि । नमस्कारार्हे ॥

नमस्यन् । त्रि । कायवाङ्मनोभि र्नम स्कुर्वति ॥

नमस्या । स्त्री । पूजायाम् ॥ नमस्करण म् । नमोवरिवश्चित्रङः क्यच् । अ- प्रत्ययादित्यकारः । टाप् ॥

नमस्यितः । त्रि । पूजिते । अर्चिते । न मसिते ॥ नमः कृतम् । नमोवरिव इति नमसःक्यच् । क्तः ॥

नमितः । त्रि । जातनमस्कारे ॥ ना- मिते ॥

नमुचिः । पुं । शुम्भनिशुम्भाभ्यां कनि ष्ठे दैत्यविशेषे ॥ अनङ्गे । कामे ॥ नमुञ्चति । मुचॢ० । इगुपधात् कि दितीन् । नभ्राण्नपादितिनञ् प्र कृत्या ॥

नमुचिद्विट् । पुं । इन्द्रे । मघोनि ॥ नमु चिंद्वेष्टि । द्विष० । सत्सूद्विषेत्यादि नाक्विप् ॥

नमुचिसूदनः । पुं । इन्द्रे । पाकशास ने ॥ नमुञ्चति । मुचॢ० । इन् । नभ्राडितिनञ् प्रकृत्या । सूदयति । षूदक्षरणे । नं० ल्युः ॥ नमुचेर्दैत्य स्य सूदनः ॥

नमेरुः । पुं । सुरपुन्नागे ॥ रुद्राक्षे ॥

नमोगुरुः । पुं । ब्राह्मणे । भूसुरे ॥ न मस्करणीयोगुरुः ॥

नम्या । स्त्री । काष्ठादिनिर्मितकूपादि सङ्क्रमे ॥

नम्यः । त्रि । नमस्ये ॥

नम्रः । त्रि । नते । नमनशीले ॥ नम ति । तच्छीलः । णम० । नमिकम्पी तिरः ॥

नम्रकः । पुं । वेतसे ॥ त्रि । नते ॥

नयः । पुं । नीतौ । नाये ॥ द्यूतविशे षे ॥ नैगमादिषु ॥ युक्तौ ॥ शास्त्रे ॥ त्रि । न्याय्ये ॥ नेतरि ॥ नयनम् ॥ णीञ्० । बाहुलकात्पचाद्यच् ॥ नयते: कर्त्तरि पचाद्यच्वा ॥

नयकः । पुं । नयेकुशले ॥ णी०ण्वुल् ॥

नयज्ञः । त्रि । नीतिज्ञे ॥ नयंजानाति ज्ञा० । कः ॥

नयद्रुट् । त्रि । नीतिविरुद्धकारिणि ॥

नयनम् । न । चक्षुषि । लोचने ॥ प्रा- पणे ॥ नीयतेऽनेन । णीञ्० । ल्युट् ॥

नयनाभिरामः । पुं । चन्द्रे ॥ नयनयोर भिरामः ॥ त्रि । प्रिये ॥

नयनी । स्त्री । कनीनिकायाम् ॥ नी यते स्वविषयोऽनया । णीञ्० । ल्यु ट् । ङीप् ॥

नयनोत्सवः । पुं । दीपे ॥ दृगुत्सवे ॥

नयनयोः उत्सवो यस्मिन् ॥

नयनोपान्तः । पुं । अपाङ्गे ॥

नयनौषधम् । न पुष्पकासीसे ॥

नयपीठी । स्त्री । द्युताङ्गे । अष्टकाङ्गे । छक् इति गौडभाषा ॥

नयवर्त्म । न । षाड्गुण्यप्रयोगे ॥ सन्धिविग्रहयानानि संस्थाप्यासनमेवच । द्वैधीभावश्चविज्ञेयाः षड्गुणानीति वेदिनाम् ॥ नयस्य वर्त्म ॥

नयविशारदः । पुं । नीतिशास्त्रज्ञे ॥

नयशाली । पुं । नीतिसम्पन्ने ॥

नयानुगः । त्रि । नीत्यनुसारिणि ॥

नरम् । न । रामकर्पूरतृणे ॥

नरः । पुं । अजे । अच्युते । विष्णौ ॥ मनुजे ॥ अर्जुने ॥ नरति । न्यणातिवा । नृनये । अच् ॥ परमात्मनि ॥ नरतीतिनरः प्रोक्तः परमात्मा सनातन इतिव्यासः ॥ शङ्कौ ॥

नरकः । पुं । भूमेर्गर्भेवराहाज्जाते दैत्यविशेषे । भौमे ॥ पापिनां कष्टजनकस्थानविशेषे । निरये । नारके ॥ अयञ्चाविंशद्भेदभिन्नः । यथा । रौरवध्वान्तशीतोष्णसन्तापाक्षमहाम्बुजाः । कालसूत्राष्टमाश्चेते नरकाइतिविश्रुताः ॥ सूच्यास्यकाकखण्डाख्यक्षुरधाराम्बरीषकाः । तप्ता ऽङ्गार महादाहसन्तापाश्चेतियेमुने ॥ भवन्यष्टौसुवीभत्सा महापक्ष्यपदानुगाः ॥ अथनरकराजाष्टकम् । लालाप्रलेपमांसादनिरुच्छ्वासनसोच्छ्वसाः । युग्मादिशाल्मलीलोहप्रदीप्तसुतृपिपासकाः ॥ कृमीणांनिचयश्चेति राजानः परिकीर्त्तिताः ॥ लोहस्तम्भोथविण्मूत्रस्तथा वैतरणीनदी । तामिस्रश्चान्धतामिस्रः कुम्भीपाकः सरौरवः ॥ महापदानुगोवीचीराजराजेश्वरेश्वरादति ॥ नरति न्यणाति वा । नृनये । कुन् ॥ पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥ उदयनाचार्यास्तु नचनरकाण्येवनसन्तीति क्लीवत्वं प्रयुञ्जते तचमूलं मृग्यम् ॥

नरककुण्डम् । न । ब्रह्मवैवर्त्तादिषु प्रसिद्धे षडशीति भेदभिन्ने यातनास्थानविशेषे ॥

नरकजित् । पुं । श्रीहरौ ॥

नरकदेवता । स्त्री । निरयदेव्याम् । अलक्ष्म्याम् ॥

नरकस्थः । त्रि । निरयस्थिते ॥ नरकस्थोपि देहं वै न पुनस्त्यक्तुमिच्छति ॥

नरकस्था । स्त्री । वैतरण्याम् ॥ नरके तिष्ठति । स्था० । सुपिस्थ इतिकः ॥

नरकान्तकः । पुं । विष्णौ ॥

नरकामयः । पुं । प्रेते ॥ नरक आमयोऽस्य ॥

नरकीलक: । पुं । गुरुघ्ने । गुरुहणि ॥

नरगण: । पुं । नवसु नक्षत्रविशेषु ॥ यथा । हस्तास्वातिमृगाश्विनीहरिगुरु: पौष्णानुराधादितिश्चार्द्रारोहिणिचोत्तराणि भरणी पूर्वाणि भा मिषयम् । ज्येष्ठाश्लेषविशाखमूलवरु णावस्वग्निचित्रामघा: कथ्यन्ते मुनिभिर्यथा क्रमवशाद्देवानराराक्षसा: ॥ तज्जातजने ॥ तत्फलम् । मानुष्ये मृदुकर्मसक्तमना: श्रीमान्वितो धीयुत इति ॥ नरसमूहे ॥

नरङ्ग: । पुं । वरण्डके । नारङ्गा इति गौड भाषा ॥ न । मेढ्रने । शेफसि ॥

नरदेव: । पुं । श्रीरामचन्द्रे ॥ राज्ञि ॥ नराणां देव: ॥

नरनारायण: । पुं । ऋषिकृषभे भगवतो ऽवतार विशेषे ॥

नरनारायणौ । पुं । २ । कृष्णार्जुनयो: ॥ नरश्चनारायणश्चतौ ॥

नरपति: । पुं । राजनि ॥ नराणाम्पति: ॥

नरपुङ्गव: । पुं । नरश्रेष्ठे ॥ नरेषु पुङ्गव: ॥

नरप्रिय: । पुं । नीलवृक्षे ॥ त्रि । नरस्य प्रियवस्तुनि ॥

नरवाहि: । पुं । मायातौ ॥

नरभू: । स्त्री । भारतवर्षे ॥ नराणांभू: ॥

नरभूमि: । स्त्री । भारतवर्षे ॥ नराणां भूमि: ॥

नरमानिका । स्त्री ।
नरमानिनी । स्त्री । } श्मश्रुयुक्तनार्याम् ॥

नरमाला । स्त्री । मनुष्यमुण्डमालायाम् ॥

नरमालिनी । स्त्री । श्मश्रुयुक्तनार्याम् ॥ इतिहेमचन्द्र: ॥

नरमेध: । पुं । नरवधप्रधाने यज्ञविशेषे ॥ सकलौवर्जनीय: । यथोक्तंवृहन्नारदीये । समुद्रयात्रास्वीकार: कमण्डलुविधारणम् । द्विजानामसवर्णासु कन्यासूपयम स्तथा ॥ देवरेण सुतोत्पत्ति र्मधुपर्केपशोर्वध: । मांसादनं तथाश्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैवकन्याया: पुनर्दानं वरस्यच । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनं गोमेधश्च तथामख: । इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिण: ॥ इति ॥

नरवाहन: । पुं । पौलस्त्ये । कुवेरे ॥ नरोवाहनमस्य । बहु० नणत्वम् ॥ त्रि । पुरुषयानविशिष्टे ॥

नरविष्वण: । पुं । राक्षसे ॥ इतित्रिकाण्डशेष: ॥

नरव्याघ्र: । पुं । पुरुषोत्तमे ॥

नरसिंह: । पुं । हरौ । विष्णौ ॥ नरस्य

सिंहस्य च अवयवा यस्मिंस्तस्यन्ते स नरसिंहः॥ सत्यं विधातुं निजभृत्य भाषितं व्याप्तिञ्च भूतेष्वखिलेषु चात्मनः। अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां नमृगं नमानुषम्॥ नरश्रेष्ठे॥

नरस्कन्धः। पुं। नराणां समूहे॥ नरकरितुरगाणां स्कन्धश्च॥

नरहरिः। पुं। नरसिंहावतारे॥

नराङ्गः। पुं। वरण्डे॥ न। मेढ्रे॥

नराचः। पुं। नराजाख्येछन्दे॥ यथा। स्वजेन नायकेन कुण्डलेन यद्विभूषितं पयोधरेण पच्चिणा शरेणवीणयाङ्कितम्। नराचवृत्त मचषोडशाचरं समीरितं मनीषिमण्डलीचितं फणीन्द्रपिङ्गलोदितम्॥ यथा। निशुम्भशुम्भचण्डमुण्डरक्तवीजघातिनी लुलापरूपदैत्यभूपघातपचपातिनी। नवीनपीनवट्ठजालका लमेघसन्निभा चिरं चनी करोतु मे प्रियं पिनाकिवल्लभेति॥

नराजः। पुं। षोडशाचरच्छन्दोविशेषे॥ यथा। भुजङ्गराजभाषितं प्रकीर्णशास्त्रसागरे लघौगुरौ निरन्तरे सतीहषोडशाचरे। प्रतापतापनिर्जितप्रभाकरप्रकाशहे प्रदत्तहत्तराजकं नराजमेव मन्महे।

नराधमः। पुं। परमार्थज्ञानहीने ऽसञ्जातवैराग्ये। अकृतकृत्ये पुरुषे॥ यथा। अज्ञानोपहतोबाल्ये यौवने वनिताहृतः। शेषेकलत्रचिन्तार्त्तः किङ्करोतिनराधमइति॥

नराधिपः। पुं। राजनि। नृपे॥ सहि नराणां मध्ये भगवतोविभूतिः॥ नराणां मधिपः। नरान् अधिपातिवा। पा०। आतश्चोपसर्गे इतिकः॥

नरान्तकः। पुं। रावणविशेषे। रावणात्मजे॥

नरायणः। पुं। माधवे। विष्णौ॥ नराअयनमस्येतिविग्रहः॥ नराणा मयनं यस्मात्तेननरायणः स्मृत इतिब्रह्मवैवर्त्तपुराणम्॥ नरशब्दस्य। नडा०फक्। संज्ञापूर्वकत्वात् वृद्ध्यभावः॥

नरी। स्त्री। नार्याम्॥ इतिजटाधरः॥

नरेतिका। स्त्री। तीर्थविशेषे॥

नरेन्द्रः। पुं। महीपाले॥ विषवैद्ये॥ वार्त्तिके॥ एकविंशत्यक्षरावृत्ते॥ यथा। चामररत्नरज्जुरपरिगतविप्रगणाहितशोभः पाणिविराजिपुष्पयुगविरचितकङ्कणसङ्गतगन्धः। चारुसुवर्णकुण्डलयुगलकृतरोचिरलङ्कृतवर्णः पिङ्गलपन्नगेशइति निगदितोऽजनिवृत्तनरेन्द्रः॥ यथा। पङ्क

अक्रोधपानपरमधुकरगीतमनोज्ञ-
त्तडागः प्रच्छन्नमादवादपरपरभृतका
ननसत्परभागः । वल्लभविप्रयुक्तकु
लवरतनुजीवितदानदुरन्तः किङ्कर
वाणि वच्मि मम सञ्चरि सन्निधि-
मेति वसन्तः ॥

नरोत्तमः । पुं । कृतकृत्यपुरुषे ॥ य
था । यःस्वकात् परतोवेह जातनि
र्वेदआत्मवान् । हृदिकृत्वा हरिं गे
हात् प्रव्रजेत् स नरोत्तमः ॥ स्वका
त्स्वतएव परतःपरोपदेशाद्वाजात-
वैराग्यः ॥

नर्क्कुटकम् । न । नासिकायाम् ॥ इति
हेमचन्द्रः ॥

नर्त्तकः । पुं । केलके ॥ पोटगले ॥ चा
रणे ॥ द्विपे ॥ नटे । सर्व्ववेश्मिनि ॥
त्रि । तालाद्यनुसारेणनर्त्तनकृति ॥
अस्यलक्षणंयथा । यादृशं नृत्यपा
त्रं स्याद्गीतयोर्च्यञ्च तादृशम् । नृ
त्यस्य धारणात् पात्रं नर्त्तकः परि-
कीर्त्तितः ॥ अपिच । असम्बद्धप्रला
पीच सदाभ्रुकुटितत्परः । हासप्र
हासचतुरो दाचालो नृत्यकोविद
इतिसङ्गीतदामोदरः ॥ नृत्यति ।
नृतीगात्रविक्षेपे । शिल्पिनिष्वुन्
तिकर्त्तरि ष्वुन् ॥

नर्त्तकी । स्त्री । नासिकायाम् । गन्ध-
विन् इति रामजनी इतिचभाषा ॥
करेणवाम् ॥ नलिकानामसुगन्धिद्रव्ये
॥ नृत्यति । नृती० । ष्वुन् । षि-
त्त्वात् ङीष् ॥

नर्त्तनम् । न । नृत्ये ॥ नृती० ।
ल्युट् ॥

नर्त्तितम् । त्रि । ताण्डविते ॥

नर्द्दटकम् । न । अत्यष्टिप्रभेदे ॥ त-
ल्लक्षणंयथा । यदिभवतो नजौ भज
जला गुरु नर्द्दटकम् । इति ॥ यथा
। व्रजवनिताऽसन्तलतिकाविलसन्म
धुपं मधुमथनं प्रणामजनवाञ्छितक
ल्पतरुम् । विभुमभिनौति कोपि-
सुकृती मुदितेन हृदा रुचिरपदाव
लीघटितनर्द्दटकेनकविरिति ॥

नर्द्दनम् । न । शब्दे ॥

नर्म्मकीलः । पुं । भर्त्तरि । पत्यौ ॥ इ
तित्रिकाण्डशेषः ॥

नर्म्मठः । पुं । चिवुके ॥ षिड्गे ॥ चूचु-
के ॥ परिहासके ॥ इतिश०र० ॥

नर्म्मदः । पुं । केलिसचिवे ॥ त्रि । हर्ष
दे ॥ नर्म्मददाति । डुदाञ्० । ग्राति
वा । दो० । आतोनुपेतिकः ॥

नर्म्मदा । स्त्री । रेवायाम् । सोमोद्भवा
याम् । मेकलकन्यकायाम् ॥ अस्याः
स्मरणेन सर्पविषनाशोभवति । न
र्म्मदायैनमःप्रातर्नर्म्मदायैनमोनिशि

। नमोस्तु नर्मदे तुभ्यं चाहिमां विष सर्पत इतिविष्णुपुराणम् ॥ पृक्कायाम् ॥ टाप् ॥

नर्मदाप्रभवः। पुं। तीर्थविशेषे ॥

नर्म्म। न। परिहासवाक्ये ॥ नरणम्। नृनये। मनिन् ॥

नर्म्मरा। स्त्री। दर्याम् ॥ भस्त्रायाम् ॥ सरलायाम् ॥ निष्कलाम् ॥ वृद्धस्त्रि तोमेदिनिकरः ॥

नलः। पुं। नडे। पोटगले ॥ नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् । उष्णो. हृद्वस्तियोन्यर्त्तिदाहपित्त विसर्पजित् ॥ नृपतिविशेषे। सूर्य वंशीयनिषधराजपुत्रे ॥ यथा। अतिथिस्तु कुशाज्जज्ञे निषधस्तस्यचात्मजः। नलस्तु नैषधस्तस्मान्नभस्तस्मादजायत ॥ * ॥ वीरसेन नृपतेः पुत्रे ॥ यथा। नलौद्वावेवविख्यातौ वंशे कश्यपसम्भवे। वीरसेनसुतस्तद्वन्नैषधश्चनराधिपः इतिमात्स्ये १२ अध्यायः॥ * ॥ चन्द्रवंशीयनिषधराजपुत्रे। दमयन्तीपतौ ॥ यथा। कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतुपर्णस्यराजर्षेः कीर्त्तनं कलिनाशनमिति महाभारतम् ॥ पितृदेवे॥ विश्वकर्म्मणः पुत्रे कपीश्वरे ॥ दैत्यविशेषे ॥ न। पद्मे ॥

नलकम्। न। शाखास्थि। नाडीवत् सरन्ध्रे ऽस्थिपर्वणि ॥ इतिहेमचन्द्रः ॥

नलकिनी। स्त्री। जङ्घायाम् ॥

नलकीलः। पुं ॥जानुनि ॥

नलकूवरः। पुं। कुवेरपुत्रे ॥ नलः कूवरो युगन्धरो ऽस्य ॥

नलदम्। न। पुष्परसे ॥ उशीरे ॥ जटामांस्याम् ॥ इतिमेदिनी ॥

नलदम्बुः। पुं। निम्बवृक्षे ॥ इतिभूरिप्रयोगः ॥

नलदा। स्त्री। मांस्याम् ॥ इतिहेमचन्द्रः ॥

नलपट्टिका। स्त्री। तल्लाख्याम्। दरमा इति गौडभाषाप्रसिद्धे कटविशेषे ॥

नलमीनः। पुं। चिलिचिममत्स्ये। नलवनचारिणि मत्स्ये ॥ नलवनस्थो मीनः नलभोमीन इति वा ॥

नलसेतुः। पुं। रामायणप्रसिद्धे सामुद्रे सेतौ॥ नलेन वानरविशेषेण निर्मितः सेतुः ॥

नलिका। स्त्री। काण्डनाले ॥ नाल्याम् ॥ गौडभाषया नली इतिप्रसिद्धे सुगन्धिद्रव्यभेदे। विद्रुमलतिकायाम्। कपोतचरणायाम्। इयञ्चोत्तरापथे प्रसिद्धा सुगन्धा प्रवालाकृतिः पचारी इति पंठारी इतिक्वचित् प्रसिद्धा

॥ नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत्। कृच्छ्राश्मवाततृष्णास्रकुष्ठकण्डूज्वरापहा॥

नलितः। पुं। नालिता इति गौड़भाषाप्रसिद्धे शाकविशेषे॥

नलिनः। पुं। प्राचीनामलके। पानी आमला इति गौड़भाषा॥ सारसपक्षिणि॥ न। अम्बुजे। पद्मे॥ तोये॥ नीलिकायाम्॥ नलति। णल गन्धे। इनन्॥

नलिनी। स्त्री। पद्मिन्याम्। विसिन्याम्॥ व्योमनिम्नगायाम्॥ कमलाकरे॥ नारिकेलमद्ये॥ नलिकायाम्॥ पद्मयुक्तदेशे॥ नडाःसन्त्यत्र। पुष्करादिभ्य इति इनिः। डलयोरैक्यम्॥ यद्वा नलानांसमूहः। खलादिभ्य इति इनिः॥

नलिनीखण्डम्। न। नलिनीनांसमूहे॥ कमलादिभ्यःखण्डः॥

नलिनीरुहम्। न। मृणाले॥

नलिनेशयः। पुं। विष्णौ॥ इति वि०॥

नली। स्त्री। मनःशिलायाम्। कुनल्याम्॥ नलिकायाम्। विद्रुमलतायाम्। शुषिरायाम्॥ नलति। णल०। अच्। गौ० ङीष्॥

नलोत्तमः। पुं। देवनले॥

नल्वः। पुं। किष्कुचतुश्शते। चतुःशतहस्तपरिमिते देशे॥ किष्कूणां हस्तानां चतुःशतम्। चतुर्गुणं शतम्। शा०॥ नल्यते। णलबन्धने। उल्वादित्वात् वः॥ कात्यस्तु नल्वं हस्तशतमित्याह॥

नल्ववर्त्मगा। स्त्री। काकाङ्ग्याम्॥ त्रि। नल्वपरिमितपथगामिनि॥

नवः। पुं। स्तुतौ॥ रक्तपुनर्नवायाम्॥ त्रि। नव्ये। नूतने॥ नूयते। णुस्तुतौ। ऋदोरप्॥ अपूर्वे॥

नवकारिका। स्त्री। नवोढायाम्॥ इति शब्दमाला॥ नवीनकर्त्र्याम्॥ नवीने विवरणश्लोके॥

नवकालिका। स्त्री। नवीने॥ इति हारावली॥

नवखम्। न। देहे॥ नव खानि यस्य यस्मिन्वा॥

नवग्रहाः। पुं। सूर्यादिनवसु॥ ते यथा। सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः। शुक्रः शनैश्चरो राहुः केतुश्चेति नवग्रहाः॥ नवग्रहमखं कृत्वा ततः कर्मसमारभेत्। अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्॥

नवच्छात्रः। पुं। क्रियाकारे। प्रथमाध्ययने प्रवृत्ते नवीने विद्यार्थिनि॥

नवतः। पुं। वारिकम्बले। कुथे। नम्दा इति भाषा॥ इति हेमचन्द्रः॥

नवतरः । त्रि । नव्ये ॥

नवतिः । स्त्री । सङ्ख्याविशेषे । ९० नब्बे इति भाषा ॥ सङ्ख्येये ॥ नवदशतः परिमाणमस्य । पङ्क्तिविंशतित्रिंशच्चत्वारिंश दित्यादिनानिपातनात् प्रकृतेर्नवभावस्तिप्रत्ययश्च ॥

नवतिका । स्त्री । तूलिकायाम् ॥

नवदण्डम् । न । नृपाणां छत्रविशेषे ॥

नवदलम् । न । संवर्त्तिकायाम् । पद्मस्यकिञ्जल्कसमीपस्थदले ॥ नवञ्चतद्दलञ्च ॥ सामान्यतो नूतने पत्रे ॥

नवदीधितिः । पुं । मङ्गले । भौमग्रहे ॥ नवादीधितिर्यस्य ॥

नवदुर्गा । स्त्री । नवपत्रिकायाम् ॥ शैलपुत्र्यादिषु ॥ यथा । प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कुष्माण्डेति चतुर्थकम् ॥ पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरात्रिश्च महागौरीतिचाष्टमम् ॥ नवमं सिद्धिदाप्रोक्ता नवदुर्गाः प्रकीर्त्तिताः । उक्तान्येतानिनामानि ब्रह्मणैवमहात्मना ॥ अग्निनादह्यमानस्तु शत्रुमध्येगतो रणे । विषमे दुर्गमेचैवभयार्त्ताःशरणंगताः ॥ न तेषांजायते किञ्चिदशुभं रणसङ्कटे । नापदं तस्यपश्यामिशोकदुःखभयं नहि ॥ यैस्तु भक्त्यास्मृतानूनं तेषांसिद्धिःप्रजायते ॥ इति मार्कण्डेयपुराणम् ॥

नवदोला । स्त्री । नवीनप्रेङ्खायाम् ॥

नवद्वारपुरम् । न । शरीरे । मनुष्यदेहे ॥ अत्रद्वेश्रोत्रे द्वेचक्षुषी द्वेनासिके वागेकेति शिरसिसप्त द्वेपायूपस्थाख्येअधः इति नवद्वाराणिसन्ति ॥ नवद्वाराणि यस्मिन् तत् नवद्वारम् । तच्चतत् पुरञ्चेतिविग्रहः ॥

नवधा । अ । नवप्रकारे ॥ यथा । आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् । निष्ठा वृत्तिस्तपो दानं नवधा कुललक्षणम् ॥

नवधातवः । पुं । हेमादिनवसु ॥ यथा । हेमताररनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकं कान्तलोहञ्च धातवो नवकीर्त्तिताः ॥

नव । त्रि । सङ्ख्याविशेषे । ९ नौ इति भाषा ॥

नवनवत्वम् । न । नवप्रकारत्वे ॥ प्रकारेद्विर्भावः । कर्मधारयवद्भावात् सुपोलुक् ॥

नवनी । स्त्री । नवनीते । नैनी इति भाषा ॥ इति पुराणम् ॥

नवनीतम् । न । नवोद्धृते । अकृताग्निसंयोगेमन्थजे । नैनीइति माखन इतिच भाषा ॥ नोतं यदि नवनीतं

नीतं नीतं किमेतेन । आतपतापितभूमौ माधव मा धाव मा धाव ॥ नवञ्चतत् नीतञ्च । विशेषणमिति समासः ॥ नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् । सङ्ग्राहि वातपित्तासृक्क्षयार्शोर्दितकासहृत् ॥ तद्धितं बालके वृद्धे विशेषादमृतं शिशोः ॥ * ॥ नवनीतं माहिष्यास्तु वातश्लेष्मकरं गुरु । दाहपित्तश्रमहरं मेदःशुक्रविवर्द्धनम् ॥ * ॥ दुग्धोत्थं नवनीतन्तु चक्षुष्यं रक्तपित्तनुत् । वृष्यं बल्य मतिस्निग्धं मधुरं ग्राहि शीतलम् ॥ * ॥ नवनीतन्तु सद्यस्कं स्वादु ग्राहि हिमं लघु । मेध्यं किञ्चित् कषायाम्ल मीषत्तक्रांशसङ्क्रमात् ॥ * ॥ सक्षारकटुकाम्लत्वाच्छर्द्यर्शः कुष्ठकारकम् । श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम् ॥ * ॥ शीतं कव्यनवोद्धृतं सुमधुरं वृष्यञ्च वातापहं कासघ्नं क्रिमिनाशनं कफहरं सङ्ग्राहि शूलापहम् । वल्यं पुष्टिकरं तृषार्त्तिशमनं सन्तापविच्छेदनं चक्षुष्यं श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित् ॥ * ॥ एकाहाध्युषित प्रोक्तमुत्तरोत्तरगन्धदम् । अवद्यं सर्वरोगाढ्यं दधिजं तद्धितं नहि ॥ इति राजनिर्घण्टः ॥

नवनीतकम् । न । घृते ॥

नवनीतधेनुः । स्त्री । दानार्थकृत नवनीतमयधेनुविशेषे ॥

नवपत्रिका । स्त्री । कदल्यादिषु ॥ कदली दाडिमी धान्यं हरिद्रामानकं कचुः । बिल्वो ऽशोकोजयन्तीच विज्ञेया नवपत्रिकेति दुर्गोत्सवतत्त्वम् ॥

नवपदम् । न । मात्रावृत्तान्तरे ॥ यथा । प्रथममुपनयराम कलचितयमहिगणेन सह दण्ड मिति पदानि विषमाणिसञ्चिनु । समपदे चषट्पञ्च सप्तषष्टिकलमेतदातनु । एवं पञ्च पदानि कुरु दोहा मग्रे देहि । भुजराजपिङ्गलभणितनवपदमेतदवेहि ॥ यथा । विहर मानिनि मान मपहाय रमय रमण मतिशयितकपटकलहरति किमु विमृश्यसि यौवन मिद मतिचपल मचल नदीजलगति न पश्यसि । अनुभव हरिपरिरम्भसुख मिति वक्ता वद कोपि । मुग्धे माधव मधिसपदि कुरु कारुण्य मितोपीति ॥ नवपदानि यस्मिन् तत् ॥

नवपाठकः । पुं । नवीनाध्यापके ॥ नवो नूतनः पाठकः । पूर्वकालैकेति समासः ॥

नवफालिका । स्त्री । नवे । नव्ये ॥ नव

जातरक्तोङ्गनायाम् । नवरजः स्त्रि याम् ॥

नववधूः । स्त्री । नूतनपरिणीतायाम् । नवोढायाम् । नयी बहू इतिभाषा ॥

नववध्वागमनम् । न । नूतनपरिणीता याः प्रथमतः क्रियमाणे भर्तृगृहाग मने । गौनाइतिभाषा ॥

नवमः । चि । नवानाम् पूरणे ॥ तस्य पूरणेडट् ॥ ङीपि नवमी ॥

नवमल्लिका । स्त्री । नवमालिकायाम् । नेवाळि इति नेओयार इतिच गौड भाषा प्रसिद्धे पुष्पे ॥

नवमल्ली । स्त्री । नवमालिकायाम् ॥ नवा स्तुत्या मल्ली ॥

नवमालिका । स्त्री । नवमल्लिकायाम् । ग्रीष्मोद्भवायाम् । सप्तलायाम् । नेवारा इति नेवारी इतिच भाषा ॥ नवा स्तुत्या मालिका ॥

नवमी । स्त्री । शुक्लकृष्णपक्षयोस्ति थिविशेषे । इयं चन्द्रस्य नवमकला क्रियारूपा दुर्गाया स्तिथिः ॥ अ स्यांजातस्यफलम् । विरोधकर्त्ता सुज ने रगम्यः परापकारार्थमतिः कुशी लः । आचारहीनः कृपणः कठोरः प्रसूतिकाले नवमी यदि स्यादिति ॥

नवयौवना । स्त्री । युवतौ । तरुण्याम् । दिक्षुर्याम् । अतिक्रान्तमुग्धभावायां म् ॥ नवंयौवनंतारुण्यंयस्याःसा ॥

नवरत्नम् । न । नवप्रकारमणिषु ॥ यथा । मुक्तामाणिक्यवैदूर्यगोमेदा न् वज्रविद्रुमौ । पद्मरागं मरकतं नी लञ्चेति यथा क्रमादिति तन्त्रसारः ॥ नवानांरत्नानां समाहारः ॥ * ॥ नवग्रहदोषशान्त्यैधार्याणि नवरत्ना नि यथा । वैदूर्यं धारयेत्सूर्ये नी लञ्च मृगलाञ्छने । आवनेयेपिमा णिक्यं पद्मरागं शशाङ्कजे ॥ गुरौमु क्तां भृगौवज्रं शनौनीलं विदुर्बुधाः । राहौ गोमेदकं धार्यं केतौ मर कतं तथेतिदीपिका ॥

नवरात्रम् । न । आश्विनाद्युक्तमासेषु शुक्लप्रतिपदादिनवमीपर्यन्तनवदि नकर्त्तव्ये दुर्गाव्रतविशेषे ॥ नवरात्र चतुष्टयमुक्तं देवीभागवते । चैत्रे ऽश्विनेतथाषाढे माघेकार्यीमहोत् सवः । नवरात्रे महाराजपूजाकार्या विशेषत इति ॥ नवानांरात्रीणां स माहारः ॥

नवरात्रिकम् । म । नवरात्रे ॥

नववरिका । स्त्री । नवोढायाम् ॥

नववल्लभम् । न । दाहागुरुणि ॥ चि । नवीनप्रिये ॥

नववस्त्रम् । न । नवाम्बरे । अनाहते ॥

नवशायकः । पुं । नवशाक इति गौड

भाषाप्रसिद्धे मवविधे गोपादिजाति विशेषे ॥ यथा । गोपो मालीत थातैली तन्त्री मोदकवारजी । कुलालः कर्मकारश्च नापितो नवशायकाः ॥ इतिपराशरसंहिता ॥

नवश्राद्धम् । न । एकादशाहादिश्राद्धे ॥

नवसारः । पुं । न । नवसादरे ॥ तच्छुद्धिर्यथा । नवसारो भवेच्छुद्ध श्चूर्णतो वेविपाचितः । दोलायंत्रेण यत्नेन भिषग्भिर्योगसिद्धये इतिसारचन्द्रिका ॥

नवसादरम् । न । नैासादर इतिभाषाप्रसिद्धे द्रव्ये ॥ प्रतिश्यायेषु शिरसः पीडासु नवसादरम् ॥

नवसूतिका । स्त्री । अचिरप्रसूतायां धेनौ ॥ नवंसूतं प्रसवो ऽस्याः । शेषादितिकप् । प्रत्ययस्थादितीत्वम् ॥

नवा । स्त्री । नवीनायाम् ॥

नवांशः । पुं । नवमांशे । मेषादिद्वादशलग्नानां नवमे भागे ॥ यथा । मेषाद्या मकराद्याश्च तुलाद्याः कर्कटादयः । क्रमान्नवांशा राशीनां स्वांशाव र्गीस्समाः स्मृताः ॥ यथा । मेषे प्रथमनवांशेकांशोमेषस्य । द्वितीयांशोवृषस्य । तृतीयांशोमिथुनस्य । चतुर्थांशः कर्कटस्य । पञ्चमांशः सिंहस्य । षष्ठांशः कन्यायाः । सप्तमांशस्तुलायाः । अष्टमांशो वृश्चिकस्य । नवमांशोधनुषः ॥ * ॥ एवं वृषे प्रथमांशो मकरस्य । २ कुम्भस्य । ३ मीनस्य । ४ मेषस्य । ५ वृषस्य । ६ मिथुनस्य । ७ कर्कस्य । ८ सिंहस्य । ९ कन्यायाः ॥ * ॥ तथा मिथुने १ तुलायाः । २ वृश्चिकस्य । ३ धनुषः । ४ मकरस्य । ५ कुम्भस्य । ६ मीनस्य । ७ मेषस्य । ८ वृषस्य । ९ मिथुनस्य ॥ * ॥ एवं कर्के १ कर्कस्य । २ सिंहस्य । ३ कन्यायाः । ४ तुलायाः । ५ वृश्चिकस्य । ६ धनुषः । ७ मकरस्य । ८ कुम्भस्य । ९ मीनस्य ॥ एवं सिंहे मेषाद्याः ॥ कन्यायां मकराद्याः ॥ तुलायां तुलाद्याः ॥ वृश्चिके कर्कटाद्याः ॥ एवमेव धनुषिमेषाद्याः ॥ मकरे मकराद्याः ॥ कुम्भेतुलाद्याः ॥ मीने कर्काद्याः क्रमान्नवांशाज्ञेयाः ॥ उक्तञ्च । मेषे नवांशा मेषाद्याः वृषेच मकरादिकाः । मिथुनेच तुलाद्याः स्युः कर्कटे कर्कटादिका इति ॥

नवांशकः । पुं । नवांशे ॥

नवाङ्गम् । न । पाचनविशेषे ॥ यथा । विश्वामृताब्दभूनिम्बैः पञ्चमूली समन्वितैः । कृतः कषायोहन्त्याशुवातपित्तोद्भवं ज्वरम् ॥

नवाङ्गा । स्त्री । कर्कटशृङ्ग्याम् ॥

नवान्नम् । न । नवीनान्ने ॥ तन्निमि

तस्याड्ढे ॥

नवापयस्या । स्त्री । नूतनायां क्षीरवि दार्थ्याम् ॥

नवाभोगः । त्रि । अभिनवप्रयत्ने । महोत्साहे ॥ नवआभोगोयत्नोयस्य ॥

नवाम्बरम् । न । अनाहते । नवीन वस्त्रे ॥ नवञ्चतदम्बरञ्च ॥

नवार्च्चिः । पुं । मङ्गलग्रहे ॥ इति त्रिका ण्डशेषः ॥

नवाल्ली । स्त्री । नवमालिकायाम् ॥

नवाहः । पुं । न । नवतिथौ । नवदिने ॥ प्रतिपत्तिथौ ॥

नवीनः । त्रि । नव्ये । नूतने ॥ नव एव । नवस्यनप्तनप्खाश्चप्रत्ययाः नूरादेशश्च ॥

नवीयः । त्रि । नवतरे ॥

नवेदाः । पुं । अज्ञे ॥ नवेत्ति । विद०। असुन् ॥

नवोढा । स्त्री । नववध्वाम् । जन्याम् । नववरिकायाम् ॥ मुग्धानायिका भेदे ॥ यथा । वलान्नीतापार्श्वं मुखमनुमुखं नैवकुरुते धुनानामूर्द्धानं क्षिपति वदनं चुम्बनविधौ । हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना नवोढा वोढारं रमयतिच सन्तापयतिचेतिरसमञ्जरी ॥ नवानूतना चासौ ऊढाविवाहिताचेतिविग्रहः ॥

नवोद्धृतम् । न । नवनीते ॥ नवञ्चतत् उद्धृतञ्च । विशेषणमितिसमासः ॥

नव्यः । त्रि । नवीने । नूतने ॥ नूयते । णुस्तुतौ । अचोयत् ॥ पुं । रक्तपुनर्नवायाम् ॥

नक् । न । नशने ॥ णश० । भावेक्विप् । नश्यति कर्त्तरिवाक्विप् । षड्गकाः यथा विधिकर्त्तव्याः ॥

नशाकः । पुं । काकविशेषे ॥

नशिता । त्रि । नाशाश्रये ॥ नशेस्तृन् ॥

नश्यत्प्रसूतिका । स्त्री । मृतवत्सायाम् । मृतपुत्रिकायाम् ॥

नश्वरः । त्रि । अशाश्वते । नाशप्रतियोगिनि ॥ नश्यति तच्छीलः । णश० । इणनशजिसर्त्तिभ्यः क्वरप् ॥ टिड्ढेति ङीपि । नश्वरी ॥

नष्टः । त्रि । तिरोहिते । अदर्शन विशिष्टे ॥ नाशाश्रये ॥ नश्यतिस्म । णश अदर्शने । गत्यर्थेति कर्त्तरि क्तः ॥ भावक्तान्तादर्शआद्यच्वा ॥

नष्टचन्द्रः । पुं । सौरभाद्रस्योभयपक्षे चतुर्थ्यामुदितेचन्द्रे ॥ यथा । नष्टश्चन्द्रो न द्रष्टव्यः भाद्रेमासि सितासिते । चतुर्थ्यामुदितोऽशुद्धः प्रतिषिद्धोमनीषिभिः ॥ चन्द्रस्तारापथ रत्नं कलङ्क मतिदुष्करम् । तस्मै द

इति हेनन्द कामतो यदि पश्यति ॥ अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् । तदा शुद्धो भवेत् सद्यो निष्कलङ्की महीतले ॥ सिंहः प्रसेन मवधीत् सिंहो जाम्बवताहतः । सुकुमारक मारोदीः तव ह्येष स्यमन्तकः ॥ इति मन्त्रेणपूतञ्च जलंसाधुःपिबेद्ध्रुवम् ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

नष्टचेष्टता । स्त्री । प्रलये । शोकादिभिर्निष्पन्दनाशे । हर्षशोकादिभिः सकलचेष्टानाशे मूर्च्छापरपर्याये सात्विकभावे ॥ नष्टाचेष्टायस्य । तस्य भावः । तल् ॥

नष्टाग्निः । पुं । प्रमादादिना कारणान्तरशेनवा त्यक्तवैतानिके । वीरहणि ॥ नष्टोऽग्निर्यस्य ॥

नष्टाजीव्यः । त्रि । गतजीविकासाधने ॥

नष्टाप्तिसूत्रम् । न । लोप्त्रे । किञ्चित्सा सचौरनीतद्रव्ये ॥ इति हारावली ॥

नष्टेन्दुकला । स्त्री । कुह्नाम ॥ नष्टा इन्दुकलायस्याम् ॥

नसा । स्त्री । नासिकायाम् ॥ इतित्रिकाण्डशेषः ॥

नस्तः । पुं । नासिकायाम् ॥ इतिशब्दमाला ॥ न । नस्ये ॥ इति रत्नमाला ॥ पञ्चविधं नस्तकर्म यथा । प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा । शिरोविरेचनञ्चैव नस्तकर्मतु पञ्चधेति ॥

नस्ता । स्त्री । नासाकृतच्छिद्रे ॥

नस्तितः । पुं । नस्योतो । रज्जुनाऽऽस्यूतनासे गवादौ । नाथावैल इति भाषा ॥ नसनम् । णसकौटिल्ये । क्तः । नस्तं कृतमस्य । प्रातिपदिकाद्धात्वर्थे इतिणिच् । ततः कर्मणिक्तः ॥

नस्तोतः । पुं । नस्योते ॥ नस्यतेस्म । णास्य कर्मणि क्तः । नस्तयाउतः ॥

नस्यम् । न । नस्ते । नावणे । नासिकादेयचूर्णादौ ॥ यथा । सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारुच । मञ्जिष्ठाचिफला श्वेताशिरीषो रजनीद्वयम् ॥ प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् । नस्यमालेपनञ्चैवस्नानमुद्वर्त्तनं तथा ॥ अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् । भूतेभ्यश्च भयं हन्तिराजद्वारेचशासनमितिगारुडे १९९ अध्यायः ॥

नस्या । स्त्री । नासिकायाम् ॥ नासारज्ज्वाम् । नकेलइति नाथइतिच भाषा ॥ त्रि । नासिकायां भवे ॥ नासिकायां भवा । नासिकायै हिता वा । शरीरावयवाद्यत् । नस्नासिकाया यत्तसक्षुद्रेष्विति नसादेशः ॥

नस्तोतः । त्रि । नस्तिते । नासारज्जुयुक्तेहषादौ ॥ नस्यया नासारज्ज्वा युतः ॥

नह । अ । प्रश्न्यारम्भे ॥ नच इच ॥

नहि । अ । निषेधे ॥ नह्यति । बाहुवच्चने । इन् ॥

नहिकिम् । अ । निषेधे ॥

नहुषः । पुं । नागविशेषे ॥ सोमवंशभवेन्द्रपतिविशेषे ॥ सचपुरूरवसोज्येष्ठात्मजस्यायुषस्तनय इति पुराणम् ॥ न । तगरे ॥ नह्यति । बा ह० । पृ-नछिकबिन्ध्यउषच ॥

नहुषाख्यम् । न । तगरपुष्पे ॥

नहुषात्मजः । पुं । ययातिन्टपे ॥

ना । अ । निषेधे ॥ नह्यति । बाहुवच्चने । डा ॥

नाकः । पुं । स्वर्गे ॥ अकंदुःखम् नास्त्यकमस्मिन्निति नाकः । नभ्राण्नपादिति नलोपाभावः ॥ को ब्रह्मा तद्भावोनाकेतिवा ॥ न । ब्रह्मलोके ॥

नाकनाथः । पुं । इन्द्रे ॥

नाकनायकः । पुं । इन्द्रे ॥

नाकनायकपुरोहितः । पुं । वृहस्पतौ ॥

नाकपृष्ठः । पुं । स्वर्गे ॥

नाकी । पुं । सुरे । देवतायाम् ॥ नाकः स्वर्गोस्त्यस्य । इनिः ॥

नाकुः । पुं । मुनिविशेषे ॥ पृथ्वीधरे ॥ वल्मीके ॥ नञकति । अक० । बाहुलकादुः ॥ यद्वा । नम्यते भूरनेन । णम० । फलिपाटिनमिमनिजनाङ्गुकपटिनाकिधतश्चेत्युणादिसूत्रे नाकिरादेशस्य । इकारउच्चारणार्थः ॥

नाकुलः । पुं । नकुलपुत्रे ॥ त्रि । नकुलसम्बन्धिनि ॥ न । नकुलेश्वरीदेव्याः स्थाने ॥ स्वायम्भुव्यपिनाकुले ॥

नाकुली । स्त्री । कुक्कुटीकन्दे ॥ चविके ॥ रास्नायाम् ॥ नाई इति भाषाप्रसिद्धे कन्दविशेषे ॥ नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् । भोगिलूतावृश्चिकाखुविषज्वरक्रिमिव्रणान् ॥ यवतिक्तायाम् ॥ श्वेतकण्टकार्याम् ॥ नकुलानामियम् प्रियत्वात् । तस्येदमित्यण् । न आकुलत्वं यया वा ॥

नाचत्रः । पुं । मासविशेषे ॥ सचद्विविधः । सप्तविंशतिनचत्रात्मक एकः । यथा । सर्वचंपरिवर्त्तैश्चनाचत्रइहचोच्यते इति ॥ सर्वनचत्रभुक्त्यातु नाचत्रोमास इष्यते इतिच ॥ अस्य प्रयोजनम् । नचत्रसचाययनानि चेन्दोर्मासेन कुर्याद्भगणात्मकेन । स सप्तविंशतिनचत्रात्मकेन ॥ अन्यनच चेशनिभोगमधारयोगो मनोदुःखदानम् । यथोक्तं दीपिकायाम् । अन्य

न्यर्क्ष यदिस्थासौ वारौभौमशनैश्वरौ । स मासः कल्मषोनाम मनोदुःखप्रदायकः ॥ इति ॥ * ॥ द्वितीयः षष्टिदण्डात्मक नक्षत्र भोगकालरूपदिनत्रिंशदात्मकः । यथोक्तं सूर्य्यसिद्धान्ते । नाडीषष्ट्यातु नाक्षत्र महोरात्रं प्रचक्षते । तत्त्रिंशता भवेन् मासः सावनोर्कोदयैस्तथेति ॥ अस्य प्रयोजनमायुर्दशायाम् । यथा । आयुर्दायेस्मृतं प्राज्ञै र्नाक्षत्रं षष्टिनाडिकमिति ॥ त्रि । नक्षत्रसम्बन्धिनि ॥ तस्येदमित्यण् ॥

नाक्षत्रिकः । पुं । नाक्षत्रमासे ॥ नक्षत्रगणनेनैवनाक्षत्रिक उदाहृतः ॥ त्रि । नक्षत्रसम्बन्धिनि ॥

नाक्षत्रिकी । स्त्री । नक्षत्रदशायाम् ॥ कलौनाक्षत्रिकी दशेति ज्योतिषम् ॥

नागः । पुं । वासुक्यादिपन्नगे । काद्रवेये । वहुफणे सर्पे । मनुष्याकारे फणालाङ्गूलयुक्ते सर्पे ॥ मातङ्गे । हस्तिनि ॥ क्रूराचारिणि ॥ तोयदे । मेघे ॥ नागकेसरे ॥ पुन्नागे ॥ नागदन्तके ॥ मुस्तके ॥ देहानिलप्रभेदे ॥ उद्गारेनाग इत्युक्तोनीलजीमूतसन्निभः ॥ उत्तरस्थितः श्रेष्ठे ॥ नगे भवः । तत्रभवइत्यण् ॥ यद्वा । नगच्छति इति अगः । नअगः । सुप् सुपेति स° । नगनक्षत्रस्य न लोपः ॥ न । रङ्गे ॥ सीसके ॥ करणविशेषे ॥ अस्य जातस्य फलम् । नागोद्भवो नागधनाभिलाषी वक्रोक्तिजालोनितरांकुशीलः । क्रोधाग्निसन्तापितबन्धुवर्गो भर्गोपमः स्यात् किलरङ्गभूमौ ॥ रङ्गे सीसकेचपुंलिङ्गोपीति वैद्याः ॥ अस्योत्पत्तिर्यथा । दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु मुमोच यत् । वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो नृणाम् ॥ सीसं रङ्गमुखं चैयं विशेषान्मेहनाशनम् ॥ नागस्तु नागशततुल्यवलं ददाति व्याधिं विनाशयति जीवन मातनोति । वह्निं प्रदीपयति कामवलं करोति मृत्युञ्च नाशयति सन्ततसेवितः सः ॥ * ॥ तयोः पाकशोधनयोर्विधि यथा । पाकेनहीनौ किलवङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टान् । पाण्डुप्रमेहानलमान्द्यशोथभगन्दरादीन् कुरुतः प्रभुक्तौ ॥ * ॥ तयोर्मारणं यथा । अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् । मृत्पात्रे विद्रुतो नागो लौहदर्व्याच चालितः ॥ यामैकेन भवेद्भस्म तत्तुल्या स्यान्मनःशिला । काञ्जिकेन स्वयंपिष्ट्वा पचेद्दृढपुटेन च ॥ स्वाङ्गशीतं पुनः पिष्ट्वा शिलया

काञ्जिकेनच । पुनः पुटेच्चूराबाभ्या मेवंषड्भिः पुटैर्मृतिः ॥ * ॥ नागः सिन्दूरवर्णाभो म्रियते सर्वकार्यकृत् । सतिक्तमधुरो नागो मृतो भवति भस्मसात् ॥ आयुः कीर्त्तिं वीर्यवृद्धिं करोति सेवनात्सदा । रोगान् हन्तिमृतो नागो वह्निवर्द्धनकारकः ॥

नागकन्दः । पुं । हस्तिकन्दे ॥

नागकर्णः । पुं । रक्तैरण्डे ॥

नागकिञ्जल्कः । पुं । नागकेशरपुष्पे ॥

नागकुमारिका । स्त्री । गुडूच्याम् ॥ मञ्जिष्ठायाम् ॥

नागकेशरः । पुं । नागकेसरवृक्षे ॥

नागकेसरः । पुं । काञ्चनाह्वये । चाम्पेये । नागपुष्पे ॥ नागाख्यः केसरः ॥

नागगन्धा । स्त्री । नाकुलीकन्दे ॥

नागगर्भम् । न । सिन्दूरे ॥

नागच्छत्रा । स्त्री । नागदन्त्याम् ॥

नागजम् । न । सिन्दूरे ॥ रङ्गे ॥ त्रि । नागजाते ॥ नागाज्जातम् । जनी० डः ॥

नागजिह्वा । स्त्री । अनन्तमूलायाम् ॥ मनःशिलायाम् ॥ नागानांजिह्वेव ॥

नागजिह्विका । स्त्री । नागजिह्वार्थे ॥ स्वार्थेकः ॥

नागजीवनम् । न । वङ्गे ॥ इति हेमचन्द्रः ॥



नागदन्तः । पुं । हस्तिदन्ते ॥ गृहान्निर्गतदारुणि । खूंटीइति दाँतिया इति च भाषा ॥

नागदन्तकः । पुं । भित्तिस्थदारुणि । निर्यूहे ॥ नागदन्तएव । स्वा० कः ॥

नागदन्तिका । स्त्री । वृश्चिकाल्याम् । बिछिटी इति गौड भाषा ॥ राम दूत्याम् ॥

नागदन्ती । स्त्री । श्रीहस्तिन्याम् । हस्तिकर्णपलाशाम् । भूरुण्ड्याम् ॥ कुम्भाख्यभेषजे । नागफुल्लीति प्रसिद्धौषधौ ॥

नागदमनी । स्त्री । क्षुद्रक्षुपविशेषे । अम्लाम् । दुःसहायाम् । मलघ्न्याम् ॥

नागदलोपमम् । न । परूषफले । फालसा इति भाषा ॥

नागद्रुः । पुं । स्नुह्याम् । समन्तदुग्धायाम् ॥

नागद्वीपः । पुं । भारतवर्षस्थो पद्वीपविशेषे ॥

नागनामा । पुं । सीसके ॥

नागनिर्य्यूहः । पुं । नागदन्तके ॥

नागपत्रा । स्त्री । नागदमन्याम् ॥

नागपत्री । स्त्री । लक्ष्मणायामोषधौ ।

नागपदः । पुं । रतिबन्धविशेषे ॥ यथा । पादौ स्कन्धे तथा हस्ते क्षिपेल्लिङ्गं भगे लघु । कामयेत् कामुको नारीं

बन्धो नागपदो मतः ॥ इति रति० ॥

नागपाशः । पुं । स्त्रीणां करणे ॥ वरुणस्यायुधे ॥ ग्रन्थिविशेषे । साङ्कृद्वयावर्त्तनात्तु नागपाश इति स्मृतः ॥ ब्रह्मग्रन्थिमयोदण्डान्नागपाश मथापि वेत्त्यागमः ॥

नागपाशकः । पुं । रतिबन्धविशेषे । यथा । स्वजङ्घाद्वयमध्यस्थौ हस्ताभ्यां धारयेत् कुचौ । रमे त्रिःशङ्कितः कामी बन्धोयं नागपाशकः ॥ इति रतिमञ्जरी ॥

नागपुरम् । न । पाण्ड्यदेशे ऽनेन नाम्ना प्रसिद्धे नगरे । उरगपुरे ॥ हस्तिनापुरे ॥ वह्निपुराणोक्ते गङ्गावतरणप्रस्तावप्रसिद्धे देशविशेषे ॥

नागपुष्पः । पुं । पुन्नागवृक्षे ॥ नागकेसरे ॥ नागपुष्पः कषायोष्णो रूक्षो लघ्वामपाचनः । स्वरकण्ठूतृषाश्वासच्छर्द्दिहृल्लासनाशनः । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहः ॥ चम्पके ॥

नागपुष्पफला । स्त्री । कुष्माण्ड्याम् ॥

नागपुष्पिका । स्त्री । स्वर्णयूथ्याम् ॥

नागपुष्पी । स्त्री । गजपुष्प्यां लतायाम् ॥ नागिन्याम् ॥ नागदमन्याम् ॥

नागफलः । पुं । पटोले ॥

नागबन्धुः । पुं । अश्वत्थवृक्षे ॥ नागानाम् बान्धवे ॥

नागबलः । पुं । भीमसेने ॥ त्रि । हस्तितुल्यपराक्रमे ॥

नागबला । स्त्री । गाङ्गेरुक्याम् । गोरखचाकुलियाइतिगौडभाषा ॥ नागानां हस्तिनां बला ॥

नागभृत् । पुं । डुण्डुसर्पे ॥ इति त्रिकाण्डशेषः ॥

नागमल्लः । पुं । ऐरावते । शक्रगजे ॥

नागमाता । स्त्री । कद्रुाम् ॥ मनसादेव्याम् ॥ मनःशिलायाम् ॥

नागमारः । पुं । केशराजे । भृङ्गराजे ॥ त्रि । हस्तिमारके ॥

नागयष्टिः । स्त्री । पुष्करिण्यादिखातकाष्ठविशेषे । नागाख्यायाम् । रड्काठ इति गौड भाषा । आखन इति भाषा ॥

नागयष्टिका । स्त्री । खातस्थकाष्ठविशेषे । नागाख्यायाम् । आखन इति भाषा ॥

नागरः । पुं । देवरे ॥ नागरम् ॥ न । मुस्तके ॥ शुण्ठ्याम् ॥ रतबन्धे ॥ त्रि । विदग्धे ॥ नगरोद्भवे ॥ नगरेभवः । तत्रभवइत्यण् ॥ यद्वा । अगं राति । रा० । कः । न अगरः । नकारेण सुप्सुपेतिसमासः ॥

नागरकः । पुं । चौरे ॥ चित्रलेखका

दिश्विक्षिपनि ॥ नगरे भवः। नगरात्कुत्सनप्रावीण्ययोरिति वुञ् ॥ रतिबन्धविशेषे। यथा। अरुमूले परिक्षिप्त्वा योषिदूरुद्वयं यदि। ग्रीवां धृत्वा कराभ्यां च बन्धो नागरको मत इतिरतिमञ्जरी ॥

नागररक्तम्। न। सिन्दूरे ॥ नागस्य शोणिते ॥

नागरघनः। पुं। नागरमुस्तायाम् ॥

नागरङ्गः। पुं। जम्बीरविशेषे। ऐरावते। नारङ्गे। नरङ्गी इति भाषाप्रसिद्धे फलवृक्षे ॥ नागान् रञ्जयन्ति। रञ्ज०। हलश्चेतिघञ् ॥ नागस्य सिन्दूरस्येव रङ्गोऽस्येति वा ॥

नागरमुस्तकम्। न। भद्रमुस्तके ॥

नागरमुस्ता। स्त्री। मुस्ताप्रभेदे। चक्राङ्गायाम्। नादेय्याम्। चूडालाकाम्। नागरमोथा इतिभाषा ॥

नागराजः। पुं। अनन्ते। शेषे ॥ नागानां राजा। राजाहःसखिभ्यष्टच् ॥ पिङ्गलनागे ॥ ऐरावते ॥

नागराह्वम्। न। शुण्ठ्याम् ॥

नागरी। स्त्री। स्नुहीवृक्षे ॥ विदग्धनार्याम् ॥ नागरभार्यायाम् ॥

नागरीटः। पुं। नागरीगणैःकृतेमङ्गलशब्दे ॥ षिङ्गे ॥

नागरुकः। पुं। नागरङ्गे ॥

नागरेणुः। पुं। सिन्दूरे ॥

नागरेयकः। त्रि। नगर्यां भवादौ ॥ कत्र्यादित्वाट्ढकञ् ॥

नागलता। स्त्री। मेहने। शेफसि ॥ इतित्रिकाण्डशेषः ॥ ताम्बूल्याम् ॥

नागलोकः। पुं। पाताले ॥ नागानां लोकः ॥

नागवल्लरी। स्त्री। नागवल्ल्याम् ॥

नागवल्लिका। स्त्री। नागवल्ल्याम् ॥

नागवल्ली। स्त्री। ताम्बूल्याम्। पानकी बेल इतिभाषा ॥ नागलोकस्य वल्ली। ष०॥ इयञ्च श्रीवाटाम्लवाटादिनानाग्रामस्थस्थानभेदादेवभिन्ना। एकाप्येषा देशस्तत्तद्विशेषाच्च नानाकारं याति काये गुणेच। यथा। श्रीवाटीमधुरा तीक्ष्णा वातपित्तकफापहा। रसाढ्या च रसावद्या विपाके शिशिरास्मृता ॥ स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णामुखपाककर्त्री। विदाहपित्तास्रविकोपनीच विष्टम्भदा वातनिबर्हणीच ॥ सप्तमीमधुरा तीक्ष्णा कटु रुष्णाच पाचनी। गुल्मोदराध्मानहराऽरुचिकृद्दीपनीपरा ॥ * ॥ अन्यच्च। गुहागरेसप्तशिराप्रसिद्धा तत्पर्णचूर्णाति रसातिरुच्या। सुगन्धितीक्ष्णा मधुरातिहृद्या सन्दीपनीपुंस्त्वकराचब-

ल्या ॥ विरेचनीवक्त्रसुगन्धिकारिणीति ॥ * ॥ नागवल्ल्यास्तु सरा सुतीक्ष्णा मधुरा तिक्ताऽम्ला तथाहिमा दाहजनुत्पित्तप्रकोपकरा सुदीपनकरी वल्या मुखामोदिनी । स्त्रीसौभाग्यविवर्द्धिनी मदकरी श्रेयासदावल्लभा गुल्माध्मानविबन्धजिच्च कथिता सामान्यवेतुलिता ॥ अन्धिपुष्पलिकानामकषायोष्णाकटुस्तथा । मलापकर्षकफकृत्पित्तहृद्वातनाशिनी ॥ दैर्षिणीयाकटुस्तीक्ष्णाह्यादीर्घदलापरा । कफवातहराकट्याकटुदीपनपाचनीतिराजनिर्घण्टः ॥

नागवारिकः । पुं । राजकुञ्जरहस्तिपे ॥ गणस्यराज्ञे ॥ गरुडे ॥ चित्रमेखले । मयूरे ॥

नागवीटः । पुं । त्याङ्करा इति गौडभाषाप्रसिद्धे । टाङ्कुरे ॥ इति त्रिकाण्डशेषः ॥

नागवीथी । स्त्री । अश्विन्यादिनक्षत्रत्रयघटितग्रहस्थानत्रयान्तर्गतोत्तरस्थानस्थपथविशेषे ॥ यथा । सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः । स्थानंजारद्गवंमध्यं तथैरावतमुत्तरम् ॥ वैश्वानरंदक्षिणतोनिर्दिष्टमिहतत्त्वतः । तदेवमध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेणविधाभिद्यते । तथाहि । त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैः नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । तथा चोक्तम् । अश्विनी कृत्तिकायाम्या नागवीथीतिशब्दिता । इति विष्णुपुराणम् ॥ कश्यपापत्यविशेषे ॥

नागवृक्षः । पुं । नागकेसरे ॥

नागशुण्डी । स्त्री । डङ्गरीफले ॥

नागसम्भवम् । न । सिन्दूरे ॥ नागंसीसंसम्भवो ऽस्य ॥

नागसुगन्धा । स्त्री । भुजङ्गाख्याम् ॥

नागस्तोकम् । न । वत्सनाभे ॥

नागस्फोता । स्त्री । दन्त्याम् ॥ नागदन्त्याम् ॥

नागहनुः । पुं । नखनामगन्धद्रव्ये ॥

नागहन्त्री । स्त्री । वन्ध्याकर्कोटक्याम् ॥

नागाख्यः । पुं । नागकेसरे ॥ न । हस्तिनापुरे ॥

नागाङ्गना । स्त्री । नागपत्न्याम् ॥ नागयष्टौ ॥ इति मेदिनी ॥ द्विरदस्य करे ॥ इति हेमचन्द्रः ॥

नागाञ्चला । स्त्री । नागयष्ट्याम् ॥

नागाधिपः । पुं । अनन्ते ॥ हस्तिराजे ॥

नागाननः । पुं । श्रीगणेशे ॥ नागस्याननमस्य । समुदायशब्दा अवयवेपिवर्त्तन्त इति नागमुखपरो नागशब्दः ॥

नागान्तकः । पुं । गरुडे ॥ नागानामन्तकः ॥

नागारातिः । पुं । वन्ध्याकर्कोटक्याम् ॥

नागाह्वा । स्त्री । कुम्भतुम्ब्याम् ॥

नागाशनः । पुं । गरुडे ॥ नागान् अश्नाति । अश० । ल्युः ॥ नागा अशनं यस्येति वा ॥

नागाह्वम् । न । हस्तिनापुरे ॥

नागाह्वा । स्त्री । लक्ष्मणाकन्दे ॥

नागिनी । स्त्री । नागपुष्प्याम् ॥ नागदन्त्याम् ॥ नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तजित् । विनिहन्ति विषं शूलं योनिदोषवमिकृमीन् ॥

नागी । स्त्री । इभयोषायाम् । स्थूलायां गजयोषिति ॥ नागशब्दाज्जानपदेति स्थौल्येऽर्थे ङीष् ॥

नागोदम् । न । उदरत्राणे ॥ इति हेमचन्द्रः ॥

नागोदरम् । न । उरस्त्राणे ॥ इति हारावली

नाचिकेतः । पुं । अनले ॥ नचिकेतसाम्नाते वैदिकोपाख्यानविशेषे ॥

नाचिकेतुः । पुं । अग्नौ ॥ इति त्रिकाण्डशेषः ॥

नाटः । पुं । नृत्ये ॥ कर्नाट इति प्रसिद्धदेशे ॥

नाटकः । पुं । कामाख्यायां पर्वतविशेषे ॥ यथा । ऐशान्यां नाटके शैले शङ्करस्य महाश्रमम् । नित्यं वसति तत्रेशस्तदधीनात् पार्वतीति कालिकापुराणम् ॥

नाटकम् । न । महारूपके । गद्यपद्यप्राकृतभाषामये ग्रन्थविशेषे ॥ देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः । राजर्षिदर्शनान्तं वा तैर्पिदेवैः समन्ततः ॥ त्रि । नर्त्तके ॥ नाटयति । नाटेर्ण्वुल् ॥

नाटकशैलः । पुं । अद्रिविशेषे ॥ यथा । अस्ति नाटकशैले तु सरो मानससंनिभम् । यत्र सार्द्धं शैलपुत्र्या जलक्रीडां सदा हरः ॥ कुरुते नरशार्दूल स्वर्णपङ्कजशोभिते । तस्य पश्चान् मध्यपूर्वभागे भस्मसरित्स्वयम् ॥ अवतीर्णा प्रयात्येव दक्षिणं सागरं प्रति । इति कालिका पुराणे ८२ अध्यायः ॥

नाटकसन्धिः । पुं । मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यपञ्चभेदभिन्ने ॥ यथा । मुखं प्रतिमुखं चैव गर्भो विमर्श एव च । तथा निर्वहणञ्चेति नाटके पञ्चसन्धय इति ॥

नाटकीयम् । न । नाटकवर्णे ॥ नाटके भवम् । वृद्धाच्छः ॥

नाटाम्रः । पुं । तरम्बुजे । खातापनसे ॥

नाटारः। पुं। नटतनये॥ नटस्या प त्यम्। आंगुदीचामित्यारक्॥

नाटिका। स्त्री। नाटकविशेषे॥

नाटेयः। पुं। नव्याअपत्ये॥

नाटेरः। पुं। नटीसुते॥ इतिहेमचन्द्रः॥

नाट्यम्। न। तौर्यत्रिके। नृत्यगीतवाद्यात्मके॥ लास्ये। नर्त्तने॥ वाक्यार्थाभिनये॥ नटस्येदम्। छन्दोगौक्थिकेति ञ्यः॥ यो यस्य दयितोभावः स तं नाट्येनिरीक्षते। अतःसर्वमनोहारि नाट्यं कस्य नरञ्जकम्॥ अस्योत्पत्तिर्यथा। इदानुं श्रूयते ब्रह्माशक्रेणा र्थितः पुरा। चकाराकृष्य वेदेभ्योनाट्यवेदन्तु पञ्चमम्॥ उपवेदोथ वेदास्तु चत्वारः कथिताः स्मृतौ। तत्रोपवेदो गान्धर्वःशिवेनोक्तः स्वयम्भुवे॥ तेनापि भरतायोक्तस्तेन मर्त्ये प्रचारितः। शिवाज्ञयोनिभरता स्तस्मादस्य प्रयोजका इतिसङ्गीतदामोदरः॥ नटानाङ्कर्म। ष्यञ्॥

नाट्यधर्मिका। स्त्री। दर्शनार्थं शास्त्रोक्तनाट्ये॥ यथा। गीतवाद्यनृत्यत्रयं नाट्यं तौर्यत्रिकञ्चतत्। सङ्गीतं प्रेक्षणार्थे स्मिन् शास्त्रोक्ते नाट्यधर्मिकेति हेमचन्द्रः॥

नाट्यप्रियः। पुं। शिवे॥

नाट्यशाला। स्त्री। प्रासादद्वारसमीपगृहे। नाट्यमण्डप इतिभाषा॥ यथा। नाट्य शालाञ्च कर्त्तव्याद्वारदेशसमाश्रयेति गरुडपुराणम्॥

नाट्यालङ्कारः। पुं। सङ्गीतप्रसिद्धे अष्टषष्टिप्रकारे नाट्यभूषणहेतौ॥ स चप्रकारःसङ्गीतदामोदरादिभ्योज्ञातव्यः॥

नाट्योक्तिः। स्त्री। नाटकविषयकवचसि॥ नाट्येउक्तिः॥ सायथा। आर्येतिब्राह्मणे। महाराजेतिक्षत्रिये। हलेतिसखी। हण्डेइतिनीचे। हञ्जे इतिचेट्याम्। आर्यपुत्रेति स्वामिनि॥ राष्ट्रियेतिराजश्याले। हंहो इति समाने। देवेतिराजनि। भट्टेतिसार्वभौमे। आवुत्तेतिभगिनीपतौ। अज्जुका इतिगणिकायाम्। भाव इतिविदुषि। आवुक इतिजनके। युवराजेभर्त्तृदारक इतिच कुमारे। देवोभट्टारकइतिच राजनि। भर्त्तृदारिकेतिराजसुतायाम्। देवी इति कृताभिषेकायांनृपस्त्रियाम्। भट्टिनी इति इतरासुराज्ञीषु। अत्र ब्रह्मण्यमित्यवधोक्तौ। अम्बेतिमातरि। वाल्हःइतिवालायाम्। मारिष इति आर्ये। अत्तिकेतिज्येष्ठायां भ

गिन्याम् । निर्वृत्तमिति निष्ठायाम् ॥ इत्यमरः ॥

नाडिः । स्त्री । नाड्याम् ॥

नाडिकम् । न । कालशाके ॥ इतिभावप्रकाशः ॥

नाडिका । स्त्री । घटिकायाम् । घडी इतिभाषा ॥

नाडिकेलः । पुं । नारिकेले ॥

नाडिचीरम् । न । निर्वेष्टने । नली इतिगौडभाषा ॥ इतिशारावली ॥

नाडिन्धमः । पुं । स्वर्णकारे ॥ नाडीं-वंशनलीं धमति । ध्माशब्दाग्निसंयोगयोः । नाडीमुष्ट्योश्चेतिकर्मणि खश् । पाघ्रेतिधमादेशः । खित्यनव्ययस्येतिह्रस्वः ॥

नाडिन्धयः । पुं । नाडीपानकर्त्तरि ॥ नाडीं धयति । धेट्० । नाडीमुष्ट्योश्चेतिखश् । ह्रस्वः ॥

नाडिपचम् । न । नाडीचशाके ॥

नाडी । स्त्री । शिरायाम् ॥ तत्रकायनाडीत्रिविधा । तत्रैकावायुवहा । अन्या मूत्रविडस्थिरसवाहिनी । अपरा आहारवाहिनीतिकश्चिद्भरतः ॥ * ॥ अथनाडीक्रमः ॥ सार्द्धत्रिकोट्योनाड्यो हिस्थूलाःसूक्ष्माश्चदेहिनाम् । नाभिकन्दनिबद्धास्तास्तिर्यगूर्द्ध्वमधः स्थिताः ॥ द्विसप्ततिःसहस्राणि तासांस्थूलाःप्रकीर्त्तिताः । देहे धमन्योधन्यास्ताःपञ्चेन्द्रियगुणावहाः ॥ तासाञ्च सूक्ष्मशुषिराणि शतानिसप्तस्युस्तानियैरसकृदन्नरसंवहद्भिः । आप्याय्यते वपुरिदं हि नृणां ममीषा मम्भःस्रवद्भिरिवसिन्धुशतैःसमुद्रः ॥ आपादतःप्रततगात्र मशेषमेषा मामस्तकादपिच नाभिपुरःस्थितेन । एतन्मृदङ्गइवचर्मचयेननद्धं कायंनृणामिह शिराशतसप्तकेन ॥ * ॥ सप्तशतानां मध्येचतुरधिकाविंशतिः स्फुटास्तासाम् । एकापरीक्षणीया दक्षिणकरचरणविन्यस्ता ॥ चतुरधिकेतितदुक्तम् । तिर्यक्कूर्म्मोदेहिनां नाभिदेशे वामे वक्त्रं तस्यपुच्छञ्चयाम्ये । ऊर्द्ध्वभागेहस्तपादौच वामौ तस्याधस्तात् संस्थितौ दक्षिणौतौ ॥ वक्त्रे नाडीद्वयंतस्यपुच्छे नाडीद्वयंतथा । पञ्चपञ्चकरे पादे-वामदक्षिणभागयोः ॥ तासां मध्ये एकेति । एकस्या एव पादादूर्द्ध्वगमनात् दक्षिणेति प्राधान्यं पुरुषाश्रया । दुक्तम् । वामे भागे स्त्रियायोज्या नाडी पुंसस्तु दक्षिणे । इतिप्रोक्तो मयादेविसर्वदेहेषुदेहिनाम् ॥ * ॥ नपुंसकस्यतुस्त्रीपुंसयो रन्यतराकारप्रकटता मपेक्ष्य परीक्षा । साम्य-

नुनस्यादेव ।.कृत्रिमस्यतुप्रकृतिस्थ ता । चरणेति वामस्यतु दक्षिणग्र न्थिपश्चात्पार्श्वस्था । दक्षिणस्यतु वामग्रन्थिपश्चात्पार्श्वस्थैव सदुपदे शात् । करस्यात्वक्ष्यते ॥ * ॥ प रीक्षाप्रकारमाह । सव्येन रोग धृतिकूर्परभागभाजा पीड्याथ दक्षि णकराङ्गुलिकाचयेण । अङ्गुष्ठमूलम धि पश्चिमभागमध्ये नाडीं प्रभञ्ज नगतिं सततं परीक्षेत् ॥ सव्येन क रेण । रोगधृतिर्गदधारण मित्यर्था पीडने हेतुः । रोगाणां वातादि पि शुनवायूनां धारणं यथा स्यात् तथा पीड्येति कश्चित् । भागइति समुदि तकफोणिपरम् भाजेति परीक्षा कालेपि तत्र हस्तस्थितये । आपी- ड्येत्यर्थान् नाडीम् एतच्चापीडनं वा तादि पौर्वापर्य्यावबोधनाय । अथे त्या पीडनानन्तरम् नतु परीक्षा- कालेप्यापीडनस्थितिः । दक्षिणेति प्रायिकम् स्वपरीक्षाया मन्यथात्वा त् । एषेति योग्यतया तर्जनीमध्य मानामिकाग्रहणम् । पश्चिमेत्य ङ्गुष्ठस्याधोभागः । मूलेति तदुक्तम् । अङ्गुष्ठस्यतु मूलेया धमनी जीवसा क्षिणी । तस्यागतिवशाद्विद्यात् सु खं दुःखञ्च देहिनाम् ॥ प्रभञ्जनग

तिर्यग्वेति नाद्यन्तरनिरासः । सतत मिति सुस्थतादशायामपि । तदुक्त म् । भाविरोगाभिबोधाय सुस्थनाडी परीक्षणमिति ॥ * ॥ परीक्षणीय माह । वातं पित्तं कफं द्वन्द्वं सन्निपा तं तथैवच । साध्या साध्यविवेकञ्च सर्वं नाडी प्रकाशयेत् ॥ सन्निपात मिति सामान्यतः । साध्यासाध्यमि ति विशेषतश्चेत्यर्थः । सर्वमित्येत दन्यच्चरोगादिक मित्युपसंहारः ॥ इति नाडीप्रकाशे प्रथमोद्योतः ॥ * ॥ अथ नाडीज्ञानसमय माह । प्रातः कृतसमाचारः कृताचारपरिग्रहम् । सुखासीनः सुखासीनं परीक्षार्थ मुपाचरेत् ॥ प्रातरिति प्रायिकम् म ध्याह्ने उष्णता इत्युक्तेः ॥ * ॥ नि षिद्धकालमाह । सद्यः स्नातस्य भुक्त स्य क्षुत्तृष्णातपसेविनः । व्याया माक्रान्तदेहस्य सम्यङ् नाडीन बुध्य ते ॥ तैलाभ्यङ्गे च सुप्ते च तथा च भो जनान्तरे । तथा न ज्ञायते नाडी य था दुर्गतरा नदी ॥ सुप्ते निद्राकाले । भोजनान्तरे भोजनमध्ये भोजना वसानमात्रेच । वातमूर्च्छादिष्वणि करोगे नायंविधिः ॥ * ॥ अथ वाता दिस्वभावक्रममाह । आदौच वहते वातो मध्येपित्तं तथैवच । अन्तेच

वहते श्लेष्मा नाडिकाचयलक्षणम् ॥ आद्याविति। कफोशिपीडितदिती यश्च यो। नतु तर्जनीनिवेशस्थले स्था नभेदस्य कथाप्यवच्यमाणत्वात्. ॥ * ॥ सुस्थतासानार्थं माह। भत्तगमनप्राया स्वच्छा स्वास्थ्यमयीशिरा। ।प्रायेति बाहुल्येन। स्वच्छा परितो जाड्यरहिता। स्वास्थ्यमयी सुस्थता व्यञ्जिका च। तथा। प्रातःस्निग्धमयी नाडी मध्याह्ने चोष्णतान्विता। सायाह्ने धावमाना च चिराद्रोगविवर्जिता ॥ चिरादिति। अतीतानागतयो र्द्वयोरप्युक्तिः पथ्याशितानामेव ॥ * ॥ वातादीनां क्रमेण गतिमाह। वाताद्वक्रगता नाडी चपला पित्तवाहिनी। स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत् ॥ वक्रेति। वायोस्तिर्य्यग्गमनात् तिरो वहन्तीति। एवं तत्प्रकोपादिना वार्त्तादिगतिरपि ज्ञातव्या। चपलेति। वह्नेरूर्द्ध्वज्वलनादूर्द्ध्वं चञ्चला। स्थिरेति जलस्यनीचगमनादनुल्वणा। मिश्रितेमिश्रितचिह्नाभवति। तेन द्विदोषजेउभयचिह्ना। सर्वजे सर्वचिह्नेति। चपलतास्थिरतयोः समयभेदेनाविरोधः ॥ * ॥ उक्तवक्रादिसामान्यस्य विशेषमाह। सर्पजलौकादि गतिं वदन्ति विबुधाः प्रभञ्जनेन नाडीम्। पित्तेच काकलावकभेकादिगतिं विदुः सुधियः ॥ राजहंसमयूराणां पारावतकपोतयोः। कुक्कुटादिगतिं धत्ते धमनी कफसंवृता ॥ आदिना वाते वृश्चिकगति र्दीक्षायिता। आदिशब्देन पित्ते कलिङ्गकलविङ्कादिगतिः। कफे गजवराङ्गनादिगतिः ॥ * ॥ द्वन्द्वजस्यापि क्रमेणैव भेदानाह। मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा। वातपित्तद्वयोद्भूतां प्रवदन्ति विचक्षणाः ॥ भुजगादिगतिञ्चैव राजहंसगतिं धराम्। वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः॥ मण्डूकादिगतिं नाडीं मयूरादिगतिं तथा। पित्तश्लेष्मसमुद्भूतां प्रवदन्ति महाधियः ॥ * ॥ त्रिदोषजा माह। उरगादिलावकादिहंसादीनाञ्च बिभ्रती गमनम्। वातादीनाञ्च समं धमनीसन्धन्माधत्ते ॥ सममिति न्यूनाधिकता निरासः। क्रमगत्वात् नासाध्यत्वम्। तथा। लावतित्तिरिवर्त्तीकगमनं सन्निपाततः। कदाचिन्मन्दगा नाडी कदाचिच् छीघ्रगा भवेत् ॥ त्रिदोषप्रभवे रोगे विज्ञेया हि भिषग्वरैः। पित्तक्रमतया कृच्छ्रसाध्यत्व मसाध्यत्वञ्च ॥ * ॥ सा

मान्यत: सुखसाध्यत्व माह। यदा यं धातु माप्नोति तदा नाडी तथा गति:। तथाहि सुखसाध्यत्वं नाडीज्ञानेन बुध्यते॥ अयमर्थ:। अपराह्णादौ नाडी वातोल्बणा प्रथमं वातगत्यैव वहति ततो यथायथंपित्तादिगत्या नतु पित्तोल्बणात्वे वातादिगत्या तदासुखसाध्यत्वं व्यतिरेकेण व्यतिरेक:। तदुक्त मन्यै:। नाडी यथाकालगति स्त्रयाणां प्रकोपशान्त्यादिभिरेव भूय:॥ *॥ अथासध्यरूपमाह। मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलंवाहित्वा हित्वा वहतिधमनीयाति नाशञ्चसूक्ष्मा। नित्यंस्थानात्स्खलति पुनरप्यङ्गुलिं संस्पृशेद्वाभावैरेवंबहुविधविधै: सन्निपातादसाध्या॥ मन्दं मन्दं मुहुरनुद्भटमप्रखरमिति यावत्। शिथिले गति स्खलदितिरूपम्। व्याकुलेतिच स्तब्दितस्तत:। वाशब्द: समुच्चये। स्थित्वास्थित्वे त्यावृत्त्याचतद्रूपैवगति:। नाशमदर्शनम्। गच्छतिकदाचिन्नाडीस्पन्दोपिनसम्भाव्यत इत्यर्थ:। सूक्ष्मेति यदि लभ्यतेतदातथैवानित्यं प्राय:स्थानमङ्गुष्ठमूलंतस्मात्स्खलति कदापितत्र न स्पन्दतइत्यर्थ:। तदुक्तम्। इतिचस्थानविच्युतेति किञ्चित्स्फुरतीति कुत्रापि। पुनरपीति कियद्विलम्बेन ह्यङ्गुली मङ्गुलीमूलमेवमित्येवंरूपैर्बहुभिर्भावै धर्मै:। उक्तञ्चान्यत्र। महातापेपिशीतत्वं शीतत्वे तापिताशिरा। नानाविधगतिर्यस्यतस्यमृत्युर्नसंशय:॥ महेत्याशयाकृष्टपित्तादिकृततापनिरास:। शीतत्वद्रूपस्यचापि महेति सम्बध्यते। तथा। त्रिदोषे स्पन्दते नाडीमृत्युकालेपि निश्चला। निश्चला स्पन्दसामान्याभाववती। अतीसारादौहस्तपादादिस्वेदादिना स्पन्दोपलम्भात्॥ तथा। पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाविभ्रतीं सम्भ्रान्तभ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव। तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं नो साध्यां धमनीं वदन्ति सुधियो नाडीगतिज्ञानिन:॥ अयमर्थ:। पूर्वमितिक्रमविपर्यये पित्तादिगतिमतीं वारंवारमेवंक्रमेण चक्रोपरिभ्राम्यमाणामिव। तथातीव्रत्व मतिशयवेगम् एवञ्चकदाचिन्मयूरवद्गमनाम्। तयोस्तरोत्तरं कृशतरमापादयन्तीति विशिष्टो हेतु:। तथाचान्यत्र। यात्युच्चाच स्थिरास्यन्तायाचेयं सासत्राहिनी। याच

सूक्ष्माच वक्राच तामसार्थ्या वि दुर्बुधाः ॥ मन्युश्चा सहजतोप्युच्च तरा पृथगितोऽङ्गतावा। कदाचिदिति स्थिरा प्रणिधानेनैव गम्यमानस्पन्दा च। मांसवाहिनी मांसाहारद्दव ग तिमती लगुडप्रायेति। तदुक्तम्। मांसेन लगुडाकृतिः। मांसेनसमं वहतीति नयुक्तं तद्रूपपरिज्ञापकप्र कारस्यानुक्तत्वात्। इयमपिविशिष्ट वोधनाय। याचसूक्ष्माचवक्राचेति पृथगिववाक्यान्तरमिति ॥ * ॥ असा ध्यत्वापवादमाह। भारप्रवाहमूर्च्छा भयशोकप्रमुखकारणान्नाडी। सम्मू र्च्छितापिगाढं पुनरपिसाजीवितं ध त्ते ॥ चिरतरवहुलभारोद्वहनेनवा विषवेगधारावाहिरुधिरदर्शनादिज नितमूर्च्छयावा राक्षसादिसन्दर्शना दिभयेनवा पुत्रादिविरहजनितशो कातिरेकेणवा सम्मूर्च्छितापि अति निस्पन्दापि। गाढमिति सुतरां का र्श्यादियोगेपीत्यर्थः। पुनरितिसा ध्यतां यातीत्यर्थः। भाराणां रक्ता दीनां प्रवाहइति न युक्तम् भयशो कयोः पृथग्विधानात्। प्रमुखेत्यने न हेत्वन्तराभिधानम्। तदुक्तम्। पतितः सन्धितो भेदी नष्टशुक्रस्य योनरः। शाम्यते विस्मय स्तस्य न कि



ञ्चिन्मृत्युकारणम्॥ पतित उच्चादि तः सन्धितोऽस्थ्यादिसन्धानेन संहि तः। भेदी अतीसारवान्। नष्टशु क्रो यक्ष्मादिनातिरमणेनवा शुक्रक्ष यवान्। विस्मयोऽसाध्यत्वानुमानं शाम्यति नावतरति। कारणं प्रागुक्तं तत्तदेव। अन्यत्रापि। तथाभूताभि षङ्गेपित्रिदोषवदुपस्थिता। समाङ्गा वहते नाडी तथाच न क्रमंगता ॥ अपमृत्युर्नरोगाङ्गा नाडी ततसन्नि पातवत्। भूताभिषङ्गे तथा भूतसामा न्याभिषङ्गेच देवजुष्टादो नाडीस न्निपातधर्मशालिनीउपस्थिता। आ पाततएव भवति नतु तत्फलप्रदा। भेदमाह। समेति। वातपित्तकफ स्वभावक्रमवती तथाक्रमं व्यतिक्रमं नगता। तस्मादेव अपमृत्युः अपग ते। मृत्यु र्यस्याः सा तथा। परमा र्थतःसन्निपातवदपि सन्निपातजन्या न स्यादिति। तदुक्तम्। स्वस्थानहीने शोकेच हिमाक्रान्तेच निर्गदाः। भवन्ति निश्चला नाड्यो न किञ्चित् तत्र दूषणमिति ॥ स्वस्थानहीन उच्चादितः पतने। अङ्गुष्ठमूलत स्थु रण इति तत्यार्थः। निर्गदा इत्य सङ्गतिः निर्गदा अपिनिश्चला भव न्ति। दूषणमसाध्यत्वभ्रमः। अन्ये

स्याहुः। स्तोकं वातकफं जुष्टं पित्तं वहति दारुणम्। पित्तस्थानं विजानीयात् भेषजं तस्य कारयेदिति॥ अयमर्थः। वातकफाभ्यां नाडी किञ्चिद्वहति दुष्टं चीणत्वाधिकत्वाभ्यामपि विशेषा दुल्वणं पित्तं विषमवेगेन वहति तदातत् प्रतीकारार्थं भेषजं कुर्यात्। असाध्यतान स्यादिति यावत्। अनकश्चित्। स्वस्थानच्यवनं यावद्धमन्या नोपजायते। तावच्चिकित्सासत्त्वेपिनासाध्यत्वमितिस्थितिरिति॥ तच्चप्रायिकं बहुधाव्यभिचारदर्शनात्। हन्तिचस्थानविच्युतेत्यच चकारस्यायोगव्यवच्छेदकत्व मित्यर्थः॥ *॥ प्रसङ्गात् कालनिर्णयमाह। भूलता भुजगाकारा नाडीदेहस्य सङ्क्रमात्। विशीर्णा चीणतां याति मासान्ते मरणं भवेत्॥ कदाचित् मही लतावत् कृशा तन्नतिवदतिमसृणा वक्रगमनाच। कदाचित् सर्पवत् परिपुष्टा तन्नतिवत्लवत्सरवक्रगमनाचेति वैशिष्ट्येन मुख्यदशानो भेदः। इत्यञ्च कदाचिद्लच्यता मतिकृशताञ्च यदागच्छति। देहेति देहक्रम मपेच्य तेन देहोपि यदा स्थूलः शोथादिना कदाचिच्च कृशः स्या



त् तदाद्वितीयेमासिम्रियत इति। तथा। चणाद् गच्छति वेगेन शान्तां लभते चणात्। सप्ताहात् मरणं तस्य यद्यङ्गे शोथवर्जितः॥ चणादिति द्रुतं नतु कदाचिदिति। शान्तता मनुपलभ्यमानत्वम्। शोथेति तन्मात्रसम्बन्धे तुना चिरं मरणाय चिरमेवेत्यर्थः। तथा। हिमवद् विशदा नाडी ज्वरदाहेनतापिनाम्। त्रिदोषस्पर्शभजतां तदा मृत्युर्विनश्यात्॥ यदानिरन्तरं ज्वरदाहतापो शैत्यञ्च नाड्याः। त्रिदोषेति सन्निपातलच्चणसत्त्व एव भवति। तदा। निरीच्यादचिणे पादे तदाचैषाविशेषतः। मुखे नाडी वहेन्नित्यं ततस्तु दिनतुर्यकम्॥ गतिन्तुभ्रमरस्येव वहेदेकदिनेनतु। कन्देनस्पन्दते नित्यं पुनर्लगति चाङ्गुले॥ मध्ये द्वादशयामानां मृत्युर्भवति निश्चितम्॥ दचिण इतिपुंसः। स्त्रियास्तु वाम एव। तयेति कारस्थेव विशेषतो विशेषज्ञानार्थम्। यदिचोभयनाड्यपि मुखेपुरोभागे नित्यं सदा वहति तदा दिनचतुष्ट्यं प्राप्य भ्रमरस्य परिभ्रमणरूपं गमन मिव मुल एव यदिवहति तदेकदिनेन। कन्दे मूलेस्पन्दनस्थाने कदाचिन

न स्पन्दते स्वल्पं स्पन्दत इति सम्भाव्यते । नित्यं प्रायः पुनश्चाङ्गुल्यो तन्मूले कदापि लगति तदा तस्मादारभ्य द्वादशप्रहरमध्यएव मृत्युरिति । तथा । स्थित्वा नाडी मुखे यस्य विद्युद्द्योति दिवेच्यते । दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम् ॥ स्थित्वेत्या वृत्त्या स्थित्वा स्थित्वा विद्युत् स्फुरणमिवलक्ष्यते द्वितीय इत्यष्टप्रहरादूर्द्ध मित्यर्थः । तथा । स्वस्थानविच्युता नाडी यदा वहति वा नवा । ज्वालाच हृदये तीव्रा तदा ज्वालावधिस्थितिः ॥ न वेति स्थित्वा स्थित्वे त्यर्थः। इत्यष्ट यद साध्यलक्षण सुक्त मवस्थाना दपवा दविरहेसति तस्यार्थप्रवेशो यथा यथ मार्यमतिभिरवगन्तव्य इतिनेह प्रतन्यते ग्रन्थगौरवभयात् । मन्दं मन्दमिति अनेनच भूलतागमनाकारेति विरुध्यते तस्य तावत्कालिकमरणविषयत्वात्। सर्व मिदं सर्वरोग एव वेदितव्यं ज्वरमात्रेतु भ्रम एवेति ॥ * ॥ इतिनाडीप्रकाशे द्वितीयोद्योतः ॥ * ॥ अथरोगेषु निरूपणीयेषु प्रधानतया प्रथमं ज्वरनिरूपण माह । तत्र ज्वरपूर्वरूपे । अङ्गग्रहेण नाडीनां भवन्ति मन्थराः



श्रवाः । अत्रः प्रकृत्याता नि ज्वरदाहो मिभूतये ॥ सान्निपातिकरूपेण भवन्ति सर्ववेदनाः ॥ * ॥ ज्वररूपमाह । ज्वरकोपेच धमनी सोष्णा वेगवती भवेत् । उष्णा पि ।द्दते नास्ति ज्वरो नास्त्युष्णता विना ॥ उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते ॥ अन्यत्रच । ज्वरेच वक्राधावन्ती तथाच मरुतः भवे । रमणान्ते निशि प्रातस्तथा दीपशिखा यथा ॥ * ॥ तत्रापि विशेषमाह । सौम्यासूक्ष्मास्थिरामन्दा नाडी सहजवातजा । स्थूलाच कठिनाशीघ्रा स्पन्दते तीव्रमारुते ॥ द्रुताच तरला शीघ्रा दीर्घा पित्तज्वरे भवेत् । शीघ्र माहननं नाड्याः काठिन्याच्च चल तथा ॥ मन्दा जीर्णे नाततरां स्पन्दनञ्च प्रकीर्त्तितम् । नाडीतन्तुसमामन्दा शीतला श्लेष्मदोषजा ॥ * ॥ द्वन्द्वजमाह । चञ्चला तरला स्थूला कठिना वातपित्तजा । ईषच्च दृश्यते तृष्णामन्दा स्याच्छ्लेष्मवातजा ॥ निरन्तरं खरं रूक्षं मन्दश्लेष्मातिवातलम् । रूक्षवातभवे तस्य नाडी स्यात् पित्तसन्निभा ॥ सूक्ष्मा शीता स्थिरा नाडी पित्तश्लेष्मसमुद्भवा ॥ प्रसङ्गादाह । मध्येकरेवहेन्नाडी यदि सन्तापिता

ध्रुवम्। तदानूनं मनुष्यस्य रुधिरापूरिता मताः ॥ * ॥ आगन्तुकरूपभेदमाह। भूतज्वरे सेकद्रवातिवेगा धावन्ति नाड्यो हि यथाब्धिगामाः। तथा। एकाहिकेन क्वचन प्रदूरे च शान्तगामा विषमज्वरेण। द्वितीयके वापि तृतीयतुर्ये गच्छन्ति सद्या भ्रमिवत् क्रमेण ॥ * ॥ अन्यत्रापि। उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते। उद्वेगक्रोधकामेषु भयचिन्ताश्रमेषु च ॥ भवेत् क्षीणगति र्नाडी ज्ञातव्या वैद्यसत्तमैः ॥ प्रसङ्गादाह। व्यायामे भ्रमणे चैव चिन्तायां श्रमशोकतः। नानाप्रभावगमना शिरा गच्छति विज्वरे ॥ * ॥ अजीर्णरूपमाह। अजीर्णे तु भवेन् नाडी कठिना परितो जडा। प्रसन्ना च द्रुता शुद्धा त्वरिता च प्रवर्त्तते ॥ * ॥ तत्र विशेषमाह। पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेज्जडा। असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी ॥ * ॥ प्रसङ्गाद् भक्षणलक्षणमाह। पुष्टिस्तैलगुडाहारे मांसे च लगुडाकृतिः। क्षीरे च स्तिमिता वेगा मधुरे भेकवद्गतिः ॥ रम्भागुडवटाहारे रूक्षशुष्कादिभोजने। वातपित्तार्त्तिरूपेण नाडी वहति निष्क्रमम् ॥ * ॥ अथ रस



ज्ञानम्। मधुरे बर्हिगमना तिक्ते स्याद् भूलता गतिः। अम्ले कोष्णा प्लवगतिः कटुके भृङ्गसन्निभा ॥ कषाये कठिनाम्लाना लवणे सरला द्रुता। एवं द्वित्रिचतुर्योगे नाना धर्मवती धरा ॥ तथा। द्रवेऽतिकठिना नाडी कोमला कठिनाशने। द्रवद्रव्यस्य काठिन्ये कोमला कठिनापि च ॥ क्षौद्रे पृथग् ग्रन्थिलेवपिष्टे पुष्टेव जायते ॥ * ॥ अग्निमान्द्यधातुक्षयलक्षणमाह। मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा भवेत्। तदुक्तम्। क्षीणधातौ च मन्दाग्नौ नाडी क्षीणतमा ध्रुवम्। तथा। मन्देऽग्नौ क्षीणतां याति नाडी हंसाकृतिस्तथेति। अन्ये तु। आमाश्रमे पुष्टिविवर्द्धनेन भवन्ति नाड्योऽग्रभुजाभिवृत्ताः। आहारमान्द्यादुपवासतो वा तथैव नाड्यो भुजगाग्रमानाः ॥ * ॥ प्रसङ्गाद् दीप्ताग्निज्ञानमाह। लघ्वी भवति दीप्ताग्ने स्तथा वेगवती मता ॥ * ॥ प्रसङ्गाद् ग्रहणीमप्याह। पादे च हंसगमना करे मण्डूकसंप्लवा। तस्याग्ने मन्दता देहे त्वथवा ग्रहणीगदे ॥ तथा। भेदेन शान्ता ग्रहणीगदेन निर्वीर्यरूपा त्वतिसारभेदे। विलम्बिकायां प्लवगा कदाचिदामा

तिसारेपृथुता भवेच ॥ * ॥ अथ विसूचिकाज्ञानम् । निरोधे मूत्रवि कृतेर्विड्ग्रहे स्थिरताश्रिता: । विसूचिकाभिभूतेच भवन्ति भेकवत् क्रमा: ॥ * ॥ प्रसङ्गा दानाहमूत्रकृच्छ्रज्ञान माह । आनाहे मूत्रकृच्छ्रे च भवेन्नाडी गरिष्ठता ॥ * ॥ शूलज्ञान माह । वातेन शूलेन मरुत् प्रवेन सदैववक्रा हि शिरावहन्ती । ज्वालामयी पित्तविचेष्टितेन साध्या न शूलेनच पुष्टरूपा ॥ * ॥ अथप्रमेहज्ञानम् ॥ प्रमेहे ग्रन्थिरूपासा सुतप्ता त्वामदूषणे ॥ * ॥ विषविष्टम्भगुल्मज्ञानमाह । उत्पित्तु रूपा विषरिष्टिकायांविष्टम्भगुल्मेन च वक्ररूपा । अन्त्यर्धवातेन अध:-स्फुरन्ती उत्तानभेदिन्यसमासकाले ॥ * ॥ गुल्मे विशेष माह कश्चित् । गुल्मेन कम्पा ऽथ पराक्रमेण पारावतस्येव गतिञ्च करोति ॥ * ॥ अथ भगन्दरज्ञानम् । व्रणार्थं कठिने देहे प्रयात पैत्तिकं क्रमम् । भगन्दरानुरूपेण नाडीव्रणनिवेदने ॥ प्रयाति वातिकं रूपं नाडी पावकरूपिणी ॥ * ॥ अथ वान्त्यादिज्ञानम् । वान्तस्य शल्याभिहतस्य जन्तोर्वेगावरोधाकुलितस्य भूय: । गतिं



विधत्ते धमनी गजेन्द्रमरालमाने व कफोल्वणेन ॥ * ॥ स्त्रीरोगादिक मपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ॥ क्वचित् प्रकरणोल्लेखात् क्वचिद्दोषित्वमावत: । क्वचिद् देशात् क्वचित् कालात् सङ्कीर्णंगदनिर्णय: ॥ नाडीपरिचयज्ञानं प्रायशो नैव दृश्यते । तेन धाष्ट्र्येन् मया क्रं यत् तत् समाधेय मुत्तमै: ॥ * ॥ इतिशङ्करसेनकविराजकृतौ नाडीप्रकाशे तृतीयोद्योत: ॥ * ॥ * ॥ * ॥ अथ भावमिश्रोक्ता नाडी परीक्षा । पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्यतु । अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वर: ॥ अङ्गुलीभि स्तिसृभि र्नाडी मवहित: स्पृशेत् । तच्चेष्टया सुखं दु:खं जानीयात् कुशलो ऽखिलम् ॥ सद्य: स्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिन: । व्यायामश्रान्तदेहस्य सम्यङ् नाडी न बुध्यते ॥ वाते ऽधिके भवेन् नाडी प्रव्यक्ता तर्जनी तले । पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे ॥ तर्जनी मध्यमामध्ये वातपित्ते ऽधिके स्फुटा । अनामिकायां तर्ज्जन्यां व्यक्ता वातकफे भवेत् ॥ मध्यमानामिका मध्ये स्फुटा पित्तकफे ऽधिके । अङ्गुष्ठ

चितयेपि स्यात् प्रव्यक्ता सन्निपातिनः ॥ वाताद्वक्रगतिं नाडी पित्ताद्दुत्प्लुत्यगामिनी । कफान्मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता ॥ वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः । वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिकेत्वतः ॥ उत्प्लुत्य मन्दं चलति नाडी पित्तकफेऽधिके । कामात् क्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता ॥ स्थित्वास्थित्वाचलेद्या सा च हन्ति स्थानच्युता तथा । अतिक्षीणा च शीताच प्राणान् हन्ति न संशयः ॥ ज्वरकोपेन धमनी सोष्णा वेगवती भवेत् । मन्दाग्नेः क्षीणधातोश्च सैव मन्दतरा मता ॥ चपला क्षुधितस्य स्यात् तृप्तस्य भवति स्थिरा । सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता ॥ इति ॥ * ॥ * ॥ * ॥ प्रसङ्गाद्योगिनामुपकाराय इडादिनाडीनां निरूपणम् । दक्षिणांशः स्मृतः सूर्य्यो वामभागो निशाकरः । नाडीर्दश विदुस्तासु मुख्यास्तिस्रः प्रकीर्त्तिताः ॥ इडा वामे तनोर्मध्ये सुषुम्णा पिङ्गला परे । मध्या तास्वपि नाडी स्यादग्नीषोमस्वरूपिणी ॥ अथेडा वाममुष्काधः स्याद्धनुर्वक्रा वामनासापर्य्यन्तंगता । एवं पिङ्गला दक्षिणाण्डाधः स्याद्धनुर्वक्रा दक्षिणनासान्तंगता । पृष्ठवंशान्तर्गता सुषुम्णेत्यर्थः । इति सारदातिलकम् ॥ * ॥ नाडीनां संवहो देवि कन्दयोनिः खगाण्डवत् । तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥ कन्दस्य पद्मस्य योनिरुत्पत्तिस्थानं शालूकमिति यावत् ॥ प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः । इडा च पिङ्गला चैव सुषुम्णा च तृतीयिका ॥ गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी । अलम्बुषा कुहूश्चैव शङ्खिनी च दश स्मृताः ॥ एवं नाडीमयं चक्रं विज्ञेयं शक्तिचक्रके । इडायाः पिङ्गलायाश्च मध्ये या सा सुषुम्णिका ॥ इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका । रजोगुणा च वज्राख्या चित्रिणी सत्त्वसंयुता ॥ तमोगुणा ब्रह्मनाडी कार्य्यभेदक्रमेण चेति निरुत्तरतन्त्रे प्रथमः पटलः ॥ * ॥ इडापिङ्गलयोः स्वरूपं यथा । इडा च शङ्खचन्द्राभा तस्या वामे व्यवस्थिता । पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रितेति योगार्णवः ॥ इडायां संश्रितश्चन्द्रः पिङ्गलायां दिवाकर इति तन्त्रान्तरम् ॥ गुच्छस्य काण्डे । नाले ॥ व्रणान्तरे ॥ गण्डदूर्वायाम्

॥ कुहूनचर्य्यायाम् ॥ षट्चणकाले। घटिकायाम् । षष्टिपलात्मककाले ॥ तृणान्तरे ॥ वेष्टितसूचस्याधारभेदे ॥ नालयति नलत्यनेनवा। नलगन्धे। पचाद्यच्। हलश्चेति घञ् वा। डलयोरेकत्वम्। गौरादित्वात् ङीप् ॥ यद्वा। नाडयति नाड्यते वा। नडभ्रंशे। चुरादिः। अचद्दः। ङीष् ॥

नाडीकः। पुं। पट्टशाके। पटुआ इति भाषा ॥ नाडीकोरक्तपित्तघ्नो विष्टम्भी वातकोपन इतिभावप्रकाशः॥

नाडीकलापकः। पुं। सर्पाच्याम् ॥

नाडीकेलः। पुं। नारिकेले ॥ इतिशब्दरत्नावली ॥

नाडीचः। पुं। शाकविशेषे। केचुके। विश्वरोचने ॥ नाडीचशाकं द्विविधं तिक्तं मधुरमेवच। रक्तपित्तहरंतिक्तं कृमिकुष्ठविनाशनम् ॥ मधुरंपिच्छिलंशीतंविष्टम्भिकफवातकृत् ॥ इतिराजवल्लभः ॥

नाडीचक्रम्। न। नाभिमण्डलस्थेचक्रविशेषे ॥ नाभिमण्डलमासाद्यकुक्कुटाण्डमिवस्थितम्। नाडीचक्रमितिप्राहुस्तस्मान्नाड्यः समुद्गताः ॥

नाडीचरणः। पुं। खगे। पक्षिणि ॥

नाडीजङ्घः। पुं। काके ॥ ब्रह्मणोदयितेबकविशेषे ॥ मुनिविशेषे ॥

नाडीतरङ्गः। पुं। काकोले ॥ हिण्डके ॥ रतहिण्डके ॥ इतिमेदिनी ॥

नाडीतिक्तः। पुं। नेपालनिम्बे ॥

नाडीदेहः। पुं। भृङ्गिनाम्नि शिवस्य द्वारपाले ॥

नाडीनचत्रम्। न। जन्मनचत्रे ॥

नाडीविग्रहः। पुं। भृङ्गिणि। शिवद्वारपालविशेषे ॥

नाडीव्रणः। पुं। सद्यागलद्व्रणे। नाडीस्रवइति नासूर इतिचभाषा ॥ नाड्यांव्रणः ॥ विडङ्गत्रिफलाकृष्णाचूर्णंलीढंसमाचिकम्। हन्तिकुष्ठंकृमीन्मेहनाडीव्रणभगन्दरान् ॥ इतिगरुडपुराणम् ॥

नाडीशाकः। पुं। नाडीके ॥

नाडीस्वेहः। पुं। भृङ्गिणि। शिवद्वास्थे ॥

नाडीहिङ्गु। न। हिङ्गुप्रभेदे। पत्नाशाखे। रामठ्याम् ॥

नाणकः। त्रि। प्रशस्ते ॥ अणकःकुत्सितः ॥ तद्भिन्नः ॥ न। मुद्राचिह्नितनिष्कादौ ॥ यथा। तुलाशासनमानानां कूटकृन्नाणकस्यच। एभिश्चव्यवहर्त्तायः स दाप्योदण्डमुत्तममिति याज्ञवल्क्यः ॥

नातिमानिता। स्त्री। अतिमानित्वाभावे। पूज्येषु नम्रतायाम् ॥

नाथः। पुं। कुलगुरौ॥ कुलपरम्परागतस्वामिनि॥ नासारज्जौ॥ ऐश्वर्य्ययुक्ते। अधिपे। आर्य्ये। स्वामिनि॥ त्रि। प्रार्थनीये॥

नाथमानः। त्रि। उपतप्यमाने॥ याचमाने॥

नाथवान्। त्रि। परायत्ते। परतन्त्रे॥ नाथोऽस्यास्ति। तदस्यास्तीति मतुप्॥

नाथहरिः। पुं। पशौ॥ नाथं हरतीति विग्रहे हरतेर्दृतिनाथयोः पशाविति नाथकर्म्मोपपदाद्धरतेरिन् प्रत्ययः॥

नादः। पुं। ध्वनौ। शब्दे॥ वर्णे॥ अर्द्धेन्दौ। अर्द्धमात्रायाम्॥ खद०। घञ्॥ ब्रह्मस्वरूपे घोषविशेषे॥ यथा। सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः॥ नादो बिन्दुश्च बीजञ्च स एव त्रिविधो मतः। भिद्यमानात् पराद्बिन्दोरुभयात्मा रवोऽभवत्॥ स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत्परमिति॥ सकलात् मूर्त्तात्। नादो घोषः। बिन्दुः प्रणवः स च वाचश्च सर्ववर्णप्रभवत्वात्॥ *॥ नाभेरूर्द्धं हृदिस्थानान्मारुतः प्राणसंज्ञकः। नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः॥ अपि च। आकाशाग्निमरुज्जातो नाभेरूर्द्धं समुच्चरन्। मुखेऽभिव्यक्तिमायाति यः स नाद इतीरितः॥ स च प्राणिभवोऽप्राणिभवश्चोभयसम्भवः। आद्यः कायभवो वीणादिभवस्तु द्वितीयकः॥ तृतीयोऽपि च वंशादिभव इत्थं त्रिधा मतः। यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यो मतः॥ तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः। वह्निमारुतसंयोगान्नादः समुपजायते॥ न नादेन विना गीतं न नादेन विना स्वरः। न नादेन विना रागस्तस्मान्नादात्मकं जगत्॥ न नादेन विना ज्ञानं न नादेन विना शिवः॥ नादरूपं परं ज्योतिर्नादरूपी परं हरिः॥ इति सङ्गीतदामोदरः॥

नादेयम्। न। सैन्धवलवणे॥ सौवीराञ्जने॥ नदीनदसम्बन्धिजले॥ शैषिकेष्वर्थेषु नद्यादिभ्यो ढक्॥ नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम्। नादेयमुदकं रूक्षं वातलं लघु दीपनम्॥ अनभिष्यन्दि विशदं कटुकं कफपित्तनुत्॥ नद्यः शीघ्रवहा लघ्व्यः स्मृता याश्चामलोदकाः। गुर्व्व्यः शैवलसञ्छन्ना मन्दगाः कलुषाश्च याः॥ नदीसरस्तडागस्थकूपप्रस्र

वर्णादिषु । उदके देशभेदेन गुणा
न्दोषांश्चलक्षयेत् ॥ पुं । काशतृणे
॥ वानीरवृक्षे ॥ त्रि । नदीनदसम्ब
न्धिजलादौ ॥ नदीभवे ॥ अग्राह्ये ॥
अवश्यदेये ॥ यथा । नादेयंनादेयं
शरदि वसन्ते च नाऽऽदेयमिति । अ
स्यार्थः । नदीभवं नादेयं जलं शर
दि न अदेयम् । अपितु देयं दातव्य
मिति । वसन्ते च पुनस्तदेव नादेयं
नग्राह्यमिति ॥

नादेयिका । स्त्री । नादेय्याम् ॥ नादे
य्येव । स्वार्थेकः । ह्रस्वः ॥

नादेयी । स्त्री । नागरङ्गे ॥ जयायाम् ।
पताकाविशेषे । वैजयन्तिकायाम् ॥
अम्बुवेतसे ॥ भूमिजंबुाम् ॥ जवा
याम् ॥ व्यङ्गुष्ठे ॥ अग्निमन्थे ॥ काक
जंबुाम् ॥ नद्यांभवा । नद्यादिभ्यो
ढक् । टिड्ढेतिङीप् ॥

नाना । अ । विनार्थे ॥ नाना नारीं नि
ष्फला लोकयात्रेतियथा ॥ अनेका
र्थे ॥ यथा । नानाविधं देहभृतां स
माजम् ॥ उभयार्थे ॥ नेति नाना ।
विनञ्भ्यांनानाञौनसहेति नञो-
नाञ्प्रत्ययः ॥

नानाकन्दः । पुं । पिण्डालौ ॥ बहुविध
मूले ॥

नानात्वम् । न । अनेकभावे । द्वैतद
र्शने ॥ यथा । जीवात्मनो रनन्यत्वम
भेदेन प्रशस्यते । नानात्वं निन्द्यतेय
च्चतदेवंहि समञ्जसमिति गौडपा
दाः ॥ द्वैतंहि सर्व प्राणिसाधारणं स्वा
भाविकं शास्त्रबहिष्कृतैःकुतार्किकैर्वि
रचितं नानात्वंदर्शनं नतुतद्द्वितीय
मस्तीत्यादिश्रुत्यानिन्द्यते यावेद
बाह्याःस्मृतय इत्यादिस्मृत्याच ॥

नानाध्वनिः । पुं । वीणावेणुकाहलादि
शब्देषु ॥ इति हारावली ॥

नानाननः । त्रि । अनेकविधास्ये ॥ ना
नाप्रकाराणि आननानि यस्य ॥

नानारूपः । त्रि । बहुविधे । विविधे
। अनेकप्रकारे ॥ नाना रूपं यस्य ॥

नानार्थः । त्रि । अनेकार्थे ॥ भिन्नप्रयो
जने ॥

नानावर्णः । पुं । बहुविधशुक्लादिवर्णे ।
चित्रे । कर्वुरे ॥ त्रि । तद्वति ॥

नानावादानुरोधः । त्रि । भगवति परमे
श्वरे ॥ अस्ति नास्ति सर्वज्ञः अल्पज्ञः
बद्धःमुक्तः एकः अनेक इत्यादीन्
नानावादान् अनुरुणद्धि माययानुव
र्त्ततेय इतिव्याख्यानात् ॥

नानाविधः । त्रि । अनेकप्रकारे ॥ ना
नाविधा यस्यसः ॥

नानुष्ठेयः । त्रि । अकर्त्तव्ये । अननुष्ठेये ॥

नान्तरीयकम् । त्रि । अवश्यम्भाविनि ॥

यथा। प्रतिबन्धकाभावे नान्तरीयकी कार्योत्पत्तिः । अवश्यम्भाविनी-त्यर्थः ॥

नान्वम् । न । क्लीवे ॥ नमति अनेनवा । णम० । भ्रस्जिगमिनमीतिष्ट्रन् इति ष्ट्रन् ॥

नान्दी । स्त्री । समृद्धौ ॥ नाटकादौ मङ्गलश्लोके । मङ्गलपाठे ॥ यथोक्तंभरतादिभिः। आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्त्तते। देवद्विजनृपादीनां तस्मान्नान्दीति सास्मृता ॥ * ॥ नाटकेविघ्नविघातायादौनान्दीकार्या । यदाहभरतः। यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्त्तव्यानान्दीविघ्नप्रशान्तये ॥ देवद्विजनृपादीनामाशीर्वादपरायणा- । नन्दन्तिदेवतायस्मात्तस्मान्नान्दीप्रकीर्त्तिता ॥ अन्यच्च । देवद्विजनृपादीना माशीर्वन्दनपूर्विका । नान्दी कार्याबुधैर्यत्नान्नमस्कारेणसंयुता॥ गङ्गानागपतिः सोमः सुधानन्दाजयाशिषः । एभिर्नामपदैः कार्या नान्दी धाराभिरङ्किता ॥ प्रशस्तपदविन्यासा चन्द्रसङ्कीर्त्तनान्विता। आशीर्वादपरानान्दीयोज्येयं मङ्गलात्मिका ॥ काचिद्दशपदानान्दी काचिदष्टपदा तथा । सूत्रधारः पठेन्नान्दीं मध्यमस्वरमाश्रितः ॥ इतिमालतीमाधवटीका ॥

नान्दीकः । पुं । तोरणस्तम्भे ॥

नान्दीकरः । त्रि । नान्दीवादिनि । नान्दीपाठकारिणि ॥ नान्दी माशीर्ममस्तिक्रयादिरूपं मङ्गलं करोति वदति । दिवाविभेतिटः ॥ भेरी प्रायानान्दीतद्वादनशीले इति केचित् ॥ अपरदिकूश्नौवादनार्थो विश्याहुः ॥

नान्दीपटः । पुं । वीनाहे । कूपादीनां मुखबन्धने ॥ इतिहेमचन्द्रः ॥

नान्दीमुखः । पुं । कूपादिमुखबन्धने। नान्दीपटे ॥ वृद्धिश्राद्धभुजि पितृगणे ॥ यथा । नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृहीति विष्णुपुराणम् । सप्तगणाः पित्रादिचिकम् मातामहादिचिकञ्चेति ॥ न । वृद्धिश्राद्धे ॥

नान्दीमुखी । स्त्री । सामगेतरवृद्धिश्राद्धभुक्मातृगणे ॥ शर्करीछन्दोभेदे ॥ स्वरभिद्रियदिनौतौ चनान्दीमुखी गौ । यथा । सरसखगकुलालापनान्दीमुखीयं लहरिभुजलताचारुफेनस्मितश्रीः । मुरहरकलयासत्तिमासाद्यकिन्त प्रमुदितहृदया भानुजान्त्यतीव ॥

नान्दीवादी । त्रि। नान्दीश्लोकपाठकारिणि। नान्दीकरे ॥ नान्दीवदनशी

क्षः । सुपीतिवदेशिनिः ॥ नाटकादौ मङ्गलार्थं भेर्यादिवादके ॥

नापितः । पुं । नाई इतिख्याते वर्णसङ्करजातिविशेषे । अन्त्यावसायिनि । क्षुरिणि । पट्टिकायांकुवेरिणो जाते । इति प० प० ॥ शूद्रायां क्षत्रिया ज्जातोयमिति विवादार्णवसे तुः ॥

नापितशालिका । स्त्री । नापितशाखायाम् । खरकुट्याम् ॥

नाभकः । पुं । वनतिक्ते ॥

नाभागः । पुं । नभगात्मजे ॥ नभगस्यापत्यम् । अण् ॥

नाभिः । पुं । मुख्यन्पे । अग्नीध्रापत्ये ॥ चक्रमध्ये । रथचक्रस्यपिण्ड्याम् ॥ क्षत्रिये ॥ स्त्री । मृगमदे ॥ पुं । स्त्री । प्राण्यङ्गविशेषे । उदरावर्त्ते । तुन्दकूप्याम् ॥ सूंडीइति भाषा ॥ त्रि । प्रधाने । मुख्ये ॥ नह्यन्ते अराअत्र । णह० । नहोभश्चेति इञ् ॥ नभ्यते अनेन नभ्यते ऽनया ऽस्यां वा । णभ० । इञजादिभ्यः ॥ यद्वानाभयति । स्वार्थण्यन्तादृच्छइः ॥

नाभिकण्टकः । पुं । गर्भण्डे ॥ आवर्त्ते ॥ इतिशब्दरत्नावली ॥

नाभिका । स्त्री । कटभीवृक्षे ॥

नाभिगुडकः । पुं । गर्भण्डे । गोण्डे । फूलीसूंडीइतिटूंडीइतिचभाषा ॥

नाभिगोलकः । पुं । स्फीतनाभौ । नाभिकण्टके । गर्भण्डे ॥ नाभेर्गोलकः ॥

नाभिजः । पुं । ब्रह्मणि । कमलासने ॥

नाभिजन्मा । पुं । ब्रह्मणि । स्रष्टरि । विधातरि ॥ नाभौजन्मास्य ॥

नाभिनाला । स्त्री । अमरायाम् । नाभिसम्बन्धिन्यां नाड्याम् ॥

नाभिभूः । पुं । अब्जयोनौ । ब्रह्मणि ॥

नाभिवर्षः । पुं । भारतवर्षे ॥

नाभी । स्त्री । नाभौ ॥ मृगमदे ॥ कृदिकारादितिङीष् ॥

नाभीलम् । न । नार्या वङ्क्षणे ॥ नाभिगाम्भीर्ये ॥ कृच्छ्रे ॥ गर्भण्डे । नाभिगोलके ॥

नाभ्यम् । त्रि । नाभिहिते ॥ नाभयेहितम् । शरीरावयवाद्यत् । नाभिनभञ्चेतिनाभेर्नभादेशस्तु न भवति । तस्यगवादियतासन्नियोगशिष्टत्वेन रथनाभावेवप्रवृत्तेः ॥ नाभिसम्बन्धिनि ॥

नाम । अ । कोपे ॥ अभ्युपगमे ॥ विस्मये ॥ स्मरणे ॥ सम्भाव्ये । सम्भावनायाम् ॥ कुत्सायाम् ॥ प्राकाश्ये ॥ विकल्पे ॥ अलीके ॥ इत्येतदर्थे ॥ नामयति नाम्यते वा । णमप्रह्वत्वे । अन्येभ्योपीतिडः ॥

नामकरणम् । न । संस्कारविशेषे ॥

नाम्नःकरणम् । तच्चनाम शर्मवर्मा द्युपपदान्तत्वेनकर्त्तव्यम् । यथा । तत्तस्तुनामकुर्वीतपितैवदशमेऽहनि । देवपूर्वं नराख्यंहिशर्मवर्मादिसंयुतम् ॥ शर्म्मेतिब्राह्मणस्योक्तं वर्म्मेतिक्षत्रसंश्रयम् । गुप्तदासात्मकंनामप्रशस्तंवैश्यशूद्रयोः ॥ नार्थहीनंनचाशस्तंनापशब्दयुतंतथा । नामाङ्गल्यंजुगुप्स्यंवानामकुर्यात्समाक्षरम् ॥ नातिदीर्घंनातिह्रस्वं नातिगुर्वक्षरान्वितम् । सुखोच्चार्यांक्षरंनामकुर्यात्प्रवणाक्षरम् ॥ प्रवणाक्षरंलघूत्तराक्षरम् । इतिविष्णुपुराणम् ॥ *॥ अयुग्मकदान्तंतथास्त्रीणा मितिगोभिलः । अयुग्मक मयुगक्षरम् । दान्तं दकारान्तम् । यथा । यशोदाधनदेत्यादि ॥ *॥ भवमश्राभाष्यंयथा । दशम्यां पुत्रस्य । याज्ञिकाःपठन्ति-दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् तद्धिप्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरंवा नाम कृतं कुर्य्यान्न तद्धितमिति । नचान्तरेण व्याकरणं कृतस्तद्धिता वाशक्याविज्ञातु मिति॥ दशम्याउत्तरइतिपञ्चमीतियोगविभागात् समासः । ततःकालशब्देनबहुव्रीहिः । क्रियाविशेषणंचैतत् । दशदिनान्याशौचं भवतीतिदशम्युत्तरकालमित्युक्तम् । यदपिगृह्यकाराः पठन्ति दशम्यां पुत्रस्येति तैरपि दशम्यामितिसामीपिकमधिकरणं व्याख्येयम् । घोषवन्तो ये वर्णाःशिक्षायांप्रदर्शितास्तदादि । अन्तरन्तस्थमिति । मध्ये यरलवा यस्यतदित्यर्थः । त्रिपुरुषानूकमिति । नामकरणे योधिकारीपितातस्य ये त्रयःपुरुषास्ताननुकायत्यभिधत्तइतित्रिपुरुषानूकम् अन्येपामपिदृश्यतइतिदीर्घइतिकैयटः ॥ तच्च श्रीपूर्वकत्त्वंयथा । देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धंसिद्धाधिकारांश्चश्रीपूर्वंसमुदीरयेत् ॥ स्वर्गकामित्वादिनासिद्धोऽधिकारोयेषां नराणामित्यनेनजीवतां श्रीशब्दादित्वंनाम्नो न मृतानांतयेतिशिष्टाचारः ॥

नामद्वादशी । स्त्री । व्रतविशेषे ॥

नामधेयम् । न । नामनि ॥ नामैव । भागरूपनामभ्योधेयः इतिस्वार्थेधेयः ॥ नामधेयानाञ्च विधेयार्थपरिच्छेदकतयार्थवत्त्वम् । तथाहि । उद्भिदायजेतपशुकामइत्यत्रोद्भिच्छब्दोयागनामधेयम् । तेनचविधेयार्थपरिच्छेदःक्रियते ॥

नाम। न। आकाशादिदेहान्ते संज्ञाविशेषे। सत्त्वप्रधाने नामधेये। वाचकशब्दे। अख्यायाम्। आह्वायाम्। पर्य्याये॥ नम्यते ऽभिधीयते ऽर्थोनेन। णम०। नामन्सीमन्निति निपातितः॥ यद्वा। म्नायते। अभ्यस्यते। म्ना०। नामन्नित्यादिना निपातनान्म्लोपः॥ न नामग्रहणं कुर्य्यात्कृपणस्य गुरोस्तथा। भार्य्यायाश्चाभिशस्तस्य जनकस्य विशेषतः॥ आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः॥ नमन्त्याख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्त्या स्वादिविभक्त्यर्हे शब्दे॥ यथा। उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम्। शब्दानुकरणञ्चैव नाम पञ्चविधं स्मृतम्॥ सर्व्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ। सर्व्वान् कामानवाप्नोति समाराध्य जगद्गुरुम्॥ तन्मयत्वेन गोविन्दमित्येतद्वाल्भ्य नान्यथा। तन्मयो वाञ्छितान् कामान् यद्वाप्नोति मानवः॥ इति विष्णुधर्म्मवचनम्॥ चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत्। नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः इति पुराणम्॥ भगवन् सर्व्वधर्म्मज्ञ सर्व्वशास्त्रविशारद। कृत्वा ऽधर्म्मबहुले नराणां का गतिर्भवेत्। यद्यस्ति तदुपायो हि दयया तं वदस्व मे। इति जन्मेजयप्रश्ने व्यास उवाच। एक एव महाराज तत्रोपायोऽस्ति नापरः। सर्व्वदोषनिरासार्थं ध्यायेद्देवीपदाम्बुजम्॥ न सन्त्यघानि तावन्ति यावती शक्तिरस्ति हि। नाम्नि देव्याः पापदाहे तस्माद्भीतिः कुतो नृप॥ अवशेनापि यन्नाम लीलयोच्चारितं यदि। किं किं ददाति तज्ज्ञातुं समर्था न हरादयः॥ प्रायश्चित्तन्तु पापानां श्रीदेवीनामसंस्मृतिः। तस्मात्कलिभयाद्राजन् पुण्यक्षेत्रे वसन्नरः॥ निरन्तरं पराम्बाया नामसंस्मरणं चरेत्। छित्त्वा भित्त्वा च भूतानि हत्वा सर्व्वमिदं जगत्॥ देवीं नमति भक्त्या यो न स पापैर्विलिप्यते। रहस्यं सर्व्वशास्त्राणां मया राजन्नुदीरितम्॥ विमृश्यैतदशेषेण भज देवीपदाम्बुजम्। अजपां नाम गायत्रीं जपन्ति निखिला जनाः॥ महिमानं न जानन्ति मायाया वैभवं महत्। गायत्रीं ब्राह्मणाः सर्व्वे जपन्ति हृदयान्तरे॥ महिमानं न जानन्ति मायाया वैभवं महत्॥ एतत् सर्व्वं समाख्यातं यत् पृष्टन्तु त्वया नृप। युगधर्म्मव्यवस्थायां किं भूयः श्रोतुमिच्छसि॥ इति श्रीदेवीभागवते महापुराणे ६ स्क

न्ये ११ ध्यायः॥

नामयज्ञः । पुं । दीक्षितःसोमयाजी-त्याद्दिनाममात्रसम्पादके ऽध्वरे ॥ नाम्ने यज्ञः॥

नामशेषः । त्रि । मृते ॥ इतिहेमचन्द्रः ॥

नामापराधः । पुं । पाप्मोत्तरखण्डप्रसिद्धे साधुनिन्दादिरूपदुरदृष्टजनकव्यापारविशेषे ॥

नामापराधी । त्रि । नामापराधकृति ॥

नायः । पुं । नये । नीतौ ॥ नयनम् । णीञ्० । श्रिणीभुवो ऽनुपसर्गइतिघञ्० ॥ नयति । दुन्योरनुपसर्गइति णोवा ॥

नायकः । त्रि । नेतरि ॥ श्रेष्ठे । प्रधाने ॥ पुं । हारमध्यमणौ ॥ भर्त्तरि ॥ सेनापतौ ॥ शृङ्गारसाधके ॥ नयति । णीञ्० । ण्वुल् ॥

नायकाधिपः । पुं । नरेन्द्रे । राजनि ॥

नायिका । स्त्री । दुर्गायाउग्रचण्डाद्यष्टशक्तिषु ॥ शृङ्गाररसालम्बनविभावरूपायांनार्य्याम् ॥ कस्तूरीविशेषे ॥ यथा । चूर्णाकृतिस्सुखरिका तिलकातिलाभा कोलत्थवीजसदृशोचकुलत्थिकाख्या । स्थूलाततःकियदियं-किलपिण्डकाख्यात् तस्माञ्चकिञ्चिदधिकाधिवमायिकैषा ॥ इतिराजनि

घण्टः ॥

नारः । पुं । तर्णके ॥ नीरे । जले ॥ न । नराणां समूहे ॥ त्रि । परमात्मसम्बन्धिनि ॥ नरसम्बन्धिनि ॥ नरात्समूहे ऽण् ॥ नरस्यायम् । तस्येदमित्यण् ॥ मलमूत्रपुरीषास्थिनिर्गतंक्षयुचिस्मृतम् । नारंस्पृष्ट्वातुसचेलंसचेलोजलमाविशेदितिस्मृतिः॥

नारकः । पुं । नरके ॥ नरति नयाति वा । नॄ० । कृञादिभ्यःवुन् । ततः प्रज्ञाद्यण् ॥ त्रि । नरकस्थे ॥ नरकेभवः । तत्रभवइत्यण् ॥

नारकी । त्रि । नरकस्थे ॥ यथा । परेणविहितंकर्म स्वकर्मेतिवदेत्त्वयः । स उच्यतेब्रह्मघाती महानारकिनारकी ॥ इतिवृहद्धर्मपुराणम् ॥

नारकीटः । पुं । अश्मकीटे । कुक्करकीटे । इत्गोडइतिभाषा ॥ त्रि । स्वदत्ताशाविहन्तरि ॥ इतिमेदिनी ॥

नारङ्गः । पुं । पिप्पलीरसे । कारसे ॥ यमजप्राणिनि ॥ विटे ॥ नारङ्गीतिख्याते । नागरङ्गे ॥ नारङ्गं मधुराम्लंस्याद्रोचनंवातनाशनम् । अपरन्त्वम्लमत्युष्णंदुर्जरंवातकृत्सरम् ॥*॥ वपुदोंधकअरकलन्तरे ॥ यथा । नारङ्गकेसरमयाकृतवीजपूरं योऽश्नाति खण्डमरिचोत्कटचूर्णमिश्रम् । अश्नं गले

विशतितस्यनरस्य तूर्णं सङ्गृह्यमाण स्वराहुग्रहेण चन्द्रः ॥ नारङ्गन्तु परं रुच्यं सुगन्धमतिवारणम् । वातघ्नं कफलं किञ्चित् पित्तघ्नं विशदंस्मृतमिति ॥ न । गर्ज्जरे ॥

नारङ्गक्षीरिणी । स्त्री । क्षीरिकाप्रभेदे ॥ क्षिप्तानारङ्गमज्जां वै पचेत् सर्पिषि तापिते । तत्र खण्डं विनिःक्षिप्य पक्वं मन्दावतारयेत् ॥ शीतभूते विनिःक्षिप्य मात्रयार्द्धृश्रितं पयः । नारङ्गक्षीरिणी चैषा सुगन्धिसुरभीकृता ॥ विष्टम्भिनी हरेद्वातं पित्तघ्ना गुरुपाचिका ॥

नारङ्गवर्णकम् । न । गाजरे । गृञ्जने ॥

नारदः । पुं । देवर्षिप्रवरे । देवर्षीणां मध्ये भगवतो विभूतौ ॥ नरस्य धर्म्मम् । नराच्चेति वक्तव्यमिति अञ् । नारं ददाति । आतोऽनुपसर्गे कः ॥ नारं पानीयमित्युक्तं तत् पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यति इत्यागमः ॥ नारं नरसमूहं द्यति कलहेनेति वा । नुरिदं नारम् अज्ञानम् । तत् द्यति ज्ञानोपदेशेनेति वा । दो अवखण्डने । कः ॥ नराणां परमात्मसम्बन्धिनं परमात्मविषयकं ज्ञानं ददाति उपदिशतीति वा ॥ न । पञ्चविंशति सहस्रश्लोकात्मके महापुराणविशेषे ॥

नारदीयम् । न । उपपुराणविशेषे ॥ त्रि । नारदसम्बन्धिनि ॥

नारसिंहम् । न । उपपुराणविशेषे ॥ त्रि । नृसिंहसम्बन्धिनि ॥

नारसिंहवपुः । पुं । विष्णौ ॥ नरस्य सिंहस्य चावयवा यस्मिन् वपुषि सन्त्यन्ते तद्वपुर्यस्य सः । नरश्च सिंहश्च नरसिंहौ तयोरवयवाः अवयवेच प्राण्योषधिवृक्षेभ्य इत्यण् । नारसिंहा नरसिंहयोरवयवा अस्मिन् सन्तीत्यणन्तात् नारसिंहशब्दान्मत्वर्थीयोऽर्श आद्यच् । तथाच नारसिंहः नरसिंहावयववत् वपुर्यस्य सतथा ॥

नारा । स्त्री । जले । नीरे ॥ इतिशब्द० ॥

नाराचः । पुं । सर्वलोहमयेषौ । प्रक्ष्वेडने ॥ नरान् आचामति । चमु० । अन्येष्वपि डः । ततः प्रज्ञाद्यण् ॥ यद्वा । नराणां समूहो नारम् । नारम् आचामति । डः ॥ अम्बुहस्तिनि ॥ दुर्द्दिने ॥ * ॥ ध[illegible]प्रभेदे । इष्ट[illegible]नरचत्[illegible] नाराचम् उच्यते । यथा । दिनकालनयातटीकानने चारुसञ्चारिणी श्रवणनिकटकृष्टमेघेक्षणा कृष्णराधात्वयि । ननु-भ्रिकिरलिलेखनाराचमेषति इच्छेदनं तदिह मदनविभ्रमो ह्लान्तचित्ता

मवृत्त्वंद्रुतम् ॥

नाराचिका । स्त्री । नाराच्याम् ॥

नाराची । स्त्री । एषणिकायाम् । स्वर्णकारादीनां लौहतुलाविशेषे । कांटा इति नारजा इति च भाषा ॥ गौरादित्वात् ङीष् ॥ स्वल्पो नाराचो वाणभेदो नाराचीति कश्चित् ॥

नारायणः । पुं । अच्युते । भगवति । वासुदेवे ॥ निरुक्तिर्यथा । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति मनुः ॥ यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥ इति मन्त्रार्णः । नारायणाय नम इत्ययमुमेव सत्यं संसारघोरविषसंहरणाय मन्त्रम् । शृण्वन्तु भव्यमतयो यतयोऽस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्द्ध्वबाहुरिति नृसिंहपुराणम् ॥ शाब्दिकनिरुक्तिस्तु नाराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः । तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥ नराणां समूहो नारम् । तस्य समूह इत्यण् । तदयनमस्य । पूर्वपदादिति णत्वम् ॥ यद्वा । नराज्जाताः नाराः आपः । ता अयनं यस्य ॥ क्वचिन्मन्वन्तरे नरस्यर्षेरपत्यत्वमुपगत इति । नरस्यापत्यम् । नडादिभ्यः फक् इति नारायणः ॥ श्रीकृष्णे ॥ नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी । नारायणोऽङ्गं नरभूजलायनात् तच्चापि सत्यं न तवैव माया ॥ श्रीकृष्णस्य सेनाविशेषे ॥ धर्मपुत्त्रर्षिविशेषे ॥ सन्न्यासिनि । परिव्राजके ॥ दण्डग्रहणमात्रेण नरो नारायणो भवेदिति स्मृतेः ॥

नारायणक्षेत्रम् । न । गङ्गाप्रवाहावधिहस्तचतुष्टयमिते नारायणस्वामिके स्थाने ॥ यथा । प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचनेति ॥

नारायणतैलम् । न । औषधपक्वतैलविशेषे ॥ तत् त्रिविधम् । स्वल्पं बृहन्महच्चेति भेदात् ॥ यथा । विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकाः । प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा । एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥ पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् । शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ चन्दनं तगरं कुष्ठं एलापर्णीचतुष्टयम् । रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ एषां द्विपलिकान् भागान्

पेषयित्वाविनिः चिपेत् । शतावरी रसञ्चैव तैलतुल्यं प्रदापयेत् ॥ आजंवायद्विभागञ्चचीरं दत्त्वा चतुर्गुणम् । * । पाने वस्तौतथाभ्यङ्गे भोज्ये चैषप्रशस्यते ॥ अश्वोवावातसम्भग्नो गजोवायदिवानरः । पङ्गुः पीठसर्पीचतैलेनानेनसिध्यति ॥ अधोभागेचयेवाताः शिरोमध्यगताश्चये । दन्तशूलेहनुस्तम्भेमन्यास्तम्भेगलग्रहे ॥ यस्यशुष्यति चैकाङ्गंगतिर्यस्यच विह्वला । चीणेन्द्रियानष्टशुक्राज्वरचीणाश्चयेनराः ॥ वधिरालल्लजिह्वाश्च मन्दमेधसएवच । अल्पप्रजाचया नारीयाच गर्भंनविन्दति ॥ वातार्त्ता वृषणौयेषामन्त्रवृद्धिश्चदारुणा । एतत् तैलवरंतेषांनाम्नानारायणंस्मृतमितिस्वल्पनारायणतैलम् ॥ * ॥ शतावरीचांशुमतीपृश्निपर्णीशटीवला । एरण्डस्यचमूलानि वृहत्योः पूतिकस्यच ॥ गवेधुकस्य मूलानितथास हचरस्यच । एषांदशपलान् भागान् जलद्रोणे विपाचयेत् ॥ पादशेषं रसे पूते गर्भं चैनं समावपेत् । पुनर्नवावचादारुशताह्वाचन्दनागुरु ॥ शैलेयंतगरं कुष्ठमेलामांसी स्थिरावला । अश्वाह्वासैन्धवंरास्नापलाद्धींनि चपेषयेत् ॥ गव्याजपयसः प्रस्थौद्वौ



द्वावच प्रदापयेत् । शतावरीरसप्रस्थं तैलप्रस्थंविपाचयेत् ॥ * ॥ अस्य तैलस्य सिद्धस्य शृणुवीर्यमतः परम् । अश्वानांवातभग्नानां कुञ्जराणांतथानृणाम् ॥ तैलमेतत् प्रयोक्तव्यं सर्ववातनिवारणम् । आयुष्मांश्च नरः पीत्वानिश्चयेन दृढोभवेत् ॥ गर्भमश्वतरीविन्द्यात् किम्पुनर्मानुषी तथा । हृच्छूलंपार्श्वशूलञ्च तथैवाद्धीवभेदकम् ॥ अपचींगण्डमालाञ्च वातरक्तं हनुग्रहम् । कामलां पाण्डुरोगञ्चअश्मरीञ्चापिनाशयेत् ॥ तैलमेतद्भगवता विष्णुनापरिकीर्त्तितम् । नारायणमितिख्यातंवातान्तकरणं शुभमितिवृहन्नारायणतैलम् ॥ * ॥ विल्वाश्वगन्धावृहतीश्वदंष्ट्राश्योनाकवाट्यालकपारिभद्रम् । चुद्राकण्ठिल्लातिवलाग्निमन्थं मूलानिचैषां सरलायुतानाम् ॥ मूर्वंविदद्वादयपाटलीनां प्रत्येकमेषां प्रवदन्तितज्ज्ञाः ॥ सपादप्रस्थं विधिनोद्धृताश्चतो णे रपामष्टभिरेवपक्का ॥ पादावशेषेण रसेनतेन तैलाढकाभ्यां सममेवदुग्धम् । छागस्य मांसद्रवमेव तुल्यमेकचसम्यक्विपचेत्सुवुद्धिः ॥ दद्याद्रसञ्चैवशतावरीणां तैलेन तुल्यं पुनरेवतत्र । रास्नाश्वगन्धाद्रुमदारुका

छं पर्णीचतुष्कागुरुकेशराणि॥सिन्धूत्थमांसीरजनीद्वयच्च शैलेयकं चन्दनपुष्कराणि। एलासयष्टीतगराब्दपत्रम् भृङ्गाह्वयगोक्षुवचापलाशम्॥ स्थौणेयवृश्चीरकचोरकाख्यमेभिः-समस्तैर्द्विपलप्रमाणैः। कर्पूरकाश्मीरमृगाण्डजानां दद्यात् सुगन्धाय वदन्तिकेचित्॥ प्रस्वेददौर्गन्ध्यनिवारणार्थं चूर्णीकृतानांद्विपलप्रमाणम्। आलोड्यसम्यग्विधिवद्विपक्वंनारायणंनाम महच्चतैलम्॥*॥ सर्वैःप्रकारैर्विधिवत्प्रयोज्यमभ्यस्य पुंसां पवनार्दितानाम्। ये पङ्गवः पीठविसर्पणाश्च एकाङ्गशीर्णाहितवेपमानाः। बाधिर्यशुक्रक्षयपीडिताश्च मन्याहनुस्तम्भशिरोगदार्त्ताः। मुक्तामरास्ते बलवीर्ययुक्ताः संसेव्यतैलं सहसाभवन्ति॥ वन्ध्याचनारीलभतेच पुत्रंवीरोपमं सर्वगुणोपपन्नम्। शाखाश्रितेकोष्ठगतेचवाते वृद्धौविधेयं पवनार्दितानाम्॥जिह्वानिलेदन्तगतेचशूले ओन्मादकौब्जज्वरकर्षितानाम्। प्राप्नोति लक्ष्मीं प्रमदाप्रियत्वंजीवेच्चिरं चापिभवेद्युवेव॥देवासुरेयुद्धवरे समीक्ष्य क्षताव्रणश्चभग्नानसुरैः सुरांश्च।नारायणेना पिस्वहं कृपार्थं स्वनामतैलं विहितन्तुतेषाम्॥ इति सुखबोधे महानारायणतैलम्॥

नारायणप्रियः। पुं। शिवे॥

नारायणबलिः। पुं। मृतपतितादीनां प्रायश्चित्तात्मके कर्मविशेषे॥

नारायणस्थानम्। न। तीर्थविशेषे॥

नारायणाश्रमः। पुं। बदर्याश्रमे॥

नारायणास्त्रम्। न। विष्णोरस्त्रभेदे॥

नारायणी। स्त्री। लक्ष्म्याम्। श्रियि॥ उमायाम्। पार्वत्याम्। दुर्गायाम्॥ नारायणाज्जाता। नारायणस्य विष्णोःशक्तिः॥ यद्वा। नारस्य जीवराशेरयनी स्थानभूता तत्स्वरूपेत्यर्थः॥ अनायना नराधारा समुद्रशयनाऽपिया। नारायणीसमाख्याता नरनारीप्रवर्त्तिका॥ वसत्यष्टहासवैषुभूतेष्वन्तर्हितायतः। देव्या व्यासमिदंसर्वंजगत्स्थावरजङ्गममिति देवीपुराणम्॥ गङ्गायाम्॥ मुद्गलमुनेःपत्न्याम्॥ शतावर्याम्। अभीरौ॥

नारिकेरः। पुं। नारिकेरे॥ रलयोरभेदः॥

नारिकेलः। पुं। नारिकेरे॥ नलति नल्यते वा। णलगन्धे। बाहुलकादिण्। केनवायुना इलति चलति। इलगतौ। अच्। नारिश्चासौकेलश्

। रलयोरभेदः ॥

नारिकेलक्षीरी । स्त्री । क्षीरिकाप्रभेदे ॥ यथा । नारिकेलं तनूकृत्य-च्छिन्नं पयसि गोः क्षिपेत् । सिताग व्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥ नारिकेलोद्भवा क्षीरी स्निग्धा शीता ऽतिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहेतिभावप्रकाशः ॥

नारिकेलिः । पुं । स्त्री । } शिरःफले ।
नारिकेली । स्त्री । } सदापुष्पे । सदाफले ॥

नारी । स्त्री । स्त्रियाम् । योषिति । प्रतीपदर्शिन्याम् ॥ नृनरयोर्वृद्धिश्चेति शार्ङ्गरवादिगणपाठात् ङीन् जातिलक्षणङीषो ऽपवादो ङीन् तत्सन्नियोगेनवृद्धिश्च ॥ यद्वा । नुर्नरस्य वा धर्म्या । ऋतो ऽञिति नराच्चेति शार्ङ्गिकाञ् । ङीन् ॥ अस्यास्तत्सोजातयो भवन्ति । तथाहि । पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । चतस्रो जातयो नार्या रतौ ज्ञेया विशेषतइति रतिमञ्जरी ॥ मध्याख्यच्छन्दोभेदे । मोनरी ॥ यथा । गोपानां नारीभिः । श्लिष्टोष्यात् कृष्णो वः ॥ त्रिलघुनि [॥।] ॥

नारीकवचः । पुं । सूर्यवंशीयमूलकराजे । अश्मकपुत्रे ॥ यो ऽसौ निःक्षत्रे क्ष्मातले ऽस्मिन् क्रियमाणे विवस्त्राभिः स्त्रीभिः परिवार्य रक्षितः । ततस्तं नारीकवचमुदाहरन्तीति विष्णुपुराणे ४ अंशे ४ अध्यायः ॥

नारीकेलः । पुं । नालिकेरे ॥ इति शब्दचन्द्रिका ॥

नारीकेली । स्त्री । नारिकेले ॥ नारिकेलजमद्ये ॥

नारीचम् । न । नालिता इति गौडभाषाप्रसिद्धशाकविशेषे ॥ तस्य गुणाः । वहुजीरकान्विते सुस्वेदितं नारिचसंज्ञशाकम् । ससैन्धवं तक्रविलोड्य पाचितं सम्पादितं प्राकृतभाग्यकेन ॥ रुच्यं वातहरं वल्यं कफकृद्रोगनाशनम् । हृद्यं पित्तहरं किञ्चिच्छाकं नारीचसंज्ञकम् ॥

नारीतरङ्गः । पुं । } पिङ्गे । कामुके ॥
नारीतरङ्गकः । पुं । }

नारीदुग्धम् । न । स्त्रियाः क्षीरे ॥ नार्या लघु पयः शीतं दीपनं वातपित्तजित् । चक्षुःशूलाभिघातघ्नं नस्याश्च्योतनयोर्वरम् ॥

नारीदूषणम् । न । स्त्रीणां दोषोत्पादके ॥ यथा । पानं दुर्जनसंसर्गः पत्या च विरहो ऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट् ॥

नारीष्टा । स्त्री । मल्लिकायाम् ॥

नार्य्यङ्गः । पुं । नागरङ्गे ॥ न । नार्यो अङ्गे ॥

नालम् । न । काण्डे । नालायाम् । उत्पलादिदण्डे ॥ मृणाले ॥ नलति । णलबन्धे । ज्वलितीतिणः ॥

नालः । पुं । नले । जलनिर्गमे ॥ यतः । प्रणालः ॥ काण्ठे ॥ पद्मादिवृन्दे ॥ नलत्यनेन नालयति वा । णलगन्धे । हलश्चेतिघञ्जा ॥

नालवंशः । पुं । नले ॥

नाला । स्त्री । नाले । अब्जादिदण्डे ॥ नलति । णल० । ज्वलितिकसन्तेभ्योणः ॥

नालिः । स्त्री । नाड्याम् । शिरायाम् ॥ पद्मादिदण्डे । शाकविशेषे ॥

नालिकः । पुं । महिषे ॥ न । पद्मे ॥

नालिका । स्त्री । नालिताभेदे । श्वेतकलंव्याम् ॥ पद्मादिनाले ॥ चर्मकषायाम् । हस्तिनः कर्णवेधन्याम् ॥ नाले ॥ काले ॥ चुल्लिरन्ध्रे ॥ विवरे ॥ वेणुभाजने ॥ नाड्याम् ॥

नालिकेरः । पुं । नारिकेले । नालियर इतिभाषा प्रसिद्धे ॥ नालिकेरफलं शीतं दुर्ज्जरं वस्तिशोधनम् । विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत् ॥ विशेषतः कोमलनालिकेरं निहन्ति पित्तज्वरपित्तदोषान् । तद्देवजीर्णं गुरुपित्तकारिविदाहि विष्टम्भिमतं भिषग्भिः ॥ तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु । पिपासापित्तजित् स्वादुवस्तिशुद्धिकरं परम् ॥ * ॥ नालिकेरस्य तालस्य खर्जूरस्यशिरांसितु । कषायस्निग्धमधुरबृंहणानिगुरूणिच ॥ * ॥ प्रथमवयसि दत्तं तोयमल्पं पिबन्तः शिरसि निहितभारा नालिकेरा नराणाम् । सलिलममृतकल्पं दद्यु राजीवनान्तं नहि कृतमुपकारं साधवो विस्मरन्ति ॥ अस्यपाको यथा । कुडवं नालिकेरस्य सूक्ष्मं दृषदि पेषितम् । गुडखण्डस्य कुडवं गव्यक्षीरे चतुर्गुणे ॥ आलोड्यनालिकेरस्यजलेमृदग्निनापचेत् । धान्यकं पिप्पलीं शुण्ठींचातुर्जातंसुचूर्णितम् ॥ शाणप्रमाणंप्रत्येकं शीतीभूतेचिपेद्बुधः । नालिकेरस्यखण्डोयंपुंस्त्वनिद्राबलप्रदः ॥ अम्लपित्तं वयंकासंशूलंचपरिणामजम् । नाशयेद्रक्तपित्तञ्चशुष्कंदावानलो यथा ॥ अत्रघृतपलेनकुष्माण्डवन्नालिकेरस्य भर्जनंविधेयमिति ॥ बालस्य नालिकेरस्यजलं प्रायोविरेचनमितिवल्लभः ॥ नलति नल्यते वा । णल० । बाहुलकात्दरण् । केन वायुना ईर्य्यते । ईर० । घञ् । नालिश्चासौ

केरश्च ॥

नालिकेरकः । पुं । नालिकेरे ॥

नालिकेरक्षीरिका । स्त्री । नारिकेल क्षीर्याम् ॥

नालिता । स्त्री । पट्टशाके । नारीचे ॥

नाली । स्त्री । शाककडम्बे । इगुल इ तिभाषा ॥ स्वतःप्रसिद्धशाकविशेषे ॥ नालेन रहिता नाली सुस्विन्ना मुष्टिपीडिता । घृते तप्ते परिक्षिप्ता चिञ्चिणीपत्रसंयुता ॥ नाली सरा लघुः शीता पित्तनुत् कफवातला । ब्रह्मलोककरी ज्ञेया लिप्ता शोथघ्निका मता ॥ हस्तिकर्णवेधन्याम् ॥ घट्याम् ॥ पद्मे ॥ पद्मदण्डे ॥ प्रणाल्याम् ॥ वाद्यविशेषे ॥ नलति अनया वा । णल० । हलश्चेतिघञ् ॥ नालयति वा । पचाद्यच् । गौरादित्वान् ङीष् ॥

नालीकः । पुं । अङ्गे ॥ शरे ॥ शल्ये ॥ मुखमात्रायःसंयुक्तेशरे ॥ न । अब्जषण्डे ॥

नालीकिनी । स्त्री । पद्मसमूहे । पद्मिन्याम् ॥ नालीकानि सन्त्यास्याम् । पुष्करादित्वादिनिः ॥

नालीघटी । स्त्री । दण्डबोधिवाद्यप्रभेदे ॥

नालीव्रणः । पुं । नाडीव्रणे ॥

नावनम् । न । नस्ये । नासाग्राह्यौषधे ॥

नावयज्ञिकः । पुं । कालविशेषे ॥ नवयज्ञोऽस्मिन् वर्त्तते । तदस्मिन्नन्नं प्राय इत्यत्र वर्त्तते इत्युपसङ्ख्यानाट्ठञ् ॥

नाविकः । पुं । कर्णधारे । नौपृष्ठदण्डधारके ॥ नावा तरति । नौद्व्यचष्ठन् ॥ नौरस्त्यस्य वा । व्रीह्यादित्वाट्ठन् ॥

नावी । त्रि । नौमति ॥ नौरस्त्यस्य । व्रीह्यादित्वादिनिः ॥

नाव्यम् । त्रि । नौतार्यदेशे ॥ न । नौतरणयोग्यजले ॥ नावा तार्यम् । नौवयोधर्मेत्यादिनायत् । वान्तोयीत्यवादेशः ॥

नाशः । पुं । पलायने ॥ निधने ॥ अनुपलम्भे । अदर्शने ॥ परिध्वस्तौ ॥ नशनम् । णश० । घञ् ॥ कुलनाशकारणं यथा । अन्नतात् पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् । अश्रौतधर्माचरणात् क्षिप्रं नश्यति वै कुलम् ॥ अश्रोत्रियेवेदानात् वृषलेषु तथैव च । विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥ इतिकूर्मपुराणम् ॥ यावच्च वेदधर्माः स्युर्यावत् स्याच्छङ्करार्चनम् । यावत्स्याच्छुचिकृत्यश्च तावन्नाशो भवेन्नहि ॥

नाशनः । त्रि । नाशकर्त्तरि ॥ नाशय

ति । णश० । ल्युः ॥

नाशी । त्रि । नाशविशिष्टे ॥

नासत्यौ । पुं । अश्विनीकुमारयोः ॥ न सत्यं ययोस्ता वसत्यौ । न असत्यौ । नञ्राण्नपादिति नञः प्रकृतिभावः ॥ * ॥ संज्ञा च सूर्यस्त्री उत्तरकुरौ धृताश्वरूपा तपश्चचारासीत् सूर्योपि तत्सङ्गमेच्छुरश्वरूपी स समीपमगात् । स च तयान्यपुरुषधिया निरस्तः सन् तन्नासापुटेरेतोऽभ्यषिञ्चत् । स च तौ जातावित्युपाऽऽख्यायते । नासात्यक्तावन्तौ नासत्यौ । अन्येष्वपीति डः । ङ्यापोरिति ह्रस्वत्वमिति वा ॥

नासा । स्त्री । नासिकायाम् ॥ नासते । णास्टशब्दे । गुरोश्चेत्यः ॥ नासतेऽनयावा । अच् । हलश्चेति घञ्वा ॥ अस्याः शुभाशुभलक्षणं यथा । शुकनासः सुखी स्याच्च शुष्कनासेतिजीवनम् । छिन्नाग्ररूपनासः स्यादगम्यागमनेरतः ॥ दीर्घनासे च सौभाग्यं चौरश्चाकुञ्चितेंद्रियः । स्त्रीमृत्युश्चिपिटनासः ऋजुर्भाग्यवतांभवेत् ॥ अल्पच्छिद्रा सुपुटा च अवक्रा च नृपेश्वरे । क्रूरेदक्षिणवक्रास्या ह्यनिनां च चुतंसकूतं इति गरुडपुराणम् ॥ द्वारोर्द्ध्वस्थितदारुणि । स्तम्भद्वारस्थकाष्ठे । उपरिभित्तिधारककाष्ठे ॥ वासकवृक्षे ॥

नासाछिन्नी । स्त्री । पूर्णिकापक्षिणि ॥

नासादारु । न । द्वारोर्द्ध्वस्थितकाष्ठे । 'आनकाठ इति कपालि इति च गौडभाषा ॥

नासायोनिः । पुं । सौगन्धिकाख्यक्लीबे ॥

नासालुः । पुं । कट्फलवृक्षे ॥

नासासंवेदनः । पुं । काण्डीरलतायाम् ॥

नासास्रावः । पुं । पीनसे ॥

नासिकन्धमः । त्रि । नासिकां शब्दायमानायः करोति तत्र ॥ नासिकयाशब्दकर्त्तरि ॥ नासिकां धमति । नासिकास्तनयोर्ध्माधेटोरिति खश् । मुम् । खित्यनव्ययस्येति ह्रस्वः ॥

नासिकन्धयः । त्रि । नासिकया पानकर्त्तरि ॥ नासिकां धयति । धेट् पाने । नासिकास्तनयोरिति खश् । मुम् । ह्रस्वः ॥

नासिका । स्त्री । नासायाम् । गन्धवहायाम् । घ्राणेन्द्रिये । नाक इति भाषा ॥ नासते । णास्ट० । ण्वुल् ॥

नासिकामलम् । न । नासास्थितमले । शिङ्घाणे । सिणक इति रेंट इति च भाषा ॥

नासिकाशब्दः । पुं । घोतकारे । घराडू इति भाषा ॥ यथा । श्रयानं रावणं दृष्ट्वा तल्पे महति वानरः । नासा

पूर्वैस्तु घोतकारै विंशद्भिर्वायुसेवकै रितिनारसिंहपुराणे ४५ अध्यायः॥

नासिक्यम्। न। नासिकायाम्॥ त्रि। नासायांभवे॥ शरीरावयवाद्यत्॥

नासिक्यौ। पुं। अश्विनीकुमारयोः॥

नासिक्यकम्। न। नासिकायाम्॥

नासीरम्। न। नायकाग्यके। नायकस्याग्रेसारिकायां सेनायाम्॥ सेनामुखे॥ पुं। अग्रेसरे॥

नास्ति। अ। अस्तित्वाभाववति। अविद्यमानतायाम्। नहिं इति भाषा॥ यथा। अतिथिर्बालकश्चैव राजा भार्यातथैवच। अस्तिनास्तिनजानन्ति देहिदेहि पुनःपुनः॥ इतिचाणक्यम्॥

नास्तिकः। पुं। ईश्वरनास्तित्ववादिनि पाषण्डे। वेदाप्रामाण्यवादिनि। नास्तिपरलोक इतिमतिविशिष्टे। लौकायतिके। वार्हस्पत्ये॥ सचषड्विधः। माध्यमिकः योगाचारः सौत्रान्तिकः वैभाषिकः चार्वाकः दिगम्बरश्चेति भेदात्॥ नास्ति परलोकः इतिमतिरस्य। अस्तिनास्तिदिष्टं मतिरिति नास्तीतिनिपातात् वचनसामर्थ्यान्नास्तीतिनिपाताख्यातसमुदायाद्वा ठक्॥ यद्वा। नास्ति यज्ञफलम् नास्तिच परलोकः इत्येवंकायति। कैशब्दे। डः॥

नास्तिकता। स्त्री। मिथ्यादृष्ट्याम्। परलोकमृषाबुद्धौ। कर्मफलापवादकज्ञाने॥ नास्तिकस्य भावः। तल्॥

नास्तिकवृत्तिः। त्रि। नास्तिपरलोक इति प्रवर्त्तके॥

नास्तिक्यम्। न। शास्त्रीय फलवत्कर्मसु फलाभावबुद्धौ॥ नास्तिकस्य कर्म भावोवा। पुरोहितादित्वात् यक्॥

नास्तिदः। पुं। आम्रवृक्षे॥ इतिशब्दचन्द्रिका॥

नास्यम्। त्रि। वलीवर्दादिनासासम्बन्धिन्यां रज्जौ। नाँथइति भाषा॥ नासायांभवम्। शरीरावयवाद्यत्॥

नाहः। पुं। बन्धने॥ कूटे॥

नाहलः। पुं। म्लेच्छजात्यन्तरे॥ इति हेमचन्द्रः॥

नाहुषिः। पुं। ययातिभूपतौ॥ नहुषस्य अपत्यम्। अतइञ्॥

नि। अ। निवेशे॥भृशार्थे॥ निश्चयार्थे॥ संशये॥ क्षेपे॥ कौशले॥ उपरमे॥ सामीप्ये॥ आश्रये॥ दाने॥ ॥ मोक्षे॥ अन्तर्भावे॥ बन्धने॥ राशौ॥ अधोभावे॥ विन्यासे॥ निश्चये॥ निषेधेपीति दुर्गादासः॥

निःचनः। त्रि। चचिय शून्यदेशादै॥

निःशङ्कः। त्रि। निर्भीके॥

निःशब्दः । त्रि । शब्दरहिते । चुपृ इ
तिभाषा ॥

निःशलाकः । त्रि । निर्जने । रहसि ॥
निर्गता शलाका यस्मात् ॥ शलाका
या निर्गतोवा ॥

निःशल्या । स्त्री । दन्तीवृक्षे ॥

निःशूकः । पुं । मुण्डशालौ ॥

निःशेषः । त्रि । निखिले । समस्ते ॥
निःक्रान्तं शेषात् । निरादय इतिस-
मासः ॥

निःशोकः । त्रि । शोकवर्जिते ॥

निःशोध्यः । त्रि । निर्मले । स्वच्छे । शो
धिते ॥ अनवस्करे ॥ निष्क्रान्तं शोध्य
मस्मात् ॥ शोध्यान्निष्क्रान्तमितिवा ॥

निःश्रयणी । स्त्री । } अधिरोहिण्याम्
निःश्रयिणी । स्त्री । } ॥ इतिशब्दरत्ना
वली ॥

निःश्रेणिः । स्त्री । वंशकाष्ठादिनिर्मिते
सोपाने । अधिरोहिण्याम् । नसेनी
इतिसीढी इतिचभाषा ॥ निश्चिता
श्रेणिः पङ्क्तिरत्र ॥ खर्ज्जूरीपादपे ॥

निःश्रेणिका । स्त्री । निश्रेणी इतिको
ङ्कणप्रसिद्धे तृणवि० । निरसायाम् ।
वनवल्लर्याम् ॥ निःश्रेण्याम् । अधि
रोहिण्याम् ॥ यथा । मानुष्यं दुर्ल
भं प्राप्य सेविता न महेश्वरी । निःश्रे
णिकाग्रात् पतित अधइत्येव विद्म
हे ॥ अपिच । आसाद्यजन्म मनुजे
षुचिराद्दुरापं तत्रापिपाटवमवाप्यनि
जेन्द्रियाणाम् । नाभ्यर्चयन्तिजगतां
जनयित्रि ये त्वां निश्रेणिकाग्रमधिरु
ह्यपुनः पतन्तीति देवीभागवतम् ॥

निःश्रेणी । स्त्री । अधिरोहिण्याम् ॥

निःश्रेयसम् । न । कल्याणे ॥ मोक्षे ॥
विद्यायाम् ॥ अनुभावे ॥ भक्तौ ॥ पुं
। शङ्करे । शिवे ॥ निश्चितं नितरां
वाश्रेयः निःश्रेयसम् । अचतुरविच
तुरेत्यादिनानिपातितम् ॥

निःश्रेयसकरः । पुं । ज्ञानोत्पत्तिहेतु
त्वेन मोक्षोपयोगिनि कर्मयोगे । स
न्न्यासे ॥ निःश्रेयसंकरोति । डुकृञ्० ।
कृञोहेतुताच्छील्यानुलोम्येष्विति
हेत्वर्थेटः ॥

निःश्रेयसकरी । स्त्री । विद्यायाम् ॥ टि
त्त्वान्ङीप्

निःश्वासः । पुं । मुखाद्बहिर्निर्गमनशा
लिनि वायौ ॥ निर्गतः श्वासः ॥ निः
श्वसनं वा । श्वस० । घञ् ॥

निःषन्धिः । त्रि । दृढे ॥ सुषा० षत्वम् ॥

निःषमम् । अ । गर्ह्ये । निन्द्यमाचे ॥
निर्गतं समम च । तिष्ठद्गुप्रभृतीनिचे
त्यव्ययीभावत्वम् । सुविनिर्दुर्भ्यइ-
तिषत्वम् ॥

निःसङ्गः । पुं । देहादिसङ्गरहिते पर

मात्मनि ॥ निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा । आत्मनोऽनात्मनायोगो वास्तवो नोपपद्यते ॥ स्वतोवुद्धं स्वतःशुद्धं स्वतोमुक्तं निरात्मिका । अविचारितसंसिद्धिं रविद्या स्त्रिङ्गते कथम् ॥ त्रि । सविकल्पकानन्दानासक्ते । निरपेक्षे ॥ फलानभिनिवेशवति ॥ मेलनरहिते ॥ यथा । मत्स्यस्य सङ्गा दृभवश्च येमे सुतादिरागो मुषितोऽपि तेन । निःसङ्गता मुक्तिपदं यतीनां सङ्गादशेषाः प्रभवन्ति दोषाः इति ॥ निःसङ्गएव मुक्तः स्यात् दोषाः सर्वेऽपि सङ्गजाः । सङ्गात्पतन्त्यहो ज्ञानी चाव श्यंकिमुतात्पविद्दितिकुलार्णवः ॥

निःसत्त्वः । त्रि । धैर्यशून्ये ॥

निःसन्धिः । त्रि । सन्धिरहिते । दृढे ॥

निःसम्पातः । पुं । अर्द्धरात्रे । निशीथे ॥

निःसरणम् । न । मृत्यौ ॥ उपाये ॥ मोक्षे ॥ निर्गमे ॥ गेहादिमुखे । निर्गमन प्रवेशमार्गे ॥ निस्सरन्त्यनेन । सृगतौ । करणे ल्युट् ॥

निःसहतरः । त्रि । असहतरे ॥ सहेर्निपूर्वात् पचाद्यजन्तात् तरप् ॥

निःसहत्वम् । न । अक्षमत्वे ॥ सहते । षह॰ । पचाद्यच् । उपसर्गेणसमासे त्वप्रत्ययः ॥

निःसारः । पुं । श्योनाकप्रभेदे ॥ शाखोटवृक्षे ॥ त्रि । साररहिते ॥ यथा । मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । यः करोति स सम्मूढो जलवुद्बुदसन्निभे ॥ जगत् सर्वमिदं निःसार मनित्यं दुःखभाजनम् । उत्पद्यते यथा देतत् यथा देतद्विपद्यते ॥

निःसारकः । पुं । अतीसारभेदे ॥ दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडित स्तु । सुतप्तकुप्यक्वथितेन चापि क्षीरेण शीतेन मधुप्लुतेन ॥ भुञ्जीतपथ्यमितिशेषः ॥

निःसारणम् । न । गृहादीनां निर्गमादिपथे । निःसरणे ॥ निष्कासने ॥

निःसारा । स्त्री । कदलीवृक्षे ॥

निःसारितः । त्रि । निष्कासिते । बहिष्कृते ॥

निःसीमः । त्रि । अपर्यन्ते ॥

निःसृतः । त्रि । निर्गते ॥

निःस्नेहः । त्रि । स्नेहवर्जिते ॥ निर्गतः स्नेहोयस्मात् ॥

निःस्नेहा । स्त्री । अतस्याम् ॥ निश्चये नस्नेहोऽस्याम् ॥

निःस्रावः । पुं । आचामे । मासरे । मांड इति प्रसिद्धे भक्तरसे ॥

निःस्वः । त्रि । दरिद्रे ॥ अस्यसदृशं यथा । सूर्पाकारौ विहृष्ट्या च वक्त्रौ पा

दौ गिरालकौ। संशुष्कौ पाण्डुरन खौ निःस्वस्य विरलाङ्गुली ॥ इतिगारुडे सामुद्रकम् ॥ निर्गतं स्वमस्य। स्वाविष्क्रान्तोवा ॥

निकटः। त्रि। समीपे। आसन्ने ॥ निवद्धम्। निवद्धार्थाभ्यः तम्पोदश्चेति चात् कटच् ॥ निकटति वा। कटे०। पचाद्यच् ॥

निकरः। पुं। निवहे। सङ्घे ॥ सारे ॥ न्यायदातव्यवित्ते ॥ निधौ ॥ निकीर्यते। कृविक्षेपे ॥ ऋदोरप् ॥

निकर्षणम्। न। सन्निवेशे। पुरादौ गृहादिरचनापरिच्छिन्नदेशे ॥ पुरादेर्वहिर्विहरणभूमौ ॥ कर्षणान्निर्गतम्। निरादय इति समासः ॥

निकषः। पुं। शाणपाषाणे। कषे ॥ निकषति। कष०। अच् ॥ निकषत्यनेनवा। गोचरसञ्चरेत्यः। चकारात् घोवा ॥

निकषणम्। न। उल्लेखने ॥

निकषा। अ। मध्ये ॥ समीपे। निकटे ॥

निकषा। स्त्री। विश्रवसोभार्यायाम्। राक्षसमातरि ॥ निकषणम्। कष हिंसायाम्। आ.समिणिकषिभ्याम् ॥

निकषात्मजः। पुं। राक्षसे ॥ निकषाया आत्मजः ॥

निकषोपलः। पुं। शाणे। निकषे ॥

निकामम्। न। यथेप्सिते। इष्टानतिक्रमे ॥ निकमनम्। कमु०। घञ् ॥

निकायः। पुं। लक्ष्ये ॥ सधर्मिप्राणिसंहतौ ॥ संहतानां समुच्चये ॥ निलये। सद्मनि ॥ परमात्मनि ॥ निचीयते। चिञ्०। सङ्घेचानौत्तराधर्ये इतिघञ् आदेशश्चकः ॥ चि। कायरहिते ॥

निकाय्यः। पुं। निलये। गृहे ॥ निचीयते ऽस्मिन् धान्यादिकमितिविग्रहे चिनोतेरधिकरणे ण्यत् आयादेशो धात्वादेः कुत्वञ्च पाय्यसान्नाय्यनिकाय्यधाय्या इत्यादिनानिपात्यते ॥

निकारः। पुं। परिभवे ॥ उत्कारे। धान्यस्योत्क्षेपणे ॥ अपकारे। त्रिप्रकारे ॥ निकृष्टीकरणम्। कृञो घञ् ॥ निकरणम्। कृविक्षेपे। कृधान्य इति घञ् ॥

निकारणम्। न। वधे। मारणे ॥ ॥ कृञ्। स्वार्थणयन्ताद्भावे ल्युट् ॥

निकारी। त्रि। अपकारिणि ॥

निकाशः। पुं। प्रकाशे ॥ निकाशनम्। निकाशते वा। काशृ०। घञ् अच्वा ॥ समीपे ॥

निकासः। पुं। नौकाशे ॥

निकुब्जः । पुं । कुडवपादे । प्रसृत इति ख्याते ॥ निकुब्जति । कुब्ज० । अच् ॥

निकुञ्चकः । पुं । निकुञ्चे ॥ स्वार्थे कः ॥ जलवेतसे । वानीरवृक्षे ॥

निकुञ्चितम् । न । सङ्गीतप्रसिद्धे अङ्गहारान्तर्गत शिरोविशेषे ॥

निकुञ्जः । पुं । न । कुञ्जे । लतादिपिहितस्थले ॥ कौजायते । कावजनि वा । जनी० । सप्तम्यांजनेर्डः । पृ० । निरत्रोपसर्गान्तरनिवृत्त्यर्थः ॥

निकुञ्जिकाम्ला । स्त्री । कुञ्जवल्लर्याम् ॥ इयकुब्जाःस्त्रीवल्लीसदृशी ॥

निकुम्भः । पुं । कुम्भकर्णस्यतनये ॥ दन्तिकौषधौ ॥

निकुम्भाख्यबीजम् । न । जयपाले ॥

निकुम्भितम् । न । नृत्यविषयकाऽष्टोत्तरशतकरणान्तर्गतकरणविशेषे ॥

निकुम्भिला । स्त्री । लङ्कायाः पश्चिमभागवर्त्तिन्यां शक्तिविशेषे ॥

निकुम्भी । स्त्री । दन्तीवृक्षे ॥

निकुरम्बम् । न । कदम्बके । समूहे ॥ निकुरति । निकुर्यतेवा । कुरच्छेदने । कुरशब्देवा । बाहुलकात्अम्बच् ॥

निकृतः । त्रि । विप्रलब्धे ॥ नीचे ॥ विप्रकृते ॥ अन्तजै ॥ वञ्चिते ॥ दुःखीकृते ॥ न्यकारि । क्तः ॥

निकृतिः । स्त्री । भर्त्सने ॥ क्षेपे ॥ शठे ॥ शाठ्ये ॥ अभिभवे ॥ दैन्ये ॥ निकृष्टाकृतिः क्रिया परप्रतारणरूपा । यद्वा । पराभीष्टस्यनिकर्त्तनम् । कृती० । इककृष्यादिभ्यइतीक् ॥

निकृष्टः । त्रि । अधमे ॥ निकृष्यतेस्म । कृष० । क्तः ॥ आचाराचारादिभिर्निन्दिते ॥

निकेतः । पुं । निकेतने । आश्रये । वेश्मनि ॥ निकेतनम् । कितनिवासे । घञ् ॥

निकेतनम् । न । गृहे । गेहे ॥ निकेच्यतेऽस्मिन् । कित० । अधिकरणेल्युट् ॥

निकोचकः । पुं । अङ्कोठवृक्षे । टेरा इतिभाषा ॥ नि कुच्यते । कुचशब्देतारे । कुत्रादिभ्यस्वुन् ॥

निक्वणः । पुं । वीणाया अन्यस्यच किन्नरादेःशब्दे । प्रक्वाणे । क्वणे । क्वणने ॥ क्वणशब्दे । नावीति अनुपसर्गइतिचानुवर्त्तमाने क्वणोवीणायाञ्चेत्यप् ॥

निक्वाणः । पुं । निक्वणे । क्वाणे ॥ क्वण० । क्वणोवीणायाञ्चेति पक्षेघञ् ॥

निचयणम् । न । चुम्बने ॥ णिक्षचुम्बने । ल्युट् ॥

निक्षिप्तः । त्रि । परिक्षिप्ते । न्यस्ते ॥ स्थापितधनादौ ॥ निक्षिप्यतेस्म । क्षिपप्रेरणे । क्तः ॥

निक्षेपः । पुं । उपनिधौ । न्यासे । स्वधनस्यान्यस्मिन्नर्पणरूपे व्यवहारविशेषे । धरोहर इतिभाषा ॥ यथा । स्वद्रव्यं यत्र विस्रम्भा न्निक्षिप त्यविशङ्कितः । निक्षेपो नाम तत् प्रोक्तं व्यवहारपदंबुधैः ॥ असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीया दुपनिधिं निक्षेपं गणितं विदुः ॥ निक्षेपं वृद्धिशेषञ्च क्रयं विक्रय मेवच । याच्यमानो नचे द्दद्याद्वर्द्धते पञ्चकंशतमिति नारदः ॥ निक्षिप्यते । क्षिप० । घञ् ॥ शिल्पि हस्ते संस्कारार्थं समर्पिते भाण्डे ॥

निक्षेपितः । त्रि । प्रयोज्येनान्येन निवेशिते ॥ क्षिपेर्ण्यन्तात्कर्मणिक्तः ॥

निक्षेप्ता । त्रि । निक्षेपस्यकर्त्तरि ॥ निक्षिपति । क्षिप० । तृच् ॥

निखर्व्वः । पुं । न । दशखर्व्वसङ्ख्यायाम् । १०००००००००००० ॥ निखर्वति । खर्वगतौ । पचाद्यच् ॥ त्रि । वामने । बौना इतिभाषा ॥

निखातः । त्रि । खनित्वारोपिते ॥

निखिलः । त्रि । अखिले । निःशेषे । समस्ते ॥ निर्गतं खिलं यस्मात् ॥

निगडः । पुं । न । बन्धने । शृङ्खलायाम् । बेडी इतिभाषा ॥ निगतो गडः सेचनमस्मात् कठिनत्वात् ॥ निगलति वा । गलअदने । अच् । डलयोरेकत्वम् ॥ हस्तिनो लोहमये पादबन्धोपकरणे । अन्दुके ॥

निगडितः । त्रि । बद्धे ॥ निगडःसञ्जातोऽस्य । तारकादित्वादितच् ॥

निगणः । पुं । होमधूमे ॥ इतित्रिकाण्डशेषः ॥

निगदः । पुं । भाषणे । कथने । निगादे ॥ निगदनम् । गद० । नौगदेत्यप् वा ॥ निगदस्तु जनैर्वेद्यस्याऽगमात उच्चैर्जपे ॥

निगदितः । त्रि । उक्ते ॥

निगमः । पुं । वाणिज्ये । वणिजि ॥ निगमे पुर्य्याम् भवः । तत्रभवइत्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ पुर्य्याम् ॥ कटे ॥ वेदे ॥ वणिक्पथे ॥ निश्चये ॥ अध्वनि ॥ प्रतिज्ञायाम् ॥ पर्य्यायकथनेन वेदार्थबोधके ग्रन्थविशेषे ॥ निगम्यतेऽनेनवा । गम्लृ० । गोचरसञ्चरेतिसाधुः ॥

निगमनम् । न । प्रतिकूलप्रमाणाभावसूचकप्रतिज्ञोपसंहारवचने । तस्मात्तथेतिवचने ॥ यथा । असकृदनुचिन्तिताना मध्याहततरनिक्षेप

देशानाम्। ग्रामाद्युपरमसीमाऽनिगमनमिदमेव निखिलनिगमानाम्॥ १०३॥ इदमेव आत्मिकत्वमेव॥ हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनंनिगमनम्। इतिगोतमः॥ ३८॥ हेतोर्व्याप्तिविशिष्टपक्षधर्मस्य अपदेशःकथनं प्रतिज्ञायाःप्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य वचनंनिगमनम्। तथाच व्याप्तिविशिष्टपक्षधर्म हेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः-व्याप्तपक्षधर्म हेतुत्वाप्यसाध्यविशिष्टबोधकत्वाद्वसाध्यबोधकोवान्यायावयवोनिगमनमिति। अस्यस्वन्वयिव्यतिरेकिभेदान्नभेद इत्याशयः। व्यतिरेकिणितु तस्मात्तथेत्येवाकारइत्यपरे॥

निगमाचार्यवाक्यम्। न। वेदगुरुवचने। उपनिषद्याख्यानुपदेशे॥ निगमस्य आचार्यः तस्यवाक्यम्॥ निगमाचार्ययोर्वा वाक्यम्॥

निगमान्तः। पुं। उपनिषदि॥

निगरः। पुं। भोजने॥

निगरणः। पुं। गले॥ होमधूमे इति शब्दरत्नावली॥ न। भोजने। निगलना इतिभाषा॥

निगादः। पुं। निगदे। कथने॥ निगदनम्। गद०। नौगदेत्यबभावे घञ्॥

निगारः। पुं। भक्षणे। गरणे॥ निगरणम्। गनिगरणे। उन्योर्ग्रइतिघञ्॥

निगालः। पुं। अश्वगलदेशे॥ निगलत्यनेन। गलअदने। हलश्चेतिघञ्। संज्ञापूर्वकत्वान्नवृद्धिः॥ निगिरत्यनेनवा। गृ०। उन्योर्ग्रइतिघञ्। अचिविभाषेतिलत्वं॥ घण्टाबन्धसमीपस्थो निगालः कीर्त्तितो बुधैः। तस्मिन्नेकमावर्त्तोमरोमजः शुभकृन्मतः। इत्यश्वशास्त्रम्॥

निगालवान्। पुं। अश्वे॥ अस्त्यर्थेमतुप्॥

निगीर्णः। त्रि। गिलिते। निगला इति भाषा॥ निगीर्यतेस्म। गृ०। क्तः॥

निगूढः। पुं। वनमुद्गे॥ त्रि। संवृते। गुप्ते॥ यथा। आस्ते विधुः परमनिष्ट्रत एवमौलौ यस्यो ति त्रिजगतीजनचित्तवृत्तिः। अन्तर्निगूढनयनानलपुञ्जदाहं जानाति कः स्वयमते वत शीतरश्मेः॥ आच्छादिते॥ नितरां गुह्यते स्म। गुहू०। क्तः। यस्यविभाषेतीडभावः॥

निगूढतत्त्वः। त्रि। संवृतयाथार्थ्ये॥ निगूढं तत्त्वंयस्य सः॥

निगृहीता। त्रि। ताडिते॥ पीडिते॥

निगृहीतचेताः । त्रि । वशीकृतचित्ते ॥

निग्रहः । पुं । भर्त्सने ॥ मर्यादायाम् । सीमायाम् ॥ बन्धने ॥ अनुग्रहाभावे ॥ निराकरणे ॥ चिकित्सायाम् ॥ पराहङ्कृतिखण्डनरूपे निरोधे ॥ निषिद्धप्रवृत्तितिरस्कारे ॥ मनसोनिरोधे ॥ सचषष्ठनिग्रहरूपः क्रमनिग्रहरूपश्चेति द्विविधः ॥ मारणे ॥ प्रवृत्तिनिवृत्त्योर्निरोधे ॥ निवृत्तिकतयावस्थितौ ॥ नियमेनग्रहणम् । ग्रह० । ग्रहवृदिश्चप् ॥ निगृह्णातिवा । कर्त्तरि पचाद्यच्वा ॥

निग्रहस्थानम् । न । गौतमोक्तषोडशपदार्थव्यक्तिमे पदार्थे ॥ यथा । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ ५९ ॥ निग्रहस्य खलीकारस्य स्थानंज्ञापकं निग्रहस्थानम् । तच्च विप्रतिपत्तिरप्रतिपत्तिश्च । विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः अप्रतिपत्तिः प्रकृताज्ञानम् । यद्यपेतदन्यतरत् परनिष्ठं नोद्भावयितुमर्हम् प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिस्तथापि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वंतदर्थः । उद्देश्यानुगुणसम्यक्ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्यादीनामत्वंवा लक्षणमित्यपिवदन्ति ॥ प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तर मर्थान्तरं निरर्थक मविज्ञातार्थ मपार्थकमप्राप्तकालं न्यून मधिकं पुनरुक्त मननुभाषण मज्ञान मप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि । अत्रचस्त्वर्थे । तेनैतानि तुनिग्रहस्थानानि न पुनरपस्मारादिना ऽननुभाषणादिकम् । नवाझटितिसंवरणेनतिरोहिताचवाणी स्खलिताप्यत इतिप्राञ्चः । नव्यास्तु चकारोनुक्तसमुच्चये तेनदृष्टान्तेसाधनवैकल्यादीनां परिग्रहः ॥

निग्राहः । पुं । शापे ॥ निग्रहणम् । आक्रोशेवन्योर्ग्रहइति घञ् । निग्राहस्ते हयतभूयात् वधस्त्वर्थः ॥ निग्रहे ॥

निघः । पुं । समविस्तारदैर्घ्ये । तुल्यारोहपरिणाहेवृक्षादौ ॥ नियतं निर्विशेषेणवा हन्यते ज्ञायते । निघो निमितमितिसाधुः ॥

निघण्टिका । स्त्री । गुलञ्चकन्दे ॥

निघण्टुः । पुं । नामसङ्ग्रहे ॥ इति हेमचन्द्रः ॥

निघर्षः । पुं । घर्षणे ॥

निघसः । पुं । भोजने ॥ न्यदनम् । अद० । नौणच्चेत्यप् । घञपोश्चेति

घल्लादेश: ॥

निघात: । पुं । अनुदात्ते ॥

निघाति: । स्त्री । लोहघातिन्याम् ।-
लोहमयदण्डे ॥ निश्चयेन हन्ति । ह
न० । वसिवपियजिराजिव्रजिसदिह
नीत्यादिना इञ् । कुत्वम् ॥

निघुष्टम् । न । घोषणे ॥ निघुष्यते
स्म । घुषिरव्यक्तेशब्दे । क्त: ॥

निघृष्ट: । त्रि । घर्षिते । घसा इति भा
षा ॥ यथा । सुरासुरशिरोरत्ननिघृ
ष्टचरणाम्बिके ॥

निघृष्व: । पुं । खुरे ॥ निघृष्यते ऽनेन
। घृषुसङ्घर्षे । सर्वनिघृष्वरिष्वेति
साधु: ॥

निघ्न: । त्रि । आयत्ते । अधीने ॥ निहन्यते
निगृह्यते । हन्तेर्घञर्थे क: ॥ गुणिते ॥

निचय: । पुं । समुच्चये । वस्तुसमूहे
॥ यथा । सर्वेक्षयान्ता निचया: पत
नान्ता: समुच्छ्रया: । संयोगा विप्रयो
गान्ता मरणान्तञ्च जीवितमिति ॥
निचीयते । चिञ्० । कर्मण्येरच् ॥

निचयक: । त्रि । निचये कुशले ॥ आ
कर्षादिभ्य: कन् ॥

निचयी । त्रि । उपचयवति ॥

निचाय: । पुं । राशीकृते धान्यादौ । ढे
र इतिभाषा ॥ निचीयते राशीक्रि
यते । चीञ्० । परिमाणे परिमा

णाख्यायां सर्वेभ्य इति घञ् ॥ यथा
। एकस्तण्डुलनिचाय: । अत्र राश्येक
त्वेन समुदायिनां परिच्छित्तिर्गम्यते॥

निचि: । पुं । गो:कर्णशिरोदेशे ॥ इ
तिरभस: ॥

निचिकी । स्त्री । उत्तमायां धेनौ । नै
चिकाम् ॥

निचित: । त्रि । सङ्कीर्णे ॥ आचित ॥
पूरिते । व्याप्ते ॥ निर्मिते ॥

निचुल: । पुं । हिज्जले ॥ निचोले ॥
निचोलति । चुलसमुच्छ्राये । चुरा
दीनांणिच्वा । इगुपधेतिक: ॥ वेत
सवृत्ते ॥

निचुलकम् । न । निचोलके ॥ पुं । कु
ञ्चिकामत्स्ये ॥

निचूल: । पुं । इज्जलद्रुमे ॥ निचोले ॥

निचोल: । पुं । प्रच्छदपटे । पिछौडा
इतिभाषा ॥ येनतल्पशय्यादिप्रच्छा
द्यते तस्मिन्निति स्वामी ॥ दोलि-
काद्यावरणपटइत्येके ॥ स्त्रीपिधान
पटे बुरका इतिप्रसिद्धे इत्यपरे ॥
निचोल्यते । चुल० घञ् । घञ् ॥ य
द्वा । चोड्यते । चुडकृतौ । चु० । घ
ञ् । डलयोरेकता ॥

निचोलक: । पुं । भटादेश्चोलाकृत
सन्नाहे । कूर्पासे । वारबाणे ॥ न ।
कुञ्चिकाख्यमत्स्ये ॥

निचोली । स्त्री । प्रच्छदांशुके ॥

निच्छविः । स्त्री । तीरभुक्तिदेशे । तिरहुत इतिभाषा ॥ इ०चि० ॥

निच्छिविः । पुं । वर्णसङ्करप्रभेदे । व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्नेजातिविशेषे । झल्ले ॥ यथा । झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैवखसोद्रविडएवचेतिमनुः ॥

निजः । त्रि । आत्मीये । स्वीये ॥ नित्ये ॥ निजायते । जनी० । उपसर्गेचसंज्ञायामिति डः ॥

निजविभवः । पुं । स्वविभूतौ ॥

निजात्मा । पुं । परात्मनि ॥

निडीनम् । न । खगगतिप्रभेदे । पक्षिणःशनैर्याने ॥ निडीनंनीचैःपतनमितिमहाभारतम् ॥ भक्ष्य माश्रयं वा पश्यतः पतने ॥

निण्डिका । स्त्री । सतीलायाम् । तिपुत्राम् । कलायभेदे । तेउडा इति गौडभाषा ॥

नितम्बः । पुं । स्त्रियाःपश्चात्कटितटे ॥ स्कन्धे ॥ रोधसि ॥ कटेरधोभागे ॥ कटके ॥ कटिमात्रे ॥ नितम्बति नितंभ्यतेवा । तम्बगतौ । पच् घञ्वा ॥ यद्वा । निभृतं तम्यते कामुकैः । तमुकाङ्क्षायाम् ॥ ताम्यते सुरतसम्म र्दाद्वा । तमुग्लानौ । उल्वादयश्चेतिसाधुः ॥

नितम्बिनी । स्त्री । स्त्रीविशेषे ॥ अतिशयितोनितम्बोयस्याः । अतइनिठनाविती निः । ङीप् ॥ स्त्रीमात्रेपि ॥

नितराम् । अ । सुतरामर्थे ॥ अतिशयेनेत्यर्थे ॥ किमेत्तिङव्ययेत्यादिना अमुप्रत्ययः ॥

नितलम् । न । पातालविशेषे ॥

नितान्तम् । न । एकान्ते । अत्यन्ते । अतिशये ॥ त्रि । तद्वति ॥ नितान्त्यतिस्म । तमुकाङ्क्षायाम् । अकर्मकत्वात् कर्तरिक्तः । अनुनासिकस्येतिदीर्घः ॥

नितान्तनिर्मलस्वान्तः । त्रि । अत्यन्तशुद्धान्तःकरणे ॥ नितान्तंनिर्मलंस्वान्तं यस्य सः ॥

नित्यम् । न । सतते । अनारते । अजस्रे ॥ नियमेन भवम् । त्यब्नेर्ध्रुवे ॥ नियतम्भवइतिवा ॥ प्रत्ययवायजनकीभूताभावप्रतियोगिनि । यथा । एकादश्यामुपोषयीत नित्यम् ॥ ध्वंसप्रागभावाप्रतियोगिनि । यथा । गगनंनित्यम् ॥ अहरहर्जायमाने । यथा । नित्यंक्रीडन्तिकुमाराः ॥ अहरहःक्रियमाणत्वेन विधिबोधिते । यथा ॥ स्नानतर्पणादिकंनित्यम् ॥

अनवच्छिन्नपरम्पराके । यथा । वर्णानित्याः ॥ पुं । समुद्रे ॥ त्रि । शाश्वते । अजन्येवस्तुनि । कालत्रयव्यापिनि । ध्रुवे । अविनाशिनि । अबाध्यसत्ये । आत्मस्वरूपे । ध्वंसाप्रतियोगिनि । उत्पत्तिविनाशरहिते । सर्वदाविद्यमाने । सर्वव्यापके ॥ नित्यवेदबोधितत्वेना ऽनादिपरम्परागते । पूर्वापरकोटिरहिते । सदकारणवति ॥ सहजे ॥ विनाशयोग्यतारूपदोषाभाववत्त्वंनित्यत्त्वम्॥

नित्यकर्म्म । न । अकरणे प्रत्यवायसाधनेषु सन्ध्यावन्दनादिषु ॥ प्रत्यवायशब्देनागामिदुःखमुच्यते । येषामकरणे विज्ञायमाने तल्लाध्यते प्राप्यते तानि नित्यानीत्यर्थः । अकरणेप्रत्यवायलक्षणानि नित्यानीति यावत् ॥ निर्निमित्तमुपात्तदुरितक्षयार्थानि नित्यानीति नित्यकर्मलक्षणम् । तत्वकरणेप्रत्यवायोत्पादकानि नित्यानीति ॥ सन्ध्यावन्दनादीत्यादिपदात् पञ्चमहायज्ञादिग्रहः ॥ प्रत्यवायजनकाभावप्रतियोगिकार्यनित्यकर्मेतिस्मृतिः ॥ तद्यथा । नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकन्तथा । गृहस्थस्य त्रिधा कर्म तन्निबोधमय पृथक् ॥ पञ्चयज्ञाश्रितंनित्यं यदेतत्कथितंतव । नैमित्तिकंतथाचान्यत्पुत्रजन्मक्रियादिकम् ॥ नित्यनैमित्तिकंज्ञेयं पर्वश्राद्धादिपण्डितैरितिमार्कण्डेयपुराणम् ॥

नित्यकर्म्मफलम् । न । मनःशुद्धी ॥

नित्यक्षौरम् । न । वेदेतरक्षौरे । रागप्राप्तकेशच्छेदने ॥ यथा । चूडोदिते तिथावृक्षे बुधेन्दोर्दिवसेनरः । नित्यक्षौरंप्रकुर्वीत जन्ममासे न तुक्वचित् ॥

नित्यगतिः । पुं । वायौ ॥ नित्यंगतिरस्य ॥

नित्यतृप्तः । त्रि । परमानन्दस्वरूपत्वेन सर्वत्र निराकाङ्क्षे ॥ नित्येन निजानन्देन तृप्तः ॥

नित्यत्वम् । न । कालाद्यनवच्छिन्नत्वे । नश्यत्प्रतीतिलोकागमयोर्थवशरायोग्यत्वे ॥

नित्यदा । अ । शश्वदर्थे । सातत्ये ॥

नित्यदानम् । न । प्रतिदिनं दीयमानेदाने ॥ यथा । अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे । अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकमिति गरुडपुराणम् ॥

नित्यनैमित्तिकफलम् । न । मनःशुद्धौ ॥ पितृलोकप्राप्तिर्हिनित्यादीनामवान्तरफलम् । तथा आपेक्ष

त्वार्थे निर्मिते छायागन्धावनुत्पद्येते इति छायागन्धव्रतपिष्टलोकादिफल त्वावान्तरत्वमानुषङ्गिकम् । तदु द्देशेननिष्ठादेरविधानात् । किञ्चि दिषासंयोगस्य च विधानाच्छुद्धेरेव महाफलत्वम् ॥

निष्ठप्रलय: । पु । चतुर्विधप्रलयान्तर्ग तप्रलयविशेषे ॥ यथा । नित्य: स दैवजातानां यो विनाशो दिवानि शंमिति । सदैव दीपज्वालावत् सात त्येन जातानां दिवानिशं यो विना श: सनिष्ठप्रलयइत्यर्थ: ॥

निष्ठम् । अ । सातत्ये ॥

निष्ठमुक्त: । त्रि । कालत्रयेपिबन्धशू न्ये परमात्मनि ॥

निष्ठयज्ञ: । पुं । फलसंयोगंविनाजी वनादिनिमित्तसंयोगेन चोदिते । सर्वाङ्गोपसंहारासम्भवे प्रतिनिध्या द्युपादानेनामुख्यकल्पेनानुष्ठेये ॥ नि ष्ठश्चासौ यज्ञश्च ॥

निष्ठयौवना । स्त्री । द्रौपद्याम् ॥ त्रि । स्थिरयौवने ॥

निष्ठवैकुण्ठ: । पुं । विष्णो: स्थानवि- शेषे ॥ यथा । ऊर्द्ध्वं नभसि संविष्टो निष्ठवैकुण्ठएवच । आत्माकाशस मोनिष्ठोविस्तृतश्चन्द्रविम्बवत् ॥ ई श्वरेच्छासमुद्भूतो निर्लक्ष्यश्चनिरा श्रय: । आकाशवत् सुविस्तारश्चाम् ल्यरत्ननिर्मित: ॥ तत्रनारायण: श्री मान् वनमालीचतुर्भुज: । लक्ष्मी सरस्वती गङ्गातुलसीपतिरीश्वर: ॥ सुनन्दनन्दकुमुदपार्षदादिभिरन्वि त: । सर्वेश: सर्वसिद्धेशो भक्तानुग्रह कारक इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १५ अध्याय: ॥

निष्ठसत्त्वस्थ: । त्रि । सदासत्त्वगुणा ऽऽ श्रिते । रजस्तमसी अभिभूय सत्त्व मात्रावलम्बने ॥ निष्ठमचलं यत्स त्त्वं धैर्यापरपर्यायं तस्मिंस्तिष्ठति । ष्ठागतिनिवृत्तौ । क: ॥

निष्ठसमास: । पुं । अविग्रहोनिष्ठस मासइत्युक्ते समासविशेषे ॥ सम स्यमानयावत्पदरहितविग्रहश्चनि- ष्ठसमास: ॥

निष्ठा । स्त्री । उमायाम् । पार्वत्याम् । शिवायाम् ॥ प्रकृतौ ॥ शक्ति वि शेषे ॥ मनसादेव्याम् ॥ नियमेन भवा । त्यब्नेर्ध्रुवे । टाप् ॥

निष्ठानध्याय: । पुं । सर्वथावर्जनीयवे दपाठकालादौ । मन्वादिप्रोक्ते स्वा ध्यायाभावनिमित्ते ॥ यथा द्वावे व वर्जयेन्निष्ठमनध्यायौ प्रयत्नत: । स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चा शुचिंद्विजइति ॥ विशेषस्तुइमानि

स्य मनध्याया नधीयानो विवर्जये दित्यादि मनुवचनेषु द्रष्टव्यः ॥

नित्यानित्यवस्तुविवेकः । पुं । ब्रह्मैव नित्यं वस्तु ततोन्यदखिलमनित्य मितिविवेचने ॥ ब्रह्मसत्यंजगन्मिथ्य त्येवंरूपोविनिश्चयः । सोयं नित्या नित्यवस्तुविवेकः समुदाहृतः ॥ नित्यञ्च अनित्यञ्च नित्याऽनित्ये तेचते वस्तुनीच नित्यानित्य वस्तुनी । नित्यानित्यवस्तुनोर्विवेकः पृथगात्मता ॥

नित्यानित्यस्वरूपिणी । स्त्री । मायाशबलब्रह्मरूपिण्याम् भुवनेश्वर्याम् ॥ नित्यंब्रह्म अनित्यंमाया तदुभयरूपिणी । तथाच भगवत्याउभयात्मकत्वात् कदाचिद्ब्रह्मरूपेणैव वर्णनं कदाचिच्छक्तिरूपेणैववर्णन मिति इच्छाशक्तिरूपत्वेन श्रुत्यागमपुराणादौ वर्णनेपिदोषाभावो-बोध्यः ॥

नित्याभियुक्तः । त्रि । अनवरत मादरेण ध्याने व्यापृते । देहयात्रामात्रार्थमप्य प्रयतमाने ॥ नित्यम् अभियुक्तः ॥ सततंतत्परे ॥

नित्योदकः । त्रि । कृतावश्योदककर्मणि ॥

निदम् । न । विषे ॥ इ० श० चं० ॥

निदद्रुः । पुं । मनुष्ये ॥ त्रि । दद्रुरहिते ॥

निदर्शनम् । न । उदाहरणे । दृष्टान्ते ॥ ज्ञापके ॥ दृशिर्० । ल्युट् ॥ यथा । आत्माह्याकाशवज्जीवै र्घटाकाशैरिवोदितः । घटादिवच्चसङ्घातैर्जातावेतन्निदर्शनमिति ॥ यदाम न्दबुद्धिप्रतिपिपादयिषया श्रुत्यात्मनोजातिरुच्यते जीवादीनां तदाजातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदित आकाशवदित्यादीतिभाष्यम् ॥

निदर्शना । स्त्री । काव्यालङ्कारविशेषे ॥ तल्लक्षणं यथा । अर्थान्तरप्रवृत्तेन किञ्चित्तत् सदृशंफलम् । सदसत्वा न्निदर्श्येत यदिसा स्यान्निदर्शना ॥ उदाहरणम् । उदयन्नेव सविता पद्मेष्वर्पयतिश्रियम् । विभावयितुमृद्धीनां फलं सुहृदनुग्रहमितिदर्शी ॥ प्राप्तौ ॥ यथा । शुभाशुभनिदर्शने तिपुराणम् ॥

निदाघः । पुं । ग्रीष्मकाले । ज्येष्ठाषाढयोः । उष्णोपगमे ॥ उष्णे ॥ स्वेदाम्बुनि । घर्मे ॥ नितरां दह्यते ऽ त्रानेनवा । दह० । हलश्चेतिघञ् । न्यङ्क्० कुत्वम् ॥ पुलस्त्यतनये ऋभोः शिष्ये वेदान्तविष्णुपुराणयोः प्रसिद्धः

माहात्म्ये परमहंसावधूते ॥

निदाघकरः । पुं । सूर्ये । भानौ ॥ निदाघा उष्णाः करा अस्य ॥

निदाघकालः । पुं । ग्रीष्मर्त्तौ । ज्येष्ठाषाढमासयोः ॥ यथा । प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः सदावगाहक्षमवारिसञ्चयः । दिनान्तरम्यो ऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये ॥

निदानम् । न । कारणे । हेतौ ॥ आदिकारणे ॥ शुद्धौ ॥ तपसः फलयाचने ॥ वत्सदाम्नि ॥ अवसाने ॥ नितरां दीयते ऽसाधारणतया अभ्यते ऽनेन । डुदाञ्० । करणेति ल्युट् ॥ रोगविनिर्णये । रोगहेतौ ॥ निदानं पूर्वरूपाणि रूपाण्युपशय स्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधास्मृतम् ॥ निमित्तहेत्वायतनप्रत्ययोत्थान कारणैः निदानमाहुः पर्यायैः प्राग्रूपंयेनलक्ष्यते ॥ इतिमाधवः ॥

निदिग्धः । त्रि । उपचिते । लेपादिना वर्द्धिते । पुष्टिम्प्रापिते ॥ निदिह्यते स्म । दिहउपचये । क्तः ॥

निदिग्धा । स्त्री । एलायाम् ॥

निदिग्धिका । स्त्री । कण्टकारिकायाम् । कटवनीर्दति रीगिणी इतिभाषा

॥ निदिह्यतेस्म । दिह० । क्तः । टाप् ॥ स्वार्थेकन् ॥ एलायाम् ॥

निदिद्रासन् । त्रि । निद्रातुमिच्छति ॥ निद्रातेः सन्नन्ताच्छतृ: शप्यादेशः ॥

निदिध्यासनम् । न । श्रुतस्य मतस्य तथैवध्याने ॥ निरन्तरं विचारोयः श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥ अनात्मन्यरुचि श्चित्ते रुचि श्चात्मनि चेद्भवेत् । पुण्यपुञ्जेन शुद्धं तच्चित्तमैकाग्र्यमर्हति ॥ विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसिजातीयप्रत्ययप्रवाहे ॥ विजातीयप्रत्ययानन्तरितेनसजातीयप्रत्ययप्रवाहेण श्रवणमननफलभूतेनात्मचिन्तने ॥ निदिध्यासनं विचारविशेषात्मकम् । सचविचारविशेषोध्यानात्मातद्ध्यानरूपं निदिध्यासनम् ॥ ताभ्यांनिर्विचिकित्सेर्थेचेतसःस्थापितस्ययत् । एकतानत्वमेतद्धिनिदिध्यासनमुच्यते ॥ ताभ्यां श्रवणमननाभ्याम् ॥ अपरायत्तबोधे ॥ अपरायत्तबोधोहिनिदिध्यासनमुच्यते इतिवार्त्तिकोक्तेः ॥

निदेशः । पुं । शासने । आज्ञायाम् ॥ कथने । परिभाषणे ॥ उपकण्ठे । उपान्ते ॥ भाजने ॥ निपूर्वाद्दिशेर्घञ् ॥

निदेशिनी । स्त्री । दिशि ॥ इतिराजनिर्घण्टः ॥

निदेष्टा । त्रि । निदेशकर्त्तरि ॥ निदिशति । दिश० । तृन् ॥

निद्रा । स्त्री । शयने । स्वापे । स्वप्ने । संवेशे ॥ निद्राच कालाग्निरुद्रपत्नी । यथा । कालाग्निरुद्रपत्नीच निद्रा सा सिद्धयोगिनी । सर्वेलोकाः समाच्छन्नायया योगेन रात्रिषु इति । रात्रिषु योगेनसम्बन्धेन ॥ तत्त्वाप्रतिबोधे ॥ अभावप्रत्ययालम्बनायांवृत्तौ ॥ चतसृणां वृत्तीना मभावस्य प्रत्ययः कारणं तमोगुण स्तदालम्बनावृत्तिरेवनिद्रा नतुज्ञानाद्यभावमात्रम् ॥ सत्त्वरजउभयविरोधिन्यां तमोगुणालम्बनायां वृत्तौ ॥ * ॥ निद्राभिमानिनोकालीतामसीशक्तिरिष्यते ॥ * ॥ यदातु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः ॥ कर्मात्मानः उभयविधानीन्द्रियाणि ॥ निद्राणम् । द्राकुत्सायांगतौ । आतश्चेत्यङ् ॥ निन्दनम् निन्द्यते ऽनयेतिवा । निन्देर्नलोपश्चेतिरगितिवा ॥ * ॥ सुखंस्वपित्यनृणवान् व्याधिमुक्तश्च यो नरः । सावकाशस्तु यो भुङ्क्ते यस्तु दारै र्नशङ्कितः ॥



कुतोनिद्रादरिद्रस्य परप्रेष्यकरस्यच । परनारीप्रसक्तस्य परद्रव्यहरस्यच ॥ इतिगारुडेनीतिसारः ॥

निद्राणः । त्रि । शयिते । निद्राङ्गते । सुप्तइतिभाषा ॥ निद्रातिस्म । द्रा० । अकर्मकत्वात्कर्त्तरिक्तः । संयोगादेरितिनः ॥

निद्रालुः । त्रि । शयालौ ॥ निद्राशीलः । द्रा० । स्पृहिगृहीत्यालुच् ॥ स्त्री । वनवर्वरिकायाम् ॥ वार्त्ताक्याम् ॥ नलीनामगन्धवस्तुनि ॥

निद्रावृच । पुं । अन्धकारे ॥ इतिशब्दमाला ॥

निद्रासञ्जनम् । न । श्लेष्मणि ॥

निधनः । पुं । न । कुले ॥ नाशे । मरणे ॥ अथाश्विस्तुणमिश्रः । कगन्तासिभ्रातः कृतस्ततयो यत्रधनिनः । किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि । धनैर्याच्ञालभ्यैर्ननुपरिभवोऽभ्यर्थनफलं निकारोऽग्रेपश्चाद्धनमहहभोस्तद्गिनिधनमिति ॥ स्वर्चाव्ययमर्च्चे ॥ अष्टमभवने ॥ निधानम् निधीयतेऽत्रवा । कृपृवृजी-तिक्युः ॥ साम्नोभक्त्यन्तरे ॥ पाञ्चभक्तिकस्य साम्नः पञ्चमभक्तौ ॥ त्रि । धनहीने ॥

निधानम् । न । शङ्खपद्मादिनिधौ ॥

आधारे । आश्रये ॥ निधीयतेनिक्षिप्यते तत्कालभोगायोग्यतया कालान्तरोपभोग्यंवस्त्वस्मिन्निति निधानम् । निडुधाञ् । ल्युट् ॥ कार्यावसानेप्रवेशस्थाने ॥ यथा । एतन्नानावताराणांनिधानंवीजमव्ययम् ॥

निधापनम् । न । स्थापने ॥

निधिः । पुं । शङ्खपद्मादिसामान्यनिधौ । शेवधौ ॥ महापद्मादिनवविशेषनिधिषु ॥ यथा । महापद्मश्चपद्मश्चशङ्खोमकरकच्छपौ । मुकुन्दकुन्दनीलाश्चखर्वश्चनिधयोनवेतिशब्दार्णवः ॥ मार्कण्डेयपुराणोक्तेष्वष्टनिधिषु ॥ यथा । क्रोष्टुकिरुवाच ॥ भगवन्कथितंसर्वं विस्तरेणत्वयामम ॥ स्वरोचिषोद्भुतं जन्मतथास्वारोचिषस्य तु ॥ यातुसापद्मिनीनामविद्याभोगोपपादिका ॥ तत्संश्रितायेनिधयस्तान्मेविस्तरतोवद ॥ अष्टौयेनिधयस्तेषांस्वरूपंद्रव्यसंस्थितिम् ॥ भवताभिहितंसम्यक्श्रोतुमिच्छाम्यहंगुरो ॥ मार्कण्डेयउवाच ॥ पद्मिनीनामयाविद्यालक्ष्मीस्तस्याश्चदेवता ॥ तदाधाराश्चनिधयस्तान्मेनिगदतःशृणु ॥ तत्रपद्ममहापद्मौतथामकरकच्छपौ ॥ मुकुन्दकुन्दौनीलश्चशङ्खश्चैवाष्टमोनिधिः ॥ सत्यांवृद्धौभवन्त्येतेसद्भिः



सहभवन्त्यमी ॥ एतेह्यष्टौसमाख्याता निधयस्तवक्रोष्टुके ॥ एभिरालोकितंचित्तंमानुषस्यमहामुने ॥ याद्रुक्स्वरूपंभवतितन्मेनिगदतःशृणु ॥ पद्मोनामनिधिःपूर्वःसयस्यभवतिद्विज ॥ सतस्यतत्सुतानांचतत्पुत्राणांचनान्यगः ॥ दाक्षिण्यसारःपुरुषस्तेनवाधिष्ठितोभवेत् ॥ सत्त्वाधारोमहाभागोयतोसौसात्विकोनिधिः ॥ सुवर्णरूप्यताम्रादिधातूनांच परिग्रहम् ॥ करोत्यतितरांसोपितेषांचक्रयविक्रयम् ॥ करोतिचतथायज्ञान् दक्षिणाश्चप्रयच्छति ॥ सम्पादयतिकामांश्च सर्वानेवयथाक्रमम् । सभादेवनिकेतांश्चसकारयतितन्मनाः ॥ १ ॥ * ॥ सत्त्वाधारोनिधिश्चान्यो महापद्मइतिस्मृतः ॥ सत्त्वप्रधानो भवतितेनचाधिष्ठितोनरः ॥ करोतिपद्मरागादिरत्नानांच परिग्रहम् ॥ समौक्तिकप्रवालानांतेषांचक्रयविक्रयं ॥ ददातियोगशीलेभ्यस्तेषामावसथां स्तथा ॥ सकारयतितच्छीलः स्वयमेवचजायते ॥ तत्प्रसूतास्तथाशीलाः पुत्रपौत्रक्रमेणच ॥ पूर्वद्धिमान्ः समासौपुरुषांस्त्वनमुंचति ॥ महापद्मस्तुविप्रर्षांयचार्थमुपजायते ॥ २ ॥ * ॥ तामसो

निधिः

मकरोनाममनिधिस्तेनावलोकितः॥ पुरुषोधमः प्रायः सुशीलोपिहिजायते॥ बाणखड्गष्टिधनुषां चर्म्मणांच परिग्रहम् ॥ दंशनानांच कुरुतेयातिमैत्रींचराजभिः॥ ददातिशौर्यवृत्तीनांभूभुजांयेचतत्प्रियाः ॥ क्रयविक्रयशस्त्राणां नान्यत्रप्रीतिमेतिच॥ एकस्यैव भवत्येषनरस्यनसुतानुगः॥ द्रव्यार्थं दस्युतोनाशं संग्रामेवापिसव्रजेत् ॥ ३ ॥ * ॥ कच्छपाख्योनिधियोंन्योनरस्ते नाभिवीक्षितः॥ समः प्रधानोभवतियतोसौतामसोनिधिः॥ व्यवहारान्नशिष्टेस्वपण्यजातं करोतिच ॥ क्रियाः स्वानिखिलाश्चैवनविश्वसितिकस्यचित्॥ समस्तानियथांगानिनिगृह्यास्तेहिकच्छपः॥ तथावष्टभ्यवित्तानितिष्ठत्याकुलमानसः॥ नददातिनवाभुंक्तेतद्विनाशभयाकुलः॥ निधानमुर्व्यांकुरुतेनिधिः सोसोप्येकपूरुषः॥ ४ ॥ * ॥ रजोगुणमयश्चान्योमुकुन्दोनामयोनिधिः॥ नरोवलोकितस्तेन तद्गुणोभवतिद्विज॥ वीणावेणुमृदंगादिगीतवाद्यपरिग्रहम्॥ करोतिगायतांवित्तंनृत्यतांचप्रयच्छति॥ वंदिमागधसूतानांविटानांलास्यपाठिनाम्॥ ददात्यहर्निशंभोगानभुंक्ते तैस्तु समंद्विज ॥ कुलटासुरतिश्चास्य भवत्यन्यैश्चतद्विधैः ॥ प्रयातिसंगमेकंचसनिधिर्भजतेनरम् ॥ ५ ॥ * ॥ रजःसत्त्वमयश्चान्यः कुन्दोनाममहानिधिः॥ उपैतिस्तंभमधिकंनरस्तेनावलोकितः ॥ समस्तधातुरत्नानां पण्यधान्यादिकस्यच ॥ परिग्रहंकरोत्येषतथैवक्रयविक्रयम् ॥ आधारःस्वजनानांचाप्यागताभ्यागतस्यच ॥ सहतेनापमानोक्तिं स्वल्पामपिमहामुने ॥ स्तूयमानस्मरहतीं प्रीतिंवध्नातियच्छति॥ यंयमिच्छतिवैकामं मृदुत्वमुपयातिच ॥ बह्व्योभार्याभवन्त्यस्यसूतिमत्योतिशोभनाः॥ तदन्वयेसप्तनरान्निधिः कुन्दोनुवर्त्तते॥ प्रवर्द्धमानोनुनरमष्टभागेनसत्तम ॥ दीर्घायुश्चैवसर्वेषांपुरुषाणां प्रयच्छति ॥ बन्धूनामेवभरणं येचदूरादुपागताः । तेषांकरोतिवैकुन्दः परलोकेनचाहतः॥ भवत्यस्यनचस्नेहः सहवासिषुजायते ॥ पूर्वमित्रैस्त्वशैथिल्यं प्रीतिमन्यैः करोतिच॥ ६ ॥ * ॥ तथैवसत्त्वतमसीयोविभर्त्तिमहानिधिः॥ निधिःसनीलसतसंगीनरस्तच्छीलभाग्भवेत्॥ वस्त्रकर्पासधान्यादिफलपुष्पपरिग्रहम् ॥ मुक्ताविद्रुमशंखानां शुक्त्यादीनांतथामुने ॥ काष्ठादीनांकरोत्येष

यच्चान्यज्जलसंभवम् ॥ क्रयविक्रयम प्येषांनान्यत्रंरम तेमनः ॥ तडागान् पुष्करिण्यश्चतथारामान्करोतिच ॥ बंधंचसरितां वृक्षांस्तथारोपयतेनरः ॥ अनुलेपनपुष्पादिभोगभोक्तापिजायते ॥ चिपूरुषश्चापिनिधिर्नीलोनामेषजायते ॥ ७ ॥ * ॥ रजस्तमोमयश्चान्यः शंखसंज्ञोद्विजोनिधिः ॥ तेनापिनीयते विप्रसद्गुणित्वंनिधीश्वरः । एकस्यैवभवत्येषनरं नान्य मुपैतिच ॥ यस्यशंखोनिधिस्तस्यस्वरूपंक्रोष्टुके शृणु ॥ एकएवात्मनामिष्टमन्नंभुङ्क्तेतथांवरम् ॥ कद्दन्नभुक्परिजनोनचशोभनवस्त्रधृक् ॥ नददातिसुहृद्भार्यासुतपुत्रस्नुषादिषु ॥ स्वपोषणपरः शंखीनरोभवतिसर्वदा ॥ ८ ॥ * ॥ इत्येतेनिधयः ख्यातानराणामर्थदेवताः ॥ मिश्रावलोकितःमिश्रस्वभावफलदायिनः ॥ यथाख्यातस्वभावस्तुभवत्येकविलोकनात् ॥ सर्वेषामाधिपत्येच-श्रीरेषादिजपद्मिनी ॥ ४५ * ॥ इति श्रीमार्कण्डेयपुराणेनिधिलक्षणं नामपष्टितमोध्यायः ॥ ६० ॥ नितरांधीयते । धाञः किः ॥ नितरां दधाति पोषयत्यनेनपुनर्ग्रहणाय-निधातृभिः निधीयतेवा । धिधारणे । सम्पदादित्वात् क्विप् । आगमशास्त्रनिरुक्त्वात् नलुक् ॥ आधारे ॥ यथा । गुणनिधिः ॥ नलिकानामगन्धद्रव्ये ॥ समुद्रे ॥ चिरप्रणष्टस्वामिकभूयातधनविशेषे ॥ महाकालादिनिधिशास्त्रे ॥

निधित्सन् । त्रि । निधातमिच्छति ॥ दधातेः सन्नन्ताल्लटः शत्रादेशः ॥

निधिनाथः । पुं । } कुबेरे । धनदे ॥
निधीशः । पुं । }
निधीश्वरः पुं । }

निधुवनम् । न । कम्पे ॥ सुरते ॥ केलौ । लीलायाम् ॥ नितरां धुवनं हस्तपादादिचालनमत्र ॥

निध्यानम् । न । निदर्शने । दर्शने ॥ ध्याने ॥

निध्वानः । पुं । शब्दमात्रे ॥

निनङ्क्षुः । त्रि । नाशयितुमिच्छति ॥

निनदः । पुं । ध्वनौ । शब्दे ॥ निनदनम् । णद० । नौगदनदपठस्वनइति पचेऽप् ॥ रवस्येऽघोषे ॥

निनयनम् । न । निष्पादने ॥ निनीयते । णीञ्० । ल्युट् ॥

निनादः । पुं । शब्दे ॥ निनदनम् । णद० । नौगदनदेत्यादिनापक्षे घञ् ॥

निनादितः । त्रि । शब्दिते ॥

निनीषुः । त्रि । नेतुमिच्छौ ॥ यथा । उत्तमैर्वृत्तयैर्निर्न्यं सम्यग्धांनाचरे

बुध: । निनीषु:कुलमुत्कर्षमधमान धर्मांस्त्यजेदितिमनु: ॥

निन्दक: । त्रि । निन्दाकारके । निन्दाशीले ॥ निन्दति तच्छील: । णिदि० । निन्दहिंसेतिवुञ् ॥ नभारा: पर्वताभारा नभारा: सप्तसागरा: । निन्दकाहि महाभारा भाराविश्वासघातका: ॥

निन्दतम: । त्रि । निन्दितश्रेष्ठे ॥

निन्दनम् । न । कुत्सने । निन्दायाम् ॥ णिदिकुत्सायाम् । ल्युट् ॥

निन्दा । स्त्री । अपवादे ॥ कुत्सायाम् । गर्हणे ॥ अविद्यमानदोषाभिधानं निंदेतिपरीवादादिशेष: । धीरा:स्वनिन्दामेवसहन्ते न गुरुदेवादिनिन्दाम् ॥ आत्मानं यदि निन्दन्ति स्वात्मानं स्वयमेवहि । शरीरं यदि निन्दन्ति सहायास्तेजनामम ॥ निन्दावमानावत्यन्तं भूषणं यस्ययोगिन: । धीविक्षेप:कथंतस्यवाचाटै: क्रियतामिह ॥ मन्निन्दयायदिजन:परितोषमेतिनन्वप्रयत्नसुलभोयमनुग्रहोमे । श्रेयोर्थिनोहिपुरुषा:परतुष्टिहेतोर्दु:खार्जिता न्यपिधनानिपरित्यजन्तीतिशिक्षणमिश्रा: ॥ निन्दनम् । णिदि० । गुरोस्तुलघुरितिभावेस्त्रियाम: ॥ दोषकथने ॥ अनिष्टबोधनद्वाराविध्यर्थप्रवर्त्तकवचने ॥ नहिनिन्दानिन्द्यंनिन्दितुंप्रवर्त्तते ऽपितुविधेयं स्तोतुमितिन्याय: ॥

निन्दास्तुति: । स्त्री । व्याजस्तुतौ ॥

निन्दित: । त्रि । गर्हिते । धिक्कृते । निन्दायुक्ते ॥ सर्वथ्यर्थे निन्दितस्येत्युपदेश: ॥

निन्दु: । स्त्री । मृतवत्सायाम् ॥ निन्द्यते ऽप्रजात्वेनासौ । णिदेरौणादिकउ: ॥

निन्द्य: । त्रि । गर्ह्ये ॥

निप: । पुं । कदम्बवृक्षे ॥ पुं । न । कलशे ॥ नियतं पिबन्त्यनेन । पा० । घञर्थेक: ॥

निपठ: । पुं । पाठे ॥ निपठनम् । पठ० । नौगदनदेत्यप्वा ॥

निपक्या । स्त्री । पिच्छिलायाम्भूमौ । फिसलन् इतिभाषा ॥ निपतन्त्यस्याम् । पतॢ० । संज्ञायांसमजेतिक्यप् ॥ युद्धभूमौ ॥

निपाक: । पुं । पाके ॥

निपाठ: । पुं । पठने । पाठे ॥ निपठनम् । पठ० । नौगदनदेत्यप्वभावे घञ् ॥

निपात: । पुं । पतने ॥ मृतौ ॥ मिकृष्टःपात: ॥ चादिषु ॥ प्रादिषु ॥ निपातानांद्योतकत्वमेव नतुवाचकत्वमित्यभ्युपगम: ॥ निपतनम् ।

पतल्लु° । घञ् ॥ उपसर्गातिरिक्तनि पातानांद्योतकत्वंश वाचकत्वोभयस्वी कारो ऽ व्ययंविभक्तीतिसूत्रे भाष्ये स्पष्टस्तेनतेषांवाचकत्वमपि ॥ उपस र्गाणांतुद्योतकत्वमेवेति गतिर्गताधि ष्यत्रभाष्ये स्पष्टम् ॥

निपातनम् । न । अधोनयने । अवना ये ॥ पतेः स्वार्थणयन्ताल्ल्युट् ॥ सूत्र णानुत्पन्नपदसाधने ॥ यल्लक्षणेना ऽ नुत्पन्नंतत् सर्वंनिपातनात् सिद्धम् । निपातनादिष्टसिद्धिरित्युक्तेश्च ॥

निपातितः । त्रि । निर्घिसे ॥

निपानम् । न । आहावे । उपकूपज लाशये । कूपोद्धृतजलस्थले । कूपा दिसमीपे पशूनां जलपानार्थमुद काधारे । खेल इतिभाषा ॥ नियतं पिबन्त्यस्मिन् । करणेतिपातेर्ल्युट् ॥ गोदोहनपात्रे । दोहन्याम् ॥

निपीडितः । त्रि । कृतपीडने । निचो डा इति निपीला इतिच भाषा ॥ नि तरांपीडितः ॥

निपुणः । त्रि । प्रवीणे । विज्ञे । निष्णा ते । कार्यक्षमे । तर्कादिकुशले । शि क्षिते ॥ यथा । निपुणोपि न कर्त्तव्यो वाग्वादश्चक्रमध्यत इत्यागमः ॥ नि पुणति । पुणकर्मणिशुभे । इगुपधे तिकः ॥ कार्येशुक्ष्माष्टष्टौ ॥

निफला । स्त्री । ज्योतिष्मत्याम् ॥

निफेनम् । न । अफेने ॥ इतिराजनि- घंटुः ॥

निबद्धः । त्रि । वशीकृते ॥ निबध्यतेस्म । बधबन्धने । क्तः ॥ अनुरुद्धे ॥ र- चिते ॥

निबन्धः । पुं । आनाहरोगे । मूत्रादि रोधे ॥ ग्रन्थस्यवृत्तौ । सङ्ग्रहविशे षे ॥ प्रतिवर्षम् प्रतिमासादिवादात व्यत्वेन प्रतिश्रुतवस्तुरूपे ॥ निमन्त्र णे ॥ बन्धे ॥ यथा दैवीसम्पद् वि- मोक्षाय निबन्धायासुरी मतेति ॥ निबन्धनम् । बन्धबन्धने । घञ् ॥ न । गीते ॥ इति शब्° ॥

निबन्धनम् । न । बन्धने ॥ हेतौ ॥ वी णातन्त्रीनिबन्धनोर्द्धभागे । उपना हे ॥ निबध्यतेऽनेनास्मिन्वा । बन्ध° । करणाधिकरणयोश्चेति ल्युट् ॥

निबन्धितः । त्रि । बद्धे ॥ निबन्धः सञ्जा तोस्य । तारकादित्वादितच् ॥

निबोधितः । त्रि । उपदिष्टे ॥

निभः । पुं । व्याजे ॥ त्रि । उत्तरपद- स्थः सदृशे ॥ यथा । पितृनिभःपुत्रो मातृनिभाकन्येष्टनिभमपत्यमिति- ॥ नियतं भाति । भा° । आतश्चो पसर्गइतिकः ॥ प्रकाशे ॥

निभालनम् । न । दर्शने ॥

निभृतम् । चि । भूतकाले । अतीते ॥ इति राजनिर्घण्टः ॥

निभृतः । चि । विनीते ॥ धृते ॥ नितरामभारि । भृञ्० । क्तः ॥ निश्चले ॥ एकाग्रे ॥ नितराम् पोषिते ॥ नितराङ्गुप्ते ॥ निर्ज्जने ॥ यथा । निभृतनिकुञ्जगृहङ्गतया निशि रहसि निलीयवसन्तमिति जयदेवः ॥ खातायवच्छिन्ने ॥ अस्तायोपस्थिते ॥ यथा । नभसानिभृतेन्दुना तुलामितिरघुः ॥

निमग्नः । चि । जलादौनितराम् प्रविष्टे ॥

निमज्जथुः । पुं । शयने ॥ यथा । तल्पे कान्ताम्तरैः सार्द्धमन्यद्दधिङ्निमज्जथुमिति भट्टिः ॥

निमज्जनम् । न । अवगाहने । स्नाने ॥

निमन्त्रणम् । न । नियोजनविशेषे ॥ यस्याकरणे प्रत्यवायस्तन्निमन्त्रणम् । यथा । इहभुञ्जीतभवान् ॥ यस्याकरणे प्रत्यवायोन स्यात् तदामन्त्रणम् । यथा । इहशयीत भवान् । इतिमुग्धबोधटीका ॥

निमन्त्रितः । त्रि । भोजनार्थं नियोजिते ॥

निमयः । पुं । परिवर्त्तने । परिदाने । विनिमये ॥ निमीयते । मीञ् हिंसायाम् । एरच् ॥

निमातव्यः । त्रि । परिवर्त्तनीये ॥ मेङोरूपम् ॥

निमानम् । न । मूल्ये ॥ निमीयते क्रीयते ऽनेन । माङ्० । ल्युट् ॥

निमिः । पुं । इक्ष्वाकुराजः पुत्रे ॥

निमितः । त्रि । समन्तान्मिते ॥

निमित्तम् । न । उत्पत्तिमात्रकारणे । हेतौ ॥ निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधि राकाशकल्पः । रविर्लोकचेष्टानिमित्तं यथा यः सनित्योपलब्धिस्वरूपोऽहमात्मा ॥ लक्ष्मणि ॥ शरव्ये ॥ शकुने ॥ निमित्तानिचपश्यानि विपरीतानिकेशव ॥ निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मा देतानि शास्त्रज्ञोराजा समुपलक्षयेत् ॥ फले ॥ निमेद्यति । ञिमिदा० । ञीतः- क्तः । संज्ञापूर्वकत्वान्ननत्वम् । अनात्मने पदनिमित्तइति निर्द्देशाद्वा ॥

निमित्तकम् । न । चुम्बने ॥ निमित्ते ॥

निमित्तकारणम् । न । समवाय्यसमवाय्युभयभिन्ने कारणे ॥ यथा । तुरीवेमादिकम् पटस्य । यथा वा द्व्यणुकस्येश्वरः । घटम् प्रतिच कुलालदण्डचक्रसलिलसूत्रादिकमिति ॥

निमित्तकृत् । पुं । काके ॥ इतिराजनि० ॥

निमित्तवित् । पुं । दैवज्ञे ॥ इतिहेमचन्द्रः ॥ शकुनज्ञे ॥

निमिषः । पुं । कालप्रभेदे ॥ अक्षिनिमीलने । अक्षिपक्ष्मणोःस्वाभाविकस्योन्मेषस्यसहकारिणि ॥ निमिषति । मिष० । पचाद्यच् । कुटादित्वान्न गुणः ॥ इगुपधत्त्वात्कोवा ॥

निमिषितम् । न । अक्षिव्यापारे ॥

निमीलम् । न । दीर्घनिद्रायाम् ॥

निमीलनम् । न । मरणे ॥ सङ्कोचने ॥ निमेषे ॥ मीलनिमेषणे । ल्युट् ॥

निमीलिका । स्त्री । व्याजे ॥ निमीलने ॥

निमीलितः । त्रि । मोहिते ॥ कृतनिमीलने ॥

निमेयः । पुं । परिवर्त्ते । नैमेये ॥ निमीयते । माङ्माने । अचोयत् । ईद्यति ॥

निमेषः । पुं । अक्षिनिमीलने । नेत्रपक्ष्मणोःस्वाभाविकस्योन्मेषस्यसहकारिणि । पलकमीचना इतिभाषा ॥ यथा । निमेषोन्मेषाभ्याम् प्रलयमुदयंयातिजगतीति ॥ दृष्टिनिमीलनात्मके । कालप्रभेदे । पक्ष्मस्पन्दनकाले ॥ पुंसोयावत्कालमकृत्रिमनेत्रविकाशानन्तरं पक्ष्माकुञ्चनं जायते सनिमेषः । इत्यमरटीकायाम्भरतः ॥ अक्षिपक्ष्मपरिक्षेपोनिमेषः परिकीर्त्तितः । द्वौनिमेषौत्रुटिर्नामद्वेत्रुटीतुलवः स्मृतः । इत्यग्निपुराणम् ॥ लघ्वक्षरोच्चारणमात्रेकाले ॥ लवद्वये ॥ निमिषति । मिषस्पर्द्धायाम् । इगुपधेतिकः ॥

निमेषकः । पुं । निमेषे ॥

निमेषकृत् । स्त्री । तडिति ॥ निमेषं करोति । डुकृञ्० । क्विप् ॥

निमेषरुक् । पुं । खद्योते ॥ इतित्रिकाण्डशेषः ॥

निम्नम् । त्रि । गभीरे । नीचा इतिगहरा इतिचभाषा ॥ निम्नति । म्ना अभ्यासे । आतश्चेतिकः ॥ वृक्षादिषु लताद्विवेष्टनाज्जाते वाढा इतिप्रसिद्धे चिह्ने ॥

निम्नगा । स्त्री । नदीमात्रे ॥ त्रि । नीचगामिनि ॥ निम्नङ्गच्छति । गम्लृ० । अन्येभ्योपीतिडः ॥

निम्नोन्नतम् । त्रि । उन्नतानते । वन्धुरे ॥

निम्बः । पुं । अरिष्टे । सर्वतोभद्रे । पिचुमर्दे । नीम् इतिभाषा ॥ निम्बः शीतो लघु ग्राही कटुपाको ग्निवातहृत् । अहृद्यःश्रमतृट्कासज्वरारुचिकृमिप्रणुत् ॥ व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ॥ * ॥ निम्बप

संस्मृतं नेत्र्यं कृमिपित्तविषप्रणुत् ।
वातलं कटुपाकञ्च सर्वारोचककुष्ठ
नुत् ॥ * ॥ नैम्बंफलं रसेतिक्तं पा
केतुकटुभेदनम् । स्निग्धंलघूष्णंकुष्ठ
घ्नंगुल्मार्शःकृमिमेहनुत् ॥ * ॥ नि
म्बशाकस्तु । निम्बस्यकोमलदलानि
सुयत्नभृष्टान्याज्येविपेत्तदनुसैन्धवत
क्रयुक्तान् । शालीयतण्डुलकणान्
सघृतामठेनचाघारितादृदतिरोचन
मेवलेह्याः ॥ * ॥ निम्बति स्वास्थ्य
म् । णिविसेचने । पचाद्यच् । बव-
योरैक्यम् ॥ करञ्जनिम्बजफलंकृमि
कुष्ठप्रमेहजित् ॥ * ॥ निम्बतैलन्तु
कुष्ठघ्नंतिक्तंकृमिहरम् परमितिरा
जवल्लभः ॥ क्वापित्वगुग्राह्या ॥

**निम्बकः** । पुं । अरिष्टद्रुमे ॥ स्वार्थेकः ॥

**निम्बतरुः** । पुं । मन्दारवृक्षे । बकाय
न इतिभाषाप्रसिद्धे पारिभद्रे ॥ नि
यमयति । यमउपरमे । पृ० । निं
बतिवा । णिविसेचने । पचाद्यच् ।
बवयोरैक्यम् । कर्मणिघञ्वा । नि
म्बसंज्ञकस्तरुः । शाकपार्थिवादिः ॥

**निम्बबीजः** । पुं । राजादनीवृक्षे ॥

**निम्बुकम्** । न । } निम्बूके । कागदी
**निम्बूः** । स्त्री । } नींबू इतिभाषा ॥

**निम्बूकम्** । न । अम्लजम्बीरे । शोधने
। निंबुाम् । दीप्ते ॥ निम्बूकमम्लंवा
तघ्नंदीपनंपाचनंलघु ॥ * ॥ निम्बु
कं कृमिसमूहनाशनं तीक्ष्णमम्ल-
मुदरग्रहापहम् । वातपित्तकफशू
लिने हितं कष्टनष्टरुचिरोचनम् प
रम् ॥ त्रिदोषवह्निक्षयवातरोगनि
पीडितानांविषविह्वलानाम् । मन्द
ग्रहेबद्धगुदेप्रदेयं विसूचिकायांमुन
योवदन्ति ॥ * ॥ भागैकं निम्बुजं
तोयं षड्भागं शर्करोदकम् । लव
ङ्गमरिचोन्मिश्रं पानकं पानकोत्तम
म् ॥ निम्बूफलभवं पानमत्यम्लं वा
तनाशनम् । वह्निदीप्तिकरं रुच्यं स
मस्ताहारपाचकम् ॥ इतिराजनि० ॥

**निम्लोचन्** । त्रि । अस्तङ्गच्छति ॥

**निम्लोचनम्** । न । अस्तङ्गमने ॥

**नियतः** । त्रि । निश्चिते ॥ नित्ये ॥ आ-
चारनिष्ठे ॥ वशीकृतेन्द्रिये ॥ न ।
नित्यकर्मणि ॥ नियच्छति । यम० ।
अकर्मकत्वात्कर्त्तरिक्तः । मलोपः ॥
नियततेवा । यती० । पचाद्यच् ॥

**नियतात्मा** । त्रि । समाहितचित्ते ॥ सु
शिक्षितमनसि ॥ नियतः आत्मा
यस्य ॥

**नियतिः** । स्त्री । नियमे ॥ दैवे । दि
ष्टे । भागधेये । प्राक्तनशुभाशुभक
र्मणि ॥ नियम्यतेऽनया । यमउ
परमे । क्तिन् ॥

नियती । स्त्री । दुर्गायाम् ॥

नियतेन्द्रियः । त्रि । इन्द्रियदमनशीले । संयतेन्द्रिये ॥

नियन्ता । पुं । सारथौ ॥ त्रि । शासितरि ॥ पशुप्रेरके ॥ नियच्छतिविशिष्टे विषये स्थापयति । अन्तर्भावितण्यर्थोवा । यम० । तृच् ॥

नियन्त्रितः । त्रि । अनर्गले । अबाधे ॥ इतिहेमचन्द्रः ॥ नितरांयन्त्रितः ॥ नियमिते ॥

नियमः । पुं । यन्त्रणे ॥ प्रतिज्ञायाम् । अङ्गीकारे ॥ निश्चये ॥ यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधोगम्यते पञ्च पञ्चनखाभक्ष्याइत्युक्ते गम्यते एतदतोऽन्येऽभक्ष्याइति । अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः । तद्यथा । अभक्ष्योग्राम्यकुक्कुटः अभक्ष्योग्राम्यसूकरइत्युक्ते गम्यते एतद् आरण्योभक्ष्यइतिमहाभाष्यम् ॥ भक्ष्यनियमइति भक्ष्यानुमतिरूपउपदेशइत्यर्थइति विवरणम् ॥ * ॥ प्रतिज्ञानिश्चये ॥ इतिमेदिनी ॥ व्रते ॥ आगन्तुसाधने ॥ यथा । नियमस्तुसयत्कर्माऽनित्यमागन्तुसानम् । यत् कर्म च नित्यम् नतु यावज्जीवंकर्त्तव्यम् आगन्तुभिःकादाचित्कैः कामनया-समयविशेषादिभिःसाधनैः साध्यमु-



पवासस्नानजपादि तन्नियमइत्यर्थः ॥ * ॥ नित्यकर्मणि । तत्तदाश्रमविहिताचरणे ॥ * ॥ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानेषु पञ्चसु ॥ जपोपवासप्रदक्षिणा नमस्कारादिरूपाः पुराणेयेऽधिकाउक्तास्तेएष्वेवपञ्चस्वन्तर्भाव्याः ॥ स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः । नियमोगुरुशुश्रूषाशौचाक्रोधाप्रमादता: ॥ * ॥ अक्रोधादिषु ॥ अक्रोधोगुरुशुश्रूषाशौ माहारलाघवम् । अप्रमादश्चसततंपञ्चैतेनियमाःस्मृताः ॥ * ॥ तपआदिदशसु । यथा । तपःसन्तोषआस्तिक्यंदानंदेवस्यपूजनम् । सिद्धान्तश्रवणञ्चैवह्रीर्मतिश्चजपोहुतम् ॥ दशैतेनियमाःप्रोक्तामयापर्वतनायकेतिदेवीगीता ॥ नियच्छति अनेनवा नियमनंवा । यमउपरमे- । पचाद्यच् । यमःसमुपनिविषुचेत्यप् वा ॥ सजातीयप्रवाहश्चविजातीयतिरस्कृतिः । नियमोहिपरानन्दो नियमात्क्रियतेबुधैः ॥ वेदशब्दानियमपूर्वमधीताःफलवन्तोभवन्तीति महाभाष्यम् ॥

नियमनम् । पुं । नियमे ॥ निग्रहे । बन्धे ॥ वशेनियमनमितियथा ॥

नियमविधिः । पुं । नानासाधनसाध्य-

क्रियाया मेकसाधनप्राप्ता वप्राप्तस्य परसाधनस्य प्रापके विधौ ॥ नियमः पाक्षिकेसतीत्युक्तेः । पक्षेऽप्राप्तस्य प्रापकोविधिर्नियमविधिर्भवति । यथा व्रीहीनवहन्तीत्यादिः । कथम स्यपक्षेऽप्राप्तप्रापकत्त्वमितिचेत् इत्थम् । अनेनाऽवघातस्य वैतुष्यार्थत्त्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तुनियमः। सचाप्राप्तांशपूरणम् । वैतुष्यंहिनानोपायसाध्यत्वात् यदावघातंपरित्यज्योपायान्तरंगृह्णीतुमारभ्यतेतदाऽवघातस्या प्राप्तत्त्वेन तद्विधाननामकमप्राप्तांशपूरणमेवानेनविधिनाक्रियते । अतश्चनियमविधावप्राप्तांशपूरणात्मकोनियमएववाक्यार्थः। पक्षेऽप्राप्तावघातविधानमितियावत् ॥

नियमितः । त्रि । कृतनियमे ॥ यद्वे ॥ नियमः सञ्जातोस्य । ता॰इतच् ॥

नियामः । पुं । नियमे ॥ नियमनम् । यम॰ । यमः समुपनिविषुचेतिघञ् ॥

नियामकः । पुं । नजिरा इतिप्रसिद्धे गुणवृक्षोपरिस्थिते पोतवाहे ॥ कर्णधारे ॥ नियच्छतिपोतम् । यमनियमने । ण्वुल् ॥ त्रि । नियन्तरि ॥

नियामिका । स्त्री । नियमनकर्त्र्याम् ॥

नियुक्तः । त्रि । अधिकृते ॥ नियोजिते ॥ आज्ञप्ते । प्रेरिते ॥ यथानियुक्तोऽस्मितथा करोमि ॥ नियुज्यतेस्म । युजिर॰ । क्तः ॥ अवधारिते इतिराधाकान्तः ॥

नियुतम् । न । लक्षे । १००००० ॥ इति लीलावती ॥ शतं सहस्रमयुतं नियुतं प्रयुतं मतम् । कोटिरर्बुदमितिक्रमाद्दशगुणोत्तरमिति रत्नकोशः ॥ धेनूनां नियुत प्रादाद्विप्रेभ्यः समलङ्कृते । इत्यत्रनियुते द्वेलक्षे इति श्रीधरस्वामी ॥ * ॥ दशलक्षे १०००००० । प्रयुते ॥ यथा । एकं दश शतञ्चैव सहस्र मयुतं तथा । लक्षञ्च नियुतञ्चैवकोटि रर्बुद एवच ॥ वृन्दः खर्वो निखर्वश्च शङ्खपद्मौच सागरः । अन्त्यं मध्यं परार्द्धञ्च दश वृद्ध्या यथोत्तरम् ॥ इतिपुराणम् ॥

नियुद्धम् । न । बाहुयुद्धे ॥ नियतंनितरांवा युद्धम् ॥

नियोगः । पुं । अवधारणे ॥ आज्ञायाम् ॥ कार्य्ये ॥ नियुज्यतेऽस्मिन् । युजिर॰ । घञ् ॥

नियोगी । त्रि । नियुक्ते । कर्मसचिवे । नियोगविशिष्टे ॥ नियोगोऽस्यास्ति । इनिः ॥

नियोग्यः । त्रि । नियोगार्हे । प्रभौ ॥

नियोजनम् । न । स्थापने ॥ युजिर्० । ल्युट् ॥ नियोगे । प्रेरणे ॥ त्वयैतत् क्रियतामिति क्रियासु नियोजनम्प्रेरणमित्यर्थात् ॥

नियोजितः । त्रि । नियुक्ते ॥

नियोज्यः । त्रि । प्रेष्ये । भृत्ये ॥ नियुज्यते । युजिर्० । नियोक्तुं शक्य इत्यर्थे प्रयोज्यनियोज्यौ शक्यार्थे इति ण्यति कवर्गाभावो निपातनात् ॥

नियोद्धा । पुं । कुक्कुटे ॥ इतिराजनिघण्टः ॥ बाहुयुद्धकारिणि ॥

निऽ । अ । निर्णये ॥ निषेधे ॥ वहिर्भावे ॥ क्रान्ताद्यर्थे ॥ न्दणाति । नूनये । क्विप् । ऋत इत् ॥ निःशेषे ॥

निरंशः । पुं । राशेः प्रथमभागे ॥ त्रि । अंशरहिते ॥ निर्गतोंऽशात् ॥

निरंशकः । त्रि । निरंशे ॥ स्वार्थे तद्धितः ॥ यथा । पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः । अन्धो ऽचिकित्सरोगार्त्तो भर्त्तव्यास्ते निरंशकाः ॥ तेषांपतितवर्जेभ्योभक्तवस्त्रं प्रदीयते ॥

निरंशसूर्यः । पुं । राशेः प्रथमभागस्थे भानौ ॥ राशेः प्रथमभागस्थो निरंशःसूर्यउच्यते ॥

निरक्षदेशः । पुं । अक्षदेशे । पलभाशून्यस्थाने ॥ सतुपूर्वभद्राश्ववर्षेयमकोटिः । दक्षिणे भारतवर्षेलङ्का । पश्चिमे केतुमालवर्षेरोमकः । उत्तरे कुरुवर्षे सिद्धपुरी । एताः भूवृत्तपादविवराः अन्योन्यम् प्रतिष्ठिताः । तासामुपरितो विषुवस्थोदिवाकरोयाति । तासुविषुवच्छाया ध्रुवस्योन्नतिश्चनदृश्यते । तत्रदिवामानं रात्रिमानञ्च त्रिंशन्नाडिकाः। इतिसूर्यसिद्धान्तमतमिति राजाराधाकान्तः॥

निरग्निः । पुं । अग्निसाध्यश्रौतकर्म्मत्यागिनि ॥ निरग्निब्राह्मणाः कलौ ॥

निरङ्कुशः । त्रि । अनिवार्ये । अबाधे । बाधाशून्ये ॥ इति जटाधरः ॥

निरञ्जनः । त्रि । अञ्जनशून्ये । धौतकज्जले । निर्मले ॥ अविद्यया मप्रत्यक्षे मनश्चक्षुराद्यविषये परमात्मनि ॥ उपाधि निवर्त्तके ॥ अञ्जनवदञ्जनमज्ञानं मलिनस्वभावत्वात् तन्निर्गतं यस्मात् सः ॥

निरञ्जना । स्त्री । पूर्णिमायाम् ॥ अञ्जनवहीनायाम् ॥

निरतः । त्रि । नियुक्ते ॥ यथाषट्कर्म्मनिरत इति ॥

निरतिशयः । त्रि । अतिशयाभावे ॥ निर्गतः अतिशयो ऽस्मात् ॥

निरत्ययः । त्रि । निर्बाधे ॥ अमायिके ॥ निर्गतो ऽत्ययोयस्य । निष्क्रान्तो ऽ

न्यथाद्या । निरादय इतिसमासः ॥

निरनुयोज्यानुयोगः । पुं । निग्रहस्थाना भियोगोनिरनुयोज्यानुयोग इति-गोतमलक्षिते अनिग्रहस्थाने ॥ अ वसरे यथार्थं निग्रहस्थानोद्भावना तिरिक्तं यन्निग्रहस्थानोद्भावनं तदि त्यर्थः । एतेनानवसरे निग्रहस्थानो द्भावने एकनिग्रहस्थाने निग्रहस्था-नान्तरोद्भावनेच नातिव्याप्तिः । सो ऽयं चतुर्द्धा । छलंजातिराभासोऽन वसरग्रहणञ्च । आभासो व्यभिचारा दावसिद्धाद्युद्भावनम् । अनवसरग्र-हणञ्च अकाले एवोद्भावनम् । यथा त्यजसिचेत् प्रतिज्ञाहानिः विशेषय सिचेत् हेत्वन्तरम् । एवमवसरम-तीत्यकथनमपि । यथा । उद्यमा नग्राह्यस्थापशब्दादेः परिसमाप्तौ । एवमनुक्तग्राह्यायानाद्यननुभाषणा वसरेऽनुद्भाव्यबोधाविष्करणानुभा षणप्रवृत्ते वादिनि तदुद्भावनमि-त्यादिकमूह्यम् ॥ इति ५ ध्याये ६५ सूत्रम् ॥

निरन्तरः । त्रि । घने । निविडे । सा-न्द्रे ॥ निरवधौ ॥ नीरन्ध्रे ॥ निर्गत मन्तरात् । निर्गतमन्तरमस्मिन्वा ॥

निरन्तराभ्यासः । पुं । स्वाध्याये ॥ सत तावर्त्तने ॥ निरन्तरश्चासावभ्या-सश्च ॥

निरपत्रपः । त्रि । धृष्टे । निर्लज्जे ॥ नि र्गतोऽपत्रपाया लज्जायाः ॥

निरपेक्षः । त्रि । अपेक्षारहिते । अन पेक्षे ॥ विगतस्पृहे ॥ यथा । निरपे क्षोगृहशाद्वियादिति ॥ निर्गताअपेक्षा यस्य ॥ निःसङ्गे ॥

निरयः । पुं । नरके ॥ निर्गतोऽयात् ॥

निरयपतिः । पुं । यमपुरुषे ॥

निरर्गलः । त्रि । अवाधे । अर्गलार-हिते । अनर्गले ॥ निष्क्रान्तमर्गला याः । निरादयइतिसमासः ॥

निरर्थः । त्रि । मोघे ॥

निरर्थकः । त्रि । निष्फले । मोघे ॥ न । निग्रहस्थानविशेषे । निरर्थकञ्च यतिगोतमः । वर्णक्रमनिर्देशवन्नि रर्थकम् ॥ ५१ ॥ वर्णानां क्रमेण नि र्देशो जवगतेत्यादिप्रयोगस्तत्तुल्यो निर्देशो निरर्थकं निग्रहस्थानम् । अवाचकपदप्रयोगइतिफलितार्थः । वाचकत्वं शक्त्या निरूढलक्षणया वा स्वपरिभाषया वा बोध्यम् । समयब न्धव्यतिरेकेणेति विशेषणीयम् । ते न यत्रापभ्रंशेन विचारःकर्त्तव्यइतिस मयवन्धस्तत्रापभ्रंशे नदोषः । त्रुटि तिसंवरणेतु नदोषइत्युतप्रायम् । अस्यसम्भवःप्रमादादित्यवधेयम् ॥

५१ ॥ निर्गतोऽर्थोऽस्मात् ॥

निरवग्रहः । त्रि । स्वच्छन्द ॥ निष्क्रान्तोऽवग्रहात् नियमनात् । निरादय इति समासः ॥ दृष्टिप्रतिबन्धाभावे ॥

निरवद्यः । त्रि । उत्कृष्टे ॥ वातपित्तादिजन्याध्यात्मिकादितापत्रयरहिते आत्मनि ॥ रागादिशून्ये ॥

निरवयवः । पुं । परमाणौ ॥ त्रि । अवयवहीने ॥

निरवशेषः । त्रि । सर्वस्मिन् ॥

निरवसितः । त्रि । वहिष्कृते । येन भुक्ते पात्रं संस्कारेणापि न शुद्ध्यति तत्र । चाण्डालादौ ॥

निरवहालिका । स्त्री । प्राचीरे ॥ इति शब्दमाला ॥

निरशनम् । न । भोजनाभावे । अनशने ॥ त्रि । तद्वति ॥

निरसनम् । न । प्रतिक्षेपे । प्रत्याख्याने ॥ असुक्षेपणे । ल्युट् ॥ वधे । निसूदने ॥ निष्ठीवने ॥

निरसा । स्त्री । निःश्रेणिकातृणे ॥

निरस्तः । त्रि । निष्ठ्यूते ॥ प्रेषितशरे ॥ द्रुतोदिते । त्वरितोदिते ॥ सन्त्यक्ते ॥ प्रतिहते ॥ प्रत्याख्याते ॥ भर्त्सिते ॥ निरस्यते स्म । असु० । क्तः ॥

निरस्तदयः । त्रि । निष्कृपे ॥

निरहङ्कारः । त्रि । शरीरेन्द्रियाद्यात्मवयमहमस्मीत्यभिमानशून्ये ॥ विद्यावत्त्वादिनिमित्तात्मसम्भावनाविरहिते ॥

निराकः । पुं । पचने ॥ स्वेदे ॥ असत्कर्मफले ॥ इति हेमचन्द्रः ॥

निराकरणम् । न । निराकृतौ । निवारणे ॥ निराक्रियतेऽनेन । डुकृञ्० । ल्युट् ॥

निराकरिष्णुः । त्रि । क्षिप्णौ । निराकरणशीले ॥ निराकरोति तच्छीलः । अलङ्कृञ्जितीष्णुच् ॥

निराकर्त्ता । त्रि । निराकरिष्णौ ॥

निराकारः । त्रि । आकारहीने । देहाद्याकारवर्जिते परमात्मनि ॥ मृदादिवत्कार्यातिरिक्त दृश्यस्वरूपाभावात् निर्गत आकारोऽस्मात् । निरादय इति समासः ॥

निराकुलः । त्रि । आकुलताशून्ये ॥

निराकृतः । त्रि । प्रत्याख्याते । निरस्ते ॥ यथा । कैः पुष्पैरचितान् दत्त्वा भृङ्गा भुवि निमन्त्रिताः । केन वा चम्पकेनाद्य चन्द्रं दत्त्वा निराकृताः इति ॥ निराकारि । कृञः क्तः ॥ निस्सारिते ॥

निराकृतिः । पुं । पञ्चमहायज्ञानुष्ठानरहिते ॥ यस्तु पञ्चमहायज्ञविहीनः स निराकृतिरिति जटाधरः ॥ तथा च

छन्दोगपरिशिष्टे । निराकर्त्तामरा-दीमांसविशेषो निराकृतिरिति ॥ स्त्री । निरसने । निराकरणे ॥ निराकरणम् । डुकृञ्० । स्त्रियांक्तिन् ॥ त्रि । अनाकारे ॥ अस्वाध्याये ॥ आकृतेरध्ययनचेष्टाया निर्गतः । आकृते र्जातेर्वा निर्गतः । अनधीत्यद्वि जोवेदमन्यत्रकुरुते श्रमम् । सजी वन्नेव शूद्रत्वमाशुगच्छति सान्वयः ॥ वारणे । निषेधे ॥

निरागमः । पुं । आगममूलविकले तर्के ॥ तर्कमात्रोपजीविषु बौद्धका णादसाङ्ख्यादिषु ॥

निराचारः । त्रि । अनाचारे । आचारशून्ये ॥ निर्नविद्यते आचारो यस्यसः ॥

निरातङ्कः । पुं । शिवे ॥ निर्गते आतङ्कतापशङ्के यस्मात् ॥ त्रि । आतङ्कहीने ॥

निरातपा । स्त्री । रजन्याम् ॥ त्रि । आतपशून्ये ॥

निरादेशः । त्रि । शास्त्रासम्बाररहिते॥

निराधारः । त्रि । आश्रयशून्ये ॥

निराबाधः । त्रि । पक्षाभावविशेषे ॥ यथा । अप्रसिद्धं निराबाधं निरनिर्थं सुप्रयोजनम् । असाध्यं वा विरुद्धं वा पक्षाभासंविवर्जयेदिति ॥ निराबाधम् अस्मांकं दृश्यप्रदीपप्रकाशेनायं स्वगृहेष्यवहरतीतिमिताक्षरा ॥

निराभासः । पुं । वृत्तिव्याप्यत्वेपि फलव्याप्यत्वशून्ये परमात्मनि ॥ नितरामाभिमुख्येन भासते । भासृ० । पचाद्यच् ॥ त्रि । निष्प्रतिबिम्बे ॥

निरामयः । पुं । दुर्भिक्षे । वनच्छगले ॥ शूकरे ॥ त्रि । नीरुजि । वार्त्ते । रोगरहिते ॥ निष्क्रान्तआमयात् । निरादयइतिसमासः ॥ निर्गतआमयो व्याधिर्यस्माद्वा ॥

निरामालुः । पुं । कपित्थे ॥

निरामिषः । त्रि । विषयाभिलाषरहिते ॥ आमिषशून्ये ॥

निरामिषाशी । त्रि । अमांसाशिनि ॥

निरालम्बः । त्रि । आश्रयशून्ये । निराश्रये । निर्विषये ॥

निरालम्बनत्वम् । न । देशानुसन्धानराहित्यतायाम् ॥

निरालम्बा । स्त्री । आकाशमांस्याम् ॥

निराशः । त्रि । आशाशून्ये ॥

निराशी । त्रि । वैराग्यदार्ढ्येन विगततृष्णे । निष्कामे ॥ निर्गताःआशिषःकामना यस्मात् ॥

निराश्रयः । त्रि । देहेन्द्रियाद्यभिमानशून्ये ॥ आश्रयोदेहेन्द्रियादिः अद्वैतदर्शनेन निर्गतो यस्मात् ॥ आ-

अग्रविहीने ॥ निर्गतः आश्रयो यस्मात् यस्यवा ॥

निरासनम् । न । निरसने ॥ निराङ्पूर्वासधातोर्ल्युट् ॥ आसनाभावे ॥ त्रि । तद्वति ॥

निराहारः । त्रि । आहाररहिते ॥

निरिङ्गिणी । स्त्री । तिरस्करिण्याम् । पट्याम् । यवनिकायाम् ॥

निरिन्द्रियः । त्रि । प्रजननासमर्थे । जीर्णे । इन्द्रियशून्ये ॥

निरीक्षणम् । न । दर्शने ॥

निरीक्षितः । त्रि । अवलोकिते ॥

निरीशम् । न । फाले । फले । यथकाष्ठेफालो निबध्यते तत्र । फालाधारे ॥ इत्यमरः ॥ ईशायानिर्गतः । निरादयइति समासः ॥ त्रि । ईशशून्ये ॥ नास्तिके ॥

निरीषम् । न । फले । फालाधारे । निरीशे ॥ इतिभरतोमरटीकाकृत् ॥ निष्क्रान्ताईषा ऽस्मात् । निरादयइति समासः ॥

निरीहः । त्रि । निराकाङ्क्षे । प्राप्तसमस्तैश्वर्ये ॥ निरीहस्तृणं न्वपः ॥ ईहारहिते ॥ पुं । विष्णौ ॥

निरुक्तम् । न । वेदाङ्गविशेषे ॥ यथा । ज्योतिषामयनं नेत्रं निरुक्तंश्रोत्रमुच्यते इतिस्मृतिः ॥ पदभञ्जने ॥ देववित्रायाम् ॥ त्रि । निर्वचने ॥ स्पष्टे ॥ कथिते ॥ निश्चयेनोक्तोर्थो नेन । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेनयोग स्तदुच्यतेपञ्चविधं निरुक्तम् ॥

निरुक्तिः । स्त्री । निर्वचने ॥ निश्चितोक्तिः ॥

निरुद्धम् । न । ध्येयाकारवृत्तेर्निरोधे ॥ निरुद्धंचित्तं पञ्चमी चित्तस्य असम्प्रज्ञातसमाधिभूमिः । तदुक्तम् । तस्यापिनिरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिरिति ॥ त्रि । संरुद्धे । रोधविशिष्टे ॥ निश्चयेनरुद्धम् ॥

निरुद्धप्रकाशः । पुं । मेढ्रजातक्षुद्ररोगविशेषे ॥ इति भावप्रकाशः ॥

निरुद्योगः । त्रि । उद्योगाभावविशिष्टे । निरुद्यमे ॥

निरुपद्रवः । त्रि । उत्पातरहिते ॥

निरुपप्लवः । त्रि । निर्बाधे ॥ निर्गत उपप्लवोयस्मात् ॥

निरुपमः । त्रि । अनुपमे । उपमाशून्ये ॥ निर्गता उपमासादृश्यं यस्यसः ॥

निरुपाख्यः । त्रि । असति ॥ वाचोमनसश्चागोचरे विषयतयोल्लेखायोग्ये ॥ निर्गतः उपाख्यायाः प्रत्यक्षत उपलब्धेः ॥ अस्फुटस्वरूपे ॥

निरुपेक्षः । त्रि । अनुपेक्षे । उपेक्षारहिते ॥ निर्गता उपेक्षा औदासीन्यं यस्मात् ॥

निरुप्तः । त्रि । यज्ञादौ भागशः पृथक्कृते ॥

निरूढः । पुं । निरूढलक्षणाके शब्दे ॥ यथा । पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्द इति दायभागः ॥

निरूढलक्षणा । स्त्री । शक्तितुल्यलक्षणायाम् ॥ यथा । निरूढलक्षणाः काश्चित् काश्चिन्नैवच्च शक्तित इति काव्यप्रकाशटीकायां महेश्वरः ॥

निरूढा । स्त्री । लक्षणाविशेषे ॥

निरूढिः । स्त्री । प्रसिद्धौ ॥

निरूपणम् । न । आलोके ॥ विचारे ॥ निदर्शने ॥ इति मेदिनी ॥ ध्यानानुकूले शब्दे ॥

निरूपितः । त्रि । नियुक्ते ॥ कृतनिरूपणे ॥ उपकल्पिते ॥

निरूहः । पुं । वस्तिभेदे ॥ यथा । वस्तिर्द्विधाऽनुवासाख्यो निरूहश्चेति संज्ञितः । यः स्नेहैर्दीयते स स्यादनुवासननामकः । कषायक्षीरतैलैर्यो निरूहः स निगद्यते इति ॥ निग्रहे ॥ तर्के ॥ त्रि । ऊहशून्ये ॥ निश्चिते ॥

निरेनाः । त्रि । निष्पापे ॥

निरेभः । त्रि । निःशब्दे ॥

निरोधः । पुं । नाशे ॥ रोधे ॥ निरोधनम् । रुधिर० । घञ् ॥ प्रलये ॥ निग्रहे ॥

निरोधनम् । न । निरोधे । प्रत्युपवेशने ॥ कारागारप्रवेशने ॥ रुधिर् आवरणे । ल्युट् ॥

निरोद्धव्यः । त्रि । रक्षणीये ॥

निर्ऋतिः । पुं । दिक्पालविशेषे । नैर्ऋतकोणाधिपतौ ॥ स्त्री । अलक्ष्म्याम् ॥ नियता ऋतिर्घृणा यत्र । निर्गता ऋतेः शुभादिति वा ॥ त्रि । निरुपद्रवे ॥

निर्ऋथः । पुं । सामवेदे ॥ निरन्तरम् ऋच्छति । ऋ गतिप्रापणयोः । अर्त्तेर्निरीतिथक् ॥ निर्ऋथो हिंसेति वेदभाष्यम् ॥

निर्गः । पुं । देशे ॥ इति हेमचन्द्रः ॥

निर्गतः । त्रि । निःसृते । बहिष्प्राप्ते ॥ निर्मुक्ते ॥ नितराङ्गतः ॥

निर्गन्धः । त्रि । गन्धशून्ये ॥

निर्गन्धनम् । न । मारणे ॥ गन्ध अर्द्दने । भावे ल्युट् ॥

निर्गन्धपुष्पी । स्त्री । शाल्मलिद्रुमे ॥

निर्गमः । पुं । निःसरणे ॥ निर्गमनम् । गम्ॡ० । ग्रहवृद्रित्यप् ॥

निर्गमनम् । न । प्रतीहारे । द्वारि ॥

निर्गमनद्वारम् । न । नैर्वाह्निके ॥

निर्गुणः । पुं । परमात्मनि । परमानन्दे ॥ त्रि । परमार्थतः सत्त्वरजस्तमोगुणरहिते ॥ रूपादिगुणहीने ॥ निर्धर्मके ॥ निर्गताः गुणाः सत्त्वादयो रूपादयोवा यस्मात् ॥ विद्यादिशून्ये ॥

निर्गुणा । स्त्री । गुणचयोपचयापचयरहितसाम्यावस्थमायोपाधिकब्रह्मरूपिण्यां शक्तौ ॥

निर्गुण्डी । स्त्री । नीलशेफाल्याम् ॥ सिन्दुवारे । संभालू इति भाषा । निसिन्दा इति गौडभाषा ॥ श्वेतनीलपुष्पभेदा निर्गुण्डी द्विविधामता ॥ अजकन्दे । करहाटे ॥ निर्गुडति । गुडरक्षायाम् । इगुपधेतिकः । पृषोदरादिः ॥ गुडाद्वेष्टनान्निर्गतेति स्वामी । गौरादिः ॥

निर्गूढः । पुं । वृक्षकोटरे ॥ त्रि । संवृते ॥

निर्ग्रन्थः । पुं । नग्ने । क्षपणके ॥ निःस्वे । निर्द्धने ॥ बालिशे । मूर्खे ॥ द्यूतकारे ॥ ग्रन्थेभ्योनिर्गतः ॥ मुनौ ॥ त्रि । निर्वेदङ्गते ॥ निःसहाये । निवृत्तहृदयग्रन्थाविति श्रीधरस्वामी ॥

निर्ग्रन्थकः । पुं । क्षपणे ॥ निष्फले ॥ त्रि । अपरिच्छदे ॥

निर्ग्रन्थनम् । न । मारणे ॥ ग्रथिकौटिल्ये । भावे ल्युट् ॥

निर्ग्रन्थिकः । पुं । क्षपणे ॥ त्रि । निपुणे ॥ हीने ॥

निर्ग्राह्यः । त्रि । निश्चेतुंशक्ये ॥

निर्घटम् । न । बहुमनुजसङ्कीर्णहट्टे ॥ इतिहारावली ॥ करशून्यहट्टे ॥ घटशून्ये ॥

निर्घण्टः । पुं । निघण्टौ । निर्घण्टने । गणसङ्ग्रहे । ग्रन्थानां सूचीतिख्याते ॥

निर्घातः । पुं । वाय्वभिहतवायुप्रपतनजन्यशब्दविशेषे ॥ यथाहवराहः । पवनः पवनाभिहतो गगना दवनौ यदा समापतति । भवति तदा निर्घातःसच पापो दीप्तविहगरुतः ॥ १ ॥ अथवेलादर्शनफलम् । अर्कोदये ऽधिकरणिकनृपधनियोधाङ्गनावणिग्वेश्याः । आप्रहरांशे ऽजाविकमुपहन्याच्छूद्रपौरांश्च ॥ २ ॥ आमध्याह्नाद्राजोपसेविनो ब्राह्मणांश्च पीडयति । वैश्यजलदां स्तृतीये चौरान्प्रहरेचतुर्थेतु ॥ ३ ॥ अस्तंयाते नीचान् प्रथमेयामे निहन्ति सस्यानि । रात्रेर्द्वितीययामे पिशाचसङ्घान्निपीडयति ॥ ४ ॥ तुरगकरिणः स्तृतीये विनिहन्या यायिन श्च

तुर्थेच । भैरवजर्जरशब्दो याति य त स्तां दिशंहन्ति ॥ ५ ॥ अभ्यन्तरी ब्बगतउत्पातध्वनिरेवायम् ॥ निरभ्र अशनिपाते ॥ यदान्तरीक्षेबलवान् मारुतोमरुताहतः । पतत्यधःसनिर्घातोजायतेवायुसम्भवइति ज्योतिषम् ॥

निर्घृणः । त्रि । निर्दये ॥

निर्घोषः । पुं । शब्दमात्रे ॥ निर्घोषणम् । घुषघुष्टौ । निष्पूर्वात् घञ् ॥

निर्ज्जनः । त्रि । विविक्ते । जनैरनाकीर्णे ॥

निर्ज्जरः । पुं । देवे । सुरे ॥ जरायानिष्क्रान्ताः । निरादयःक्रान्ताद्यर्थेपञ्चम्याइतिसमासः ॥ अनेकान्तवादिनां सप्तपदार्थेषुपदार्थविशेषे ॥ तत्पशिलाशयनकेशोल्लुञ्चनादितपःसञ्चयनिर्जीर्णवीर्यकर्मनिर्जरशब्देन तैरुच्यते ॥ त्रि । जरास्यते ॥ न । सुधायाम् ॥

निर्ज्जरसर्षपः । पुं । देवसर्षपवृक्षे ॥

निर्ज्जरा । स्त्री । गुडूच्याम् ॥ तालपर्ण्याम् ॥

निर्ज्जलः । त्रि । जलहीनदेशादौ ॥ यथा । सप्तप्रासादशमच्छजागतिना सम्मूर्च्छितानिर्जले तुर्यद्वादशवह्निसौम्यतिमन्नेकादशाभस्तनी । सा षष्ठी त्वंपपत्रमस्तनवमश्रूःसप्तमीवर्जिता प्राप्नोत्यष्टमवेदनांप्रथमहे तस्य स्तृतीयोभवेतिवक्ष्यामसेन ॥

निर्ज्जला । स्त्री । ज्येष्ठशुक्लेकादश्याम् ॥ यथाहव्यासोभीमसेनं प्रति । वृषस्थेमिथुनस्थेऽर्केशुक्लाह्येकादशीहिया । ज्येष्ठेमासिप्रयत्नेन सोपास्याजलवर्जिता ॥ स्नानेचाचमनेचैव वर्जयित्वोदकंबुधः । उपयुञ्जीत नैवान्यद्व्रतभङ्गोऽन्यथा भवेत् ॥ उदयादुदयं यावद्वर्जयित्वाजलंबुधः । अप्रयत्नादवाप्नोति द्वादशद्वादशीफलमिति ॥

निर्ज्जितः । त्रि । वशीकृते ॥ विजिते । प्राप्तपराजये । पराभूते ॥ नितरांजितः ॥

निर्ज्जितेन्द्रियग्रामः । त्रि । यतौ ॥ इन्द्रियाणाङ् ग्रामः । निर्जितइन्द्रियग्रामो येन ॥

निर्ज्जीवः । त्रि । जीवात्मरहिते ॥ प्राणिशून्ये ॥

निर्झरः । पुं । झरे । पर्वतान्निःसृतजलप्रवाहे । झर्णा इतिभाषा ॥ निर्झरणम् । झृष्वयोहानौ । ऋदोरप् ॥ सूर्य्यतुरङ्गे ॥ तुषाग्नौ ॥

निर्झरिणी । स्त्री । नद्याम् ।

निर्झरी । पुं । शैले । पर्वते ॥ निर्झ

राः सन्त्यस्याम् । मत्वर्थीय इनिः ॥

निर्झरी । स्त्री । नद्याम् ॥ निर्झरे ॥

निर्णतोदरी । स्त्री । लम्बोदर्याम् ॥ तनुमध्यायाम् ॥ नितरां नतं नम्रमुदरं यस्याः ॥

निर्णयः । पुं । विचारे । तर्के । चर्चायाम् ॥ अवधारणे । निश्चये ॥ विरोधपरिहारे ॥ परस्परविरुद्धार्थानां स्मृत्यादिवाक्यानां विरोधपरिहारेणार्थावधारणं निर्णयः । उक्तञ्च । तच्चे विप्रतिपन्नानां वाक्यानामितरेतरम् । विरोधपरिहारो ऽयं निर्णयस्तत्त्वदर्शनमिति ॥ निर्णय एव तत्त्वदर्शनमित्यर्थः ॥ निर्णयनम् । णी ञ० । भावे एरच् । उपसर्गादसमासेपीति णत्वम् ॥ अधिकरणविशेषे ॥ न्यायमते तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानं निर्णयः । यथा । वह्निमान् पर्वत इत्यादिबोधः ॥ इतिभाषा प० ॥ तद्धर्मावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानमिति जगदीशः ॥ अस्य लक्षणमाह गोतमः ॥ यथा । विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४० ॥ विमृश्य सन्दिह्य पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्याम् उपालम्भः परपक्षदूषणम् अर्थस्यावधारणम् तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् । यद्यप्येतावदेव निर्णयसामान्यलक्षणं तथापि विमृश्येत्यादिकं अल्पवितण्डास्थलीयनिर्णयमधिकृत्य । तदुक्तम्भाष्ये । शास्त्रेवादे च विमर्शवर्जमिति । एवं प्रत्यक्षतः शब्दाच्च निर्णये न विमर्शपक्षप्रतिपक्षापेक्षेति ॥ ४० ॥ चतुष्पाद्व्यवहारान्तर्गते शेषपादे । फैसला इति डिगरी इतिचेतरभाषा ॥

निर्णयनम् । न । निर्णये ॥

निर्णयपादः । पुं । चतुष्पाद्व्यवहारान्तर्गतव्यवहारविशेषे ॥ तत्स्वरूपं यथा । मिलितानां सभासदां पराजितोयमित्यवधारणमिति व्यवहारतत्त्वम् ॥

निर्णायनम् । न । गजापाङ्गदेशे । निर्याणे ॥

निर्णिक्तः । त्रि । शोधिते । अपनीतमले ॥ निर्णिज्यतेस्म । णिजिर् शौचपोषणयोः । क्तः ॥ अत्रदेवगृहञ्चैव श्मशानं गोद्विजालयम् । निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कदाचनेति स्मृतिः ॥

निर्णीतः । त्रि । कृतनिर्णये । निश्चयीकृते ॥ यथा । निर्णीते व्यवहारे तु प्र

मायामफलं भवेत् । लिखितं साचि-
णो वापि पूर्वमावेदितं नचेत् ॥ यथा
पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः
। निर्णीतव्यवहाराणां प्रमाणमफलं
तथेतिव्यवहारतत्त्वम् ॥

निर्णेजकः । पुं । रजके ॥ निर्णेनेक्ति ।
णिजर् ० । ण्वुल् । उपसर्गादसमासे
ऽपीतिणत्वम् ॥

निर्णेजनम् । न । चालने ॥ निर्णिजे
ल्युट् ॥

निर्णेता । चि । प्रतिभुवि ॥

निर्द्दंटः । चि । दयाहीने । निर्द्दये ॥
निष्प्रयोजने ॥ परापवादरक्ते । अ
न्यदोषरते ॥ मस्तेतीत्वेपीतिशब्द० ॥

निर्द्दयः । चि । दयाहीने ॥ निर्गता द
या यस्मात् ॥

निर्द्दरम् । न । निर्भये ॥ सारे ॥ चि ।
कठिने ॥ अपघे ॥ इतिमेदिनिकरः ॥
निर्गतः दरो यस्मात् ॥

निर्द्दहनः । पुं । भल्लातके ॥ अग्नि
शून्ये ॥

निर्द्दहनी । स्त्री । मूर्वालतायाम् ॥

निर्द्दाता । चि । लवनकर्त्तरि ॥ यथो
दुरति निर्दाता कच्चं धान्यञ्च रचती
तिमनुः ॥

निर्दिग्धः । त्रि । बलिनि । मांसले ॥
इति हेमचन्द्रः ॥

निर्दिश्यमानः । त्रि । उच्चार्यमाणे ॥

निर्दिष्टः । चि । प्रदिष्टे । प्रदर्शिते ॥ क
थिते ॥ निश्चिते ॥

निर्द्देशः । पुं । निदेशे । शासने । आ
ज्ञायाम् ॥ निर्द्देशनम् । दिश० । घ
ञ् ॥ निर्दिश्यते ऽभिधीयते ऽनेने
तिव्युत्पत्त्या प्रतिपादकशब्दे । ना-
म्नि ॥ भृतौ ॥ नाभिनन्देत मरणं ना
भिनन्देत जीवितम् । कालमेव प्रती
चेत निर्द्देशं भृतको यथा ॥ व्यवहा
रे ॥ कथने ॥ उपान्ते ॥ देशान् नि
ष्क्रान्ते ॥ निरथ बहिर्भावे ॥

निर्द्देश्यः । चि । निर्द्देष्टुं शक्ये ॥

निर्द्देष्टा । चि । निर्द्देशकर्त्तरि ॥

निर्द्दोषः । चि । दोषरहिते ॥ यथा ।
निर्दोषं दर्शयित्वा तु सदोषं यः प्रय
च्छति । समूल्याद् द्विगुणं दाप्यो वि
नयं तावदेव च्चितिमिताचरा ॥

निर्द्धनः । पुं । जरद्गवे ॥ त्रि । धनहीने ॥

निर्द्धर्म्मः । चि । धर्मरहिते ॥

निर्द्धारः । पुं । निश्चये ॥

निर्द्धारणम् । न । जातिगुणक्रियासंज्ञा
भिः समुदायादेकदेशस्य पृथक् क
रणे ॥ तद्यतश्चनिर्द्धारणइतिषष्ठी
सप्तमीच विभक्तिर्भवति । यथा । म
नुष्याणां मनुष्येषु वा चत्रियः शूरत
मः । गवां गोषु वा कृष्णा सम्पन्नचीरा ।






। अध्वगानामध्वगेषु वा धावन्तः शीघ्रतमा इति ॥ निश्चये ॥

निर्द्धारणीयः । त्रि । निर्द्धार्य्ये । निर्द्धारितव्ये ॥

निर्द्धारितः । त्रि । कृतनिश्चये ॥

निर्द्धार्य्यः । त्रि । निर्द्धारणीये ॥ निःशङ्कं कर्मकर्त्तरि ॥ निर्द्धार्यः कार्यकर्त्ता यः संयतन् सत्त्वसम्पदा । व्यसने ऽभ्युदयेवापि ह्यविकारं सदा मनः । तत्सुसत्त्वमिति प्रोक्तम् ॥ तत् सम्पदा संयतन् उद्यमं कुर्वन्निश्चयार्थः । संयुत इति वा पाठः ॥ निश्चयेन ध्रियते । धृञ् । ऋदुलोर्ण्यत् ॥

निर्द्धूतः । त्रि । खण्डिते । परित्यक्ते ॥ नितराङ्कम्पिते ॥ समुन्मूलिते ॥

निर्द्धौतः । त्रि । प्रक्षालिते ॥ धावेः कर्म्मणि क्तः । च्छ्वोरितिवकारस्योठादेशः । एत्येधत्यूठ्स्विति वृद्धिः ॥

निर्ध्यानम् । न । निध्याने ॥ दर्शने ॥ ध्यै चिन्तायाम् । ल्युट् ॥

निर्द्वन्द्वः । त्रि । शीतोष्णादिद्वन्द्वसहिष्णौ ॥ रागद्वेषादिद्वन्द्वरहिते ॥ निर्गतो द्वन्द्वात् द्वन्द्वेभ्यो वा ॥

निर्बन्धः । पुं । आग्रहे । अभिनिवेशे ॥ वपुर्वागधीषु निर्बन्धः कर्मिणो नतु साक्षिणि । स्वानिनः साध्यते पत्येनिर्बन्धो नेतरत्र हि ॥ निश्चयेन बन्धः ॥

निर्बाधः । त्रि । निरुपद्रवे ॥ विविक्ते ॥

निर्भटः । त्रि । दृढे ॥

निर्भयः । पुं । अजानेये ॥ हयोत्तमे ॥ त्रि । भीतिरहिते ॥ निर्गतं भयं यस्मात् यस्य वा ॥

निर्भरम् । न । अतिमात्रे ॥ निःशेषेण भरो भारोऽत्र । उपसर्गान्तरनिवृत्त्यर्थं निर्भरमित्युक्तम् ॥ त्रि । तद्वति ॥

निर्भर्त्सनम् । न । खलीकारे ॥ अलक्तके ॥ इति मेदिनी ॥

निर्भर्त्सितः । त्रि । धिक्कृते । निन्दिते । कृतनिर्भर्त्सने ॥

निर्भाग्यः । त्रि । भाग्यहीने । मन्दे । मूढे ॥

निर्भाज्यः । त्रि । पृथक्कार्य्ये ॥

निर्भिन्नः । त्रि । नितरां दारिते ॥

निर्भिन्नचिर्भिटः । पुं । निर्भिन्नकर्कटीसस्ये । फुट इति भाषा ॥

निर्भीकः । त्रि । निर्भये ॥

निर्म्मक्षिकम् । अ । मक्षिकाणामभावे ॥

निर्म्माटः । पुं । हट्टे ॥

निर्म्मथनम् । न । नितरां विलोडने ॥ अतिनिर्मथना दग्नि श्चन्दनादपि जायते । विषायते ऽमृतमपि यथापथ्यं समर्थतः ॥

निर्म्मदः । पुं । मदहीनगजे । उद्दान्ते




॥ मदान्निर्गतः । निर्गतामदो ऽस्मादा ॥

निर्म्मथ्या । स्त्री । नलिकायाम् ॥

निर्म्मनुष्यदारु । न । अरणौ । वह्निमन्थे ॥

निर्म्ममः । त्रि । भिक्षौ ॥ देहेष्विममेति प्रत्ययरहिते ॥ शरीरयात्रामात्रार्थेष्विप्रारब्धकर्माक्षिप्तकौपीनाच्छादनादौममेदमित्यभिमानहीने ॥ देहपुत्रभ्रात्रादिषु स्वीयेषु ममताशून्ये ॥

निर्म्मर्य्यादः । त्रि । अविनीते ॥ निर्गतो मर्यादायाः ॥

निर्म्मलम् । न । निर्माल्ये ॥ अभ्रके ॥ त्रि । मलहीने । शुद्धे ॥ रजस्तमोमलामिश्रिते ॥ रागादिमलरहिते ॥ अविद्यातत्कार्यलक्षणमलरहिते ॥ मलान्निर्गतम् । निर्गतं मलमस्मादा ॥

निर्म्मलोपलः । पुं । स्फटिके ॥

निर्म्माणम् । न । निर्मितौ ॥ सारे ॥ समञ्जसे ॥ कामभेदे ॥ इतिहेमचन्द्रः ॥

निर्म्माता । त्रि । निर्माणकर्त्तरि ॥ निर्माति । माङ्माने । तृच् ॥

निर्म्मानः । त्रि । मानरहिते ॥ निर्गतो मानात् ॥

निर्म्मानमोहः । त्रि । मानमोहाभ्यां निर्क्रान्ते । अहङ्काराविवेकाभ्यां रहिते ॥

निर्म्माल्यम् । न । देवार्पितोज्झिते । देवोच्छिष्टद्रव्ये ॥ यथा । अर्व्वाग्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्माल्यं भवतिच्चणादिति ॥ त्रि । माल्यशून्ये ॥

निर्म्माल्या । स्त्री । पृक्कायाम् ॥

निर्म्मितः । त्रि । कृतनिर्माणे । निष्पादिते । रचिते ॥

निर्म्मितकः । त्रि । मन्त्रौषधादिभिर्निष्पादिते ॥

निर्म्मितिः । स्त्री । निर्माणे । रचनायाम् ॥ असाधारणचमत्कारकारिणीरचनाहिनिर्मितिरितिव्याख्यातारः ॥

निर्म्मुक्तः । पुं । मुक्तकञ्चुके भोगिनि ॥ त्रि । त्यक्तसङ्गे । निष्परिग्रहे ॥

निर्म्मुक्तिः । स्त्री । निवृत्तौ ॥

निर्म्मुटः । पुं । वनस्पतौ । अट्टव्यवृक्षे ॥ खर्परे ॥ सूर्ये ॥ न । कारशून्येऽहट्टे । पण्याजिरे ॥

निर्म्मोकः । पुं । मोचने ॥ व्योम्नि ॥ सन्नाहे ॥ सर्पकञ्चुके । अक्षिकोषे ॥ निरस्यते नमुच्यते । मुच्लृ । कर्मणि घञ् ॥

निर्म्मोचः । पुं । त्यागे ॥ मोचाभावे ॥

निर्य्यत्। चि। निर्गच्छति॥

निर्य्यन्त्रणः। त्रि। विशृङ्खले। अबाधे। निरर्गले। स्वच्छन्दे॥

निर्य्याणम्। न। वारणापाङ्गदेशे॥ मोक्षे॥ अध्वनिर्गमे॥ पशूनांपादवन्धनदामनि॥ निर्याव्यनेन। याप्रापणे। ल्युट्॥

निर्य्यातनम्। न। वैरशुद्धौ॥ दाने। त्यागे॥ न्याससमर्पणे॥ यतनिकारादौ। स्वार्थेणिच्। भावकर्मकरणादौल्युट्॥ मारणे॥ इतिहेमचन्द्रः॥

निर्य्यामः। पुं। पोतवाहे॥ इ०हे०॥

निर्य्यासः। पुं। कषाये। क्वाथे। क्वथितद्रव्यरसे॥ द्रवद्रवे। द्रवान्निर्गत्यकठिनतांयातेरसविशेषे। वेष्टके। गंद इतिभाषा॥

निर्य्युक्तिकः। चि। युक्तिरहिते॥ यथा। नह्विक्रियारहितं वाक्यमस्तीतिप्राचां प्रवादोनिर्युक्तिकत्वादश्रद्धेयइति शब्दशक्तिप्रकाशिका॥ निर्युक्तिकं ब्रुवाणास्तुनास्माभिर्विनिवार्यन्ते इतिन्यायः॥

निर्य्यूषः। पुं। निर्यासे॥ इतिश०मा०॥

निर्य्यूहः। पुं। आपीडे। शेखरे॥ द्वारे॥ निर्यासे॥ नागदन्तके॥ निर्यूहति। यूहलौकिकोधातुः। इगुपधेतिकः॥ निरूहृतिवा। पृषोदरादित्वात् धातोर्यइागमः॥ मत्तवारणे॥

निर्य्योगः। पुं। गोःपादवन्धनरज्जौ॥ निर्युज्यतेगौरनेन। युजिर्०। घञ्॥

निर्ल्लक्षणः। चि। लक्षणहीने। पाण्डुरपृष्ठे॥ इतिहेमचन्द्रः॥

निर्ल्लिप्तः। पुं। श्रीकृष्णे॥ चि। लेपरहिते॥

निर्ल्लेखनम्। न। कर्षणे॥

निर्ल्लेपः। चि। लेपवर्जिते॥ शुद्धे॥ आसङ्गरहिते॥ पापशून्ये॥

निर्ल्लोडितः। चि। आलोकिते॥

निर्ल्ल्वयनी। स्त्री। सर्पत्वचि। कञ्चुके॥ यस्यांत्वचिसर्पोनितरां लीयते सा निर्ल्लयनी सर्पत्वगितिव्याख्यातारः॥

निर्व्वचनम्। न। निरुक्तौ। शब्देनाभिधाने॥ निश्चितं वचनम्॥

निर्व्वपणम्। न। दाने। अन्नादीनां संविभागे॥ टुवप्०। भावेल्युट्॥

निर्व्वरः। त्रि। निर्दरार्थेषु। इतिहैमोनेकार्थः॥

निर्व्वर्णनम्। न। दर्शने॥ वर्णशब्दात् सत्यापेतिणिच्। ल्युट्॥

निर्व्वर्त्तयन्। त्रि। कुर्वति॥

निर्व्वर्त्तितः। त्रि। निष्पादिते॥

निर्व्वहणम्। न। नाट्योक्त्या प्रस्तुतकथासमाप्तौ। प्रकृताभिनयस्य निर्वाहे। निष्ठायाम्॥ निर्वाहोनिर्वहणम्।

वहेर्ल्युट् ॥ नाटकसन्ध्यन्तरे ॥ यथा । मुखं प्रतिमुखञ्चैव गर्भो विमर्ष एवच । तथा निर्वहणञ्चेति नाटके पञ्चसन्धयइतिभरतः ॥

निर्व्वहणा । स्त्री । निष्ठायाम् । प्रकृताभिनयनिर्वाहे । निर्वहणे ॥ टाप् ॥

निर्व्वाहिता । त्रि । निर्वोढरि ॥

निर्व्वाणम् । न । अस्तङ्गमने । विनाशे ॥ निर्वृतौ ॥ गजमज्जने ॥ सङ्गमे ॥ मोक्षे । अपवर्गे ॥ यथा । यतितव्यं समत्वेन निर्वाणमपिचेच्छतेति ॥ समत्वबुद्धेर्निर्वाणं फलमुक्तंश्रुतौस्मृतौ ॥ सर्वदुःखोपशमलक्षणं परमानन्दरूपं निर्वाणमितिभाष्यकाराः । सर्वदुःखोपशमात्मकत्वान्निरतिशयानन्दरूपत्वाच्च परमपुरुषार्थकैवल्यरूपंब्रह्मनिर्वाणमित्युच्यतइति व्याख्याकारः ॥ अपुण्यपुण्योपरमेयंपुनर्भवनिर्भयाः । शान्ताःसन्न्यासिनोयान्तितस्मैमोक्षात्मने नमइतिविष्णोर्निर्वाणरूपत्वेभारतवचनम् ॥ निश्चले ॥ शून्ये ॥ विश्रान्ते ॥ अपवर्गसाधनग्रन्थविशेषे ॥ विद्योपदेशने ॥ आदिगुरुविकले ( ऽ ) ॥ त्रि । मुक्ते ॥ शान्ते मुनिवह्न्यादौ । चरमावस्थमनौ ॥ चरमावस्थवह्नौ ॥ वन्धाद्विर्गमनं निर्वाणम् । गत्यर्थक

वाधातोर्भावेल्युट् ॥ निर्वातिस्म । वा गतिगन्धनयोः । गत्यर्थेतिक्तः । निर्वाणोऽवातइतिसाधु ॥ आदिना निर्वाणोहस्तीनिमग्नइत्यर्थः । आदिना निर्वाणंमुक्तिर्निर्वृतिश्चेत्यपिवदन्ति ॥ यथा । प्रियदर्शनमेवास्तु-किमन्यैर्दर्शनान्तरैः । निर्वाणमाप्यते येन सरागेणापिचेतसेति ॥

निर्व्वाणमस्तकः । पुं । मुक्तौ ॥ इतित्रिकाण्डशेषः ॥

निर्व्वातः । त्रि । वायुरहिते ॥ निर्वातिस्म । वा० । गत्यर्थेतिक्तः ॥ निरस्तोवातोगतो वा ॥

निर्व्वादः । पुं । लोकवादे ॥ परिनिष्ठितवादे ॥ अपवादे ॥ निर्वदनम् । वद्व्यक्तायांवाचि वदअभिवादनस्तुत्योर्वा । निष्पूर्वोवदेर्भावेघञ् ॥

निर्व्वापः । पुं । निवापे ॥

निर्व्वापणम् । न । वधे ॥ दाने ॥ टुवप० । स्वार्थण्यन्तः । ओवैशोषणे वा । ल्युट् ॥

निर्व्वाप्यः । त्रि । कर्त्तव्ये ॥

निर्व्वार्य्यः । त्रि । निःशङ्कङ्कर्मकृति । सत्वसम्पद्दासम्पतन्कार्यकर्त्तरि ॥ भयविक्रमशसनाभ्युदयादौनिर्विकारं मनःसत्वम् तत्सम्पदासम्पतन् उद्यमंकुर्वन् यो निश्शङ्कोभूत्वाकर्मकृ

इते सनिर्वाय उच्यते ॥ निश्चयेनव्रि यते ; वृञ्० । कर्म्मणिल्युट् ॥

निर्व्वासनम् । न । मारणे । हिंसने ॥ नगरादेर्वहिष्कृतौ ॥ वासच्छेदे । चुरादिः । भावे ल्युट् ॥

निर्व्वासितः । त्रि । निष्कासिते ॥

निर्व्वास्यः । त्रि । निर्वासनीये ॥

निर्व्वाहः । पुं । कार्यसाधने ॥ निर्वह णम् । वह० । घञ् ॥ निष्पत्तौ । स मासौ ॥ यावता स्यात् स्वनिर्वाहः स्वीकुर्यात् ताव दर्थवित् । आधि- क्ये न्यूनतायाञ्च च्यवते परमार्थत इत्युपदेशः ॥

निर्व्वाहकः । पुं । कार्यसाधके । सम्पाद के ॥ नहिस्वपरनिर्वाहकस्य परापे क्षाभवति ॥

निर्व्वाहैककम् । न । सङ्गत्यन्तरे ॥ साचात्परम्परयावा एककार्यानुकू लत्वे ॥

निर्व्वाहणम् । न । निर्वहणे ॥

निर्व्वाहिका । स्त्री । प्रवाहिकायाम् ॥

निर्व्विकल्पः । पुं । सर्वविकल्पशून्ये पर मात्मनि ॥ त्रि । कल्पनाहीने ॥ नि रस्तभेदे ॥ निर्गतोविकल्पोविविधा कल्पनायस्मात् ॥ भोगैकवासनांत्य क्त्वा त्यजत्त्वं भेदवासनाम् । भावाभा वौ तत स्त्यक्त्वानिर्विकल्पोस्थितोभव ॥

निर्व्विकल्पकः । पुं । असम्प्रज्ञातसमा- धौ । ज्ञातृज्ञानादिविकल्पभेदलया पेक्षया ऽद्वितीयवस्तुनि तदाकारा- कारितायाश्चित्तवृत्ते रतितरामेकी भावेनावस्थाने ॥ तत्रदृष्टान्तः । ज- लाकाराकारितलवणानवभासेन ज लमात्रावभासवत् अद्वितीयवस्त्वा- काराकारितचित्तवृत्त्यनवभासेना- द्वितीयवस्तुमात्रमेवभासतइति । ततश्चास्यनिर्विकल्पकसमाधेः सु- षुप्तेश्चाभेदशङ्का न भवति। उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावा सद्भावमात्रेण तयोर्भेदोपपत्तेरि- ति । सुषुप्तौ वुद्धिर्हि नास्ति वुद्धेः- कारणात्मनावस्थानस्य तल्लक्षणत्वा- त् । इयत् वुद्धिवृत्तेरद्वितीयवस्त्वा- काराकारिताया अवस्थानाङ्गीकारा त् सुषुप्तेर्भेदोपपत्तेरितिभावः । ना पिमुक्तावतिव्याप्तिः । तत्रापि अवि द्यातत्कार्यसंस्काराणा मत्यन्तमु- च्छेदात् । इहपुनर्व्युत्थानादिव्यव हारदर्शनेन तेषामनुवृत्तेरिष्टत्वात् । नापिजीवन्मुक्तौ प्रसङ्गः । तस्यव्यु त्थानदशायामपिवाधितानुवृत्तिमा- त्रप्रपञ्चावभासेपि स्वस्वरूपएवाव- स्थानात् । साधकस्यवाधितानुवृत्ति मात्रप्रपञ्चावभासाभावादिति ॥

वि । निरस्तभेदे ॥ स्वा० कः ॥ * ॥ न । प्रकारता विशेष्यतानापन्नसम्बन्धानवगाह्यतीन्द्रियज्ञाने ॥ यथा । तत्प्रमानाप्रमानापिज्ञानं यन्निर्विकल्पकम् । प्रकारतादिशून्यंहि सम्बन्धानवगाहियदिति ॥ ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । इति च भाषापरिच्छेदः ॥

निर्व्विकल्पकसमाधिः । पुं । निर्विकल्पके ॥ लयविक्षेपकषायरसास्वादलक्षणविघ्नचतुष्टयेन विरहितं चित्तं निवातदीपवदचलंसदखण्डचैतन्यमात्रमवतिष्ठते यदा तदानिर्विकल्पकसमाधिरुच्यते ॥

निर्व्विकारः । पुं । जन्मादिषड्भावविकारहीने आत्मनि ॥ त्रि । विकारशून्ये ॥ प्रकृतेरन्यथाभावोविकारः । निर्गतोविकारोऽस्मात् । निरादय इति समासः ॥

निर्व्विकारता । स्त्री । विषयानुसन्धानराहित्ये ॥ प्रकृतेरन्यथाभावाभावत्वे ॥

निर्व्विस्रः । त्रि । प्राप्तवैराग्ये । विरक्ते ॥ यथा । निर्विस्रोहमनेनवासेन । यथावानिर्विस्रोत्त्वं दक्षिणेन मार्गेण गतागतलक्षणेनेतीशभाष्यम् ॥ निरुपपदाद्विदेः कर्मणिक्तः । निर्विस्रोपसङ्ख्यानात् परस्यणत्वम् पूर्वस्यष्टुत्वम् ॥ विषण्णे । दुःखिते ॥

निर्व्विद् । त्रि । खिन्ने ॥ निर्विद्यते खिद्यते । विदेर्ज्ञानार्थान्निष्पूर्वात् सत्सूद्विषेत्यादिना क्विप् ॥

निर्व्विन्ध्या । स्त्री । कच्छाख्यकुलाद्रिनद्याम् ॥ विन्ध्याद्रिनिर्गतनदीविशेषे ॥

निर्व्विशेषः । त्रि । समे । स्वगतभेदरहिते परमात्मनि । नानाविधभेदरहिते ॥ यथा । निर्विशेषं परम् ब्रह्म साक्षात्कर्तुमनीश्वराः । येमन्दास्तेनुकम्प्यन्ते सविशेषनिरूपणैरिति ॥ निर्गता विशेषा यस्मात् ॥

निर्व्विषयः । त्रि । निरालम्बे ॥

निर्व्विषा । स्त्री । तृणविशेषे । अविषायाम् । विषहायाम् । निर्विषी इति गौड भाषा ॥ यथा । निर्विषा कटुका शीताकफवातास्रदोषनुत् । अनेकविषहन्त्री च व्रणनिर्मूलकारिणीत्यस्या गुणाः ॥

निर्व्विषी । स्त्री । श्यामकन्दायाम् । उपविषायाम् ॥ इयं चतुर्विधाभवति । रक्ता श्वेता भृशंकृष्णा पीतवर्णा तथैव च । यथापूर्वंच विज्ञेया कल्याश्रेष्ठागुणोत्तमा ॥ सर्वदोषहरीलेपात् भुक्ताश्वयथुनाशिनी । श्लेष्मजान् विंशतीरोगान् सद्योहन्यान्निषेवणा-

इतिभावप्रकाशः ॥

निर्व्विष्टः । त्रि । भुक्त ॥ कृतनिर्वेशे ॥ प्राप्ते ॥ स्थिते ॥ विवाहिते ॥ कृताग्निहोत्रे ॥

निर्व्वीजा । स्त्री । काकक्षीद्राक्षायाम् । कसमिस् इतिभाषा इतिराजनिर्घण्टः ॥

निर्व्वीरः । त्रि । वीरशून्ये ॥

निर्व्वीरा । स्त्री । अवीरायाम् । पतिपुत्रविहीनायाम् ॥

निर्व्वीर्य्यः । त्रि । निष्प्रभावे ॥

निर्व्वृतः । त्रि । उपरतस्वभावे ॥

निर्व्वृतिः । स्त्री । सुस्थितौ ॥ अस्तगमने । मृत्यौ ॥ सुखे ॥ मोक्षे ॥ सिद्धौ ॥

निर्व्वृत्तः । त्रि । निष्पन्ने ॥ निर्वर्त्ततेस्म । वृतुवर्त्तने । क्तः ॥ आप्ते ॥

निर्व्वृत्तिः । स्त्री । निष्पादे ॥ समाप्तौ ॥ यथा ऽध्ययननिर्वृत्तिरिति ॥ त्रि । वृत्तिरहिते ॥

निर्व्वेदः । पुं । स्वावमानने ॥ एतावता कालेनाप्ययं न सिद्धः किमतः परं कष्टमित्यनुतापे । खेदे ॥ वैराग्ये ॥ यथा । यदाते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदागन्तासिनिर्वेदं श्रोतव्यस्यश्रुतस्यचेति ॥ शान्तरसस्य स्थायिभावे । निर्वेदःस्थायिभावोस्ति शान्तोपिनवमोरसः ॥ परवैराग्ये ॥ यथा । ततः कदाचिन्निर्वेदान्निराकारान्नितेनच । लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मयेतिमोक्षधर्म्मः ॥

निर्व्वेशः । पुं । भोगे ॥ वेतने ॥ मूर्च्छने ॥ निर्वेशनम् निर्विश्यते ऽनेनवा । विश० । अकर्त्तरिचेति हलश्चेति वा घञ् ॥

निर्व्वेशनम् । न । उपभुक्तौ ॥

निर्व्वेष्टनम् । न । नाडिचीरे । तूर्यवेष्टनवस्त्राम् ॥ त्रि । वेष्टनरहिते ॥

निर्व्वैरः । त्रि । सर्वभूतेष्वपकारिष्वपिद्वेषरहिते ॥ निष्क्रान्तो वैरात् ॥

निर्व्वोढा । त्रि । निर्वहितरि ॥

निर्व्यग्रः । त्रि । स्वस्थे ॥

निर्व्यथनम् । न । छिद्रे । रन्ध्रे ॥ व्यथ० । भावेल्युट् । निश्चयेनव्यथनं भयंचलनंवा यत्र ॥

निर्व्यपेक्षः । त्रि । निस्पृहे ॥

निर्व्यूढः । त्रि । त्यक्ते ॥ समाप्ते ॥

निर्व्यूहः । पुं । शेखरे ॥ द्वारि ॥ निर्यासे ॥ नागदन्तके ॥ निर्व्यूहति । इगुपधेतिकः ॥

निर्व्यूह्यमानः । त्रि । इतस्ततश्चाल्यमाने ॥

निर्हरणम् । न । दाहार्थं शवादिनय

ने ॥ निष्काशने ॥ निःशेषेण हरणे ॥

निर्हार: । पुं । शल्याद्युत्पाटने । अभ्यवकर्षणे ॥ मलमूत्रादित्यागे ॥ निर्हरणम् । हृञ्० । घञ् ॥ यथेष्टविनियोगे ॥ न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् । स्वकादपि च वित्तादि स्वस्य भर्त्तुरनाज्ञया ॥

निर्हारगृहम् । न । } विण्मूत्रादित्यागार्थगेहे । पैखरा इतिभाषा ॥
निर्हारस्थानम् । न । }

निर्हारी । पुं । दूरगामिगन्धे । समाकर्षिणि ॥ त्रि । तद्वति ॥

निर्हृत: । त्रि । दग्धे ॥

निर्ह्राद: । पुं । स्वाने । शब्दे ॥

निलय: । पुं । गृहे । वेश्मनि ॥ निलीयतेऽत्र । लीश्लेषणे । पुंसीतिघः ॥

निलयनम् । न । आधारे ॥ स्थाने ॥ निलीयतेस्मिन् । ली० । ल्युट् ॥

निलायी । त्रि । निवासिनि ॥

निलिम्प: । पुं । देवे । सुरे ॥ निलिम्पति । लिपउपदेहे । नौलिम्पेरिति शः । मुचादित्वान्नुम् ॥

निलिम्पा । स्त्री । स्त्रीगवि ॥

निलिम्पिका । स्त्री । निलिम्पायाम् । सौरभेय्याम् ॥ स्वार्थेकन् ॥

निलीन: । त्रि । निःशेषेणलीने । संगते ॥

निवचनेकृत्य । अ । } वा वं नियम्येत्यर्थे ॥ वचनाभावेनिवचने । अर्थाभावेऽव्ययीभावः । तृतीयासप्तम्योर्बहुलम् । ऽध्येपदेनिवचनेचेतिगतिसंज्ञा । कुगतीतिसमासः ॥
निवचनेकृत्वा । अ । }

निवपनम् । न । पितृद्देश्यकदाने ॥

निवरा । स्त्री । कन्यायाम् । कुमार्याम् ॥ वृङ्० वृञ्० । आर्य्यां ग्रहवृद्रिश्चादिनाकर्मण्यप् ॥

निवर्त्तनम् । न । व्यावर्त्तने । निवृत्तौ ॥ यतोयतो निवर्त्तते ततस्ततो विमुच्यते । निवर्त्तनाद्धि सर्वतो न वेद दुःखमण्वपि ॥ त्रिंशतिवंशपरिमाणे ॥

निवर्त्तित: । त्रि । आकृष्टे ॥

निवर्हणम् । न । मारणे ॥ वर्हहिंसायाम् । भावेल्युट् ॥

निवर्हणीय: । त्रि । वध्ये ॥

निवर्हित: । त्रि । अपहृते ॥

निवसति: । स्त्री । गृहे ॥

निवसथ: । पुं । ग्रामे ॥ इतिहेमचन्द्रः ॥

निवसनम् । न । वस्त्रे ॥ गृहे ॥ निवसेल्युट् ॥

निवह: । पुं । समूहे ॥ नितरामूह्यते । ऊह० । पुंसीतिघः ॥ सप्तवाय्वन्तर्गतवायुविशेषे ॥ नितरां वहति । वह० । पचाद्यच् ॥

निवातः । पुं । दृढसन्नाहे । अस्त्राभेद्यवर्मणि ॥ आश्रये ॥ त्रि । वातशून्ये ॥ निरुद्धो निवृत्तो वा वातोऽस्मात् ॥

निवातकवचः । पुं । अच्छिद्रकञ्चुके ॥ हिरण्यकशिपोः पौत्रे दैत्ये । संह्रादपुत्रे ॥

निवापः । पुं । पितृदाने । सपिण्डनादूर्ध्वं पितुद्देशेनदाने ॥ न्युप्यते निवपनंवा । टुवप० । कर्मणि भावे वा घञ् ॥ दानमात्रे ॥

निवारः । पुं । निवारणे ॥

निवारणम् । न । निश्चयेनवारणे ॥

निवारितः । त्रि । निराकृते । कृतनिवारणे ॥

निवासः । पुं । गृहे ॥ निवसन्त्यस्मिन् । वस० । घञ् ॥ निवासदेशे ॥ निवासो नाम यत्र सम्प्रत्युष्यतइति भाष्यम् ॥

निवासी । त्रि । निवसनशीले ॥ निवसति तच्छीलः । वस० । णिनिः ॥

निविडः । त्रि । सान्द्रे । घने । नीरन्ध्रे । दृढे ॥ निविडाःकेशाः ॥ अवटीटे ॥ नासिकायाःनतम् । नेर्विडज्विरीसचौ । तद्योगान्नासिकानिविडा ॥

निविरीसः । त्रि । अवनाटे । निविडे ॥ नासिकायानतम् । नेर्बिडच्विरीसचौ । तद्योगान्नासिका निविरीसा पुरुषोनिविरीसः ॥ सान्द्रे ॥

निविष्टः । त्रि । स्थिते ॥ निविश० । क्तः ॥ प्रविष्टे ॥ यथा । उडुगणपरिवारो नायकोप्योषधीनाममृतमयशरीरःकान्तियुक्तोपिचन्द्रः । भवति विकलमूर्त्तिर्मण्डलं प्राप्य भानोः परसदननिविष्टःकोलघुत्वंनयातीति ॥

निवीतम् । न । कण्ठलम्बिते यज्ञसूत्रे ॥ त्रि । प्रावृते । परिहित वस्त्रे ॥ निवीयतेस्म । व्येञ्संवरणे । क्तः । सम्प्रसारणादिः ॥ यद्वा । निवीयतेस्म । अज० । अजेर्विः । वीगत्यादिषु वा । क्तः ॥ न्यजतिस्म निवेतिस्मवा । गत्यर्थेतिक्तः ॥ निम्नधोभागे वीतं गमन मस्य वा ॥

निवीती । पुं । कण्ठलम्बियज्ञसूत्रवति द्विजे ॥ शिरोवधाय दक्षिणपाणौ दावप्यनुद्धृतकण्ठादेवसज्जने ऋजुप्रालम्बे यज्ञसूत्रे वस्त्रेवा निवीती द्विजो भवति ॥ निवीतमस्यास्ति । अतइनिठनाविनीनिः ॥ कृतोपवीती देवेभ्यो निवीतीच भवेत्ततः । मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रा नृषींस्तथा ॥

निवृतम् । त्रि । निवीते ॥ परिक्षिप्ते । परिखादिना वेष्टिते ॥ निव्रियते-

स । वृञ्० । क्तः ॥

निवृत्तः । त्रि । व्यावृत्ते ॥ गते ॥ परि समाप्ते ॥ निवृत्तिविशिष्टे । विरते ॥

निवृत्तचक्षुः । त्रि । आवृतनेत्रे ॥ निवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षुंषि बाह्यानि करणानि येन ॥

निवृत्तात्मा । पुं । निषेधे ॥ निषेधस्तु निवृत्तात्मा कालमात्रमपेक्षते ॥

निवृत्तिः । स्त्री । उपरतौ । उपरमे । विरतौ ॥ यद्विषयं यदाश्रय मज्ञानं तद्विषयतदाश्रयप्रमाणज्ञानात् तन्निवृत्ति र्भवति ॥ प्रवृत्तिप्रागभावे ॥ निवर्त्तते निवर्त्तनं वा । वृतु० । क्तिन् ॥

निवेदकः । त्रि । विज्ञापनस्य कर्त्तरि ॥

निवेदनम् । न । आवेदने । सम्मानपूर्वकविज्ञापने ॥ नि विद् ० । ल्युट् ॥ समर्पणे ॥

निवेदितः । त्रि । कृतनिवेदने ॥

निवेशः । पुं । विन्यासे ॥ सैन्यविन्यासे ॥ शिविरे । आगन्तुकसैन्यवासे ॥ उद्वाहे ॥ स्थाने ॥ निवेशनम् । निविश० । घञ् ॥ निविशन्तेस्मिन् । हलश्चेतिघञ् ॥ कटके ॥ इतिशब्दाम्बुधौ प्राणकृष्णः ॥

निवेशनम् । न । गेहे ॥ स्थितौ ॥ प्रवेशे ॥ निविश० । ल्युट् ॥

निवेशनीयः । त्रि । निवेष्टुं योग्ये । निवेशनार्हे ॥

निवेशितः । त्रि । विहिते ॥ विशतेर्ण्यन्तात् कर्म्मणि क्तः ॥

निवेश्यः । त्रि । निवेशनीये ॥

निट् । स्त्री । निशायाम् । रात्रौ ॥ नितरां श्यति तनूकरोति व्यापारान् । शोतनूकरणे । आतश्चोपसर्गइतिकः । पृषोदरादिः ॥

निशठः । पुं । वसुदेवात्मजे ॥

निशमनम् । न । दृष्टौ ॥ श्रुतौ ॥

निशा । स्त्री । रजोजनन्याम् । रात्रौ ॥ नितरां श्यति तनूकरोति व्यापारान् । शो० । आतश्चोपसर्गइतिकः ॥ टाप् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥ लग्नविशेषे ॥ यथा । अजगोपतियुग्मञ्च कर्किधन्विमृगा स्तथा । निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिनात्मकाइति ॥

निशाकरः । पुं । चन्द्रे ॥ निशां करोति । डुकृञ्० । दिवाविभानिशेति टः ॥ कुक्कुटे ॥

निशाख्या । स्त्री । हरिद्रायाम् ।

निशागणः । पुं । गणरात्र । रात्रिसमूहे ॥

निशाचरः । पुं । राक्षसे ॥ फेरौ । सृगाले ॥ पेचके । घूके ॥ सर्पे ॥ भूते ॥

॥ चक्रवाके ॥ चोरकभेषजे ॥ निशायां चरति । चर० । चरेष्टः ॥ त्रि । रात्रिचरमात्रे ॥

निशाचरी । स्त्री । पांशुलायाम् । कुलटायाम् ॥ राक्षस्याम् ॥ अनिर्वृति निशाचरी मनगृहान्तराले स्थिता निहन्ति निगमागमस्मृतिपुराणशास्त्रोदिताम् । क्रियां तदनुगा सखी हृदय एव चिन्ताविशत् तयोर्दमनकारणं त्वमसिकेवलं भूपते ॥ केशिनीनामगन्धद्रव्ये ॥ टित्त्वान् ङीप् ॥

निशाचर्म्म । न । तमसि । अन्धकारे ॥

निशाजलम् । न । हिमे । तुहिने ॥

निशाटः । पुं । पेचके ॥ निशाया मटति । अट० । अच् ॥ निशाचरे ॥

निशाटकः । पुं । गुग्गुलौ ॥ इतिराजनिर्घण्टः ॥

निशाटनः । पुं । उलूके । पेचके ॥ निशाचरे ॥

निशातः । त्रि । तेजिते । निशिते । शाणिते ॥ निशायते स्म । शो० । क्तः । शाच्छोरिति पक्षेइत्त्वाभावः ॥

निशादः । त्रि । निशाभुजि ॥

निशादिः । स्त्री । सन्ध्यायाम् ॥ इति राजनिर्घण्टः ॥

निशानम् । न । तीक्ष्णीकरणे ॥

निशान्तम् । न । सद्मे । गृहे । भवने ॥ उषसि । प्रभाते ॥ यथा । निशान्ते निशान्ताङ्गनागानयुक्ते स्फुरत्सारकाभानुमद्भानुपूते । प्रसन्नाम्बरान्ते रटद्ब्रह्मगीते जगद्रचितुंमुच निद्रां हगन्ते ॥ इत्युत्कलदयारामभट्टाचार्य्यः ॥ त्रि । शान्ते ॥

निशान्धः । त्रि । रात्र्यन्धे ॥

निशान्धा । स्त्री । जतुकालतायाम् ॥

निशापतिः । पुं । चन्द्रे ॥ निशायाः पतिः ॥ कर्पूरे ॥

निशापुष्पम् । न । उत्पले ॥

निशाबलः । पुं । मेषवृषमिथुनकर्कटधनुर्मकरराशिषु ॥

निशाभङ्गा । स्त्री । दुग्धपुष्प्याम् । दुग्धपेया इतिगौडभाषा ॥

निशामणिः । पुं । चन्द्रे ॥ निशाया मणिरिव ॥

निशामनम् । न । दर्शने । चाक्षुषज्ञाने ॥ आलोचने ॥ श्रवणे ॥ ज्ञापनमात्रे ॥

निशामृगः । पुं । शृगाले ॥

निशारणम् । न । मारणे ॥ शृहिंसायाम् । स्वार्थेण्यन्तः । भावे ल्युट् ॥ पुं । रात्रियुद्धे ॥

निशारत्नः । पुं । चन्द्रे ॥ इतिहेमचन्द्रः ॥

निशारुकः । पुं । सप्तरूपकान्तर्गतरूपकभेदे ॥ तल्लक्षणंयथा । लघुद्वन्द्वं

गुरुद्वन्द्वं तथासताठकः स्मृतः। चतुर्विंशति वर्णैस्तु रसेश्वाख्ये निशारुकः ॥ तालविशेषे ॥ यथा। प्रविश्य नर्त्तकोरङ्गं विकीर्य्य कुसुमादिकम्। निशारुकेण तालेन कोमलं न्त्यमाचरेत् ॥ इति सङ्गीतदामोदरः ॥

निशावनः। पुं। शणे ॥ इतिराजनिर्घण्टः ॥

निशावेदी। पुं। कुक्कुटे इतिहेमचन्द्रः॥

निशाहसः। पुं। कुमुदे। कैरवे ॥ इति त्रिकाण्डशेषः ॥ निशायां हसः हसनं विकाशो ऽस्य ॥

निशाह्वा। स्त्री। हरिद्रायाम् ॥ निशा आह्वायस्याः। निशापदेन सर्व्वेरात्रिपर्य्याया हरिद्रानामानि भवन्ति ॥

निशितः। त्रि। शाणिते। तीक्ष्णीकृते ॥ निशायते स्म। शो०। क्तः। शाछोरिति वेत्वम् ॥ न। लौहे ॥

निशिपालः। पुं। वृत्तविशेषे ॥ यथा। तालशररत्नधररत्नवरसुन्दरम् भावयुततालगणमन्त्यकृतचामरम्। शुद्धमतिनागपतिचित्तकृतसङ्गमम् वृत्तनिशिपालमसिताचिहृदयङ्गमम् ॥ यथा। चन्द्रमुखि लोकमुषि वाति मलयानिले याति मम चित्तमिव गाढमदनानले। तापकरकामशरशल्यभरशीलितं मा मिवहिप

श्य जहि रोष मतिसञ्चितमिति ॥

निशिपुष्पा। स्त्री। } शेफालिका-
निशिपुष्पिका। स्त्री। }

याम्। पारजात इति हारसिङ्गार इतिच भाषा ॥

निशिपुष्पी। स्त्री। निशिपुष्पिकायाम् ॥ निशि रात्रौ विकसितानि पुष्पाण्यस्याः। मध्यमपदलोपः। सप्तम्या अलुक्। पाककर्णेति ङीष् ॥

निशीथः। पुं। अर्द्धरात्रे ॥ निशेरते ऽस्मिन्। शीङ्०। निशीथगोपीथावगथाः इतिथक् ॥ रात्रिमात्रे ॥

निशीथिनी। स्त्री। त्रियामायाम्। रात्रौ ॥ निशीथो ऽस्त्यस्याम्। इनिः। ङीप् ॥

निशीथिनीनाथः। पुं। चन्द्रमसि ॥

निशीथ्या। स्त्री। रात्रौ इति भूरि० ॥

निशुम्भः। पुं। शुम्भावरजे दानवविशेषे ॥ वधे ॥

निशुम्भनम्। न। मारणे ॥ इतिहलायुधः ॥

निशुम्भमथनी। स्त्री। }
निशुम्भमर्द्दिनी। स्त्री। } दुर्गायाम् ॥
निशुम्भशुम्भमथनी। स्त्री। }

निशुम्भी। पुं। बुद्धविशेषे। वज्रकपालिनि। वज्रटीके ॥

निशैतः। पुं। बकपक्षिणि ॥ इति त्रि-

काण्डशेषः ॥

निश्रेणा । स्त्री । त्रिवृतायाम् । रेच-न्याम् ॥

निश्चयः । पुं । संशयान्यज्ञाने । निर्णये । सिद्धान्ते । अध्यवसाये । इदमित्थमेवेति संशयविपर्ययरहिते विषयपरिच्छेदे ॥ निश्चयनम् ॥ चिञ्० । शब्दवृद्धनिश्चिशम स्त्वेष्यप् ॥ चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवारूढम् । ब्रह्मैवास्ति तदन्यन्न किञ्चिदपि निश्चयो विदुषामिति पूज्यपादाः ॥ प्रमाणनिबन्धने । शास्त्राचार्यवचनतात्पर्यविषयेऽर्थे ॥

निश्चलः । त्रि । अचले । स्थिरे ॥ असम्भावनाविपरीतभावनारहिते ॥ जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिते ॥ अवहितकरणकलापे ॥

निश्चला । स्त्री । भूमौ । अचलायाम् ॥ शालपर्ण्याम् ॥

निश्चलाङ्गः । पुं । वके ॥ त्रि । पर्वतादौ ॥ स्पन्दरहिते ॥

निश्चायकः । त्रि । निर्णायके । निश्चयकर्त्तरि ॥

निश्चारकः । पुं । पुरीषस्यक्षये ॥ स्वैरे ॥ समीरणे ॥ इतिमेदिनी ॥

निश्चितः । त्रि । विशेषतयाज्ञाते । प्रमाणते निर्णीते ॥ यथा । जगतश्चयन्मूलं तत्परिज्ञानात् परं श्रेय इति सर्वोपनिषदां निश्चितोऽर्थ इति भाष्यम् ॥ निश्चितवति ॥ ब्रह्मविदि ॥ निसुचिञ्० । कर्त्तरि क्तः ॥

निश्चिन्तः । त्रि । चिन्ताशून्ये । चिन्तामुक्ते ॥ निर्गताचिन्तायस्मात् ॥ द्वावेव चिन्तया मुक्तौ परमानन्दआप्लुतौ। यो विमुग्धो जडो बालो यो गुणेभ्यः परङ्गतः ॥

निश्चीयमानः । त्रि । निश्चयविषये ॥

निश्चीरानदी । स्त्री । तीर्थविशेषे ॥

निश्चुक्कणम् । न । दन्तशाणे । मिसि • इतिभाषा ॥ इतित्रिकाण्डशेषः ॥

निश्चेष्टः । त्रि । ईहारहिते । निरुद्योगे ॥ निर्गता चेष्टा यस्मात् ॥

निश्चेष्टता । स्त्री । कायिकव्यापाराकरणे ॥

निश्चेष्टाकरणः । पुं । कामबाणविशेषे ॥ मनःशिलाघटितौषधविशेषे ॥

निश्रेणी । स्त्री । अधिरोहिण्याम् । काष्ठादिकृतारोहणमार्गे । निसैनी इति भाषा ॥ नियता श्रेणिःपङ्क्तिरत्र ॥

निश्वासः । पुं । एतने । बहिर्मुखश्वासे ॥ निश्वसनम् । श्वसप्राणने । घञ् ॥

निश्वाससंहिता । स्त्री । वराहपुराणप्रसिद्धे शिवप्रणीतशास्त्रविशेषे ॥

निषङ्गः । पुं । तूणीरे ॥ नितरां सज्यन्ते शराअत्र । षञ्ज० । हलश्चेतिघञ् ॥ सङ्गमे ॥

निषङ्गथिः । पुं । समालिङ्गे ॥ निषजति । षञ्जसङ्गे । नौषञ्जेर्गथिन् । चजोरितिकुत्वम् ॥

निषङ्गी । त्रि । धनुर्द्धरे ॥ तूणीरे ॥ निषङ्गोस्याश्मिन्वास्ति । इनिः ॥

निषण्णः । त्रि । आसीने ॥ यथास्थानस्थिते ॥ यथा । ज्वरे प्रमोहो भवति स्वल्पै रपि विचेष्टितैः । निषण्णं भोजयेत् तस्मान्मूत्रोच्चारौ चकारयेदिति ॥ निषीदतिस्म । षद्लृ० । गत्यर्थेतिक्तः । रदाभ्यामितिनः ॥

निषण्णकम् । न । सुनिषण्णे ॥ त्रि । आसीने ॥

निषदनम् । न । स्थाने ॥ निश्चयेनसीदन्त्यत्र । षद्लृ० । अधिकरणे ल्युट् ॥

निषद्या । स्त्री । आपणे । हट्टे ॥ निषीदन्त्यस्यां जनाः । षद्लृ० । संज्ञायांसमजेतिक्यप् । सदिरप्रतेरितिषः ॥ क्षुद्रखट्वायाम् ॥

निषद्वरः । पुं । जम्बाले । कर्द्दमे ॥ निसीदन्त्यत्र । षद्लृ० । नौसदेरितिष्वरच् । सदिरप्रतेरितिषत्वम् ॥ यद्वा । निषदनम् । सं० । क्विप् । निषद् आसनस्य वरः आवरकः । वृञ् आवरणे आधृषीयः । पचाद्यच् ॥ स्मरे ॥

निषद्वरी । स्त्री । निशायाम् ॥ षित्वान्ङीष् ॥

निषधः । त्रि । कठिने ॥ पुं । देशविशेषे बहुवचनान्तः ॥ तद्देशराजे ॥ निषादस्वरे ॥ पर्वतविशेषे । इलावृतस्य दक्षिणे द्विसहस्रयोजनविस्तीर्णे पूर्वतोदीर्घेहरिवर्षस्यमर्यादाशैले ॥ निषीदति । षद्लृ० । अच् । पृषोदरादिः ॥

निषादः पुं । तन्त्रीसमुत्थिते कण्ठोत्थिते च स्वरविशेषे ॥ निषादं रौति कुञ्जरः ॥ पारशवे । ब्राह्मणाच्छूद्रकन्यायामूढायामुत्पन्ने धीवरविशेषे ॥ चण्डाले ॥ निषीदति मनोयस्मिन् पाप मस्मिन्वा । षद्लृ० । हलश्चेतिघञ् । सदिरप्रतेरितिषत्वम् ॥ वेणोरुमन्थनादुत्पन्ने ॥ दग्धस्थाणुप्रतीकाशो विकटाचो तिह्रस्वकः । किङ्करोमीति तान् सर्वानविप्रानाह सचातुरः ॥ निषीदेति तमूचुस्ते निषादस्तेन सोभवत् । तत स्तत्सम्भवाज्जाता विन्ध्यशैलनिवासनः ॥ निषादा मुनिशार्दूल पापकर्मोपलक्षणाः । तेन द्वारेण निष्क्रान्तं

तत् पापं तस्य भूपतेः ॥ निषादास्ते ततो जाता वेनकल्मषनाशनाः ॥ इति विष्णुपुराणम् ॥

निषादकर्षूः । पुं । देशविशेषे ॥

निषादाधिपः । पुं । रामायणप्रसिद्धे गुहाख्ये ॥ निषादानामधिपे ॥

निषादी । पुं । हस्तिपके । हस्त्यारोहे ॥ निषीदत्यवश्यम् । षद् लृ० । आवश्यकेणिनिः ॥ यद्वा । निषादयत्युपवेशयति हस्तिनम् । ग्रह्यादित्वात् आवश्यके वा णिनिः ॥ उपविष्टे ॥

निषिद्धः । त्रि । अभावगतेष्टसाधनता निषेधकनञ्पदयोगिवाक्यगम्ये । लिङाद्यनुषक्तनञ्योगिवाक्यगम्ये ॥ वाधिते ॥ निषेधविषये ॥ निषिद्धाति निषिद्ध्यतेस्मवा । सिधु० । कर्त्तरि कर्मणिवा क्तः ॥

निषिद्धकर्म्म । न । नरकाद्यनिष्टसाधने ब्राह्मणहननादौ ॥ नरकादीत्यादिपदादैहिकदुःखग्रहः । ब्राह्मणहननादीत्यादिपदात्सुरापानादिग्रहः ॥

निषेकः । पुं । गर्भाधाने ॥ न । रेतसि ॥ निषिच्यते । षिच० । घञ् ॥

निषेदिवान् । त्रि । निषण्णे ॥ भाषायांसदवसश्रुवइतिक्कसुप्रत्ययः ॥

निषेदुषी । स्त्री । निषण्णायाम् ॥ ङीप् ॥

निषेधः । पुं । प्रतिषेधे । निवर्त्तने ॥ यन्निन्द्यतेतन्निषिध्यते इतिविधिस्पृष्टे निषेधानवकाशश्चेतिन्यायः ॥ निषेधनम् । निपूर्वात् षेधतेर्घञ् । सुषामादित्वात् षत्वम् ॥

निषेवणम् । न । सेवने ॥

निषेवितः । त्रि । नितरामनुष्ठिते ॥

निषेव्यः । त्रि । सेवनीये ॥ सेव्यमाने ॥ सेविते ॥ निसेवितुमर्हः । षेवृ० । अर्हेयत् । सतांनिषेव्योहिमवान् भोगिनांमलयाचलः ॥

निष्कः । पुं । न । साष्टहेमशते । साष्टसुवर्णशते । शाण्डीयषोडशमाषकपरिमितं स्वर्णंसुवर्णः तेषामष्टाधिकशते ॥ दीनारे । व्यावहारिकरूपके ॥ कर्षे । स्वर्णकर्षे ॥ वक्षोलङ्कारे ॥ हेममाषे ॥ हेमपले ॥ निश्चयेन कायति । कै० । आतश्चेति कः । इदुदुपधस्येतिषः ॥ यद्वा । निषीदति । षद्लृ० । नैसदेर्डिच्चेतिकन् । सदिर् प्रतेरितिषः ॥ चतुर्भिः सुवर्णैः परिमितेमानविशेषे ॥ चतुःसौवर्णिकोनिष्कोविज्ञेयस्तु प्रमाणतः ॥ षोडशद्रम्मे । सोलहकाहन इतिगौडभाषा ॥ माषकचतुष्टये ॥ इतिवैद्यकपरिभाषा ॥

निष्कारटक: । त्रि । उपसर्गरहिते ॥

निष्कारठ: । पुं । वरुणद्रुमे ॥ इतिशब्दचन्द्रिका ॥

निष्कम्प: । त्रि । निस्तरङ्गे ॥ निर्वेपथौ ॥

निष्कर्ष: । पुं । निश्चये ॥ निष्कर्षणम् । कृष० । घञ् ॥ इयत्तापरिच्छेदे ॥

निष्कलम् । न । ब्रह्मणि । निरवयवे ॥ निर्गता: कला यस्मात् ॥ त्रि । कलाशून्ये ॥ नष्टवीर्ये ॥ निरुपाधौ ॥ निर्गत: कलाभि: ॥ आधारे पुंल्लिङ्ग इति शब्दचन्द्रिका ॥

निष्कला । स्त्री । विगतार्त्तवायाम् । रजोहीनायाम् ॥ वृद्धायाम् ॥ कलाया निष्क्रान्ता । निरादय इति समास: ॥ निर्गतं कलं शुक्रमस्या वा ॥

निष्कली । स्त्री । विगतार्त्तवनार्याम् ॥ गौरादित्वात् ङीष् ॥

निष्काम: । त्रि । मानसकामनाशून्ये । निस्त्रैगुण्ये विवेकिनि ॥ विभ्रमापादिता: कामा: प्रत्यक्तत्त्वाविवेकिन: । यस्माद्विनिर्गता: सोयं निष्काम इति भण्यते ॥ निर्गत: कामेभ्य: ॥

निष्कारण: । त्रि । फलापेक्षारहिते ॥ कारणशब्द: फलपर: । यथा ब्राह्मणेन निष्कारण: षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यागम: ॥ निष्कारण-इतिष्टं कारणमनपेक्ष्येत्यर्थ: ॥

निष्कालक: । पुं । मुण्डितलोम्नि घृताभ्यक्ते प्रायश्चित्तार्थे ॥

निष्काश: । पुं । प्रासादाद्युपस्थाने । छज्जा इ० वारण्डा इ० बारजा इ० पगिया इति च भाषा ॥ इति महाभारतम् ॥

निष्कासित: । त्रि । निर्गमिते । अवकृष्टे । निस्सारिते ॥ आहिते ॥ धिक्कृते ॥ निष्कास्यते स्म । कसगतौ । णिच् । क्त: ॥

निष्कुट: । पुं । गृहासन्नोपवने । गृहारामे ॥ कुटात् गृहात् निष्क्रान्त: । निरादय इति स० ॥ केदारे ॥ कपाटे ॥ पतन्नाटे । अन्त:पुरे । वेडा रावला रणवास इत्यादि भाषा ॥

निष्कुटि: । स्त्री । वृहदेलायाम् । बहुलायाम् ॥ निश्चिताकुटि: कौटिल्यमस्या: । निष्क्रान्ता कुटेर्वा ॥

निष्कुटी । स्त्री । पृथ्वीकायाम् । वृहदेलायाम् ॥ कृदिकारादितिङीष् ॥

निष्कुषित: । त्रि । निष्कासिते ॥

निष्कुषित: । त्रि । खण्डिते ॥ कुष्णाते: कर्मणि क्ते इणिनष्ठायामितीडागम: ॥

निष्कुह: । पुं । कोटरे । वृक्षादिरन्ध्रे ॥ निश्चयेन कुह्यते । कुहविस्मापने । पचाद्यच् ॥

निष्कृत: । त्रि । नाशिते ॥ प्रायश्चित्ते ॥

निष्कृति: । स्त्री । निर्मुक्तौ । निस्तारे ॥

निष्करणम् । कृञ्० । क्तिन् ॥ शुद्धौ । उत्पन्नपापनाशे ॥ ब्रह्मघ्ने चैवमि त्रघ्ने सुरापे गुरुतल्पगे । सर्वं च विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥

निष्कृपः । त्रि । निर्दये ॥

निष्कृष्टः । त्रि । सारे । निचोड इति भाषा ॥

निष्कृष्टार्थः । त्रि । सारार्थे ॥

निष्कोषणम् । न । अन्तरवयवानां वहि र्निस्सारणे ॥

निष्क्रमः । पुं । बुद्धिसम्पत्तौ । धीशक्तौ ॥ निर्गमे ॥ दुष्कुले ॥ निष्क्रमण संस्कारे ॥ निष्क्रमणम् । क्रमु० । घञ् । नोदात्तेति वृद्धिर्न ॥

निष्क्रमणम् । न । दशसंस्कारान्तर्गत संस्कारविशेषे । चतुर्थे मासि कर्त्तव्य शिशो निष्क्रमणं गृहादित्याद्युक्त विधिविहिते सूर्यदर्शने ॥ गृहाद् वहिर्निर्गमने ॥

निष्क्रयः । पुं । विक्रये ॥ भृतौ । वेतने ॥ निष्क्रयणम् । डुक्रीञ्० । एरच् ॥ बुद्धियोगे ॥ सामर्थ्ये ॥ निर्गतौ ॥ प्रत्युपकारे ॥ विनिमये ॥ निष्क्रियते प्रत्याह्रियते ऽनेन परगृहीतम् । डुक्रीञ्० । एरच् ॥

निष्क्रान्तः । त्रि । निर्गते ॥

निष्क्रियः । त्रि । क्रियारहिते ॥ न । ब्रह्मणि ॥

निष्क्राथः । पुं । रसके । मांसादिक्वाथे । जोल इति रसा इति च भाषा ॥

निष्ठ्यः । त्रि । वर्णाश्रमादिभ्यो निर्गते चाण्डालादौ ॥ निर्गतः । निसोगते इत्यप्रत्ययः । ह्रस्वात्तादाविति षत्वम् ॥

निष्ठा । स्त्री । निर्वहणे । नाट्यसन्धिसमापने । नाट्योक्त्या प्रस्तुतकथासमाप्तौ ॥ निष्पत्तौ ॥ नाशे ॥ अन्ते ॥ याञ्चायाम् ॥ उत्कर्षे ॥ व्यवस्थायाम् ॥ क्लेशे ॥ व्रते ॥ गुरुशुश्रूषादौ तत्परतायाम् ॥ नियतं स्थानम् । आतश्चोपसर्गे इत्यङ् ॥ उपसर्गादिति षत्वम् । टाप् ॥ निश्चयेन स्थितौ ॥ धर्मादौ श्रद्धायाम् ॥ यथा । निष्ठया हि प्रतिष्ठास्या दनिष्ठस्य कुतः कुलम् । शक्नोति नैष्ठिकः स्वीयं धर्मं पातुं न चेतर इति ॥

निष्ठानम् । न । तेमने । व्यञ्जने । भक्ताद्यन्नोपसेचने दध्यादौ ॥ निष्ठीयते ऽत्र । ष्ठा० । ल्युट् ॥

निष्ठितः । त्रि । निष्पन्ने ॥ नितरां स्थिते ॥ निष्ठाविशिष्टे ॥ निष्ठासञ्जाता ऽस्य । ता० इतच् ॥ निश्चयेन स्थिते ॥

निष्ठीवः । पुं । निष्ठीवने ॥

निष्ठीवनम् । न । मुखेन श्लेष्मनिरसने

। निष्ठेवने ॥ ष्ठिवु निरसने । ल्युट् । ष्ठिवुसिवोर्ल्युटि दीर्घो वेति स्वामी । । पृषोदरादित्वादिति मुकुटः ॥

निष्ठुरः । त्रि । कर्कशवाग्युक्ते । परुषे ॥ कठोरे ॥ नितिष्ठति । ष्ठा० । मद्गु० उरच् । उपसर्गात् सुनोतीति षत्वम् ॥ न । वचनविशेषे ॥ यथा । गुह्याङ्ग मेध्यसंज्ञानां वचनं निष्ठुरं विदुः । यदन्यद्वा वचोनीचं स्त्रीपुंसो मिथुनाश्रयमिति ॥

निष्ठेवः । पुं । निष्ठीवे । निष्ठीवने ॥ ष्ठिवु० । घञ् ॥

निष्ठेवनम् । म । निष्ठीवने ॥ ष्ठिवु० । ल्युट् ॥

निष्ठ्यूतः । त्रि । आविद्धे । नुन्ने । क्षिप्ते ॥ निष्ठीव्यते स्म । ष्ठिवु० । क्तः । यस्येतिनेट् । च्छ्वोःशूडित्यूठ् ॥

निष्ठ्यूतिः । स्त्री । निष्ठीवने ॥ ष्ठिवु० । क्तिन् । च्छ्वोरित्यूठ् ॥

निष्णातः । त्रि । कुशले । निपुणे । विज्ञे ॥ न्यस्नासीत् । ष्णा शौचे । गत्यर्थेति क्तः । निनदीभ्यामिति षत्वम् ॥ पारङ्गते ॥

निष्पक्कः । त्रि । क्वथिते ॥ निश्चयेन पक्कः ॥

निष्पचनम् । न । निष्पाके ॥

निष्पत्तिः । स्त्री । सिद्धौ ॥ निष्पदनम् । पद० । स्त्रियां क्तिन् ॥ समाप्तौ ॥

निष्पत्राकृतिः । स्त्री । सपत्राकृतौ । अत्यन्तपीडायाम् ॥

निष्पत्रिका । स्त्री । करीरवृक्षे ॥ इति राजनिर्घण्टः ॥

निष्पदयानम् । न । नावि । तरण्याम् ॥ अथ निष्पदयानोद्देशो यथा । नौकाख्यं निष्पदं यानं तस्य लक्षणमुच्यते । अश्वादिकन्तु यद्यानं स्थले सर्वं प्रतिष्ठितम् ॥ जले नौकैव यानं स्यादतस्तां यत्नतो वदेत् ॥ * ॥ अथ समयो यथा । सुवारवेलातिथिचन्द्रयोगे चरे विलग्ने मकरादिषट्के । क्रूरेऽन्त्यसप्तस्वतिरेकतोऽन्ये वदन्ति नौकाघटनादिकर्म ॥ * ॥ अश्विखरांशुसुधानिधिपूर्वामित्रधनाच्युतभे शुभलग्ने । तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे ॥ * ॥ वृक्षायुर्वेदगदिता वृक्षजातिश्चतुर्विधा । समासेनैव गदितं तेषां काष्ठं चतुर्विधम् ॥ तद्यथा । लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत् । दृढाङ्गं लघु यत् काष्ठमघटं क्षत्रजाति तत् ॥ कोमलं गुरु यत् काष्ठं वैश्यजाति तदुच्यते । दृढाङ्गं गुरु यत् काष्ठं शूद्रजाति तदुच्यते ॥ लक्षणद्वययोगेन द्वि-

जातिः काष्ठसङ्ग्रहः ॥ क्षत्रियका ष्ठैर्घटिता भोजमते सुखसम्पदं नौका । अन्यैर्लघुभिः सुदृढैर्विदधति जल दुष्पदे नौकाम् ॥ विभिन्नजातिद्वय काष्ठजाता न श्रेयसेनापि सुखाय नौ का । नैषा चिरं तिष्ठति पच्यते च वि भिद्यते वारिणि मज्जते च ॥ न सि न्धुगाद्यार्हति लौहबन्धं तल्लौहका न्तैः ह्रियते हि लौहम् । विपद्यते ते न जलेषु नौका गुणेन बन्धं निज गाद भोजः ॥ * ॥ अथ लक्षणानि । सामान्यञ्च विशेषश्च नौकाया ल क्षणद्वयम् । तत्र सामान्यम् । राज हस्तमितायामा तत्पादपरिणाहि- नी । तावदेवोन्नता नौका क्षुद्रेति गदिता बुधैः ॥ अतः सार्द्धमितायामा तदर्द्धपरिणाहिनी । त्रिभागेणोन्नि ता नौका मध्यमेति प्रचक्षते ॥ क्षु- द्राथमध्यमा भीमा चपलापटलाभ या । दीर्घापत्रपुटा चैव गर्भरा मन्थ रा तथा ॥ नौका दशक मित्युक्तं रा जहस्तैरनुक्रमम् । एकैकवृद्धैः सा र्द्धैश्च विजानीयाद्द्वयं द्वयम् ॥ उन्न तिश्च प्रवीणाच हस्ताद्धांशसम्मिता । अथ भीमा भयाचैव गर्भरा चाशु भप्रदा ॥ मन्थरापरतो यास्तु तासा मेवाम्बुधौ गतिः । तासां गुणास्तु स-



ङ्क्षेपाद् दृढता च प्रकीर्त्तिता ॥ * ॥ अथ विशेषः ॥ दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा । तत्र दीर्घाय था । राजहस्तद्वयायामा अष्टांशप- रिणाहिनी । नौकेयं दीर्घिकाना म दशाङ्के नोन्नतापि च ॥ दीर्घिका तरणि र्लोला गत्वरा गामिनी तरिः । जङ्घाला प्लाविनी चैव धारिणी वे गिनी तथा ॥ राजहस्तैकैकवृद्धा नौ का नामानि वै दश । उन्नतिः परि णाहश्च दशाष्टांशमितौ क्रमात् ॥ अत्र लोला गामिनी च प्लाविनी दुःख दा भवेत् । लोलायामान मारभ्य यावद् भवति गत्वरा ॥ लोलायाः फ लमाधत्ते एवं सर्वासु निर्णयः । वे- गिन्याः परतो यातु सा भिन्नायोत्त राथवा ॥ भोजोऽपि । नौका दैर्घ्यं य थेच्छं स्यात् तत्रैतानि विवर्जयेत् । हस्तसंख्या परित्याज्या वसुवेदग्रहो त्तरे ॥ षष्ट्युत्तरमिता नौका कुलं हन्ति बलं धनम् । नवते रुत्तरे या पि या चत्वारिंशतः परा ॥ एतेन च त्वारिंशतिषष्टिनवतिसंख्या तत्पर तोऽपि । यावदपरदशकं तावदेव त त्फलमिति । इति दीर्घा ॥ अथोन्न ता । राजहस्तद्वयमिता तावत् प्रसर णोन्नता । इयमूर्द्ध्वाभिधा नौका क्षेमा

निष्पद

य पृथिवीभुजाम् ॥ ऊर्द्धामूर्द्धास्वर्णा मुखी गर्भिणी मन्थरा तथा । राज हस्तैकैकवृद्धा नाम पञ्चचयं भवत् ॥ अथानूर्द्धा गर्भिणीच निन्दितं ना मयुग्मकम् । मन्थरायाः परा यास्तु ताः शुभायशोद्भवम् ॥ भेदोऽपि । वाणाग्न्युत्तरतो मानं नौकानाम शुभं वहेत् । पञ्चाशदूर्द्धादुत्तासं धन नाशं चयोद्धतः ॥ इत्युक्ता ॥ * ॥ धात्वादीनामतो वक्ष्ये निर्णयं तरि संश्रयम् । कनकं रजतं ताम्रं चितयं वा यथाक्रमम् ॥ ब्रह्मादिभिः परि-न्यस्य नौकाचित्रणकर्मणि । चतुःशृङ्गा त्रिशृङ्गा चादिशृङ्गाचैक शृङ्गिणी ॥ सितरक्तपीतनीलवर्णान् दद्यात् यथाक्रमम् । केशरी महिषो नागो द्विरदो व्याघ्र एवच । पक्षीभेको मनुष्यश्च एतेषां वदनाष्टकम् ॥ नावां मुखे परिन्यस्य आदित्यादिदशा भुवाम् । कलशो दर्पणश्चन्द्र स्वैदशानां महीभुजाम् ॥ हंसः केकीशुकः सिंहो गजोऽहिर्व्याघ्रषट्पदौ । आदित्यादिदशाजात नौकोपरि परिन्यसेत् ॥ * ॥ नौकासु मणिवि-न्यासो विज्ञेयो नवदण्डवत् । मुक्तास्रवकै र्युक्ता नौका स्यात् सर्वतोभद्रा ॥ तत् संख्या वेदशरसवेददश-

निष्पद

सम्मिता क्रमशः। कनकादीनां माला जयमालेति गद्यते सद्भिः ॥ ब्रह्मक्ष चे द्वितये एकैके वैश्यशूद्रयोर्नौ ॥ * ॥ निर्गृहं सगृहं चाथ तत् सर्वं द्विविधं भवेत् । निर्गृहं पूर्व मुद्दिष्टं सगृहाणि यथा शृणु ॥ सगृहा त्रिविधा प्रोक्ता सर्वमध्याग्रमन्दिरा । सर्वतोमन्दिरं यत्र साज्ञेया सर्वमन्दिरा ॥ राज्ञां कोशाश्वनारीणां यान मत्रप्रशस्यते । मध्यतो मन्दिरं यत्र साज्ञेया मध्यमन्दिरा ॥ राज्ञां विलासयात्रा द्विवर्षासुच प्रशस्यते । अग्रतो मन्दिरं यत्र साज्ञेया त्वग्रमन्दिरा ॥ चिर प्रवासयात्रायां रणे काले घनात्यये । मन्दिरमानं नौका प्रसरत एवार्द्ध भागतो न्यूनम् ॥ भेदास्तु । दीर्घहस्तवसुषट्दिवाकरानेकदिङ्नव मिता यथाक्रमम् । राजपञ्चभुजसम्मितोन्नतिमन्दिरे तरिगते महीभुजाम् ॥ भास्करादिकदशाभुवां पुन र्धातुनिर्णयनमत्र पूर्ववत् । पताका कलसादीनां निर्णयो नवदण्डवत् ॥ काष्ठजं धातुजं चेति मन्दिरं द्विविधं भवेत् । काष्ठजं सुखसम्पत्त्यै त्विलासैधातुजं मतम् ॥ अथशय्यासनादीनां मन्थरोल्लोचयोरपि । अन्येषाञ्चैव मुनिभिर्निर्णयः पूर्ववन्मतः ॥

॥ दिङ्मात्रमिदमुद्दिष्टं नौकायानस्य मज्जनम् । प्रधानेष्वेव नियमो न प्रधाने न निर्णयः ॥ लघुता दृढता चैव गामिताच्छिद्रता तथा । समतेति गुणोद्देशो नौकानां सम्प्रकाशितः ॥ एवं विचिन्त्य यो राजा नौकायानं करोति च । सचिरं सुखमाप्नोति विजयं समरे श्रियम् ॥ यो ऽज्ञानादन्यथायानं नौकानां कुरुते नृपः । तस्यैतानि विनश्यन्ति यशो वीर्यं बलं धनम् ॥ इति निष्पदयानोद्देशे नौकायानम् ॥ * ॥ जघन्यजलयानानि यथा । नौकान्यतो जलेयानं जघन्यमिति गद्यते । तद्देशावहव स्तेतु पाश्चात्यानां प्रकीर्त्तिताः ॥ द्रोणीरूपन्तु यद्यानं द्रोणीयानं तदुच्यते । घटीभिर्घटितं यानं घटीनौकेति गद्यते ॥ तुम्ब्याद्यैस्तु फलैर्यानं फलयानं प्रचक्ष्यते । चर्मभिस्तत्पूर्णैर्यच्चर्मयानं तदुच्यते ॥ यानं यल्लघुभिर्वृक्षैश्चयानं तदुच्यते । जन्तुभिः सलिले यानं जन्तुयानं प्रचक्ष्यते ॥ बाहुभ्यांसन्तरेद् वारि जघन्येषु न निर्णयः ॥ * ॥ इतियुक्तिकल्पतरौ निष्पदयानोद्देशः ॥

निष्पन्नः । त्रि । निर्वृत्ते । सिद्धे । सम्पन्ने ॥ निष्पद्यते स्म । पद० । गत्यर्थेतिक्तः ॥

निष्परित्वम् । न । विद्यमानकायस-म्बन्धत्वे ॥

निष्परिग्रहः । त्रि । परमहंसे ॥ निर्गतः कन्याकौपीनाद्यात्मपुस्तकादिव्यतिरिक्तःपरिग्रहो यस्मात् सः ॥ त्रि । त्यक्तसङ्गे ॥

निष्पाकः । पुं । निष्पचने ॥

निष्पातः । पुं । प्रहारे ॥

निष्पादः । पुं । निष्पादने ॥

निष्पादनम् । न । सम्पादने । निष्पत्तौ ॥ निस् पूर्वात् पदेर्ण्यन्ता ल्युट् ॥

निष्पादना । स्त्री । निष्पत्तिप्रेरणे ॥

निष्पादितः । त्रि । कृतनिष्पादने ॥

निष्पाद्यः । त्रि । साध्ये । निष्पादनीये ॥

निष्पापः । त्रि । पापरहिते ॥ निर्गतः पापेभ्यः ॥ निरादयइति समासः ॥

निष्पावः । पुं । शूर्पपवने ॥ धान्यादिनिस्तुषीकृतौ । पवने ॥ निष्पूयते शोध्यते तुषाद्यपनयनेन । पूञ्० । परिमाणाख्यायां सर्वेभ्य इति घञ् ॥ यथा । द्वौ शूर्पनिष्पावौ । शूर्पेणेति करणतृतीयान्तस्य कर्तृकरणे कृता बहुलमिति समासः । अत्र शूर्पसङ्ख्यया तण्डुलादेरपि परिच्छित्तिर्गम्यते । शूर्पे द्वित्वमवार्थिकं मनुशाब्दम् । यथाप्यत्र निरभ्योः पूल्वोरिति

घञ् लभ्यते तथापि सर्वग्रहणबला द्धनेनापि भवितुमर्हति ॥ राजमाषे । श्वेतशिम्बिधान्ये । राजशिम्बीबीज भटवांसु बोडा चौरा इतिच ख्या भाषा ॥ निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः । कषायः स्तन्यपित्तास्रमूत्रवातविबन्धकृत् । विदाह्युष्णो विषश्लेष्मशोथहृच्छुक्रनाशनः ॥ कडङ्करे ॥ पवने ॥ शिम्बिकायाम् ॥ चि । निर्विकल्पे ॥ निष्पवनम् । पूञ्० । घञ् ॥

निष्पावकः । पुं श्वेतशिंब्याम् ॥

निष्पावी । स्त्री । शिम्बीविशेषे । चौरा चौला बोडा इति भाषा प्रसिद्धे ॥ साद्विधा । हरिद्रवा शुभ्राच ॥

निष्पृहः । त्रि । इच्छारहिते ॥ निःसङ्गे । वैषयिकसुखेऽनुरागरहिते ॥ निर्गता स्पृहा यस्य सः ॥

निष्पृहा । स्त्री । अग्निशिखायाम् ॥

निष्पेषः । पुं । सङ्घर्षे ॥

निष्प्रतिभः । चि । जडे । अज्ञे ॥ निर्गतः प्रतिभायाः ॥

निष्प्रत्यूहः । चि । निर्विघ्ने ॥

निष्प्रभः । चि । विगते । अरोके । दीप्तिवर्जिते ॥ निष्क्रान्ता प्रभाऽस्मात् ॥ अप्रकाशस्वरूपे ॥

निष्प्रवाणम् । न । नवीनवस्त्रे । तन्त्रविमुक्तवाससि ॥

निष्प्रवाणिः । चि । अनाहते । तन्त्रके । नवाम्बरे ॥ प्रोयन्तेऽनया प्रवाणी वा । वेञ्० । करणेति ल्युट् । ङीप् । निर्गता प्रवाणी तन्तुवायशलाका अस्मात् । निष्प्रवाणिश्चेतिकवभावो निपात्यते ॥ निष्प्रवाणिः पटः नवीनवस्त्रार्थः ॥

निष्फलः । त्रि । फलशून्ये ॥

निष्फला । स्त्री । निष्कलायां नार्याम् । विगतार्त्तवायाम् ॥

निष्फली । स्त्री । निष्फलायाम् ॥

निऽ । अ । निषेधे ॥ निश्चये ॥ ॥ साकल्ये ॥ अतीते ॥

निसम्पातः । पुं । अर्द्धरात्रे । निशीथे ॥ इतिशब्द० ॥

निसर्गः । पुं । रूपे । स्वभावे ॥ सग ॥ निसर्जनम् । सृज० । घञ् ॥

निसिन्धुः । पुं । सिन्धुवारे ॥

निसुम्भः । पुं । असुरान्तरे ॥

निसूदनम् । न । वधे । मारणे ॥ षूद क्षरणे । भावे ल्युट् ॥

निसृता । स्त्री । त्रिवृतायाम् ॥

निसृष्टः । चि । न्यस्ते ॥ निसृज्यते स्म । सृज० । क्तः ॥ मध्यस्थे इति चिकाण्डशेषः ॥

निसृष्टार्थः । पुं । दूतविशेषे ॥ यथा ।

निसृष्टार्थो मितार्थश्च तथासन्देश हारकः । कार्य्यप्रेष्य स्त्रिधा दूतो दूत्यश्चापि तथाविधा ॥ तल्लक्षणं यथा । उभयो र्भाव मुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कर्म निसृष्टार्थस्तु सस्मृतः ॥ इति साहित्यदर्पणे ३ परिच्छेदः ॥ पुरुषविशेषे ॥ यथा । धीरः स्थिरमतिः शूरः स्वामिकार्य्यविधायकः । स्वपौरुषप्रकाशीच निसृष्टार्थः स उच्यत इति सङ्गीतदामोदरः ॥ धनायव्ययपालनादौ नियुक्त ॥ यथा । यः स्वामिना नियुक्तोपि धनायव्ययपालने । कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु सस्मृत इति वृहस्पतिः ॥ निसृष्टा अर्थायस्मिन् सः ॥

निस्तत्त्वः । त्रि । असति ॥ निर्गतं तत्त्वं वास्तवं रूपं यस्मात् ॥

निस्तनी । स्त्री । वटिकायाम् । वडी इतिभाषा ॥ स्तनहीनायाम् ॥

निस्तन्द्रिः । त्रि । अनलसे ॥ निर्गतात न्द्रिरालस्यं यस्मात् ॥

निस्तरणम् । न । उपाये ॥ निस्तारे ॥ तरणे ॥ निर्गमे इति विश्वः ॥

निस्तर्हणम् । न । मारणे ॥ तृहू हिंसायाम् । निरपूर्वः । स्तृहूवा । भावे ल्युट् ॥

निस्तलः । त्रि । वर्त्तुले ॥ चले ॥ निरस्तं निर्गतं वा तलं यस्य ॥

निस्तली । स्त्री । वटिकायाम् ॥ इति शब्दचन्द्रिका ॥

निस्तारः । पुं । उद्धारे । निस्तरणे ॥ यथा । जीर्णा तरिः सरिदतीवगभीरनीरा बाला वयं सकलमित्थमनर्थहेतुः । निस्तारबीज मिदमेव कृशोदरीणां यन्माधव त्वमसि सम्प्रतिकर्णधारः ॥ इत्युद्भटः ॥

निस्तारबीजम् । न । संसारार्णवतरणहेतौ ब्रह्मोपासने ॥ यथा । कलौपापयुगे घोरे तपोहीनेति दुस्तरे । निस्तारबीजमेतावद् ब्रह्ममन्त्रस्य साधनम् ॥ साधनानि वहूक्तानि नानागमादिषु । कलौ दुर्ब्बलजीवानामसाध्यानि महेश्वरीतिमहानिर्व्वाणतन्त्रम् ॥ अपिच । स्मरणं कीर्त्तनंविष्णोरर्चनं पादसेवनम् । वन्दनं स्तवनं नित्यं भक्त्या नैवेद्यभक्षणम् ॥ चरणोदकपानञ्च तन्मन्त्रजपनं तथा । इदं निस्तारबीजञ्च सर्व्वेषामीप्सितं भवेदिति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २२ अध्यायः ॥

निस्तितीर्षत् । त्रि । निस्तरितुमिच्छति ॥

निस्तुषक्षीरः । पुं । गोधूमे ॥ इति राजनिर्घण्टः ॥

निस्तुषरत्नम् । न । स्फटिके ॥

निस्तुषित: । त्रि । त्यक्ते ॥ त्वग्विहीने ॥ लघूकृते ॥ इतिमेदिनी ॥

निस्तेजा: । त्रि । तेजोरहिते ॥

निस्तोद: । पुं । पीडाविशेषे ॥

निस्त्रिंश: । पुं । खड्गे ॥ निर्गतस्त्रिंशद्भ्यो ऽङ्गुलिभ्य: । निरादयइति स० । सङ्ख्यायास्तत्पुरुषस्यडज्वाच्य: ॥ त्रि । निर्दये । निर्घृणे ॥

निस्त्रिंशपत्रिका । स्त्री । स्नुहीवृक्षे ॥

निस्त्रैगुण्य: । त्रि । निष्कामे ॥ निष्क्रान्त स्त्रैगुण्यात् ॥ पुं । त्रिगुणातीते परमेश्वरे ॥ त्रैगुण्य: संसारस्तद्रहितत्वात् ॥

निस्त्रैणपुष्पिक: । पुं । राजधत्तूरके ॥

निस्नेह: । त्रि । प्रेमशून्ये ॥

निस्नेहफला । स्त्री । श्वेतकण्टकार्याम् ॥

निस्पन्द: । पुं । स्पन्दने ॥ इतित्रिकाण्डशेष: ॥ त्रि । स्पन्दरहिते । ईषत्कम्पहीने ॥

निस्पन्दतर: । त्रि । एकान्तस्पन्दरहिते ॥

निस्पृह: । त्रि । अतिविरक्ते ॥ निर्गता दोषदर्शनेन सर्वेभ्योदृष्टादृष्टविषयेभ्य: स्पृहातृष्णा यस्यस: ॥ व्यासादिषु ॥ व्यासादीनां निस्पृहाणां पारार्थ्यमिहदृश्यते ॥

निस्पृहा । स्त्री । अग्निशिखावृक्षे ॥

निस्यन्द: । पुं । स्यन्दने । क्षरणे ॥ निस्यन्दते ऽनेन । स्यन्दू० । स्यदोजवे इति घञन्तोनिपातित: ॥

निस्यन्दनम् । न । स्यन्दे । स्यन्दू० । ल्युट् ॥

निस्राव: । पुं । मासरे । भक्तसमुद्भवे मण्डे । माँड इति भाषा ॥ निस्राव्यते । स्रु० । ण्यन्त: । एरच् घञ्वा ॥

निस्व: । त्रि । निर्धने ॥

निस्वन: । पुं । शब्दे ॥ निस्वननम् । स्वनशब्दे । नौगदनदपठस्वन इत्यप् ॥

निस्वान: । पुं । निनादे । शब्दे ॥ निस्वननम् । स्वन० । नौगदनदपठस्वन इति पाक्षिकोघञ् ॥

निस्सारित: । त्रि । निष्कासिते ॥ निराकृते ॥

निस्सीम: । त्रि । अपर्यन्ते ॥

निहत: । त्रि । नाशिते ॥

निहननम् । न । वधे । मारणे ॥ हन्तेर्भावेल्युट् ॥

निहन्ता । त्रि । हननकर्त्तरि ॥

निहव: । पुं । आह्वाने ॥ ह्वेञ्० निपूर्व: । ह्व: सम्प्रसारणञ्चन्यभ्युपविषु इत्यप् सम्प्रसारणञ्च ॥

निहाका । स्त्री । गोधिकायाम् ॥ नियतं जहातिभुवम् । नौहश्वेतिहाक: कन् । बाहुलकान्न ह्रस्व: ॥

निहार: । पुं । नीहारे । हिमे ॥ नि-

ह्रियते । हृञ्० । घञ् ॥

निर्हिंसनम् । न । मारणे ॥ हिंसिर्हिं सायाम् । भावे ल्युट् ॥

निहित: । त्रि । आहिते । स्थापिते ॥ निक्षिप्ते ॥ स्थिते ॥ निधीयते स्म । डुधाञ्० । क्त: । दधातेर्हि: ॥ आत्मभूते ॥ निश्चयेनहित: ॥

निहीन: । त्रि । नीचे । पामरे ॥ निश्चयेन हीन: । कुगतीतिसमास: ॥

निह्नव: । पुं । निकृतौ । शाठ्ये ॥ अविश्वासे ॥ अपलापे । गोपने । धारयन्नेव न धारयामीत्याद्युक्तौ ॥ निह्नवनम् । ह्नुङ् अपनयने । ऋदोरप् ॥

निह्नुत: । त्रि । अपह्नुते ॥

निह्नुति: । स्त्री । निह्नवे ॥

निह्राद: । पुं । निर्घोषे । शब्दे ॥ ह्राद अव्यक्तेशब्दे । घञ् । निह्राद एकरेफ: ॥

नी: । त्रि । प्रापणकर्त्तरि ॥ नयति । णीञ्प्रापणे । क्विप् ॥

नीक: । पुं । वृक्षविशेषे ॥ नयति । णीञ्० । अजियुधूनीभ्योदीर्घश्चेति कन् ॥

नीकार: । पुं । अवहेलायाम् । न्यक्कारे ॥ इति शब्दरत्नावली ॥

नीकाश: । पुं । निश्चये ॥ त्रि । परम्परयाहिस्थातुल्ये ॥ नितरांकाशते । काशृ० । पचाद्यच् । इक: काशइत्युपसर्गदीर्घ: ॥

नीच: । त्रि । पामरे । पृथग्जने । अपसदे ॥ नीचसङ्गदोषोयथा । नमामोतिसुखं किञ्चिन्नीचसङ्गान्महानपि । प्रेतसङ्गान्महादेवोनग्नोभस्मविभूषित: ॥ प्रविश्यनिलयं नीच: स्त्रीधनादिक मिष्यते स्वयंनेतुं नशक्नोति तदा नाशयतिध्रुवम् ॥ स्थिते गुणेपिनीचस्तु यत्नाद्दोषं प्रपश्यते । किञ्चित्तुसङ्गमासाद्यतदुक्तं स्यात्सनातनम् ॥ सतांश्रुत्वागुणं नीच:श्रोतुमायातिबन्धुवत् । तत:समयमासाद्य प्रकाशयतितद्धसन् ॥ मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यद्दुरात्मनाम् ॥ इतिपाद्मे क्रियायोगसारे ५ऽध्याय: ॥ धर्मेप्रमादोनीचानां स्वभावेनैवदृश्यते । अतोधर्मविचारस्तैर्न कुत्रापिनिरूपित: ॥ न नीचो यवनात्पर: ॥ नीचंसमहमपिसेवतिनीच एव ॥ पुं । चोरकनामगन्धद्रव्ये ॥ खर्वे । वामने ॥ नीचैर्नीचैस्त्वमस्यास्ति । अर्शआद्यच् अव्ययानां भमात्र इतिटिलोप: ॥ निकृष्टामीं लक्ष्मीं चिनोति वा । चिञ्० । अन्येभ्योपिदृश्यतइति ड: ॥ निम्ने ॥ पापे ॥

नीचकः । त्रि । खर्वे ॥ स्वा॰ तद्धितः ॥

नीचकी । पुं । उच्चे । उपरिभागे ॥

नीचकैः । अ । नीचैरित्यर्थे ॥ अव्ययसर्वनाम्नामकच् प्राक्टेः ॥

नीचगम् । न । जले ॥ नीचं निम्नं गच्छति । गम्लृ॰ । डः ॥ त्रि । पामरे ॥

नीचगा । स्त्री । निम्नगायाम् । नद्याम् ॥ टाप् ॥

नीचभोज्यः । पुं । पलाण्डौ ॥ नीचैर्भोज्यः ॥ त्रि । पामरभक्ष्ये ॥

नीचवज्रम् । न । वैक्रान्तमणौ ॥

नीचवृत्तिः । स्त्री । कर्षणवञ्चनादिनिकृष्टकर्मणि ॥

नीचीनः । त्रि । अधोमुखे ॥

नीचैः । अ । स्वैरे ॥ अल्पे ॥ नीचे ॥ निचीयते । चिञ्॰ । नेर्दीर्घश्चेति डैसिः ॥

नीचैर्गतिः । स्त्री । मन्दगमने ॥ असद्व्यवहारे ॥

नीडः । पुं । खगगृहे । कुलाये ॥ नितरामीड्यते । ईड॰ । घञ् ॥ यद्वा । निश्चिताद्द्रलन्त्यत्र । द्रलस्वप्ने । हलश्चेति घञ् । संज्ञापूर्वकत्वान्न गुणः । डलयोरेकत्वम् ॥ स्थाने ॥ रथावयवविशेषे ॥

नीडकः । पुं । पक्षिणि ॥

नीडजः । पुं । विहगे ॥ नीडे जातः । जनी॰ । डः ॥

नीडजेन्द्रः । पुं । गरुडे ॥

नीडोद्भवः । पुं । खगे । गरुत्मति ॥ नीडे उद्भवो यस्य ॥

नीतः । त्रि । प्राप्ते । गृहीते ॥ यथा । नीतं यदि नवनीतं नीतं नीतं किमेतेन । आतपतापितभूमौ माधव माधाव माधाव ॥ णीञ्॰ । क्तः ॥

नीतिः । स्त्री । नये । नाये ॥ जेतुमिच्छतां नीतिर्न्यायो जयोपायस्य प्रवर्त्तको भगवद्विभूतिः ॥ उचितव्यवहारे । सामदानाद्युपाये ॥ प्रापणे ॥

नीतिघोषः । पुं । बृहस्पतिरथे ॥ इति त्रिकाण्डशेषः ॥

नीतिज्ञः । त्रि । नीतिविदि ॥ आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिञ्च पार्थिवः । तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥ आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥ विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम् । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥

नीतिमान् । प्रशस्तनीतिमति ॥

नीतिशास्त्रम् । न । औशनसबृहच्चाणक्यकामन्दकपञ्चतन्त्रनीतिमयूखहितोपदेशचाणक्यभारतीयराजधर्मादौ ॥

नीतिसारः । पुं । इन्द्रम्प्रतिवृहस्पत्युक्तेनीतिशास्त्रविशेषे ॥ सचगरुडपुराणे ऽष्टास्वध्यायेष्वस्ति ॥

नीथः । पुं । नेतरि । प्रापयितरि ॥ स्तोत्रे इति वेदभाष्यम् ॥ नयति । णीञ्० । हनिकुषिनीरमिकाशिभ्यःक्थन् ॥ न । जले ॥

नीध्रम् । न । नीव्रे । वल्मीके । पटलप्रान्ते । चालान्ते । ओलातीइतिभाषा ॥ नितरांध्रियते । धृङ्अवस्थाने । निश्चयेन धरति जलमितिवा । धृञ्धारणे । मू०कः । अन्येषां० दीर्घः ॥ वने ॥ नेमौ ॥ चन्द्रे ॥ रेवतीनक्षत्रे ॥

नीपः । पुं । कदम्बे । हलिप्रिये ॥ बन्धूके ॥ नीलाशोकद्रुमे ॥ धाराकदम्बे ॥ नीपोमहाकदम्बःस्याद्धाराकम्बद्रुमोऽप्यपीतिसाम्बः ॥ नयति नीयते वा । णीञ्० । पानीविषिभ्यःपः । बाहुलकात् गुणाभावः ॥ धनिनीतिप्रायकृष्णः ॥

नीयमानः । त्रि । प्राप्यमाणे ॥

नीरम् । न । क्षीरे । अम्बुनि । जले ॥ शरदा नीरजोत्पन्न्या नीराणि प्रकृतिं ययुः । भ्रष्टानामिवचेतांसि पुनर्योगनिषेवया ॥ रसे ॥ नीयते । णीञ्० । स्फायितञ्चीतिरक् ॥ निर्गतं रादग्नेर्वा । निरादय इतिसमासः । अग्नेराप इतिश्रुतेः ॥ निर्गतो रोऽग्निरस्मात् । प्रादिभ्योधातुजस्येतिबहुव्रीहिः । अग्नेर्यद्दिग्ने़ब्रह्मणः क्षत्रमितिस्मृतेः ॥ निश्चयेनराति सुखम् । रा० । आतश्चेतिके ढ्रलोपइतिदीर्घः ॥ निष्ठीवाद्यकशकृन्मूत्रविषाण्यप्सु न सङ्क्षिपेत् ॥

नीरजम् । न । कुष्ठौषधौ ॥ पद्मे ॥ मुक्तायाम् ॥ त्रि । जलजाते ॥ नीरे जातम् । जनी० । डः ॥ पुं । उद्बिरिणि ॥ उद्रे ॥

नीरजाः । त्रि । निर्धूलिदेशपुष्पादौ ॥ स्त्री । अरजस्कायाम् ॥

नीरजस्कः । त्रि । निर्धूलिके ॥

नीरतरङ्गः । त्रि । स्थिते सुरतरङ्गे । रमणाभाववति ॥ यथा । आयाताः सखि वर्षा वर्षादपि यासु वासरादीर्घः । दिशिदिशि नीरतरङ्गो नीरतरङ्गो ममापिहृदयेशः इति ॥

नीरदः । पुं । मेघे ॥ मुस्तके ॥ त्रि । दन्तशून्ये ॥ यथा । आस्वाद्य निरवशेषं विरहिवधूनां मृदूनि मांसानि । करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनीति ॥

नीरदिनी । स्त्री । मेघवत्याम् ॥

नीरधिः । पुं । अब्धौ । समुद्रे ॥ नीराणिधीयन्तेऽस्मिन् । डुधाञ् । कर्म

शब्दधिकरणेचेतिकि: ॥

नीरनिधि: । पुं । अकूपारे । समुद्रे ॥ नीराणिनितरां धीयन्तेऽच । डुधा ञ० । कि: ॥

नीरन्ध्र: । चि । सान्द्रे । घने ॥ छिद्ररहिते ॥ यथा । श्रीमन्नाथलवार्जिते।र्जितयश:संयुद्भमुक्तावली मादायैवविधिर्विधितसुरमसंचारं त्वदीयैर्गुणै: । नीरन्ध्रामवलोक्यतामपि ततो नान्तं गुणानामहोउत्पितसु गेगमाकरे समकिरत्तास्तास्ततस्तारका: ॥ इतिकालिदास: ॥

नीरस: । पुं । दाडिमे ॥ चि । रसहीने ॥ यथा । शृङ्गारी चेत् कवि: काव्ये जातं रसमयं जगत् । सएव चेद् शृङ्गारी नीरसं सर्वमेव तत् ॥

नीराखु: । पुं । उद्रे । जलबिडाले ॥

नीराजनम् । न । आरार्त्रिके । दीपादिना सत्कृतौ ॥ पञ्चनीराजनं कुर्यात् प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा ॥ चूताश्वत्थादिपचैश्च चतुर्थमपरिकीर्त्तितम् । पञ्चमंप्रणिपातेनसाष्टाङ्गेनयथाविधि ॥ आश्विनशुक्लदशम्याम्श्वादे:पूजने ॥ यथा शरत्कालेमहाष्टम्यांदुर्गाया:परिपूजनम् । नीराजनंदशम्यान्तुकुर्याद्बलवृद्धये ॥ नि: शेषेणराजनमत्र । नीरस्यशान्त्युदककस्यअजनं चेपोयवचा । नीरेजलेअजनंस्पर्शनं वा ॥

नीराजना । स्त्री । आरार्त्रिके । दीपादिनासत्कृतौ ॥ नि:शेषेण नितरांवा राजनम् । राजृदीप्तौ ल्युट्: । शब्दासश्रन्येतिभावेयुच् ॥

नीरिन्दु: । पुं । शाखोटके । आश्वेओडा इतिगौडेषुख्याते वृक्षे ॥

नीरुक् । पुं । स्त्री । रोगाभावे । स्वास्थ्ये । अनामये ॥ चि । रोगरहिते । उल्लाघे । पटौ ॥ निरोचते । रुच० । क्विप् । नहिवृतिवृषीतिदीर्घ: ॥

नीरुजम् । न । कुष्ठौषधौ ॥ त्रि । रोगाऽभाववति ॥ रुजायानिर्गतम् ॥

नीरूप: । चि । रूपाभावविशिष्टे ॥ नीरूपस्यापिकालस्येन्द्रियवेद्यत्वाभ्युपगमेनेतिवेदान्तपरिभाषा ॥

नील: । पुं । निधिप्रभेदे ॥ अद्रिविशेषे । इलावृतस्योत्तरस्मिन् दिसहस्त्रयोजनविस्तीर्णे प्रागायते रम्यकवर्षस्य मर्यादापर्वते ॥ भारतवर्षस्थे शैलविशेषे ॥ वानरविशेषे । वर्णविशेषे ॥ नीलौषधौ ॥ लाञ्छने ॥ मञ्जुघोषे ॥ वटवृक्षे ॥ कृष्णवर्णे ॥ वृषोत्सर्गवृषे ॥ चरणानि मुखं पुच्छं यस्यश्वेतानि गोपते: । ला

चारससवर्णश्च तं नीलमितिनिर्दि शेत् ॥ अपिच । लोहितो यस्तुवर्णो न पुच्छाग्रेणतुपाण्डुर: । श्वेत: खुर विषाणाभ्यां स नीलोवृष उच्यते ॥ नीलति । नीलवर्णे । इगुपधेतिक: ॥ न । नालीरक्ते॥ नील्यारक्तम्। नील्याञ्जन् ॥ इन्द्रनीलमणौ । नीलम् इति भाषा प्रसिद्धे सौरिरत्ने॥ काचलवणे ॥ तालीशपत्रे ॥ विषे ॥ सौवीराञ्जने ॥ तुत्थे ॥ नृत्याङ्गाष्टोत्तरशतकरणान्तर्गतकरणविशेषे ॥ वर्णवृत्तप्रभेदे ॥ तालपयोधरनायकतोमरवज्रधरम् पाणियुतञ्च विभावय भामिनि वृत्तवरम्। नीलमिदम् फणिनायकपिङ्गलसंलपितम् पण्डितमण्डलिकासुखदं सखि कर्णगतम् ॥ यथा । सुन्दरि सुन्दरि पीनतिशालिनि किङ्कुरुषे मानिनि मानिनिकाममिदं हृदयं परुषे । शारिणि चारिणि ते हृदये निहितोदयितो भामिनि भाविनि वासिमनोऽस्ति चिराय यत:इति॥ नीलंचन्द्रच्छिद्ररूप उत्पात: । तथाहिवराह:। अपर्वणि यदाराहुग्रहणं चन्द्रसूर्ययो: । चन्द्रार्कमण्डलं छिद्रं दृष्ट्वा जनपदक्षय: इति ॥ यदानीलं लक्ष्म च न्द्रवकबङ्कोदृश्यते एतदेवोत्पाति

कं नैल्यमधिकृत्योक्तम् । यद्वादि-त्ये नैल्यंतदानश्येदिति ॥ त्रि । नीलवर्णयुक्ते ॥

नीलकम् । न । कालालूण इतिभाषा प्रसिद्धेकाचलवणे ॥ वर्त्तलोहे ॥ पुं । असनवृक्षे ॥

नीलकण्ठ: । पुं । शिवे । हरे ॥ क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलोद्भवम् । हरेण धारितं कण्ठे नीलकण्ठस्ततोहर: ॥ दात्यूहे ॥ग्रामचटके ॥ मयूरे ॥ खञ्जने ॥ नील: कण्ठोयस्यस: ॥ पीतसारे ॥ न । मूलके ॥ इतिराजनिर्घण्ट: ॥

नीलकण्ठशिखा । स्त्री । मयूरशिखायाम् ॥ नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥

नीलकण्ठाक्षम् । न । रुद्राक्षे ॥ त्रि । खञ्जनाक्षे ॥

नीलकन्द: । पुं । महिषकन्दप्रभेदे । विषकन्दे । महिषीकन्दे ॥ इतिराजनिर्घण्ट: ॥

नीलकमलम् । न । नीलवर्णपद्मे । उत्पले । हिमाब्जे ॥

नीलकुन्तला । स्त्री । गौर्या:सखीविशेषे ॥ त्रि । नीलकुन्तलविशिष्टे ॥

नीलकुरण्टक: । पुं । नीलझिण्ट्याम् ॥

नीलक्रान्ता । स्त्री । विष्णुक्रान्तायाम् ॥

नीलक्रौञ्चः । पुं । नीलबके । दीर्घ-ग्रीवे ॥

नीलग्रीवः । पुं । शिवे ॥ नीलाग्रीवा यस्य सः ॥

नीलङ्गुः । पुं । प्रसूने ॥ सृगाले ॥ भृगे ॥ क्रिमिविशेषे ॥ नितरां लङ्गति । लगि० । नीलति वा । नीलवर्णे । खलगण्ङ्कितिनिपातनात् साधुः ॥ स्त्री । भम्भराल्याम् ॥

नीलचर्म । न । परूषके ॥ नीलवर्णाजिने ॥

नीलजम् । न । वर्त्तलोहे ॥ त्रि । नीलाज्जाते ॥

नीलजिण्टी । स्त्री । नीलकुरण्टके ॥

नीलतरुः । पुं । नारिकेले ॥

नीलतालः । पुं । तमाले ॥ हिन्ताले ॥

नीलदूर्वा । स्त्री । श्यामायाम् । भार्गव्याम् । रुहायाम् ॥ नीलदूर्वाहिमा तिक्तामधुरा तुवरा हरेत् । कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान् ॥ नीलाचासौदूर्वाच ॥

नीलध्वजः । पुं । तमालवृक्षे ॥ माहिष्मत्याः पुरीराजविशेषे ॥ त्रि । नीलध्वजाविशिष्टे ॥

नीलनिर्गुण्डी । स्त्री । नीलसिन्धुवारे ॥

नीलनिर्य्यासकः । पुं । नीलासनवृक्षे ॥

नीलपङ्कम् । न । अन्धकारे ॥

नीलपत्रम् । न । इन्दीवरे ॥ नीलानि पत्राण्यस्य ॥ पुं । गुण्डतृणे ॥ अश्मन्तकवृक्षे ॥ नीलासनवृक्षे ॥ दाडिमे ॥

नीलपद्मम् । न । इन्दीवरे ॥ नीलञ्च तत् पद्मञ्च ॥

नीलपिच्छः । पुं । श्येनखगे ॥

नीलपुनर्नवा । स्त्री । कृष्णवर्णपुनर्नवाशाके । नीलायाम् । नीलगदहपडोना इति भाषा ॥

नीलपुष्पः । पुं । नीलभृङ्गराजे ॥ नीलाम्लाने ॥ शीतसहे । निर्गुण्डीद्रुमे ॥ न । ग्रन्थिपर्णे ॥ नीलवर्णपुष्पे ॥

नीलपुष्पा । स्त्री । विष्णुक्रान्तायाम् ॥

नीलपुष्पिका । स्त्री । नील्याम् ॥ अतस्याम् ॥

नीलपुष्पी । स्त्री । नील्याम् ॥ निर्गुण्ड्याम् । सिन्दुके ॥ अतस्याम् ॥ नीलवुङ्गायाम् ॥

नीलफला । स्त्री । जम्ब्वाम् ॥

नीलभृङ्गराजः । पुं । नीलवर्णभृङ्गराजे । महाभृङ्गे । श्यामले । नीलाभंगरा इतिभाषा ॥

नीलमणिः । पुं । इन्द्रनीलमणौ । मसारे । नीले ॥ चीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत् । इन्द्रनीलमितिख्यात महार्घ्यो रत्ननिर्णये ॥

॥ नीलीरसनिभाः केचि च्छमुकण्ठ निभाःपरे इत्याद्निागरुडेन रत्नाश स्त्रे एषामेकादश विधाच्छायोक्ता ॥

नीलमाधवः । पुं । विष्णौ ॥

नीलमाषः । पुं । राजमाषे ॥

नीलमीलिकः । पुं । खद्योते ॥

नीलमृत्तिका । स्त्री । पुष्पकासीसे ॥ कृष्णवर्णायांमृदि ॥

नीललोहम् । न । वर्त्तलोहे ॥

नीललोहितः । पुं । शिवे । धूर्जटौ ॥ नीलश्चासौ लोहितश्च । कण्ठेजटा सुच । नीलः कण्ठो लोहिताश्चकेशा अस्येति स्वामी ॥ नीलरक्तमिश्रितवर्णे ॥ व्रतविशेषे ॥

नीललोहिता । स्त्री । भूमिजम्बाम् ॥

नीलवर्षाभूः । स्त्री । नीलपुनर्नवायाम् ॥ पुं । कृष्णभेके ॥

नीलवल्ली । स्त्री । वन्दायाम् ॥

नीलवसनः । पुं । शनौ ॥ हलायुधे । नीलाम्बरे ॥ त्रि । नीलवस्त्रयुक्ते ॥

नीलवस्त्रः । पुं । बलदेवे ॥ न । नीलवर्णवसने ॥ यथा । स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं नदुष्यति । नीलीवस्त्रंनस्पृशेद्यस्तुनोविमानरकंव्रजेदिति गारुडेप्रायश्चित्ताध्यायः ॥ तद्धारणप्रायश्चित्तमुक्तंप्रायश्चित्तविवेके । तत्रभविष्यपुराणे । शृणुष्वेतिमहाबाहो नीलीरक्तश्च धारणात् । वासस्तेगणशार्दूलगदतो ममसुव्रत ॥ पालनाद्विक्रयाच्चैव तद्वृत्तेरुपजीवनात् । पतितस्तुभवेद्विप्रस्त्रिभिःकृच्छ्रैर्विशुध्यति ॥ नीलीरक्तेनवस्त्रेण यत्कर्मकुरुतेद्विजः । स्नानंदानंतपो होमःस्वाध्यायःपितृतर्पणम् ॥ वृथा तस्यमहायज्ञोनीलीवस्त्रस्य धारणात् । नीलीरक्तं यदावस्त्रं कश्चिद्विप्रस्तुधारयेत् ॥ अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यतीति । इदम् स्नाने । स्नानेतुद्वैगुण्यम् । अथापवादमाहापस्तम्बः । नीलीच्यनुहतौ । स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यतीति ॥

नीलशराः । पुं । शनैश्चरे ॥ बलभद्रे ॥ नीलेवाससीयस्यसः ॥

नीलशृङ्गा । स्त्री । अजाल्याम् । अतिलोमशायाम् । नीलशर्बोना इति गौडभाषा ॥

नीलवृक्षः । पुं । वृक्षविशेषे । वातारौ । शोफनाशने ॥

नीलवृन्तकम् । न । तूले ॥ इतिराजनिर्घण्टः ॥

नीलवृषः । पुं । कृष्णवर्णवृषे ॥ वृषविशेषे ॥ पश्यास्तलक्षणंवृषे ॥

नीलवृषा । स्त्री । वार्त्ताक्याम् ॥

नीलव्रतम्। न। व्रतविशेषे ॥ नीललोहितव्रते ॥

नीलशिखण्डः। पुं। नीलजटाभारे। रुद्रे ॥ नीलःशिखण्डोऽस्य ॥

नीलशिग्रुः। पुं। शोभाञ्जने ॥

नीलसरस्वती। स्त्री। तारायाम्। चीनाधिवासिन्यां बुद्धशक्तिविशेषे ॥

नीलसारः। पुं। तिन्दुकवृक्षे ॥

नीलसिन्दुकः। पुं। } निर्गुण्ड्याम्।
नीलसिन्दुवारः। पुं। } शीतसहायाम् ॥

नीला। स्त्री। मक्षिकाप्रभेदे। वर्वणायाम् ॥ नीलति। नीलवर्णे। अच् ॥ देवीविशेषे ॥ नीलपुनर्नवायाम् ॥ नील्याम् ॥ मल्लाररागस्त्रनार्यामितिवृन्दकर्मपुराणम् ॥

नीलाङ्गः। पुं। सारसखगे ॥ चासे ॥

नीलाङ्गुः। पुं। कृमौ ॥ निश्चरां लङ्गति। खगिगतौ। खड्गशङ्कुपीयुनीलङ्गुलिग् इति निपूर्वाल्लगेःकुः प्रत्ययोनेर्दीर्घेनीलङ्गुः। नीलाङ्गु इतिपाठान्तरेतु धातोरपिदीर्घोनिपात्यते ॥ स्त्री। भम्भराल्याम् ॥ शुषिरे ॥ प्रसूने ॥

नीलाञ्जनम्। न। सौवीराञ्जने ॥ तुत्थे ॥

नीलाञ्जना॥ स्त्री। विद्युति ॥ इतिजटाधरः ॥

नीलाञ्जनी। स्त्री। कालाञ्जनीक्षुपे ॥

नीलाञ्जसा। स्त्री। अप्सरोभेदे ॥ नदीभेदे ॥ विद्युति ॥

नीलाण्डकः। पुं। ऋष्ये। गवये ॥

नीलापराजिता। स्त्री। नीलवर्णापराजितालतायाम्। महानील्याम् ॥

नीलाब्जम्। न। नीलोत्पले ॥

नीलाम्बरः। पुं। बलदेवे। अच्युताग्रजे ॥ कौणपे। राक्षसे ॥ शनैश्चरे ॥ नीलमम्बरंयस्य ॥ न। तालीशपत्रे। शुकोदरे ॥ नीलवस्त्रे ॥ त्रि। नीलवस्त्रविशिष्टे ॥

नीलाम्बा। स्त्री। देवीविशेषे ॥ नीलाद्रिपर्वतोपरिस्थेतत्स्थाने ॥

नीलाम्बुजन्म। न। नीलोत्पले ॥ नीलञ्चतदम्बुजन्मच ॥

नीलाम्लानः। पुं। पुष्पवृक्षविशेषे। दासाम्। आर्त्तगलायाम् ॥

नीलाम्ली। स्त्री। क्षुपविशेषे। श्यामाम्लयाम् ॥

नीलालुः। पुं। कन्दविशेषे। श्यामालुके ॥

नीलाश्मा। पुं। नीलमणौ ॥

नीलासनः। पुं। नीलपत्रे। नीलद्रुमे ॥ रतिबन्धविशेषे ॥ यथा। लिङ्गोपरिस्थिता नारी शय्यां कृत्वा पदद्वय

म। हृदये दत्तहस्ताच वन्धो नीला सनोमत: ॥ इतिस्म० ॥

नीलिका। स्त्री। नीलिन्याम् ॥ चुद्र रोगभेदे॥ नेत्ररोगविशेषे ॥ शेफा लिकायाम्॥ जलस्यज्वरे ॥ यथा। भूमेरूषरो वृक्षस्यकोटरो जलस्य नीलिकेत्यादिज्वरप्रकरणे विजयर चित: ॥ नीलवर्णा नीलादोषधो· प्राणिनिचेतिङीष्। स्वार्थेकन्॥

नीलिनी। स्त्री। नीलीवृक्षे ॥ कृष्ण चिवृति ॥ अजमीढस्यपत्न्याम्॥ नीलोवर्णोास्त्यस्या:। इनि:। ङीप्॥

नीली। स्त्री। नीलिकारोगे ॥ नी लिन्याम्। कालायाम्। रञ्जन्याम्। नीलकावृक्ष इतिभाषा॥ नीलाञ्जा नपदेत्यनाछादनेर्थेङीष्। नी लादोषधो प्राणिनिचनित्यंङीप् ।संज्ञायान्तु वा॥ नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा। उ-ष्णा हन्त्युदरप्लीहवातरक्तकफानि लान्॥ आमवातमुदावर्त्तंमदञ्चवि षमुद्धतम्॥

नीलीरागः। पुं। स्थिरसैाहृदेपुरुषे॥

नीलीवृक्षाकृतिः। पुं। शरपुङ्खे॥

नीलोत्पलम् । न। इन्दीवरे। नील शाँपलाइति गैाडभाषा॥

नीलोत्पली। पुं। मञ्जुघोषे ॥ इति·त्रिकाण्डशेषः॥

नीलोपल:। पुं। इन्द्रनीलमणौ॥

नीवरः। पुं। वास्तव्ये॥ वणिजके॥ प रिव्राजि। भिक्षुके ॥ नयति नीयते वा। णीञ्०। छित्वरच्छत्वरधीवर पीवरेत्यादिनासाधुः॥

नीवाकः। पुं। प्रयामे । मूल्योत्कर्षा-र्थंधान्यादिसञ्चये॥ महार्घहेतोर्धा न्यादिषुजनानामादरातिशये॥ तु लाधरणाधिक्ये॥ तुलाकृतंन्यूनाधि क्यंक्रयादरोवेतिस्वामी॥ नियतं व चनम्। वच०। घञ् । उपसर्गस्ये तिदीर्घः॥ मूल्याधिक्यंहेतोर्निश्चये नपरिच्छेदनेइतिभरत:॥ वचना-भावे॥

नीवार:। पुं। श्यामाकादितृणधान्ये। मुनिधान्ये। अरण्यधान्ये ॥ निव्रीय ते। वृञ्वरणे। नैावृधान्ये इतिघञ् ।दीर्घः ॥ नीवारःशीतलोग्राही पित्तघ्नःकफवातकृत्॥

नीविः। स्त्री। परिपणे । वणिङ्मूलध ने॥ उच्चये। स्त्रीणांकटीवसनबन्ध ने॥ स्त्रीणामित्युपलक्षणम् पुंक टीवस्त्रबन्धेपि॥ निव्ययति निवीय ते वा। व्येञ्०। नोव्योयलोपःपूर्व स्यचदीर्घइतीणडित्॥ नितरामि ष्यति। इषिप्रीणने आगमशास्त्रस्या

निश्चयत्वान्ननुम्। इगुपधात्किदिति कित्॥

नीवी। स्त्री। नीविशब्दार्थे॥ राजपुत्रादेर्बन्धके। परिपणे॥ कृदिकारादितिङीष्॥

नीवृत्। पुं। स्त्री। जनपदे। देशे। अङ्गादिजननिवासस्थाने॥ नियतो वर्त्तते। अधिकरणस्य कर्त्तृत्वविवक्षात। वृतु०। क्विप्। नहिवृतीति दीर्घः॥ नीवृज्जनपदयोर्भेदादेशे इति शब्दाम्बुधिः॥

नीशारः। पुं। हिमानिलनिवारणप्रावरणे। सौड इति भाषा॥ गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः॥ नितरां शीर्यते हिमानिलावयाने नया। शृहिंसायाम्। शृवायुवर्णनिवृतेष्विति घञ्॥ उपसर्गस्य घञीतिदीर्घः॥

नीहारः। पुं। अवश्याये। तुषारे। हिमे। धुवारा इति भाषा॥ निह्रियते। हृञ्०। घञ्। उपसर्गस्य घञीतिदीर्घः॥ कफवायुवर्द्धकोऽयम्॥

नु। अ। वितर्के॥ अपमाने॥ विकल्पे॥ अनुनये॥ अतीते॥ प्रश्ने॥ हेतौ॥ अपदेशे॥ अनुशये॥ नुदति नौमिवा। णुद०। णु० वा। मितद्र्वादित्वात् डुः॥

नुतः। त्रि। स्तुते॥

नुतिः। स्त्री। स्तुतौ। स्तोत्रे॥ नूयतेऽनेन। णु०। स्त्रियाङ् क्तिन्॥ पूजायामिति शब्दरत्नावली॥

नुत्तः। त्रि। प्रेरिते॥ नुद्यतेस्म। णुद०। क्तः। नुदविदेति पाक्षिकोनत्वाभावः॥

नुन्नः। त्रि। नुत्ते। अस्ते। प्रेरिते॥ नुद्यतेस्म। णुद०। क्तः। नुदविदेति वानत्वम्॥ निरस्ते॥

नुन्ननुन्ननुत्। त्रि। अतिपीडितपीडके॥ अतिशयेन नुन्नोनुन्ननुन्नः तं नुदतीतिविग्रहः॥

नुन्नसारः। त्रि। परिच्छिन्नधैर्ये॥

नूतः। त्रि। स्तुते॥

नूतनः। त्रि। प्रत्यग्रे। अभिनवे। नवीने॥ नवएव। नवस्यनूप्तनप्खाश्चप्रत्ययाः नूरादेशश्च॥

नूत्नः। त्रि। नवे। नव्ये। नूतने॥ नवएव। नवस्यत्नप्प्रत्ययेनूरादेशः॥

नूदः। पुं। ब्रह्मदारुवृक्षे। अश्वत्थाकारे पार्श्वपिप्पल इतिख्याते॥ तूत इति प्रसिद्धेपि॥ नुदति पापम्। नुद०। इगुपधेतिकः। पृ०॥ यद्वा। नुवदति। वद०। मू० कः। कर्मणः कर्त्तृत्वम्॥ यद्वा। नूयते। णु०। बा० दः। कुटादिः॥

नून: । त्रि । समग्रे ॥ नञ्ऊन: । ग० ॥

नूनम् । अ । निश्चिते ॥ तर्के ॥ स्मरणे ॥ वाक्यपूरणे ॥ नुवा स्तुत्या नमति । विच् ॥ यद्वा । नुञ्ऊनयति । ऊनपरिहाणे । अम् ॥

नूपुर: । पुं । न । पादाङ्गदे । मञ्जीरे । नेउर इति बिछुवा इतिच भाषा ॥ ॥ नुवनम् नूयतेवा । णू० । सं० क्विप् । नुविपुरति । पुरअग्रगमने । इगुपधेति क: ॥

ना । पुं । मनुष्ये । पुरुषे ॥ नयति नयते वा । णीञ्० । नयतेर्डिच्चेत्यृन् । नरौ । नर: ॥

नृकरोटिका । स्त्री । नरकपाले ॥ नु: करोटिका ॥

नृकेशरी । स्त्री । नरसिंहावतारे ॥

नृग: । पुं । पुराणप्रसिद्धे नृपविशेषे ॥

नृगधूम: । पुं । तीर्थविशेषे ॥

नृचक्षा: । पुं । राक्षसे ॥ नॄन्चष्ट । चक्षिङ्० । सर्वधातुभ्यइत्यसुन् । असनयोश्चेति न ख्याञादेश: ॥ यद्वा । चष्टे बहुलंशिच्चेत्यसि: । सार्वधातुकसंज्ञत्वात् ख्याञ्न ॥ नृणां द्रष्टरि ॥

नृता । स्त्री । पुंस्त्वे ॥ नुर्भाव: । तल् ॥

नृति: । स्त्री । नर्त्तने ॥ इतिशब्० ॥

नृतुरङ्ग: । पुं । हयग्रीवावतारे ॥

नृतू: । पुं । नर्त्तके ॥ नृत्यति । नृती० । नृतिशृध्यो:कू: ॥

नृत्तम् । न । नर्त्तने । ताण्डवे । लास्ये ॥ नृतीगात्रविक्षेपे । भावेक्त: ॥ भावाश्रयन्तु नृत्तंस्यान्नृत्यं तालल्याश्रयम् । आद्यंपदार्थाभिनयो मार्गो देशीतथा पर: ॥ मधुरोद्धतभेदेन तद्द्वयं द्विविधंपुन: । लास्यदण्डकरूपेण नाटकाद्युपचारकम् ॥ गात्रविक्षेपमात्रे ॥

नृत्यम् । न । तालमानरसाश्रयसविलासाङ्गविक्षेपे । ताण्डवे । नटने । । नाच इतिभाषा ॥ देवरत्या प्रतीतोयस्तालमानरसाश्रय: । सविलासोङ्गविक्षेपो नृत्यमित्युच्यते बुधै: ॥ * ॥ ताण्डवञ्च तथालास्यं द्विविधं नृत्यमुच्यते । पेवलिर्बहुरूपञ्च ताण्डवं द्विविधंमतम् ॥ अङ्गविक्षेपवाहुल्यं तथाभिनयशून्यता । यचसा पेवलिरस्या: संगा देशीति लोकत: ॥ छेदनं भेदनं यत्रबहुरूपामुखात्र सी । ताण्डवं बहुरूपं तद्दारुणागमसमुद्धतम् ॥ * ॥ इतिसङ्गी० ॥ नृत्येनासमरूपेण सिद्धिर्नास्त्यस्य रूपत: । चार्वधिष्ठानवन् नृत्यं नृत्यमन्यद्दिवञ्चनेति ॥ गेयादुत्तिष्ठतेवाद्यं वाद्यादुत्तिष्ठतेलय: । लयतालसमारब्धं ततो नृत्यं प्रवर्त्तते ॥ नृती०

। नृदुपधाच्चाक्लृपिचृतेरिति क्यप् ॥

नृदुर्गम्। न। चतुर्दिगवस्थायिहस्त्यश्वरथयुक्तबहुपदातिरचिते राज्ञोवसतिस्थले ॥

नृदेवः। पुं। राजनि ॥

नृधर्म्मा। पुं। धनदे। कुबेरे ॥ नुरिव धर्म्म आचारः प्रमत्तत्वादिर्वाऽस्य। धर्म्मादनिच् केवलात् ॥

नृपः। पुं। भूपे। राजनि ॥ नॄन् पाति। पारक्षणे। आतोनुपेतिकः ॥ चतुर्योजनपर्य्यन्त मधिकारो नृपस्य च ॥ अस्यप्रशंसा यथा। अपुत्त्रस्य नृपः पुत्त्रो निर्धनस्य धनं नृपः। अमातुर्जननी राजा अतातस्यपितानृपः ॥ अनाथस्यनृपोनाथो ह्यभर्त्तुः पार्थिवः पतिः। अभृत्यस्यनृपोभृत्यो नृपएवनृणांसखा ॥ सर्व्वदेवमयोराजा तस्मात् त्वामर्थये नृपेति कालिकापुराणम् ॥ षोडशसङ्ख्यायाम् ॥

नृपकन्दः। पुं। राजपलाण्डौ ॥

नृपतिः। पुं। धनदे। कुबेरे ॥ भूपतौ। राजनि ॥ नॄन्पाति। पा०। पातेर्डतिः ॥ नृणांपतिर्व्वा ॥

नृपतिप्रियः। त्रि। राजवल्लभे ॥ नृपस्य प्रियः ॥

नृपतिवल्लभः। पुं। नृपवल्लभ इतिख्याते औषधविशेषे ॥ यथा। जातीफलं लवङ्गाब्दत्वगेलाटङ्करामठम्। जीरकञ्च यमानीच विश्वसैन्धवपत्रकम् ॥ लौह मभ्रं रसं गन्धं ताम्रं-प्रत्येकशः पलम्। मरिचं त्रिपलं दत्त्वा छागीदुग्धेन पेषयेत् ॥ धात्रीरसेन वा पिष्ट्वा वटिकां कुरुयत्नतः। श्रीमद्गहननाथेन विचिन्त्यपरिनिर्मितः ॥ सूर्य्यवत्तेजसा चाऽयं रसो नृपतिवल्लभः। अष्टादशवटीं खादेत् पवित्रः सूर्य्यदर्शकः ॥ * ॥ हन्ति मन्दानलं सर्व्व मामदोषं विसूचिकाम्। प्लीहगुल्मोदराष्ठीलायकृत् पाण्डुहलीमकम् ॥ हृच्छूलं कण्ठशूलञ्च चक्षुःशूलञ्च कामलाम्। शिरःशूलं कटीशूल मानाहमोष्ठशूलकम् ॥ कासश्वासामवातञ्च श्लीपदं शोथमर्व्वुदम्। गलगण्डं गण्डमाला मम्लपित्तञ्च गर्द्दभीम् ॥ क्रिमिकुष्ठानि दद्रूणि वातरक्तं भगन्दरम्। उपदंश मतीसारं ग्रहण्यर्शः प्रमेहकम् ॥ अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघात मसृग्दरम्। ज्वरं जीर्णज्वरं कण्डुं तन्द्रालस्यं वमिं भ्रमिम् ॥ दाहविद्रधिहिक्काश्च जडगद्गदमूकताः। वाधिर्य्यं स्वरभेदञ्च दृष्टिवृद्धिविसर्प-कान् ॥ ऊरुस्तम्भं रक्तपित्तं गुदभ्रं

साकचिं तृषाम् । कर्णनासानुशोथां श्वदन्तरोगश्च पीनसम् ॥ स्थौल्यञ्च शीतपित्तञ्च स्थावराणि विषाणि च । वातपित्तकफोत्थांश्च द्वन्द्वजान् सान्निपातिकान् ॥ सर्वरोगचयान् हन्ति चण्डांशु रिवपापहा । बलवर्णकरो ह्येष आयुष्यो वीर्यवर्द्धनः ॥ परं वाजीकरः श्रेष्ठः पटुतामन्त्रसिद्धिदः । अरोगी दीर्घजीवी स्या द्रोगी रोगं विमुञ्चति ॥ रससाम्यप्रसादेन सुबुद्धिर्जायते जनः । इति रत्नावली ॥

नृपद्रुमः । पुं । आरग्वधे ॥ राजादनी वृक्षे ॥

नृपप्रियः । पुं । बेडुवांस इति गौडभाषाप्रसिद्धे वेष्टवंशे ॥ राजपलाण्डौ ॥ राजशुके ॥ रामशरे ॥ शालिधान्ये ॥ आम्रे ॥ त्रि । राजवल्लभे ॥ नृपस्य प्रियः ॥

नृपप्रियफला । स्त्री । वार्त्ताक्याम् ॥ इति राजनिर्घण्टः ॥

नृपप्रिया । स्त्री । केतक्याम् ॥ राजखर्ज्जूर्य्याम् ॥ राजभार्य्यायाम् ॥

नृपबदरः । पुं । राजबदरवृक्षे ॥ न । तत्फले ॥

नृपमन्दिरम् । न । सौधे । राजसदने ॥

नृपमाङ्गल्यकम् । न । आहुल्यवृक्षे ॥

नृपमानम् । न । भभजांभुक्तिकाला वेदकवाद्यविशेषे ॥ इति शब्दाम्बुधिः ॥

नृपलक्ष्म । न । राजच्छत्रे ॥ राजचिह्ने ॥ नृपस्य लक्ष्म ॥

नृपलिङ्गधरः । पुं । राजवेशधारिणि ॥ यथा । निजशाह्यौजसा वीरः कलिं दिग्विजये क्वचित् । नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदेति श्रीभागवतम् ॥ प्रवृत्ते कलिकाले तु तद्विधा एव भूभुजः । प्रजाधनादानपराः स्वल्पतो दुःखभागिनः ॥

नृपवल्लभः । पुं । राजाम्रे ॥ त्रि । राजप्रिये ॥

नृपवल्लभा । स्त्री । राजमहिष्याम् ॥ केविकापुष्पे ॥

नृपशुः । पुं । कार्य्याकार्य्यविवेकशून्ये ॥ ना पशुरिव । उपमितसमासः ॥

नृपसभम् । न । राज्ञांसभायाम् ॥ नृपाणांसभा । सभाराजामनुष्यपूर्वेति-क्लीवत्वम् ॥

नृपात्मजा । स्त्री । राजपुत्र्याम् ॥ नृपस्य आत्मजा ॥ कटुतुम्ब्याम् ॥

नृपाध्वरः । पुं । राजसूययज्ञे ॥

नृपान्नम् । न । राजान्ननामधान्ये ॥ राजान्ने ॥

नृपाभीरम् । न । भक्तूर्य्ये । राजभोजनकालीनवाद्यविशेषे ॥

नृपामयः । पुं । राजयक्ष्मणि । क्षयरो

गे ॥ राज्ञोरोगे ॥

नृपावर्त्तम्। न। राजावर्त्तरत्ने ॥

नृपासनम्। न। भद्रासने। सिंहासने। मणयादिकृतराजासने ॥ नृपस्य आसनम् ॥

नृपाह्वयः। पुं। राजपलाण्डौ ॥ नृपनामनि ॥

नृपेशः। पुं। सार्वभौमे ॥ नृपाणामीशः ॥

नृपोचितः। पुं। राजमाषे ॥ चि। राजार्हे ॥

नृम्णा। स्त्री। सप्तद्वीपस्य प्रधाननद्याम् ॥

नृयज्ञः। पुं। अतिथिपूजने। ब्राह्मणश्रेष्ठस्यार्चायाम् ॥

नृवराहः। पुं। वराहरूपधृग्भगवदवतारे ॥ अयंवलेर्द्दारीति पुराणम् ॥ नृवराहस्य वसति र्मर्त्त्यलोके प्रतिष्ठितेति पद्मपुराणम् ॥

नृशंसः। चि। घातुके। क्रूरे ॥ नॄन् शंसति। शंसुहिंसायाम्। कर्मण्यण् ॥ परुषे। रूक्षे ॥

नृषद्। पुं। मनुष्येषु विद्यमाने ॥ बुद्धौ ॥ नृषु सीदति। षद्लृ०। सं० क्विप् ॥

नृसिंहः। पुं। विष्णौ। हरेरवतारविशेषे ॥ यथा। यत्पादपद्ममकरन्द साऽनभिज्ञाविश्रामभाविधिपदाद पिसञ्चरन्तः। नप्रामुवन्निपशुकर्मरताधनेशास्तस्मै नृसिंहवपुषे हरये नमस्ते इतिविष्णुभागवतम् ॥ अपिच। पुण्यारण्येनृसिंहैकनामसिंहोविराजते। यन्नादतःपलायन्ते महाकिल्विषकुञ्जरा इति ॥ अस्यवसतिर्जनलोके। यथा। नृवराहस्यवसतिर्महर्लोकेप्रतिष्ठिता। नृसिंहस्यतथाप्रोक्ताजनलोके महात्मनइतिपाद्मेसृष्टिखण्डे २८ अध्यायः ॥ मनुजोत्तमे ॥ ना सिंह इव। उपमितंव्याघ्रादिभिरितिसमासः ॥ नाचासौसिंहश्चेति वा ॥ रतिवन्धविशेषे। यथा। पादौसम्पीड्ययोनौचहठाल्लिङ्गप्रवेशनम्। हस्तयोर्वेष्टयेद्गाढंवन्धोनृसिंहसंज्ञकइति ॥

नृसिंहचतुर्द्दशी। स्त्री। वैशाखशुक्लचतुर्दश्याम् ॥ यथा। वैशाखस्यचतुर्दश्यांशुक्लायां श्रीनृकेशरी। जातस्तदस्यां तत्पूजोत्सवं कुर्वीतसव्रतमिति ॥

नृसिंहपुराणम्। न। नारसिंहे ॥

नृसेनम्। न। नरसेनायाम् ॥ नृणां सेना। विभाषासेनेतिपाक्षिकंक्लीवत्वम् ॥

नृसेना। स्त्री। नृसेने ॥ नृणांसेना ॥

नृहरिः। पुं। नृसिंहे ॥

नृहरिदासः। पुं। प्रह्लादे॥

नेजकः। निर्णेजके। रजके॥ नेनेक्ति। णिजिर्०। ण्वुल्॥

नेत्। अ। शङ्कायाम्॥ प्रतिषेधे॥ विचारे॥ समुच्चये॥

नेता। त्रि। प्रभौ। नायके॥ प्रवर्त्तके॥ नयति। णीञ्०। तृच्॥ निम्बवृक्षे॥ प्रापयितरि॥ निर्वाहके॥ यथा। जगद्यन्त्रनिर्वाहको नेतेति विष्णुसहस्रनामभाष्यम्॥

नेत्रम्। न। मन्थगुणे॥ वस्त्रभेदे॥ द्रुमस्य मूले॥ रथे॥ जटायाम्॥ नाड्यामिति विश्वः॥ वस्तिशलाकायाम्॥ चक्षुषि॥ अथ नेत्रपरीक्षा। नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथारुणम्। कोटरान्तःप्रविष्टञ्च तथास्तब्धविलोकनम्॥ हरिद्राखण्डवर्णाभं रक्तं वा हरितं तथा। दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः॥ चक्षुर्बलासबाहुल्यात् स्निग्धं स्यात्सलिलप्लुतम्। तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम्॥ नेत्रं द्विदोषबाहुल्यात् स्याद्दोषद्वयलक्षणम्। त्रिदोषलिङ्गसम्बन्धेन तन्मारयति रोगिणम्। त्रिदोषदूषितं नेत्रमन्तर्मग्नं भृशं भवेत्। त्रिलिङ्गं तल्लिलस्राविप्रान्ते नोन्मीलयत्यपीति॥ नयति नीयतेऽनेन वा। णीञ्०। सर्वधातुभ्यः ष्ट्रन्। दाम्नीत्यादिना वा ष्ट्रन्॥ त्रि। नेतरि। नयनसाधने। प्रापयितरि॥ प्रवर्त्तकेपि॥

नेत्रच्छदः। पुं। अक्षिपुटे। नेत्रपिधायके चर्मपुटे। आँखका ढक्कन इति भाषा॥

नेत्रपर्य्यन्तः। पुं। अपाङ्गे॥ त्रि। नयनावधिके॥

नेत्रपिण्डः। पुं। विडाले॥ इति शब्दरत्नावली॥ चक्षुर्गोलके॥

नेत्रपुष्करा। स्त्री। रुद्रजटायाम्॥

नेत्रबन्धः। पुं। बालानां क्रीडाविशेषे। आँखमिचौनी इति भाषा॥

नेत्रमलम्। न। दूषिकायाम्॥ नेत्रयोर्मलम्॥

नेत्रमीना। स्त्री। यवतिक्तालतायाम्॥

नेत्रयोनिः। पुं। इन्द्रे। वासवे॥

नेत्ररञ्जनम्। न। कज्जले॥ नमस्त्याचैयोजयेत्तु साधको नेत्ररञ्जनमिति- कालिकापुराणम्॥

नेत्ररोगः। पुं। चक्षूरोगे॥ तन्निदानमाह माधवः। द्रवात्तथान्नान्निषेविताच्च विण्मूत्रघातागमनिग्रहाच्च। उष्णाभितप्तस्य जलप्रवेशात् दूरेक्षणात् स्वप्नविपर्ययाच्च। स्वेदाद्रजोधूमनिषेवणाच्च छर्द्देर्विघाताद्वमना

तियोगात् । प्रसक्तसंरोदनशोकता-पाच्छिरोभिघातादतिमद्यपानात् ॥ तथाऋतूनाञ्च विपर्ययेण क्लेशाभिघातादतिमैथुनाच्च । वातात् पित्तात् कफात् रक्तादभिष्यन्दश्चतुर्विधः -। प्रायेण जायते घोरः सर्वनेत्रामयाकरः इति च ॥ बाष्पग्रहात् सूर्यनिरीक्षणाच्च नेत्रविकारान् जनयन्ति दोषाः ॥

नेत्ररोगहा । स्त्री । वृश्चिकालीवृक्षे ॥ त्रि । चक्षूरोगनाशके ॥

नेत्रामयः । पुं । नेत्ररोगे ॥

नेत्राम्बु । न । अश्रुणि ॥ नेत्रयोरम्बु ॥

नेत्रारिः । पुं । सेहुण्डवृक्षे ॥

नेत्री । स्त्री । नद्याम् ॥ नाड्याम् ॥ श्रियाम् । लक्ष्म्याम् ॥ नेतृशब्दात् षित्त्वान् ङीष् ॥ प्रापणकर्त्र्याम् ॥

नेत्रोपमफलः । पुं । वातादे । वदाम इति भाषा ॥

नेत्रौषधम् । न । पुष्पकासीसे ॥ चक्षुरो गौषधमात्रे ॥

नेत्रौषधी । स्त्री । अजशृङ्ग्याम् ॥

नेदिष्ठः । त्रि । अत्यासन्ने ॥ अयमेषामतिशयेनान्तिकः । इष्ठन् । अन्तिकबाढयोर्नेदसाधौ ॥ निपुणे ॥ अङ्कोठवृक्षे ॥

नेदीयमान् । त्रि । अत्यन्तसमीपे । अयमनयोरतिशयेनान्तिकः । ईयसुन् । अन्तिकस्य नेदादेशः ॥

नेपः । पुं । पुरोहिते ॥ नयति नीयते वा । णीञ्० । पानीविषिभ्यः पः ॥

नेपथ्यम् । न । रङ्गच्छायाम् । रङ्गभूमौ ॥ पुं । अलङ्कारे । प्रसाधने । वेशे ॥ वेशस्थाने ॥ नयति । णीञ्० । विच् । गुणः । नयो नेत्रस्य नेतुर्वा पथ्यः ॥

नेपालः । पुं । स्वनामप्रसिद्धे हिमालयैकदेशविशेषे ॥ यथा । जटेश्वरं समारभ्य योगेश्यन्तं महेश्वरि । नेपालदेशो देवेशि स्युक्तं श्रीशक्तिसङ्गमे ॥

नेपालकम्बलः । पुं । कुतपाख्ये ॥

नेपालनिम्बः । पुं । नैपाले । तृणनिम्बे । ज्वरान्तके । नाडीतिक्ते ॥

नेपालमूलकम् । न । हस्तिदन्तसदृशे मूलकविशेषे ॥ नैपालमूलकं चान्यत्तज्ज्ञेयं गजदन्तवत् ॥

नेपालिका । स्त्री । मनःशिलायाम् ॥

नेमः । पुं । काले ॥ अवधौ ॥ अर्द्धे । खण्डे ॥ प्रकारे ॥ कैतवे ॥ गर्त्ते ॥ नीयते । णीञ्० । अर्त्तिस्तुस्विति मन् ॥ नाप्यादौ ॥ अन्यस्मिन् । इति शब्द० ॥

नेमिः । पुं । जिनविशेषे ॥ तिनिशद्रु

चे । तिनाश इतिभाषा॥ स्त्री । चि कायाम् । कूपसमीपे रज्जुधारणार्थे विदारयन्ते ॥ चक्रान्ते । प्रधौ । रथचक्रस्यभूमिस्पर्शिभागे ॥ कूपान्तिके समानस्थलभागे॥ इति शब्दरत्नावली ॥ नयतिरथम् नयन्त्यनेनवा । णीञ्० । नियोमिः ॥

नेमिचक्रः। पुं । परीचितवंशजे असीमकृष्णस्यपुत्रे ॥

नेमिशम् । न । नैमिशारण्याख्ये चेत्रे ॥ ब्रह्मणाविसृष्टस्यचक्रस्य नेमिः शीर्यतेकुण्ठीभवति यत्र तत् ॥

नेमी । स्त्री । कूपस्थचिकायाम् ॥ चक्रान्तभागे । प्रधौ ॥

नेष्टः । चि । निषिद्धे ॥ .

नेष्टुः । पुं । लोष्टे ॥ इतिशब्दाम्बुधिः ॥

नेष्टा । पुं । ऋत्विग्विशेषे ॥ नयति । णीञ्० । नयतेः षुक्चेतितृन् ॥ नप्तृनेष्ट्रितिसाधुः ॥

नैःस्वम् । न । निःस्वतायाम् । दुर्गतौ ॥

नैकटिकः । पुं । भिक्षौ ॥ भिक्षुणाग्रामात् क्रोशे वस्तव्यमितिशास्त्रम् । प्रयोजनान्निकटे वसति । ठक् ॥ चि । निकटवर्त्तिनि ॥

नैकट्यम् । न । निकटत्वे ॥

नैकभेदः । चि । बहुविधे । उच्चावचे ॥ अनेकप्रकारे ॥ एकोभेदोऽस्य । न एकभेदः । सुप्सुपेति समासः ॥ न एकोभेदोऽस्येतिवा । उत्तरपदशब्दस्य समास चरमावयवेकृतत्वान्मध्यपदे न लोपाभावः ॥

नैकषेयः । पुं । राक्षसे ॥ निकषाया अपत्यमित्यर्थे ढक् ॥

नैकृतिकः । चि । स्वस्मिन्नुपकारित्वभ्रममुत्पाद्यपरवृत्तिच्छेदनेन स्वार्थपरे ॥ निकृत्यापरापकारेणजीवति । निकृत्यानिष्ठुरतया चरतिवा । ठक् ॥

नैगमः । पुं । न । उपनिषदि ॥ वणिजि । वाणिजे ॥ नागरे । पौरे ॥ नये ॥ कृत्याम् ॥ निगमे भवः । तत्रभवः इत्यण् ॥ निगमएववा । प्र० अण् ॥ चि । निगम सम्बन्धिनि ॥

नैचिकम् । न । गोः शिरोदेशे ॥ इति हेमचन्द्रः ॥

नैचिकी । स्त्री । उत्तमायांगवि ॥ नीचैश्चरति । चरतीति ठक् । अव्ययानामितिटिलोपः । यद्वा । निचिः कर्णशिरोदेशे इतिरभसः । ततः स्वार्थेकन् । प्रशस्तं निचिकमस्याः । ज्योत्स्नादिभ्य इत्यण् ॥

नैजः । चि । निजसम्बन्धिनि । स्वीये ॥

नैत्यम् । न । नित्यत्वे ॥ इ०राधाकान्तः॥

नैत्यकम् । न । नित्यानुष्ठेये । जप

यज्ञे । ब्रह्मयज्ञादिरूपे ॥ यथा । वेदोपकरणेचैव स्वाध्यायेचैवनैत्यके । नानुरोधोऽस्त्यनध्याये होममंत्रेषु चैवहीति ॥ नैत्यके नास्त्यनध्यायोब्रह्मसत्रं हितत् स्मृतम् । ब्रह्माहुति हुतं पुण्यमनध्यायवषट्कृतमिति मनुः ॥

नैत्यशब्दिकः । पुं । नित्यशब्दत्ववादिनि ॥ नित्यः शब्द इति आह । तदाहेतिमाशब्दादिभ्य ष्ठक् ॥

नैदानिकः । त्रि । निदानविदि ॥ निदानाध्येतरि ॥

नैद्रः । त्रि । निद्रासम्बन्धिनि ॥

नैपालः । पुं । नेपालनिम्बे ॥ त्रि । नेपालदेशसम्बन्धिनि ॥

नैपालिकम् । न । ताम्रे ॥ इतिरानि० ॥

नैपाली । स्त्री । नवमाल्याम् ॥ कुनट्याम् । मनःशिलायाम् ॥ सुवहायाम् । शेफालिकायाम् ॥ नेपाले भवा । तत्रभवइत्यण् ॥ नील्यामिति शब्दरत्नावली ॥

नैपुणम् । न । नैपुण्ये ॥ निपुणस्यभावः ॥

नैपुण्यम् । न । निपुणत्वे ॥ निपुणस्यकर्मभावोवा । ब्रा० ष्यञ् ॥

नैमित्तिकम् । न । पुत्रजन्माद्यनुबन्धिषु जातेष्ट्यादिकर्मसु । निमित्तसमासाद्यावश्यकर्त्तव्यतयाविहितेषु ॥ त्रि । हेतुमति । निमित्तादागते ॥ ठक् ॥

नैमित्तिकक्रिया । स्त्री । निमित्तनिश्चयवदधिकारिकर्त्तव्ये कर्मणि ॥

नैमित्तिकदानम् । न । निमित्तनिश्चयवदधिकारिकर्त्तव्ये दाने ॥ यथा । यत्तु पापोपशान्त्यै वदीयते विदुषां करे । नैमित्तकं तदुद्दिष्टं दानं सद्भिरनुष्ठितमितिगरुडपुराणम् ॥

नैमित्तिकधर्मः । पुं । निमित्ताश्रित धर्मे ॥ निमित्त मेक माश्रित्य यो धर्मः सम्प्रवर्त्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

नैमित्तिकलयः । पुं । प्रलयविशेषे ॥ चतुर्युगसहस्रान्तेब्राह्मोनैमित्तिकोलयः ॥

नैमित्तिकस्नानम् । न । निमित्तनिश्चयवदधिकारिकर्त्तव्ये स्नाने ॥ यथा । चाण्डालशवपूयादिस्पृष्ट्वाऽस्नातांरजस्वलाम् । स्नानार्हस्तु यदास्नाति स्नानं नैमित्तिकंहितदिति ॥

नैमिशम् । न । नैमिशारण्ये ॥ नैमिशमेव । स्वार्थेऽण् ॥ तीर्थविशेषे ॥

नैमिशारण्यम् । न । प्रसिद्धेऽरण्यविशेषे ॥ नैमिशञ्च तदरण्यञ्च ॥

नैमिषम् । न । नैमिषारण्ये ॥ तीर्थ

विशेषे ॥

नैमिषकुञ्जम् । न । तीर्थविशेषे ॥

नैमिषारण्यम् । न । स्वनामप्रसिद्धे ऽरण्यविशेषे ॥ अत्रारण्ये निमिषेण दानवबलं विष्णुना निहतम् । तथाहि । तेन चक्रेण तत्सैन्य मासुरं दौर्जयं क्षणात् । निमिषान्तरमात्रेण भस्मवद्बहुधाकृतम् ॥ एवंकृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येस्मिंस्ततस्तेन नैमिषारण्यसंज्ञितम् । भविष्यति यथार्थं वै ब्राह्मणानांविशेषतः ॥ इतिवराहपुराणे गौरमुखंप्रतिभगवद्वाक्यम् ॥ सुकथादेव्यधिष्ठितेसिद्दसिद्दुस्थानम् ॥ सुकथातत्रदेवता । देवदेवाधिपःशम्भुर्नैमिषेचमहेश्वरेत्यागमोक्तः ॥ नैमिषेतुमहास्थानेदेवीसालिङ्गधारिणीतिदेवीगीता ॥

नैमेयः । पुं । परीवर्त्ते । परिदाने । विनिमये ॥ निमानम् । मेङ्प्रणिदाने । अचोयत् । ईद्यति । गुणः । प्रज्ञाद्यण् ॥

नैयग्रोधम् । न । न्यग्रोधफले ॥ न्यग्रोधस्यविकारः । प्लक्षादिभ्यश्चादण् । तस्यविधानसामर्थ्यात्फलेनलुक् । न्यग्रोधस्यवकेवलस्येत्यैजागमः ॥ न्यग्रोध

जातेचर्मसादौ ॥

नैयङ्कवम् । त्रि । न्यङ्कुमृगजातवस्त्रचर्मादौ ॥

नैयमिकम् । न । नित्यनैमित्तिकविधिप्राप्तेसन्ध्याध्ययनजातेषुच्यादौ ॥

नैयायिकः । त्रि । सांवादिके । स्वाक्षपादे । तर्कशास्त्राध्येतरि । तद्वेत्तरि च ॥ न्यायमधीते वेत्तिवा । क्रतूक्थादितिठक् ॥

नैयासिकः । त्रि । न्यासाभिज्ञे ॥ न्यासमधीते वेदवा । उकथादित्वाट्ठक् ॥

नैरन्तर्यम् । न । निरन्तरत्वे ॥

नैराश्यम् । न । आशायाअभावे ॥

नैरुक्तः । त्रि । निरुक्तसम्बन्धिनि ॥

नैरुक्तिकः । त्रि । निरुक्ताध्येतृवेदिनोः ॥ निरुक्तमधीते वेदवा । उ० ठक् ॥

नैर्ऋतः । पुं । राक्षसे ॥ पश्चिमदक्षिणकोणाधिपतौ ॥ सैंहिकेये ॥ निर्ऋतेरपत्यम् । तस्यापत्यमित्यण् ॥

नैर्ऋती । स्त्री । असुरशक्ता ॥ अवाचीप्रतीच्योर्मध्यायांदिशि । नैर्ऋतकोणे ॥

नैर्गुण्यम् । न । निर्गुणत्वे ॥

नैर्झरम् । न । भौमस्यैवपानीयस्यप्रभेदे । निर्झरसम्बन्धिजले ॥ शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः । सतुप्रस्रवणश्चापि तत्रत्यं नैर्झरं ज

लम् ॥ नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु । मधुरं कटुपाकञ्च वातलं स्यादपित्तलम् ॥

नैर्मल्यम् । न । निर्मलत्वे ॥ विषयवैराग्ये ॥ यथा । विषयेष्वर्तिसंरागो मानसो मल उच्यते । तेष्वेव हि विरागस्तु नैर्मल्यं समुदाहृतमिति ॥

नैर्बाह्निकम् । न । वाप्याः निर्गमनद्वारे ॥

नैविड्यम् । न । वंशफूत्कारगुणविशेषे ॥ यथा । नैविड्यं प्रौढता चापि सुम्बरत्वञ्च शीघ्रता । माधुर्यमिति पञ्चामी फूत्कृतेषु गुणाः स्मृताः ॥ निविडत्वे । सघनतायाम् ॥

नैवेद्यम् । न । निवेदनीयद्रव्ये ॥ अर्वाग्विसर्जनाद् द्रव्यं नैवेद्यं सर्वमुच्यते विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥

नैशम् । त्रि । नैशिके ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति शैषिकेऽर्थे षु पाक्षिकोऽण् ॥

नैशिकम् । त्रि । नैशे ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति पक्षे ठञ् ॥

नैषधः । पुं । नलभूपतौ ॥ निषधदेशाधीश्वरे ॥ निषधानामयम् । तस्येदमित्यण् ॥ त्रि । निषधसम्बन्धिनि ॥

नैषादकिः । पुं । निषादतनये ॥

नैष्कर्म्यम् । न । ब्रह्मविषयविचारनिष्पन्नज्ञाने ॥ सर्वकर्मशून्यत्वे । कर्मत्यागरूपे संन्यासे ॥ निष्कर्मणोभावः । ष्यञ् ॥ वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यं सिद्धिं लभते रोचनार्था फलश्रुतिः महाभागवते एकादशस्कन्धः ॥

नैष्किकः । पुं । रूप्याध्यक्षे । टङ्कादिशालायां नियुक्ते ॥ निष्के हेम्नि नियुक्तः । तत्र नियुक्त इति ठक् ॥ त्रि । निष्केण क्रीते ॥ निष्कस्य विकारे ॥ क्रीतवत् परिमाणादित्यति देशात् असमासे निष्कादिभ्य इति ठक् ॥

नैष्ठिकः । पुं । ब्रह्मचर्येण यावज्जीवं गुरुकुलेवासिनि । निष्ठासंसारसमाप्तिस्तत्प्रयोजने ब्रह्मचारिविशेषे ॥ यथा । नैष्ठिको ब्रह्मचारी च वसेदाचार्य सन्निधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेपि वा ॥ अनेन विधिना देहं साधयेद्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोति न चेहाऽऽजायते पुनः ॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा ॥ आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत् ॥

निष्ठाविद्यतेऽस्य। मत्त्वर्थीयठक्॥ निष्ठायां भव: भवार्थेठग्वा॥ चि। निश्चले॥

नैष्ठिकी। स्त्री। निश्चलायाम्॥ टिट्ढेतिङीप्॥

नैसर्गिक:। चि। स्वाभाविके॥

नैस्त्रिंशिक:। चि। असियोधे। असिहेतै॥ निस्त्रिंश: प्रहरणमस्य। प्रहरणमिति ठक्॥

नो। अ। अभावे॥ नह्यति। नह०। डोप्रत्यय:॥

नोचेत्। अ। निषेधे॥

नोदना। स्त्री। चोदनायाम्॥

नोदित:। चि। प्रवर्त्तिते॥ प्रेरिते॥

नोधाठ। पुं। ऋषिविशेषे॥ नूयते। गु०। नुवोधुट्चेत्यसि:। नवंदधातिवा॥

नोपस्थाता। त्रि। दूरस्थे॥ हीनार्थिविशेषे। अनुपस्थिते। पास नहीइति भाषा॥ यथा। अन्यवादीक्रियाद्वषीनोपस्थातानिरुत्तर:। आहूतप्रपलायीचहीन: पञ्चविध: स्मृत:॥ न उपसमीपे तिष्ठति। ष्ठा०। तृच्॥

नैा:। स्त्री। नोकायाम्॥ नैाकाविशेषे। कलकी नाव इतियस्यादेश्भाषा इष्टिम्बोट इतीङ्ग्रेजभाषाच॥ यथा। तत: प्रवासितो विद्वान् विदुरेणनरस्तदा। पार्थानादर्शयामासमनोमारुतगामिनीम्॥ सर्ववातसहां नावं यन्त्रयुक्तांपताकिनीम्। शिवेभागीरथीतीरे नरै र्विश्रम्भिभि: कृताम्॥ इतिमहाभारते आदिपर्वणिजतुकागृहे १४६ अध्याय: नुद्यते। णुद०। ग्लानुदिभ्यांडो:॥ यद्वा। नयति। णीञ्०। अन्येभ्ये०ड:। नम् अवति। क्विप्। ज्वरत्वरस्त्रिवूठ्। वृद्धि:॥

नैाका। स्त्री। नावि। तरण्याम्। निम्नदृशाने। तर्याम्॥ नोशब्दात्स्वार्थेक:॥

नैाकादण्ड:। पुं। क्षेपण्याम्। नैाकापार्श्वद्वयवद्धचालनकाष्ठे। दाँड इति भाषा॥ नैाकाया: दण्ड:॥

नैातार्य्य:। चि। नाव्ये॥ नावातार्य्य:॥

न्यका। स्त्री। विट्कीटे॥ न्यकाविट्कीटकेस्त्रियामिति शब्दाम्बुधि:॥

न्यकारुका। स्त्री। विट्कीटे। शकृत्कृमैा॥ इतिहारावली॥

न्यक्करणम्। न। तिरस्कारे॥

न्यक्कार:। पुं। अनादरे। अवहेलने॥

न्यक्कृति:। स्त्री। रीढायाम्। न्यक्कारे॥

न्यच:। पुं। यामदग्न्य। परशुरामे॥

महिषे ॥ न । कात्स्न्र्ये ॥ तृणे ॥ त्रि । निकृष्टे ॥ नियतानि निकृष्टानि वा अक्षाणियस्य यस्मिन् वा ॥

न्यग्रोधः । पुं । व्यामे । व्यामपरिमाणे ॥ वटवृक्षे ॥ शमीद्रुमे ॥ न्यक्रुणद्धि । रुधिर० । कर्मण्यण् ॥ हरौ ॥ न्यगर्वाक् रोहति सर्वेषामुपरिवर्त्त पृ० इस्वधः ॥ सर्वाणिभूतानिन्यक्-कृत्य निजमायया ऽऽ वृणोतिरुणद्धीतिवा ॥ विषपर्ण्याम् ॥ मोहनाख्योषधौ ॥

न्यग्रोधपरिमण्डलः । पुं । व्यामपरिमितोच्छ्रायपरीणाहे पुरुषे ॥ एतादृशाः पुरुषास्त्रेतायुगे चक्रवर्त्तिन आसन् । यथा । महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः । सर्वलक्षण सम्पन्ना न्यग्रोधपरिमण्डलाः ॥ न्यग्रोधौतु स्मृतौ वाहू व्यामोन्यग्रोधउच्यते । व्यामेनउच्छ्रयोयस्य अधऊर्द्धञ्चदेहिनः ॥ समोच्छ्रयपरीणाहोन्यग्रोधपरिमण्डलः ॥ इतिमात्स्ये ११८ अध्यायः ॥

न्यग्रोधपरिमण्डला । स्त्री । अङ्गनाविशेषे ॥ यथा । स्तनौसुकठिनौयस्या नितम्बेचविशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डलेति शब्दमाला ॥

न्यग्रोधा । स्त्री । न्यग्रोध्याम् ॥

न्यग्रोधी । स्त्री । उपचित्रायाम् । मूषिकपर्ण्याम् ॥ न्यकरुणद्धि वंहुमूलत्वात् । रुधिर० । पचाद्यच् । गौरादित्वात् ङीष् ॥

न्यक्षंरुणद्धि इतिवा । कर्मण्यण् ॥

न्यङ्कुः । पुं । मुनिविशेषे ॥ बहुविषाणेमृगविशेषे । बारहसिंगा इति भाषा ॥ न्यङ्कुःस्यादुर्लघुर्वल्यो वृष्यो दोषत्रयापहः ॥ नितरामञ्चति । नावञ्चेरिच्युः । न्यङ्क्वादित्वात् कुत्वम् ॥

न्यङ्कुभूरुहः । पुं । शोणकवृक्षे । श्योनाके ॥

न्यङ्गम् । न । अवंचेऽइतिवाक्पारुष्येमिताचरा ॥

न्यच्छम् । न । क्षुद्ररोगविशेषे ॥ इति भावप्रकाशः ॥

न्यञ्च् । त्रि । निम्ने ॥ नीचे ॥ कात्स्न्र्ये ॥ न्यञ्चति । अञ्चु० । ऋत्विगिति क्विन् ॥

न्यञ्चितम् । त्रि । अधः क्षिप्ते ॥

न्यन्तः । पुं । चरमप्रदेशे । पश्चिमभागे ॥ नितरामन्तः ॥

न्ययः । पुं । नाशे ॥ निपूर्वादिण एरच् । न्ययंगतः पापः । नाशमित्यर्थः ॥

न्यस्तः । त्रि । निसृष्टे । त्यक्ते । निहिते । स्थापिते ॥ यथा । शरणं मम न

ति जननी न पिता न सुता न सोदरा नान्ये। परमं शरणमिदमेव चरणं मम कृष्ण देशिकन्यस्तमिति ॥ न्यस्यतेस्म। अस०। क्तः॥

न्यस्तदण्ड:। पुं। सन्यासिनि॥

न्यस्तशस्त्र:। पुं। दिव्यपितृषु॥ त्रि। अस्त्रशस्त्रवर्जिते॥ न्यस्तानि शस्त्राणि यैर्येनवा॥

न्याक्यम्। न। मंडी मुडकी फरुही इत्यादिभाषाप्रसिद्धे भृष्टान्ने॥ इति शब्दचन्द्रिका॥

न्याद:। पुं। आहारे॥ न्यदनम्। अद०। णेर्णाचेत्यदेर्णः॥

न्याय:। पुं। अभ्रेषे। कल्पे। देशरूपे उचिते॥ नियमेन ईयते। इण०। परिन्योर्नीणोर्घूताभ्रेषयोरिति घञ् एषोचन्याय: उचितमित्यर्थ:॥ गौतमप्रणीते षोडशपदार्थनिरूपणपरे शास्त्रविशेषे। तर्कविद्यायाम्। आन्वीक्षिक्याम्॥ एतद्दर्शनमते नित्येच्छाकृतिमतिसम्बित: परमात्मा ईश्वर:। सतु ब्रह्मपदार्थोजीवातिरिक्त:। एतच्छास्त्रप्रयोजनं चार्वाकादि मतनिराकरण पूर्वकं जगत्कारणतयेश्वर संस्थापनं शंशयादि निरूपणेन वेदार्थनिर्णयश्च। एतद्दर्शनकारोगौतम:। ततस्तच प्रमा-



णादिषोडशपदार्थनिरूपणम्। तेषां तत्त्वज्ञानान्निःश्रेयसम्। तस्यभाष्यकारोवात्स्यायन:। तद्वार्त्तिककार: कात्यायन:। तट्टीकाकारोवाचस्पति मिश्र: तच्छात्रउदयनाचार्य:। कुसुमाञ्जलिप्रभृति ग्रन्थकर्त्ता। तच्छिष्यप्रशिष्याश्चहरिदासेरामभद्रगङ्गेशोपाध्यायचिन्तामणिकारादयोबहव:॥ *॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकपञ्चावयववाक्ये॥ यथा। पर्वतोवह्निमान् धूमात् योयोधूमवान् ससवह्निमान् यथामहानसम् वह्निव्याप्यधूमवांश्चायम् तस्माद्वह्निमान्॥ नीयते प्राप्यतेविवक्षितोर्थोयेनस न्याय:। अध्यायन्यायेति घञन्तोनिपातित:॥ नीतौ॥ ज्ञयोपाये॥ भोगे॥ युक्तौ॥ युक्तिमूलकदृष्टान्तविशेषे॥

न्यायपथ:। पुं। मीमांसादिशास्त्रे॥

न्यायवृत्त:। त्रि। शास्त्रविहिताचारे। यथाशास्त्रव्यवहारिणि॥

न्यायसारिणी। स्त्री। लुप्ताम्। युक्तिपूर्वककर्मकारिण्याम्॥ इतित्रिकाण्डशेष:॥ न्यायस्थले॥

न्यायी। त्रि। न्यायवति॥

न्याय्य:। त्रि। न्यायलब्धे। युक्ते औपयिके॥ न्यायादनपेतम्। धर्म्मपथ्य

र्थन्यायादनपेतइतियत् ॥ उचिते । शास्त्रीयधर्म ॥ न्याये भवः न्यायादागतोवा । दिगादित्वाद्यत् ॥

न्यासः । पुं । त्यागे ॥ उपनिधौ । स्थाप्यद्रव्ये । प्रकाश्यस्थापितेद्रव्ये ॥ न्यस्यते । असु० । कर्मणि घञ् ॥ अर्पणे ॥ संन्यासे ॥ सन्न्यासे ॥ यथा । विन्यासः । विविदिषान्यासं विद्वन्न्यासश्चभेदाद्वये हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौक्रमात् ॥ काशिकाख्यपाणिनिसूत्रव्याख्यानग्रन्थविशेषे ॥ अङ्गेषु चिन्तने ॥

न्यासार्पणम् । न । निक्षेपप्रतिदाने ॥

न्युङ्खः । पुं । साम्नः षट्प्रणवेषु । सामविशेषस्यषडोङ्कारेषु ॥ सुन्दरगमने । अतिप्रिये ॥

न्युप्तः । त्रि । दत्ते ॥

न्युब्जः । पुं । दर्भमयस्रुचि । कुशस्रुचि ॥ न । कर्मरङ्गफले । कमरख इति भाषा ॥ श्राद्धादिपात्रभेदे ॥ त्रि । कुब्जे । कुबड़ा इति भाषा ॥ रोगेणावक्रपुरुषे ॥ अधोमुखे ॥ न्युब्जन्त्यस्मिन् । उब्जआर्जवे । अधिकरणेघञि कवर्गाभावो भुजन्युब्जौपाणयुपतापयोरितिनिपात्यते ॥ न्युब्जनम् । भावे वा घञ् ॥ न्युब्जः पृष्ठवक्रकारी यस्यास्ति । अर्श आद्यच् ॥

न्युब्जखड्गः । पुं । कटीतले । कुब्जखड्गे ॥

न्यूङ्खः । ओमोमित्यादिषोडशोङ्कारेषु ॥

न्यूनः । त्रि । गर्ह्ये ॥ ऊने ॥ न्यूनयति । ऊनपरिहाणे । पचाद्यच् । घञ्वा ॥

न्यूनपञ्चाशद्भावः । पुं । ऊनपञ्चाशद्भावे । पागले ॥

न्वस्थिमाली । पुं । शिवे ॥ त्रि । नरास्थिमालावति ॥

न्वै । अ । वितर्के ॥ * ॥ * ॥ * ॥

इत्यादिगौडकुलोत्पन्नाऊँचवालप्रधानोपनामतुलारामश्रमात्मजश्रीधनपतिमिश्रापरनाम्ना तथाश्रीसद्गुरुकुलावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्राह्मावधूतश्रीसुखानन्दनाथपरनामधेयेनविरचिते शब्दार्थचिन्तामणौ तवर्गः समाप्तिङ्गतः मुद्राङ्कितकारायाकायस्थकुलश्रेष्ठमुंशी श्रीरामप्रसादर्जने ॥ * ॥